* श्रीविश्वेश्वरः शरणम् *

# ब्राह्मणमहासम्मेलनस्य

# विशिष्टाङ्कः ।



विगत सं० १९८५ वैक्रमे हायने कार्तिकमासे श्रीकाश्यां वृत्तस्याऽखिलभारतवर्षीय-ब्राह्मणमहासम्मेलनस्य इतिवृत्तसङ्कलनात्मकः ।



सं० १९८६ ।

---

प्रथमावृत्तिः ३००० मूल्यम् २)

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )

विशिष्टाङ्कः ।

शकाब्दाः १८५० ।



सम्पादक संघः—

महामहोपाध्यायः श्रीयुक्तानन्तकृष्णशास्त्री ।
श्रीहाराणचन्द्र शास्त्री,
श्रीराजेश्वरशास्त्री द्राविड़ः, श्रीताराचरण भट्टाचार्यः,
श्रीश्रीजीव न्यायतीर्थः एम्, ए. ।

परिदर्शकौ
श्रीश्यामाचरण कविरत्नः
श्रीगोपीचन्द्र सांख्यतीर्थश्च ।





वाराणस्याम्
साङ्गवेदविद्यालय यन्त्रालये मुद्रयित्वा
ब्राह्मणमहासम्मेलन कार्यालयात्
प्रकाशितम् ।

मूल्यं रूप्यकद्वयम् ।

# चित्र-सूची ।





# विषय-सूची।

* नमो ब्रह्मण्यदेवाय *

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )





" न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् )

प्रथमविशिष्टाङ्कः १८५०

## अखिलभारतवर्षीयब्राह्मणमहासम्मेलनस्य कार्यविवरणम्

न खल्वेष न विदितः कस्यचनापि आपामरसाधारणस्य यद्वाराणस्यामस्यामशेषसमारोहपुरःसरं समनुष्ठितस्य अखिलभारतवर्षीयब्राह्मणमहासम्मेलनस्य वृत्तान्तः । ये नामैनं न किल प्रत्यक्षीकृतवन्तस्तेषामशेषविशेषैराग्रहवर्गैर्भूदेव-देवनिवहेषु च भक्तिभावैर्वयमद्य समनुरुद्धाः–पौर्वापर्य्यं विचार्य्य कार्य्यजातं प्रकृततत्त्वमस्य समासतः समुपहरामश्चैतेषाम् ।

अयि प्रियपाठकमहाभागाः! लिखनादग्रत एव भुवननिग्रहानुग्रहकारिणो विश्वविग्रहस्य विश्वेशितुरीश्वरस्य च काश्याः—तथैव च भुवनवरेण्यधरणीसुरसूरिसमूहानां अनुग्रहविशेषाशीराशिविवर्षणमेतस्मिन् स्मारं स्मारं विस्मिताः स्मयोद्गताङ्कपुलका अत्रभवतो विज्ञापयामो यदभूदभूतपूर्वं सर्वमेव क्रमशः ।

आहिमनिलयादादक्षिणप्रान्तं, आप्राच्यसागरात् प्रतीच्यवारिधि-

पर्य्यन्तं भारतीयप्रतिप्रान्तीयवरणीयसूरयः 'प्रतिनिधयो वयोविद्यावृद्धाः ब्रह्मतेजःसमृद्धाः अपि च सभ्याः सज्जनाग्रेसराः के चाचार्य्यप्रतिनिधयः स्वयमाचार्यवर्य्याः किञ्चिदधिकत्रिसहस्रपरिमिता अमितप्रभावाः प्रभवोदयानां, स्वीयव्ययेन च सोत्साहं समागम्य सार्थकीकृत्य च सम्मेलन-पदं तदीयां शोभां प्रावर्द्धयन्। महासम्मेलनञ्च 'तेषां तत एव नितरामधमर्णमेव तत् कर्म्म सुचारु सम्पादयतां पण्डितधौरेयाणां राजाधिराजपदभाजाञ्चाचार्य्यवर्य्याणामिति न तत्र किञ्चिदपि वक्तव्यमपेक्षते।

येषां समुद्योगवशान्महासम्मेलनमिदमद्य सद्यःप्रसु सुफलानां सञ्जातम्, यद्धि फलमविकलमलमालब्धुमनेककालं शक्ष्यन्ति लोकाः, ते हीमे विश्वविश्रुतसितकीर्त्तयः स्वनामधन्या महामान्या महनीयचरणा महामहिमानो मुनिकल्पाः महामहोपाध्यायाः श्रीयुत पञ्चाननतर्करत्न महोदयाः, श्रीयुत वामाचरणन्यायाचार्य्यभट्टाचार्य्यवर्य्याः,श्रीयुतश्रीलक्ष्मणशास्त्रिणो महाभागाः, श्रीयुक्तानन्तकृष्णशास्त्रिणो महाशयाश्च।

विगत-निदाघावकाशे प्रथमे त्रयः स्वावासमपि विक्रीयापि सम्पादयामो महासम्मेलनमिति प्रतिज्ञाय, कतिपयोदारचरितानामपि धनिधुरीणानां सूचितसाहाय्यानामाग्रहातिशयात् प्रारभन्त च प्रायो निश्चिन्ताः यथाकालमनलसाः सम्मेलनपरिचालनादिसदुपायमाविष्कुर्वन्तः सुदृढ़ं तत्कर्म्मस्तोमम्। जगन्नियन्तुरत्यन्तानुग्रहाच्च "धर्मो रक्षति धार्मिक" मित्यमूल्यवचसः सार्थक्यप्रदर्शनपुरःसरं "श्रेयांसि बहुविघ्नानी" त्यस्य वस्तुतो व्यभिचारमपि प्रादर्शयन्।

यत्कृते चैके वर्णाश्रम-विश्रामकामाः प्रकामं परिश्रमपरायणा अपि पण्डश्रमा भ्रष्टाश्रमधर्म्मा विश्वविप्लावकाः सन्ततमुग्रकर्म्माणो लङ्घितशास्त्रसीमानो बतार्य्याचारविध्वंसकाः कुशिक्षका अपि शिक्षितम्मन्या अस्यानुष्ठानस्य महतो, महते व्याघाताय यथाशक्ति समचेष्टन्त,—परन्त्वकृतकरणीयाः प्रतिहतमतिका भृशं निर्वेदमापन्नाः शुष्कहृदयनिदारु-

णदारुसन्धुक्षितदुराशा दावदहनैरसहैरहरहो दन्दह्यमानमानसाः सम-भवन्निति, तदपि न किं ब्रह्मण्यदेवमहिमा ?

अतएव च वाराणसीश्वर-ब्रह्मण्यदेव—भूदेव—धर्म्माचार्य्यवर्य्या-दीनां करुणाकटाक्षवीक्षणेन समाशंकितविविधविघ्नसन्दोहस्यास्य महासम्मेलनस्य पौर्वापर्य्यसकलकार्य्यमपि लीलयेव कुतोऽप्यागतसाम-र्थ्यविशेषेण निरतिशयशान्तदान्तसभ्यानामाग्रहादप्यनुग्रहादतिसुचारु सम्पन्नमिति किमु वैचित्र्यम् !

येषाञ्च राजर्षि देशीयानां धन्यमान्यवदान्यानां पुण्यकर्म्मणां राज्ञां श्रीयुतशशिशेखरेश्वररायमहोदयानां भाविसभा-सूचकप्रस्ताव-क्षण एव सहस्रमुद्राप्रदानप्रतिश्रुत्या सर्वे समुत्साहिताः सम्मेलनकर्णधारा-स्तानद्य सर्वप्रथममभिनन्दयामो वितरामोऽपि च बहुशो धन्यवादान् ।

अपिच ये नाम धनिनो ब्राह्मणपण्डिता वैषयिकाश्च समागत-प्रतिनिधीनां कृते समवस्थानस्थानभोजनादिप्रबन्धेषु यथेच्छं कृतवन्तः साहाय्यं, महासमेलन-व्ययभारञ्च सानन्दमुद्वहन्तो भगवतः कृपाभाजो जातास्तानपि सर्वथा तथा वयमभिनन्दयामः सानन्दम् ।

किञ्च,—ये खलु ब्रह्मण्यदेव-भूदेव-देवसेवकाः—समधिगतविवेकाः प्रायः स्नान-पूजन-भोजन-शयनादिकमेकान्ततः परिहाय—विस्मृत्य च स्वकीयं सांसारिककर्म्मकलापं, कौतुकादागन्तुक-प्रतिप्रान्तीयप्रति-निधिप्रभृतीनां समभ्यर्थनार्थमकातरा धूमशकटादिनिकटे रात्रिन्दिव-मगणयन्तः परिश्रान्तिं क्षान्तिमादधानाः स्थाने स्थाने च तिष्ठन्तः संघ-बद्धाः यथा तथा वा यथाकालमागतानां प्रतिनिधिप्रभृतीनामति-विनीताः स्थानदानव्यवस्थानादौ ध्यानपरायणाः यथायोग्यञ्च तदव-स्थानस्थानादिकमेतान् प्रापयन्तः तेषाञ्च पर्य्यपूरयन् सकलमेव प्रयो-जनं पक्षाधिकं कालं,तेषाञ्च कर्म्मपाटवं आर्योचितधैर्यं शेमुषीप्राखर्य्यं कायक्लेशादिकञ्च पर्य्यालोचयतामस्माकमानन्दभरचेतसां न धन्यवाद-व्यतिरेकेण किमप्यस्ति वैभवं, यत् प्रत्युपकृत्य भवामो भाजनं-

कृतज्ञतायाः । धन्योऽसि कृतकृत्योऽसि इत्येवमेव केवलं वदन्तो वयमभिनन्दयामस्तानप्यद्य सप्रशंसम् ।

किन्तु हन्त! दुःखायन्ते च निरन्तरमन्तःकरणानि नः पर्य्यवेक्षमाणानामधुनातने, कैश्चिदतिमात्रमुपद्रुतप्रायमतिपूतमहो धर्म्मव्यवहारम् !! अथवा नेतच्चित्रम्, यदिदानीं हिन्दूद्भवाः केचन स्वप्नेप्यनालोकितधर्म्मशास्त्रा नवनवाविष्कृत-विकृतपुस्तक—विलोकन—प्रतिष्ठासवोऽर्वाचीन पद्धतिसुशिक्षितमहाशयाःसमाचारपत्रावलोकनमेव वेदपारायणं विजानन्तः सुरभिक्षार-( साबुन )—वारिस्नानमेव सुरसरिदवगाहनमिव प्रशंसन्तः, सुरादानपानादिकमेव सुधामाधुर्य्यमाकलयन्तः, मुनि-पुराणादिविनिन्दनमेव सह महेन्द्रेण तदासनसमारूढोपदेशकतां विदन्तः, निखिललोकनेतृत्वमेव दिगन्तविश्रान्तयशोराशिनिदानमाप्रकटयन्तो धूमस्तोमानुद्गिरन्तो धर्म्मकर्म्मविमुखाः सनातनधर्म्ममर्म्मण्यनभिज्ञाः—हा हा हन्त !! प्रत्यहं विधाय जनतामेतद्विषयं प्रति प्रत्यवतिष्ठन्त इति ।

सुविदितमेवैतदपि सुधियां यदयं सम्प्रातितनो हि समयः सकलकलाकुशलशिल्पी, जगति कति कति नवनवान् प्रकारानुद्भावयतीति । यो हि पुरा श्रवणपथमपि नावतीर्णः, स एव सम्प्रति प्रत्यक्षतामुपयाति पाखण्ड-विषयः । अदृष्टपूर्वोऽपि अधर्म्मस्य धर्म्मत्ववर्णनप्रकारः समापतति समक्षतां । अहो नु भोः! कथमप्यविसोढ़ोऽयमाक्षेपो—यत् समालोकित-सच्छास्त्रा अपि सुविदितवेदाभिप्राया अपि सुविज्ञातपुराणमर्म्माणोऽपि विपक्षकुक्षौ दण्डायमानाः सपक्षसुपक्षक्षयणपरायणाः पण्डितपदभाजो महामहोपाध्याया अपि बत! विपुलविलक्षणसज्जाः—कदर्थीकृतशास्त्राः सर्वत्र निजनामप्रचारणार्थमर्थादिलोभमलीमसमनसो बकवृत्तिभाजः सनातनधर्म्माध्वानमभिघ्नन्तीति—'किमाश्चर्य्यमन परं' !—

अयि सुगृहीतधर्म्ममर्म्माणः सनातनधर्म्मानुयायिनः ! सुदृढं भृशमेकान्ततः परिचिन्तयन्तु श्रीमन्तो भवन्तः—यदेवम्विधमहासम्मेलन-

मिदानीन्तने अवश्यमुपास्यमेवेति नवा ? अस्माकमप्युद्यमः प्रोद्दाम-विपरीतस्रोतःप्रतिबन्धको नितरामावश्यक एवेति न वा ?

पुरा किल सति जाग्रति विविधसंशये धर्म्मकर्म्मादिविधौ, विशुद्ध-सिद्धान्तमभीप्सवो, विविदिषवो वा सूक्ष्मतमं धर्म्मस्य तत्वं नैमिषाद्य-रण्ये ह्यनन्यगतिका मुनिप्रधानोपकण्ठमुत्कण्ठिताः विधाय च सद्यः सदो विबुधा वादविचारपरिशीलितशास्त्र-सिद्धान्तमन्वसरन् विगत-मत्सराः। अहो नु खलुभोः ! अद्य तामतीतां स्मृतिमातनोति सकल-लोकहितसाधनमदः सम्मेलनम् ।

अपरमपि वैशिष्ट्यमिष्टतममभिध्यायन्तु सन्तः ; आशैशवं नवनवं नवनीतमिव मन्यमानमपभ्रंशितमपि म्लेच्छादिसङ्केतितमहो ! प्रलापकलापमाकर्णयन्तो विकलतां विफलताञ्च श्रुतियुगलमाप्रापयन्-बत ! वीत—सुर-भारतीसमादराः, ये नामार्य्यकुलधुरन्धराः, ते ह्यद्य मीमांसितश्रवणनयनविवादाः पुराकृत-सुकृतिसन्ततिपरिपाकव-शात् काकतालीयमिव समालेभिरे निजजीवनसार्थकतां पीयूषविव-र्षिणीं संश्रुत्य मुहुर्मुहुरहह ! संस्कृत-भारतीम् ।

अयि संस्कृताभिमानिनो विद्वांसः ! अश्रुत-यथाकथितकथाः ! प्रिय-पाठकप्रवराः ! सेयं नानामुनिपरिपोषिता बाण-वासव-भवभूति-प्रभृ-तिभिः समुद्योतिता दण्डिमम्मटकालिदासादिभिरलंकृता भोजविक्रमा-र्कादिभिः परिपालिता सकलदेशसुविस्तृता अपि नामानवद्या हृद्या कलि-कालकराल कुटिलविलासात्—निरालम्बेवास्मदम्बा गीर्वाणवाणी-स्वरूपिणी तनयानस्मान् अज्ञानघन-तिमिर-नीरधौ निमज्जयन्तीव स्वय-मपि सूक्ष्मजीवितापि क्रमशश्चाधःपतितप्रायापि कतिपयानुरूपतनय-सम्मेलनात् हर्षभरशरीरेव स्वयमाविर्भूय किलास्मिन् महासम्मेलने स्वकीयामोजस्वितां मधुरतामनिर्वचनीयतादिकञ्च प्रकाशयन्ती श्रोतृ-णामहह ! चैतन्यमसामान्यमानैषीदिति त एव समनुभवन्ति ये ना-मैतदशृण्वन् । अहो ! माहात्म्यं संस्कृतभाषायाः !! ।

———

# ❀ शान्तिस्वस्त्ययनम् ❀



सौरकार्तिकस्योनविंशतितमे वासरे भौमवारे प्राचीरपरिवेष्टिते सुविशाले सभाक्षेत्रे विविधसौम्यवस्तुसमाविष्टे व्यष्टि-समष्टि-परिगृहीत-सुलक्षणलक्ष्मीके ध्वजपताकादिसुशोभिते माल्यादिसमलंकृते व्रति-व्रातसमन्विते पण्डितमण्डलीविमण्डिते चण्डीमण्डपे अश्रुतादृष्टा-भूतपूर्वा समलक्ष्यत विलक्षणा लक्ष्मीः।

यत्र हि यदा पूर्वाह्णे सहस्रावृत्तिचण्डीपाठार्थं सर्वप्रदेशीयाः प्रायो दशशतमिता ब्राह्मणपण्डिताः समाहितप्रातःकृत्याः कृत्य-कृतिनो भुजादि-वक्षोधृतरुद्राक्षा धृतविशालशिखा विभूतिविभूषिताः परिधृतपूतदुकूलाः सदाचारप्रतिमूर्त्तयो मूर्त्तिमन्तो ब्रह्मण्यदेवा रुचिर-शुचिचेतसो भृत-भक्तिभावाः समस्वरं मधुरस्वरघटिते चण्डीपाठे प्रवृत्ताः,—तदानीं अभूतातीतालौकिकभावसमाविष्टा हृष्टदृष्टयो दर्शकाः श्रोतारश्च विडम्बितचित्रार्पिता इव मन्त्रमुग्धा इव समासन्नासनस्था वा दण्डाय-माना वेति।

एवमेव कैश्चन श्रीश्रीमदन्नपूर्णामन्दिरप्राङ्गणेऽपि शतकृत्वः चण्डी-पाठोऽप्यकारि। श्रीविश्वनाथान्नपूर्णादिपूजनमपि व्यधायि षोडशो-पचारम्।

## शोभायात्रा।

सौरकार्तिकस्योनविंशतितम एव दिने दिवा द्विवादनवेलायां-इयं हि शोभायात्रा सभामण्डपाद्बहिर्गता प्रशस्तराजमार्गानुसा-रिणी धीरं धीरमकरोन्नगरपरिचरणम्!

अहो! किमपूर्वं दृश्यं!! न स्खलिष्यतीयं स्मृतिर्यावज्जीवं। यस्मिंश्च सति परिचिन्तिते समवरुद्धो भवति कण्ठस्वरः! न प्रसरत्यपि नाम सुलेख-

कानामपि लेखनेषु सुलेखनी !! कथमपि प्रकाशयितुमयोग्यमेतदहो ! केवलमनुभाव्यमेव !! श्रीकाशीश्वर—विश्वेश्वर—लीलानिलये वाराणसी-क्षेत्र एव मुक्तिक्षेत्रे सम्भवपरमेतदित्यपि किमु वक्तव्यमेव ?

यत्र प्रथमतो विविध—सज्जा-विभूषिता दशहस्तिनः,—तदुपरि परिलसच्चित्रविचित्रवसनासनसन्निविष्टा ध्वजिनो जयध्वनिपरायणाः,—तत्पश्चादपि सुशोभितघोटकमोटरशकटादयः, विविधवाद्योद्यताश्च वादकाः,—तस्यापिच पश्चात् पञ्च-ष-शतमिताः पवित्रवेषाः प्रोज्वल-भालस्थलतिलकाः धृतपताका हरिनामकीर्तकाः,-तत्पश्चाद् विविध-निधि-विमण्डित सिंहासने वहन्तो वेदग्रन्थान् वैदिकाः,—तदनु जगद्गुरु श्री १०८ श्रीशंकराचार्य्यचरणाः स्वसेवकधृतसुवर्णखण्डविमण्डित-राजतसिंहासनमधिरूढ़ाः धृतसुवर्णमयराजतदण्डच्छत्रैरनुचरनिचयैश्चामर-व्यजनसंवीजिताः ।

तदनु विविध वाद्यवादकाः—तदनु पुनरनेके पवित्रचरित्रा विद्यार्थिनः—तत्पश्चादपि क्रमशः संख्यातीतसेवकपरिवेष्टिताः समधितिष्ठन्तो नानामणिमण्डितसिंहासने श्री १०८ श्रीरामानुजाचार्य्य-श्री १०८ वल्लभाचार्य्यप्रभृतयः । तदनु च वाराणसेयाश्च विदेशीया ज्ञानविज्ञानखनयः सुधियो विद्यार्थिवृन्द-सभाजिताः वैशिष्ट्यं स्पष्टयन्तो मन्दं मन्दमभिवन्दमाना धर्म्मम् । तदनु पुनर्वादकाः-तत्पृष्ठतो बहवो ब्राह्मणपण्डिताः-ततः श्री १०८ नाथद्वाराधीशा अवर्ण्यरत्नच्छटा विलोलं स्वसेवकस्कन्धस्थितं विशिष्टमधिरूढाः सिंहासनम् ।

तदनु पुनर्वादकाः,—अगणितजन गणाश्च । अस्याञ्च शोभायात्रायां विंशतिसहस्रजनसमागमोऽनुमीयते ।

अयि पाठकमहाभागाः ! किमु तूष्णीं विभाव्यते ? किमहो ! द्रष्टुमसमर्था ! भारतवासिनो ! महोदयाः कपोलतलनिदधत्करतलाः । अनुशोशुच्यन्तां ! परितापमापतन्तु ! ततोऽपि कथञ्चिदपयास्यन्ति वो दुःखान्यदर्शनजनितानि—अथवा कृतमनुशोचनया, अलमलं परितापकलापेन !

श्रुत्वापीदं पुण्यवचः समनुभाव्या च निखिलवृत्तान्तं किमपि चित्रमङ्कयित्वा स्वान्ते चरितार्थतामात्मानमानयन्तां ! तथापि शान्तिः सुखमनन्तं, पावित्र्यं च मात्रया नूनं भवतामुपचेष्यन्ति । सधैर्यं पर्यालोच्य च कार्यकलापमेतस्य उपरिष्टादवगच्छन्तु तावदनेकमेवम्विधम् ।

अपरमपि वैशिष्ट्यमस्याः शोभायात्रायाः—यां कांचिद्दिशमवलोकयन्तु—नरा वा नार्यो वा स्तिमितदृष्टयो भक्तिभावसमाविष्टाः दृष्टरोमहर्षा धृतधीरताका हर्षोत्थनयनवारयो बत ! किम्भूताः किमाकारा आवेगमयजयध्वनिकारकाः मुखरयन्ति दिगन्तमेकान्तम्, एवमेवं भुवनशुभकामनया शुभस्वस्त्ययनादिना दिनमेतदतिक्रान्तम् ।

---

## ब्राह्मणमहासम्मेलनाधिवेशने प्रथमो दिवसः—



सौरकार्त्तिकस्य विंशतितमेदिवसे दिवा द्वादश घटिकायां सम्मेलनीयं प्राथमिकं कर्म समारब्धम् । विना प्रवेशपत्रं न कस्याप्यासीदस्मिन् प्रवेशनाधिकारः । संमुद्रितेप्ययुतमिते प्रवेशपत्रे सभायाः—पञ्चष-दिवसादग्रत एव सावधानं वितरितेऽप्यकस्मान्निःशेषिते पुनरनन्यगतिकतया व्यक्तिविशेषहस्ताक्षरपरिज्ञानानुसारेण विशेषचिह्नाद्यनुबृंहितेन च तेन तेन प्रवेशपत्रविशेषेणाप्यसंख्यकजनसमावेशः समालक्षितः ।

ये नामानिर्वचनीयमदः सदोदृश्यं नापश्यन्, न तान् भगवानपि नाम वचसा समनुभावयितुं प्रभवति । यत्र हि वाराणस्या वरेण्ये नैमिषारण्ये पुण्यवतामनन्यसाधारणपुण्यगिरा चिरचरितार्थं श्रवणमिथुनं, अपि च बहि-रहित-विलोकन विकलं विलोलं लोचनयुगलमप्यलोलमिव तावत्कालमभूतपूर्वैरिव प्रभृतब्रह्मतेजःस्फुरणैः कृतार्थं जातम् । दुर्दमनीयमपि मनो दान्तं पूतमभूत्तदानीम् । भुजद्वन्द्वं मन्दं मन्दमहो ! भूदेववृन्द-

चरणारविन्दरेणुकापरिग्रहे साग्रहमिव व्यग्रमासीत्। न पादद्वयं पुरः प्रासरदिव पुण्यभूमौ मस्तकस्थापनयोग्यायां दर्शकानाम्। त्वगपि पूतस्पर्शैरतीव कृत्यमन्या। यत्रैवमेव सर्वमिन्द्रियमतिशयितमर्य्यादं— किमु तत्र वयमपटवो वर्णयामः।

विस्तीर्णे शुभ्रवर्णे सभामण्डपे उत्तरस्यामाशायामुन्नते प्रान्ते प्रथमतो धर्म्माचार्य्याणां विन्यस्तमासनम्। मध्यस्थले च तप्ततपनीय-खण्डविमण्डितं प्रत्ननूत्नरत्नसमन्वितं राजतसिंहासनं विराजतेस्म भगवतो वेदस्य कृते। तस्य च प्राच्यां प्रतीच्यभिमुखं श्री १०८ शंकरा-चार्य्यचरणानां विष्टरम्। तत् पार्श्वे च दण्डि-संन्यासि-सम्प्रदायाना-मासनम्। श्रीश्रीमद्वेदासनपश्चिमपार्श्वे च दक्षिणामुखं श्री १०८ रामानुज श्री १०८ वल्लभाचार्य्यादीनां विन्यस्तकनकं रौप्यसिंहासनम्—एतेषाञ्च पुरः समतले स्थले चित्रविचित्रसुरम्यवस्त्रोपरि राजाधिराजमहा-राजादिपदभाजां विशिष्टशिष्टानाञ्च कृते निर्दिष्टमासीदासनम्। तस्य च पुरो मध्यवर्त्तिवर्त्मपार्श्वयोः पश्चिमांशे पूर्वांशे च नानादेशीयानां वारा-णसेयानाञ्च प्रतिनिधीनां कृते सुव्यवस्थितमासीत् स्थानम्। मध्ये च संवाददातॄणां पत्रिकाप्रतिनिधीनाञ्च स्थानं व्यधायि। पूर्वस्यां पश्चिमायां च दिशि दक्षिणस्याञ्चांशतो दर्शकवृन्दानां कृते शोभनैव व्यवस्था विहिता।

सभापि नाम एवम्भावेनाभूत् यन्मण्डपमध्ये यत्र क्व वा स्थितस्य नयनमप्रतिहतं दृश्येषु श्रवणेन्द्रियमपि तथेति सभाव्यवस्थाकारिणः सर्वथा श्लाघनीयाः।

प्रशस्त–विस्तीर्ण–राजमार्गैकपार्श्वे विस्तृतसमतले स्थाने विधाय सदः–प्रबन्धं तन्मध्यस्थलवर्तिनि च द्वारे नानावस्तुपरिशोभितप्राचीरे धीरसमीरणरङ्गभरे च तोरणद्वारे वेत्राहततौर्य्यत्रिकवादित्रनिर्घोष-परिपूरितदर्शकश्रोत्रविवरे शंखपटहघण्टादिनिनादप्रतिनादिते सदो-मण्डपे, वंशीस्वनहृतमानसे च जनसमूहे तदानीं कीदृगासीदानन्द-

प्रवाहः स चानुभवमात्रवेद्यः दृष्टसकलकार्यावलेरेव न त्वदृष्टतत्कस्य कस्यचनापीति यथार्थमेव ।

महासम्मेलनस्य चतुष्पार्श्वस्थप्रशस्तराजमार्गे गजवाजि मोटराख्य-याननानाशकटादिसङ्कुलिते जनानां द्रुतगतिः प्रतिहता, —"न स्थानं तिलधारणे" इति प्राचीनप्रवादस्य च याथार्थ्यमत्र समनुभूतमनेकैः ।

अथ यथाकालं क्रमशः स्वस्वीयसेवककुलसङ्कुलिताः वेदादिनिनाद-विनिन्दितवाद्यघोषैर्जयध्वनिध्मातराजाध्वभिः सहचरस्तोमैश्चामर-चामी-करव्यजनसंवीजिता विजितकामाः कामाभिरामा धर्माचार्याः शंकराचार्य-रामानुजाचार्यवर्य्यादयः मन्दं मन्दमुपसर्पन्तः प्रोज्वलज्वलनसमान-सिंहासने स्वीये स्वीये समुपविष्टा हृष्टान्तःकरणाः करुणैकसाराः सौम्य-दृष्टयो वृष्टशुभाशीराशयो जनतायां व्यराजन्त ।

तस्मिंश्च तपोवन इव पुण्यमये प्रवाहे वङ्ग-विहारोत्कलासामसौराष्ट्र-महाराष्ट्र मद्रांध्रद्राविड़कान्यकुब्जादिनानाप्रदेशवासिनो लब्धप्रतिष्ठानात्म-ज्ञानविज्ञानधनाः पूतचेतसः प्रायस्त्रिसहस्रपरिमिता ब्राह्मणपण्डिता मण्डपं मण्डयन्तो व्यवर्द्धयन्त सौन्दर्य्यगाम्भीर्यादिकं ब्रह्मसदसः ।

एवमेव क्रमशो राजपूतानाधिनायक-हिन्दूकुल-तिलकाः कृष्णगढ़ीया महाराजाधिराजाः हथुआधिपतयो महाराजाः सह पारिषदैरध्यतिष्ठन् यथायोग्यान्यासनानि । नानादेशीयैरपि पण्डितदेशीयैरितरैरपि ब्रह्म-क्षत्रवैश्यशूद्रादयः पर्यपूरयन् सदःप्रदेशम् ।

अस्मिंश्च सुमनःसागरे अमूल्यान्यथ च साधारणसुलभानि नाना विधानि रत्नान्येव, नतु कुम्भीर-वर-वारिवारण तिमि-कम्बु-राघव-ग्राहा-दीन्यतिभीषणानि वस्तूनि। ये नाम धर्मद्रोहिणो नक्रादिनीकाशाः सागरेऽस्मिन् जनतां व्यतिव्यस्तयितु मतियतन्ते स्म स्थानमालब्धुं तेहि ब्रह्मण्यदेवमहिम-हरिद्रादिगन्धैर्मन्दवेगा निरगुरसुरसमा; महासम्मे-लनजलनिलयात् ।

किमद्भुतं स्वप्नेऽप्यसम्भावितमतिपूतं धीरतरङ्गसङ्घातमिव प्रतिभातं संख्यातीतैरप्युदितचन्द्रैर्मन्दमपि अनुद्वेलितं धृतगाम्भीर्य्यमात्रं विलक्षणमेतं समुद्रं निशामयन्तो नान्तःशान्तिरनन्ता न कस्य सञ्जाता ?

अत्र च प्रथमतो धर्माचार्याणामर्च्चनाचर्च्चनानन्तरं जन्मान्धस्य स्वीयकरतलयुगले विलक्षणध्वनिदत्ततालस्य श्रीमतो बच्चुलालाभिधानस्य विनान्यवाद्ययन्त्रं तन्त्रीस्वरमधुरोद्बोधनगानैः सर्वे च सभ्या नव्यभावैरभिभूता इव समभवन् ।

सति चैवं सभा-साफल्यं कामयमानैर्धर्म्माचार्य्यवर्य्यैराशीर्वचसा निर्विघ्नं सभासमाप्तये च जगतां हिताय मनसा च समुपासिते भगवति ब्रह्मण्यदेवे काञ्चीकामकोटिमठाधीशश्री१०८शंकराचार्य्यपादैः पुष्पगिरिमठाधीश्वरश्री१०८शंकराचार्य्यचरणैश्च पत्रैः प्रेषिताशिषि तत्तत्प्रतिनिधिभ्यां पण्डितवराभ्यां श्रीजगदीशशास्त्रि–श्रीमल्लादिरामकृष्णशास्त्रिमहोदयाभ्यां यथाक्रमं पत्रे वाचयित्वा विज्ञापितायां सत्यां, अहोबलमठस्वामिनां तोताद्रिमठाधिपतीनां च १०८ श्रीमदाचार्य्यपादानां शुभाशंसनं सभां प्रत्यानुकूल्यादिकञ्च पठित्वा पत्रं सभायां प्रचारितम् ।

ततश्च जगद्गुरूणां श्रीवल्लभाचार्य्यचरणानामाशीर्वादास्तत्प्रतिनिधिपण्डितप्रधान श्रीरमानाथभट्टमहोदयैर्विज्ञापिताः । समुद्घोषितमपि श्री १०८ द्वारकेशाचार्यमहोदयानामपि शुभस्वस्तिवचः । सर्वेषु च विज्ञापितेषु क्रमश एवमाशीर्वादेषु उच्चैरुच्चतरैः सनातनधर्मजयोद्घोषैर्मुहुर्मुहुः प्रतिध्वनित इव प्रकम्पित इव सभामण्डपोऽपूर्वभावं व्यधत्त ।

तदनन्तरञ्च स्वागतसभाध्यक्षाणां नानोपाधिविभूषितानां धार्मिकधुरीणानां महाराजश्रीकाशीनरेशमहोदयानां शरीरास्वस्थतया स्वयमनुपस्थित्या—तत्प्रतिनिधिरूपेणोपस्थितेषु तदीयानुरूपतनयेषु युवराजमहोदयेषु यथास्थानमलंकृतेषु च—तेषामपि कण्ठपीड़ाविशेषेण स्वयमसमर्थेषु स्वागतसभापत्यभिभाषणवाचने,—तदीयनिर्देशानुसारेण

पण्डितवर्य्येण श्रीलक्ष्मणझाशर्म्ममहोदयेन तदभिभाषणमवाचि । युष-राजविनम्रव्यवहार—भक्तिश्रद्धासारल्यप्रभृतिकमपि समाचकर्ष सर्वेषा-मपि चित्तम् ।

ततश्च "प्रबन्धकारिणीसभा"—सभापतिभिर्महामहोपाध्याय श्री-युत पञ्चाननतर्करत्नभट्टाचार्य्यमहाभागैर्मासत्रयमभिभूतैरपि रोगै-रेतावत् कार्य्यं युवजनैरिव सम्पादयद्भिः तदानीं विशेषतः शरीरकात-र्य्यात् स्वयमभिभाषणपाठेऽसमर्थैरपि—परहस्तावलम्बनेन कथञ्चिन्म-ञ्चोपरि दण्डायमानैः कियत्कालमोजस्विन्या भाषया यदावेगमयमुच्चै-रुच्चारितं स्वल्पमपि सारगर्भं, तद्धि विद्युत्प्रवाह इव जनतान्तःखेल-यत् श्रोतॄणां धमनौ रक्तप्रवाहं विवर्द्धयत् सनातनधर्म्मजयोद्घोषण-पुरःसरं करतालसङ्कुलितमिव सभामण्डपमकरोदिति । तदीयम-भिभाषणञ्च तदीयानुरूपतनयैः पण्डितवर श्रीश्रीजीवन्यायतीर्थ एम, ए, महोदयैरुच्चै राभाषि ।

तदनन्तरं सम्मेलनान्यतमसम्पादकमहामहोपाध्याय श्रीमदनन्त कृष्णशास्त्रिमहोदयै रनुपस्थितानां विशिष्टशिष्टानां, सभानुकूल्यसंसू-चकं तन्त्रीद्वारा पत्रद्वारा च यदत्र सम्प्रेषितं—तदेकैकशो वाचितम् । नामा-न्यपि कतिपयप्रतिनिधीनां प्राधान्यतः समुल्लेखितानि । यथा— गोस्वामिचरण-श्री १०८ मुंबई श्रीवल्लभाचार्यपीठाधीश गोकुलनाथजी महाराज—नेपाल महाराजाधिराज—श्रीदेवीदास माधवदास,—श्रीमन्मध्वा-चार्य्यमहाराज—श्रीनाथद्वाराधिपति—उदयपुराधिपतिमहाराज—श्रीदीन-दयाल शर्म्म—महाराज श्रीब्रजेन्द्र किशोर राय चतुर्धुरीण—पण्डित एम्, के,—आचार्य,—पण्डित श्रीकाशीराम झा—महोदय प्रभृतयः ।

अथ भूयोऽपि धर्म्माचार्य्यवर्य्यै रेकैकशः समुद्घोषिते स्वस्तिवादे संप्रार्थिते च सदसः कल्याणे,—प्रतिवादि भयंकर जगद्गुरु १०८ श्री मदनन्ताचार्य्यमहाराजमहोदयै रन्यान्यधर्म्माचार्याणामयमनुमोदनानुसारेण

सप्ताहं यावद्विचारिते शास्त्रीयप्रमाणनिचयैर्नानाविषये—शास्त्राचार दृष्ट्या तत्तत्सिद्धान्तो ज्ञापितः ।

श्रोतॄणामतिशयाग्रहात् श्रीमद्बच्चुलालेन स्वयं तद्भावमभिभाव्य स्वकृतहिन्दीभाषानिबद्धगीतिकया सुस्वरं गायता तत् स्पष्टीकृत्य सुमनोमनः समाकर्षि। अयं हि यत्किञ्चन श्रुत्वैव स्वरचितछन्दोबद्ध-सुललितसरलगीतिकया शुद्धताललयमानसुस्वरघटितया सम्मोहयितुमतिप्रभवति सर्वान् ।

अस्य च महासम्मेलनस्य पावित्र्यं गुरुत्वं गाम्भीर्यं शान्तिमयत्वादिकञ्च वस्तुतोऽनिर्वचनीयमेव। यत्रहि सर्वे नाम सदस्याः समपास्य बहिर्भावान् पूतसिद्धान्तश्रवणे,—वक्तृणाञ्च गवेषणामयोममूल्यां तां तां वक्तृतामाकर्णयितुमुत्कर्णाः समभवन्नाद्योपान्तम् ।

अपिच गाम्भीर्य-जितसागर-सौम्यदर्शन महामहोपाध्याय श्रीलक्ष्मणशास्त्रिपादानामादितोऽन्तपर्य्यन्तं सदः पर्य्यवेक्षणं सर्वेषामभ्यर्थनादिकञ्च विशेषतः समुल्लेखनीयम् ।

अपरञ्च साधारणानां विशेषतो बोधाय अश्रुतार्द्धश्रुतास्पष्टश्रुतानाञ्च धर्माचार्यादिनिर्णीतविषयाणां स्वाभाविकसरलसंस्कृतभाषया विशदीकृत्य च तदेवोच्चैः प्रोच्यते स्म श्रीमन्महामहोपाध्यायानन्तकृष्णशास्त्रिवर्य्यैः ।

तत्राप्यन्यतमसम्पादक पण्डितवर्य्य श्रीमत्ताराचरणसाहित्याचार्य्य महोदयैः सरलशुचिसितस्मितैः भ्रामं भ्राममभितः सभां सुष्ठु खलरक्षणार्थं सविशेषमाधायि ध्यानम् । प्रायः सप्ताष्टसहस्रे सत्यपि सदस्ये समुदये न हट्टायितमितः सम्मेलनमहो ! जनानामक्रमवादैः—परन्तु क्षणं क्षणं केवलं सनातनधर्म्मजयोद्घोषणेन नीरवतैव निरकारि ।

धर्माचार्यवर्यैरपि बहु विचार्य सप्ताहं यावद्विचारितानां गुरुतरविषयाणां निर्णयोद्घोषणावसरे एवमानन्दः प्राकाशि—"ब्राह्मणमहासम्मेलनस्य विचारसभायाः कृत्यं निर्विघ्नं सुष्ठुसमाप्तमिति वीक्ष्य सर्वैश्च

स्मारं स्मारमनिर्वाच्यसुखसमूहैरधीरायितमानसैरस्माभिरशेषाशीः सर्व्वेभ्यो वितीर्यंते, समभिकाम्यते च निर्विघ्नमस्यापि सर्वथा परिसमाप्तिः, तथात्व एव जगति वस्तुतो धर्म्मः प्रचारितो भवेत्, भवेदपि भुवः कल्याणं, मन्यते च सर्वदा सर्व्वथैवेद्दशसदसः भृशमावश्यकतेति। ततश्च परिगृहीते कतिपयप्रस्तावे सर्वसमर्थनक्रमेण समाप्तिमगमदद्यतनाधिवेशः।

## द्वितीयदिवसीयमधिवेशनम्।

सौरकार्त्तिकस्यैकविंशतितमे दिवसे बुधवासरे दिवा द्विवादनसमये द्वितीयदिवसीयमधिवेशनमस्य समारब्धम्। अद्यारभ्य स्वीचक्रे साभापत्यं द्वारवङ्गेश्वर राजाधिराजेश्वर श्रीयुतरमेश्वरसिंह महोदयवर्य्यैः।

धर्म्माचार्य्यादयश्च प्रागेव कार्यसमारम्भात् पूर्वेद्युरिव स्वं स्वमासनमलंकुर्वन्तो जनानां सभक्तिनतिततिग्रहणपूर्वकं सर्वोपरि ववृषुराशीर्वादम्। पूर्वदिवसापेक्षया सर्व्वेषामेव सम्प्रदायानां सभ्यानाञ्च संख्यातिरेकात्—मण्डपाद्बहिरपि दण्डायमाना मनुजाः सदोद्दश्यं वक्तृतादिकञ्च समनुभूय मुहुरुच्चैरुद्घोषयन् सनातनधर्मजयम्।

सभापतेरासनं मण्डपमध्यस्थले निर्दिष्टम्। अथ राजोचित सेवकसहचरप्रभृतिपरिवृता विनीताः पूतवेशा नानावाद्यजयध्वनिसमारोहपुरःसरमुपेयिवांसः सभाया उत्थानादिभिश्च दृष्टसम्मानैः सदस्यैरभ्यर्थिताः श्रीमहाराजाः धर्म्माचार्यादीन् वन्दमाना मन्दं मन्दं सानन्दमुपाविशन् स्वकीयसिंहासनम्।

महामहोपाध्याय श्रीयुतलक्ष्मणशास्त्रिपादैः कृते प्रस्तावे सभापत्यस्वीकाराय—समनुमोदिते च तस्मिन्—महाराजाधिराजाः गृहीतमाल्याः समलमकार्षुरासनं सभापतेः।

अनन्तरञ्च सभापतिनिर्देशानुसारेण म० म० पं० श्रीमदनन्तकृष्णशास्त्रिमहोदयैः सम्मेलनव्ययनिर्वाहार्थं दत्तसाहाय्यानां वदान्यप्रवराणां नामानि दत्तार्थपरिमाणञ्च क्रमशो व्यज्ञापि। यथा—

श्रीयुत रामेश्वरदास नाथानी दूधवेवाला–महोदयैः सार्द्धद्वादशसहस्र-रूप्यकाणि श्रीसाधुराम तुलारामगोयेनका महाभागै १९००) श्रीओङ्कारमल-जटिया महाशयैः ११००) ताहेरपुराधिपति श्रीशशिशेखरेश्वरराय महोदयैः १०००) हेमनगराधीश श्रीहेरम्बचन्द्र चौधुरि महाशयैः ३००) चौगाराज श्रीरमणीकान्त राय महाभागैः २००) रङ्गपुरस्थ श्रीलोकेश चट्टोपाध्याय महाशयैः ५०) एवं ५० संख्यकब्राह्मणपण्डितानां पाथेयं सर्वं कुम्भ-कोणश्रीशंकराचार्यैः प्रदत्तानि ।

वङ्गीयब्राह्मणपण्डितानां पाथेयव्ययार्थं गौरीपुराधिपति श्रीब्रजेन्द्र किशोर राय चतुर्धुरीणमहोदयैः १०००), श्रीउमेशचन्द्र चट्टोपाध्यायैः १००) श्रीभवानीप्रसाद लाहिड़ी महोदयैः ४०) श्रीशिवप्रसाद बागची महो दयैः ब्राह्मणपण्डितेभ्यः पञ्चदिनपर्य्यन्तं आहार्य्यवस्तूनि प्रदत्तानि । एवमन्यैरपि बहुशः साहाय्यं कृतं सर्वेषां नामोल्लेखस्तु न सम्भवति तदनन्तरञ्च तारद्वारा सभां प्रत्यानुकूल्यसंसूचकः संवादः प्रावाचि ।

सभापतेरादेशानुसारेण हिन्दीभाषया मुद्रितं संस्कृतभाषया लिखित-ञ्च तदीयमभिभाषणं तत् प्राइवेट सेक्रेटरी-महोदयैः वाचितम् । ततश्च प्रस्तावत्रयपरिग्रहपूर्वकं सभाभङ्गो जातः ।

## तृतीयदिवसीयाधिवेशनम् ।

सौरकार्त्तिकस्य द्वाविंशतितमे दिवसे दिवाद्विघटिकायां तृतीय-दिवसीयमधिवेशनमारब्धम् । अद्य हि सर्वथा सर्वदिवसापेक्षया जन-समागमः समधिकः सञ्जातः । सभापतेः कुतोऽपि कारणादागमन विलम्बनवशात् तदागमनपर्यन्तं कालं सर्वसम्मत्या पश्चिमखानदेशप्रदेशीया लब्धप्रतिष्ठानाः महन्तप्रवराः श्रीसन्तोजीमहाराजमहोदयाः सभापति-स्थलमलञ्चक्रुः । कार्यप्रारम्भे च धर्म्माचार्यादीनामाशीर्ज्ञापनं संवृत्तम् । समतीते च कियति काले समुपेयुषि सभापतिमहोदये द्वारवङ्गाधीशे

सनातनधर्मजये च समुद्घोषिते समधिष्ठिते च स्वासनं सभापतौ यथा-यथं अवशिष्टप्रस्तावादिकं समुपस्थाप्य परिगृहीते सर्वसम्मत्या स्थारं स्थारं धर्म्मजयोद्घोषणमभूदतिद्रढ़म्। अवशेषे च सभापतिधन्यवाद प्रदानपूर्वकं सभाभङ्गो जात इति।



# विचारसभावृत्तान्तः ।



जगन्नियन्तुः परमकृपापारावारस्य श्रीविश्वनाथस्य परमानुग्रहेण तथा जगद्वरेण्यानां भूदेवानामाशीर्वादेन अखिलभारतवर्षीयब्राह्मणमहासम्मेलनं सुचारु सम्पन्नमिति सुविदितमेव । आहिमालयात् कुमारिकापर्यन्तादापश्चिमवारिधेः पूर्वसागरपर्यन्तात् भारतीयनिखिलप्रान्तीयब्राह्मणपण्डितप्रतिनिधयः अन्ये च मान्याः सज्जना आचार्यास्तत्प्रतिनिधयः किञ्चिन्न्यूनाधिकसार्द्धत्रिसहस्रपरिमिताः स्वव्ययेन समागत्य सम्मेलनशोभामवर्द्धयन् कार्यञ्च समापयन्निति महासम्मेलनमिदं सर्वेषां पण्डितधौरेयाणामाचार्यवर्याणाञ्चाधमर्णमेव ।

येषामुद्योगेनाद्य महासम्मेलनं जातं यस्य फलं चिरं वर्णाश्रमिणो लप्स्यन्ते ते परमपूज्यपादा ऋषिकल्पा महामहोपाध्यायाः श्रीयुक्तपञ्चाननतर्करत्नमहोदयाः श्रीयुक्तवामाचरणन्यायाचार्यमहाशयाः श्रीयुक्त लक्ष्मणशास्त्रिणो महोदयाः श्रीयुक्तानन्तकृष्णशास्त्रिमहाशयाश्च गते ग्रीष्मावसरे येन केनापि प्रकारेण महासम्मेलनमिदं सम्पादयिष्याम इति प्रतिज्ञाय कार्यं प्रारभन्त। ततोऽनायासेनेश्वरकृपया सनातनधर्ममण्डलेन रायबहादुररामेश्वरदासनाथानीमहोदयेन च कृते साहाय्ये सम्मेलनमिदं सुसम्पन्नम्, केचन वर्णाश्रमविध्वंसका उग्रकर्माणो जगद्विप्लावकाः शास्त्रमर्यादोच्छेदकाः शिक्षिताभिमानिनोऽस्य महतोऽनुष्ठानस्य व्याघाताय यथाशक्ति समचेष्टन्त । परन्तु कृतकार्या नाभवन्नित्येतदपि तस्यैव जगन्नियन्तुरनुग्रहेण। स हि भगवान् धर्मग्लानिं सोढुं नार्हति। कार्तिककृष्णप्रतिपदमारभ्य दिनसप्तकं विचारसभाऽभवत्, तदनु दिनत्रयं महासभा महता समारोहेण सुसम्पन्ना, ये नाम स्वेच्छासेवकास्ते निखिलप्रान्तीयसमागतप्रतिनिधीनामभ्यर्थनार्थं धूमशकटस्थले रात्रिन्दिवं तिष्ठन्तस्तान् यथायोग्यं स्थानम् प्रापयन्तश्च सेवाकार्यं सम्यक् समपादयन्निति

तेषां पक्षाधिककालव्यापिपरिश्रमवार्तामालोचयतां स्वभावत एवास्माकं कृतज्ञता सञ्जायते। तामेवाविष्कर्तुं धन्यवादप्रदानपूर्वकं तानभिनन्दामः। एवं यस्य राजर्षिकल्पस्य वदान्यप्रवरस्य महामहिमान्वितस्य शशिशेखरेश्वररायबहादुरस्य सहस्रमुद्रादानसाहाय्येन प्रोत्साहिताः पूज्यपादतर्करत्नमहोदयप्रमुखाः पण्डितप्रवरा महासम्मेलनार्थं प्रवृत्ताः सोऽपि सर्वेभ्यः प्राथम्येनाभिनन्दनीयो धन्यवादार्हश्चेति वस्तुस्थितिकथनम। एवमेव ये ये पण्डितमहोदयाः वर्णाश्रमिणो वैषयिकाश्च समागतानां प्रतिनिधीनां अवस्थानस्थानभोजनादिव्यापारेषु साहाय्यं कृतवन्तस्तेऽपि श्रीशिवबक्षवागडीप्रभृतयः सर्वथाऽभिनन्दनीया धन्यवादार्हाश्च।

## ( १ ) विचारसभायाः प्रथमदिनवृत्तम्।

कार्तिककृष्णप्रतिपदि सोमवासरे भुवेश्वरमन्दिरप्राङ्गणे अखिलभारतवर्षीयब्राह्मणमहासम्मेलनाङ्गभूतविचारसभायाः प्राथमिककार्यारम्भो जातः। श्रीमज्जगद्गुरुपूज्यपादसङ्केश्वरकरवीरपीठाधीश्वर श्री १०८ शङ्कराचार्यचरणा, यदुगिरियतिराजमठाधिपतिश्री १०८ सम्पत्कुमारमुनिचरणाः, श्रीनाथद्वाराधिपतयः गोस्वामिकुलतिलक श्री १०८ दामोदरलालमहाराजाश्च प्रातर्नवघटिकासमये गण्यमान्यैर्ब्राह्मणमहासम्मेलनसदस्यैरितरैश्च नागरिकैः सह सनातनधर्मजयोद्घोषपुरस्सरं सनतितति सादरं प्रतिगृहीताः सभामण्डपं प्रवेशिताश्च काशीस्थजूनानिरञ्जनीनिर्वाणीप्रभृतिमठान्तर्गता बहवः सन्यासिनश्च सभाया मासनपरिग्रहमकार्षुः। श्रीयुक्तराजोपाधिविभूषितः मोतीचन्दमहोदयः भूम्यधिकारिश्रीयुक्तकवीन्द्रनारायणमहोदयः काशीस्थास्तथा प्रधानधनिनो ब्राह्मणा इतरे च सभायां समवेता अभूवन्। भारतवर्षस्य विभिन्नप्रान्तीयाः समाजमूर्धन्या दिगन्तविश्रान्तयशसः सार्धत्रिसहस्रसंख्या ब्राह्मणपण्डिताश्च सभायामागता आसन्। प्रथमं मङ्गलाचरणानन्तरं धर्माचार्याणामभिनन्दनं संवृत्तम्। ततश्च जगद्गुरुश्री १०८ शङ्कराचार्यपादाः स्वीयमुद्रितभाषणमपठन्। अनन्तरं श्री १०८ रामानुजमुनिवराः

सम्पत्कुमारपूज्यपादाः स्वीयाभिभाषणेन सभाशोभां महतीं सम्पाद-
यामासुः । म० म० पं० पञ्चाननतर्करत्नमहोदया अपि सम्भाषणेन सर्वा-
नानन्दयामासुः । सर्वेषामेवैतेषां वाग्धोरणी श्रोतृजनचित्ताल्हादकारिणी
सुबोधा सारगर्भिता चासीदिति नातिशयोक्तिः । अनन्तरं विचारसभा-
मन्त्रिणः म० म० श्रीयुक्तानन्तकृष्णशास्त्रिणः समुदघोषयन् यदागामि-
दिवसमारभ्य दिनसप्तकं यावत् विचारसभा भविता । तत्र वादिनः
प्रतिवादिनश्च विचारसभानिर्दिष्टनियमावलीमङ्गीकृत्य वादं कर्तुं चेदभि-
लषन्ति तर्हि विचारं कुर्वन्तु, जल्पवितण्डयोर्नात्रावसरः, तत्त्वनिर्णयार्थ-
मेवेयं सभा समाहूतेति रागद्वेषपरिवर्जनपूर्वकं सर्वैरत्र प्रवर्तितव्यमिति
प्रार्थ्यते। यतः शास्त्रार्थनिर्णय एव हि चिकीर्षितः, तस्य यथा सिद्धिः स्यात्
तथा सर्वैः समवधानं कार्यमित्यस्माकं निवेदनम् । विचार्यविषये प्रश्नाः
पूर्वमेव श्रीमतां समीपे प्रेषिताः, बहुभिरत्रोपस्थितैरनुपस्थितैश्च विशिष्टै-
र्विद्वद्भिर्देशान्तरीयैरुत्तराण्यपि प्रेषितानि तेषामुत्तराणामतिविस्तृतत्वा-
त्संक्षेपेण तदीयसारसंग्रहणपूर्वकं मुद्रणं विधाय तानि पुस्तकानि विचारा-
त्पूर्वमेव श्रीमतां समीपे प्रेषयिष्यन्ते। तेषां सर्वेषां समालोचनां विधाया-
नन्तरं विचारसभायां स्वसम्मतिः सर्वैर्विज्ञापनीया । इत्याद्युक्त्वा मुद्रितां
नियमावलीं सर्वेभ्यः प्रतिनिधिभ्यः प्रदत्तवन्तः । ततश्च तद्दिवसीय-
कार्यसमाप्त्यनन्तरं सर्वेभ्यो धर्माचार्येभ्यः पण्डितेभ्यश्च धन्यवाद-
प्रदानपूर्वकमेकत्रादनसमये सभासमाप्तिरभूत् ।

## विचारसभाया द्वितीयदिनवृत्तान्तः ।

सौरकार्तिकस्य त्रयोदशदिवसे मङ्गलवासरे मध्याह्न एकघटिका-
समये विचारसभायाः कार्यारम्भः सञ्जातः । पूज्यपादाः सर्वे धर्माचार्याः
पण्डिताश्च यथासमयमागत्य स्वस्वासनान्यलमकुर्वन् । अस्मिन्
दिवसे पूर्वदिनापेक्षयापि ब्राह्मणपण्डिता दर्शकाश्चाधिकसंख्यया
सम्मिलिता अभूवन् । सभामण्डपे कुत्रापि स्थानं रिक्तं नासीत् । धर्मा-
चार्याणामनुमतिप्राप्त्यनन्तरं विचारसभासम्पादकाः म० म० श्रीयुक्ता-

नन्तकृष्णशास्त्रिणः सर्वानाचार्यान्-पण्डितमण्डलीश्चाभिवाद्य संक्षेपेण विचार्यविषयान्विचारप्रणालीं विचारोद्देश्यं च व्यवीवृतन्। नाना-प्रदेशीयपण्डितगणप्रेषितप्रश्नोत्तराणां संक्षिप्तसारसङ्कलनपूर्वकं यैव पुस्तिका पूर्वं सम्मुद्रिताऽऽभूत् तस्या भूमिकामात्रं पठित्वोपस्थितानां सभ्यानां पण्डितानां च सविधे प्रत्येकमेकैकां वितीर्य संक्षेपेण तात्पर्य-वर्णनपूर्वकमकथयन् इदं ब्राह्मणमहासम्मेलनं धर्मस्थितये समाजस्थितये सनातनधर्मानुयायिनां संघटनाय च समनुष्ठितमिति नाविदितमिदं श्रीमतामतः सर्वेषां भवतां पूजनीयानामस्मिन्सम्मेलने निर्दिष्टविचार-करणार्थमनुग्रहदृष्टिः प्रार्थ्यते—अस्माकं मध्ये उपासकसम्प्रदायभेदेन सत्यपि मतभेदे सर्वाण्येव मतजातानि शास्त्रानुमोदितानि शिष्टैर्यथा-वत्परिगृहीतानीति तदवलम्ब्य विप्रतिपत्तीनां विचाराणां च बहूनां सत्त्वेपि श्रुतिस्मृतिपुराणादिमतविरोधिविप्रतिपत्तीनां निराकरणाय नासीत्कदाचिदपि मतभेदः। यदा यदा सनातनधर्मविप्लवाय विरो-धिनां प्रवृत्तयः प्राबल्येन समजायन्त तदैव सनातनधर्मावलम्बिनः सम्भूय सत्यपि परस्परं मतभेदे वयं पञ्चोत्तरं शतमितिन्यायेन परस्पर-साहाय्यसम्पादनपूर्वकं विरोधिनां मतानि निरस्य सनातनधर्ममूलभूत-वेदस्मृतीतिहासादिग्रन्थान् समरक्षन्निति सर्वेषामेव श्रीमतां विदितम्। अद्यात्र महासम्मेलनविचारसभायां विभिन्नमतानुवर्तिनाम् पण्डितानां सत्त्वेऽपि तथैव श्रीमतां सर्वेषां पारस्परिकविरोधभावत्यागपूर्वकं केवलं तत्त्वनिर्णयायैव निरपेक्षतया जयपराजयपरीक्षामनुद्दिश्य वादकथायै प्रवृत्तिर्भवत्विति प्रार्थ्यते। अतः परं विचार्यविषयाणां यानि प्रश्नोत्तर-पत्राण्यासादितानि मुद्रितानि तेषामेकैकशः प्रश्नस्योत्तरे सञ्जातान् मतवा-दान् सङ्क्षिप्यावर्णयन्। प्रथमप्रश्नचतुष्टयं विवाहविषयं परस्परानु-बन्धि चेति प्रथमचतुष्टयस्योत्तराण्येकत्र सङ्गृहीतानि। यान्यत्रोत्तराण्य-धिगतानि तत्र त्रयो मतवादा विद्यन्ते। कन्याया उद्वाहस्य कालोऽष्टम-वर्षात्प्राक्नियन्त्रणीय इति केचित्, दशमवर्षादर्वागित्यपरे। अन्ये च

द्वादशवर्षात्पूर्वमिति। कन्याविवाहाङ्ककालविषये केचिद्‌द्वादशवर्षावधि केचिदृतुदर्शनात्पूर्वं षोडशवर्षपर्यन्तं कन्याविवाहकालः शास्त्रसंम्मत इत्यवर्णयन्। एके च विंशतिवर्षवर्यन्तं तदूर्ध्वं वा कन्याया विवाहकालः सत्यपि रजोदर्शने वरालाभेऽशीतिवर्षदेशोयाऽपि कन्या विवाह्या। परेतु सर्व एवैतत् स्वीकुर्वन्ति यत्कन्याया रजोदर्शने पापभागिनस्तत्पित्रादयः पापक्षयार्थं प्रायाश्चित्तार्हाः। विशेषतस्तु प्रथमपक्षीया एवमकथयन् रजोदर्शनात् परं प्रायश्चित्ते कृतेऽपि कन्या नैव विवाह्या कृते च विवाहे नैव व्यवहार्यता। अपरे तु कृते प्रायश्चित्ते व्यवहार्यतेति। पुरुषाणान्तु विवाहपूर्वकालः षोडशवर्षादष्टादशवर्षात् एकविंशतिवर्षाच्चेति मतत्रयं शेषकाले तु प्रायः सर्वेषां पञ्चाशद्वर्षपर्यन्त इति। प्रश्नोत्तराणामिमानेव मतभेदानवलम्ब्य विचारो जातः दिवसेस्मिन् विभिन्नप्रान्तीयाः सप्त विश्रुतकीर्तयो निम्नलिखिताः प्रख्यातपण्डिता मध्यस्था निर्वाचिता अभवन्।

१ वंगदेशीयाः म० म० पं० श्रीयुक्तचण्डीदासन्यायतर्कतीर्थाः।
२ मैसूरराजप्रेरिता ,, ,, विरूपाक्षशास्त्रिणः।
३ मिथिलादेशीयाः ,, ,, शशिनाथझा महोदयाः।
४ मैसूरराजप्रतिनिधयः ,, श्रीनिवासाचार्य एम०ए० महोदयाः।
५ काशीस्थाः ,, श्रीरामभवनोपाध्यायाः।
६ सह्याद्रिदेशीयाः ,, श्रीरामानुजाचार्यप्रतिनिधयः।
७ राजपुतानाप्रान्तीयाः ,, श्रीनन्दकिशोरभट्टाः।

श्रीयुक्त पं० श्रीराजेश्वरशास्त्रिणः, श्रीहाराणचन्द्रशास्त्रिणः, म० म० पं० तातसुब्बारायशास्त्रिणः, म० म० पं० दुर्गाचरण सांख्यवेदान्ततीर्थाश्च वादिनः प्रतिवादिनश्चाभवन्।

अष्टमवर्षादृतुदर्शनपर्यन्तं कन्याविवाहकाल इति प्रायः सर्वेषां सम्मतमभूत्। अष्टमवर्षात्पूर्वमपि विवाहः प्रचलति सोऽपि नाऽशास्त्रीयः, परन्तु शास्त्रोक्तगुणवद्वरलाभ एव प्रशस्तकालात्पूर्वं विवाहो योग्यः

सम्प्रति न तथाऽनुसन्धीयते, इति अष्टमवर्षात् प्राक् कन्याविवाहो यदि केनचित्समाजेन निवार्येत दृष्टानुगुण्यपर्यालोचनया, तर्हि तत्र नास्माकं विरोध इति, अस्मिन् विषये मतभेदो नासीत्। परन्तु श्रीयुक्त-विन्ध्येश्वरीप्रसादशास्त्रिणोऽकथयन् यद्दशमवर्षात् प्राक् कन्याविवाहो नोचित इति तन्निषेध एव श्रेयान्। केचिदकथयन् यन्महासम्मेलनेनेदं निर्णीयतां यदष्टमवर्षादर्वाक्विवाहो यथा न प्रचलति। केचिच्च महा-सम्मेलनस्य नात्राधिकार इति प्राहुः। विचारोऽयमत्रैव परिसमाप्तः विचारार्थं मध्यस्थसमीपे लिपिबद्धस्वस्वमतवादा अर्पिताः पुरुषाणा-मपि विवाहस्य पूर्वः कालः षोडशावधिकः, अष्टादशावधिकः, एकविंशति-वर्षावधिकश्चेति। शेषकालः अष्टचत्वारिंशद्वर्षान्तः पञ्चाशद्वर्षपर्यन्त-श्चेति मतभेदाः विचारार्थं तथैव मध्यस्थसमीपे समर्पिताः।

अतः परमृतुमतीकन्याविवाहाविषये विचारारम्भो जातः। विचारोऽयं दिनद्वयपर्यन्तमासीत्। वंगदेशीयपण्डितास्तु वर्णयन्तिस्म यदि पित्रादी-नामौदासीन्येन कन्यर्तुमती भवति तदा ते प्रायश्चित्तार्हाः, कन्याया अपि शास्त्रविहितदोषशान्तिः कर्तव्या, परन्त्वेतादृशस्थले कन्या नाविवाह्या नापि अव्यवहार्या, शास्त्रे रजस्वलायाः कन्यायाः वृषलीत्वकीर्तनं नैता-दृशस्थलपरं, परन्तु यत्र पित्रादीनां दोषाभावः कन्या स्वेच्छया विवाह-पराङ्मुखी भवति ततश्च रजस्वला जायते तत्रैव शास्त्रीयवृषलीत्व-कीर्तनम्, एवं अकृतप्रायश्चित्तां कन्यां यदि कश्चिद्विवहति तदा स वृषली-पतिर्भवति अव्यवहार्यश्च जायते।

श्रीराजेश्वरशास्त्रिप्रभृतिदाक्षिणात्यादिदेशीयास्तु वर्णयन्तिस्म यदि पित्रादिदोषेण कन्यर्तुमतीभवेत् तदा प्रायश्चित्तान्ते सा विवाह्या व्यव-हार्या च भवितुमर्हति। परन्तु यदा स्वेच्छयाऽकृतविवाहैव रजस्वला भवति तदा कृतप्रायश्चित्तापि अविवाह्याऽव्यवहार्या च सा परित्याज्येति शास्त्रसम्मतम्। इदन्तु ब्राह्मणविषयमिति केचित्, केचिच्च सर्व-वर्णसाधारणमित्यकथयन्।

## तृतीयदिनवृत्तान्तः ।

सौरकार्तिकस्य चतुर्दशदिवसे बुधवासरे मध्याह्नसमये विचारसभायाः पूर्ववदारम्भो जातः। अद्य म० म० पं० श्रीपञ्चानन तर्करत्न महोदयाः सभाया नियामका आसन्, ऋतुमतीकन्याविवाहविषये मध्यस्था वादिनः प्रतिवादिनश्च पूर्वदिवसीया एव। शास्त्रप्रमाणानि प्रदर्शितानि व्याख्यातानि च। परन्त्वेष सर्वसम्मतो निर्णयो न जातः, यत्पित्रादिदोषेण कन्याया रजोदर्शने प्रायश्चित्तान्ते कन्या विवाह्या व्यवहार्या च भवितुमर्हति। यदा स्वेच्छया विवाहपराङ्मुखी कन्या रजस्वला जायते तदा प्रायश्चित्तान्ते व्यवहार्या विवाह्या चेति वंगदेशीय-श्रीयुक्त शशिभूषणस्मृतितीर्थ प्रियनाथसांख्यतीर्थानां मतम्। श्रीयुक्त राजेश्वर शास्त्रिणां नैव विवाह्या व्यवहार्या चेति मतमासीत्। तत्सर्वं विचारार्थं मध्यस्थानां सविधे समर्प्य अतः परं ब्राह्मणादिवर्णानां मध्ये येऽवान्तरभेदाः सन्ति तेषां परस्परं विवाहसम्बन्धो भवितुमर्हति नवेति विषयमधिकृत्य विचारः प्रारब्धः, श्रीयुक्त दामोदर शास्त्री उत्कलदेशीयः तथा श्रीयुक्तकाशीनाथ कर्मकाण्डी चाकथयताम्, कलावसवर्णाविवाहो निषिद्धः, परन्त्ववान्तरश्रेणीमध्ये परस्परं विवाहो भवितुमर्हति। सूर्योदयसम्पादक,श्रीविन्ध्येश्वरीप्रसादशास्त्री-महाराष्ट्रीया-कोलाब्राह्मणपरिषत्प्रतिनिधिः श्रीयुक्त लक्ष्मणशास्त्री तर्कतीर्थश्चोक्तमतं समर्थयतः स्म, ततो मद्रदेशीय श्रीयुक्त सुन्दरेश्वर शास्त्री, श्रीयुक्त राजेश्वरशास्त्री चाकथयताम्—यश्च श्रेणीविभागो बहुपुरुषपरम्परातः प्रचरति तत्तच्छ्रेणीमध्य एव विवाहादिकार्यं प्रचलति, तदन्यथाकृत्य श्रेणीभेदो न कर्तव्यः एतदनुकूलानि वचनान्यप्यदर्शयन्। श्रीयुक्त हाराणचन्द्रशास्त्रीतु प्राह यन्नैतद्वचनं श्रेणीभेदविषयकमिति। वङ्गीयास्तु बहवः पण्डिता अवान्तरश्रेणीमध्ये विवाहस्य विरोधिमतमुदघोषयन्।

## चतुर्थदिवसीयं वृत्तम्।

अस्मिन्नपि दिवसे मध्यान्ह एव विचारसभारम्भो जातः। अस्मिन्नपि

दिवसे एतादृशी लोकसंख्यावृद्धिरासीत् येन सभामण्डपायतनवृद्धिरपि कर्तव्याऽभूत् अस्मिन्विचारे निम्नलिखिता नवीना मध्यस्था निर्वाचिता आसन्—

१ आन्ध्रदेशीयाः म० म० पं० तातसुब्रायशास्त्रिणः ।
२ महाराष्ट्रदेशीयाः ,, सीतारामशास्त्रिणः शेएडेइत्युपाह्वाः
३ कामरूपदेशीयाः ,, श्रीनारायणचन्द्रमिश्राः ।
४ बाम्बेप्रदेशीयाः श्रीवलभद्रभट्टकविकाव्यरत्नाकरमहोदयाः
५ बङ्गीयाः म० म० ,, चण्डीदास न्यायतर्कतीर्थाः ।
६ ,, ,, कालीकिशोर स्मृतिरत्न महाशयाः ।
७ मद्रासदेशीयाः म० म० ,, विरूपाक्षशास्त्रिणः ।

अस्मिन्नपि दिवसे म० म० पं० श्रीयुक्त पञ्चाननतर्करत्नमहाशया एव सभानियामका आसन् ।

प्रथमं पूर्वदिवसीयाऽसमाप्तविचारस्यालोचनायां प्रवृत्तायां मिस्मिलरशुद्धिकर्तुः कुर्तकोटिशङ्कराचार्यस्य प्रतिनिधिपण्डितानामन्यतमः कश्चिदकथयत् यन्नियमावलीपरिवर्तनमावश्यकं नोचेत्सभाया अस्या वयं न सहयोगं करिष्यामः । विषयेऽस्मिन्नालोचनायां स्थिरीकृतं महासम्मेलनकर्तृपक्षीयैर्यत्प्रथमदिनमारभ्य दिनत्रयपर्यन्तं कैरपि नियमावलीपरिवर्तनविषये किमपि नोक्तं विभिन्नप्रान्तीयसमागतसार्द्धत्रिसहस्रपण्डितानां यस्मिन्नापत्तिर्न विद्यते तत्र कस्यचिद्व्यक्तिकमतसमर्थनाय न युक्तं नियमपरिवर्तनम् । केनचिद्दर्शकेन दण्डायमानेन कथितं कुर्तकोटिशंकराचार्यप्रतिनिधिभिरवगतं यदत्र विचारे नास्ति जयाशा सुतरां किमपि छलमुद्भाव्य स्वसम्मानरक्षायै प्रयत्यते । तस्मादकिञ्चित्करमिदम् ।

## धर्मपरिवर्त्तनम् ।

अतः परं षष्ठप्रश्नस्य विचारः समारब्धः । कीदृशा धर्मज्ञा धर्मस्य कीदृशं परिवर्तनं कर्तुमर्हन्ति, धर्मस्य सङ्कोचनाख्यं उत नूतनधर्मप्रवर्तनाख्यम् । विषयेऽस्मिन्विचारिते प्रायशो मतभेदा नासन् प्रायः सर्वएवाकथयन्

यद्वेदादिशास्त्ररहस्यज्ञा विहितकर्मानुष्ठानद्वारा निर्मलचरित्रा रागद्वेष-रहिता धर्मज्ञाः कालानुरूपं मानवसामर्थ्यं विचार्य धर्मं नियन्तुं शक्नुवन्ति। वेदप्रमाणकं धर्मं कोपि परिवर्तयितुं नार्हति। ततः परं भागवत-धर्मदीक्षाद्वारा जातिः परिवर्तिता भवति नवेति प्रश्नस्य विचार आरब्धः। अस्मिन्नपि नासीन्मतभेदः सर्व एवाकथयन् पूर्वजन्मकृतकर्मफलेन जातिर्लभ्यते, सा च नैहिककर्मणा परावर्तयितुं शक्यते। परं तु ऐहिक-शुभाशुभकर्मद्वारा उत्कर्षापकर्षौ भवतः। नीचजातीयानामपि द्विजाति-श्रेष्ठत्वं शास्त्रे यदुक्तं तस्यायमेवाभिप्रायो यत्तादृशा नीचा अपि भगवद्भक्ता अमुष्मिन् काले भगवदनुग्रहेण ब्राह्मणोचितशुभगतिं लभन्त इति, भगवद्भक्तिविमुखानां यद्धीनजातीयत्वकीर्तनं तस्याभिप्रायस्तु स्वजात्युक्तकर्माकरणेनाशुभकर्मकरणेन च परत्र हीनजात्युचितां गतिं लभन्त इति।

अतः परं शूद्राणां प्रणवोच्चारणे प्रणवयुक्तमन्त्रग्रहणे चाधिकारो विद्यते नवेति प्रश्नमवलम्ब्य दीर्घकालं विचारो जातः तत्राधिकसंख्याकाः पण्डिताः प्रणवोच्चारणप्रणवयुक्तमन्त्रग्रहणाधिकारविरोधिन आसन् कतिपये च श्रीविन्ध्येश्वरीप्रसादप्रमुखा वैष्णवाश्च केचन तत्पक्षसमर्थका आसन्। सर्वेषां मतं श्रीयुक्तराजेश्वरशास्त्रिश्रीहाराणचन्द्रशास्त्रिभ्यां खण्डितम्। विचारस्त्वत्रैव समाप्तः। उभयपक्षीयवादा लिपिबद्धा मध्यस्थनिकटे समर्पिताः।

## पञ्चमदिवसीयवृत्तान्तः।

सौरकार्तिकस्य षोडशदिवसे सोमवासरे विचारसभायाः पञ्चमाधिवेशने मध्यान्ह एवारब्धे दर्शकसङ्ख्याऽतिशयेन प्रवृद्धाऽऽसीत्। तत्रैतदेव च द्रष्टव्यं यद्ब्राह्मणपण्डितानां 'संख्यावृद्ध्यपेक्षया दर्शकानां संख्यावृद्धिरधिकाऽऽसीत्। शास्त्रविचारमहिमैतावान् यदनधिगतशास्त्रार्थानपि प्रतिदिनमाचकर्ष। तेऽपि निर्वाचः यामाधिककालं तत्रोपविष्टा निश्चलाः श्रद्धावन्तः साग्रहमशृण्वन्। पुराणादिश्रवण इव जातादरा

धमबुद्ध्या सुशिक्षिताः ससभ्याः कतिकति मानवाः प्रतिदिनं सम्मेलन-कर्तृपक्षाणां सविधे प्रवेशपत्रार्थमगमन्। परं स्थानाभावेन सर्वेषां मनोरथं पूरयितुमसमर्था एव तेऽभवन्। दिवसेऽस्मिन् किञ्चिन्न्यून-पञ्चसहस्रसंख्याकाः प्रतिनिधयो दर्शकाश्चासन्। अद्य रामप्रसन्नाचार्यः प्रमाणयितुमचेष्टत: यत्षडक्षरशिवमन्त्रेऽष्टाक्षरविष्णुमन्त्रे चान्त्यजाना-मप्यधिकार इति। श्रीयुक्तराजेश्वरशास्त्री प्रमाणमुपन्यस्य प्रत्यपादयत् यद्भाषाख्यलौकिकमन्त्रे भगवन्नामस्मरणकीर्तनयोश्चान्त्यजानामधिकारः, प्रणवादियुक्तमन्त्रे कस्मिन्नपि नास्त्यधिकार इति। अत्रैव लिपिबद्धो-विचारो मध्यस्थसमीपे समर्पितः। अतः परं नवीना निम्नलिखिता मध्यस्था निर्वाचिता अभवन्।

१ म० म० पं० श्रीहाथीभाईशास्त्री।
२ ,, ,, दुर्गाचरण साङ्ख्यवेदान्ततीर्थः।
३ ,, ,, फणिभूषण तर्कवागीशः।
४ तर्कविद्वान् पं० नागेश शास्त्री।
५ पं० रमानाथभट्टो देवर्षिः।
६ ,, पूर्णचन्द्राचार्यः।
७ ,, मार्कण्डेयमिश्रः।

नियामका भारतधर्ममहामण्डलप्रधानभूता दयानन्दस्वामिन आसन्।

## शुद्धिविचारः।

वर्तमानार्याभिधेयानार्यप्रवर्तिताशास्त्रीयक्रियाविशेषरूपा शुद्धिर्न शा-स्त्रीया नापि समाजानुकूला प्रत्युत वर्णाश्रमाचारविध्वंसिनी इति। युक्तितर्कशास्त्रै राजेश्वरशास्त्रिविन्ध्येश्वरीप्रसादशास्त्रिसूर्यनारायण-स्मृतिरत्नैः प्रतिपादिता। जन्मगतम्लेच्छत्वनिबन्धनास्पृश्यताप्राय-श्चित्तैर्नाप्युद्यते न वा ब्राह्मणादिजातिर्लभ्यत इत्यत्र शास्त्रीयप्रमाण-मपि तेषां न विद्यते। सर्वेषां जन्मना जातिर्न काचित् कर्मकोटिभिः

इति सूतसंहिताप्रमाणं कलिकाताविश्वविद्यालयाध्यापकमहामहोपाध्याय पण्डित श्रीसीतारामशास्त्रिभिः प्रदर्शितम्। ततश्च देवलस्मृति प्रामाण्यविषये विचारो जातः।

## षष्ठदिवसीयो वृत्तान्तः।

सौरकार्तिकस्य सप्तदशदिवसे शनिवासरे मध्यान्हसमये विचार आरब्धः। अद्य नियामकाः प्रथमं म० म० पं० पंचाननतर्करत्नाः, ततः दयानन्दस्वामिनः। मध्यस्था अपि प्रथमं पूर्वदिवसीया अनन्तरं निम्नलिखिता निर्वाचिताः।

१ श्रीयुक्त पं० श्रीशङ्करतर्करत्न भट्टाचार्याः।
२ ,, रामकृष्ण सोमयाजिनः।
३ म० म० पं० कमलकृष्ण स्मृतितीर्थः।
४ पं० रङ्गोरंगाचार्याः।
५ पं० आशुतोष स्मृतिरत्नभट्टाचार्याः।
६ पं० मुक्तिनाथमिश्राः।
७ पं० बालकृष्णशास्त्रिणः।

अद्य किलविचारणीयो नाम विषयः "पतितपरावर्त्तनम्" अर्थात् कीदृश्यामवस्थायां कृतप्रायश्चित्ताः पतिता वर्णाश्रमि-समाजे समर्हन्ति प्रवेष्टुम्? कस्यां वाऽवस्थायां कृतप्रायश्चिता अपि ते नेति? उत ते स्वतन्त्रसम्प्रदायान्तर्गता एवेति?

अस्मिन्नवसरे श्रीमल्लक्ष्मणशास्त्रितर्कतीर्थमहोदयैरेवंनाम प्रतिपाद्यते यत् "शास्त्रे हि यदुपलभ्यते पृथक्—पतितानां तदकृतप्रायश्चित्त-पतितपरम्, कृतप्रायश्चित्तानान्तु स्वस्वीयसमाजे निराबाधमस्त्येव प्रवेशनमिति"—ततश्चैतदवलम्ब्य म० म० श्रीमदन्तकृष्णशास्त्रिभिः सह जातायां कियत्कालं विमतौ तमेव तर्कतीर्थं प्रति प्रश्न एवमुदपादि "यदि पतितोत्पन्नाः चतुर्थ्यो वत्सरेभ्योऽधिककालं पिजादेः पकमन्न-

मश्नन्ति तर्हि ते प्रायश्चित्तान्ते व्यवहरणीया नवेति ?" तदोत्तरयतिस्म तर्कतीर्थमहाभागः—"मन्मते पातित्यमस्त्येव, परन्तु ते प्रायश्चित्तान्ते व्यवहार्य्या एवेति, यद्यपि चात्र निबन्धकाराणां सम्मतिर्नोपलभ्यते तथापीदं मदीयमेव मतमिति ।

अत्रावसरे श्रीमद्राजेश्वरशास्त्रिभिरभाषि—"प्रायश्चित्तान्तेऽपि पतितोत्पन्नास्तनया अव्यवहार्य्या एव, परन्तु पतितोत्पन्ना कन्या कृतप्रायश्चित्ता व्यवहार्य्यतामालभेत ।

अथ सुरेशचन्द्रविद्यानिधिभिरेवमभिहितं "पतितोत्पन्नपुत्र-कन्यादिव्यवहारविषये न नाम शास्त्रीयो विधिविशेषः समुपलभ्यते, प्रायश्चित्तविवेके तु म० म० शूलपाणिनोक्तं—"पतितोत्पन्नत्वमपि संसर्ग-विशेषः" सुतरां पतितोत्पन्नाः पुत्राः कन्याश्च स्वयमकृतपापजनक-कर्म्माणः कृतप्रायश्चिता व्यवहार्य्यतां नूनमापद्यरेन् ।

श्रीयुतश्रोजीवन्यायतीर्थैरुक्तं "त्रिपुरुषं पितृतो मातृतश्चाशुद्धाः" इत्यादिवचने त्रिपुरुषपदसन्दर्शनात् त्रिपुरुषमध्ये पतितोत्पन्नाः प्रायश्चित्तान्ते व्यवहारयोग्या इतरथा त्वव्यवहार्य्या एव ।

ततश्चैवमेव प्रकटिते बहुमते, सकलदेशोयसुधीसमाजीयं पृथक् पृथङ्मतमगत्या परिगृहीतम् । तत्र च वंगोयानां कृतप्रायश्चित्त-पतितो-त्पन्नव्यवहार्य्यताविषये ऐकमत्यम्, गौड़ीयानां सारस्वतानाञ्च अव्यवहार्य्यताविषये । महाराष्ट्रीयानाञ्च केषाञ्चन व्यवहार्य्यतायां केषाञ्चनाव्यवहार्य्यतायामिति मतानैक्यम् ।

ततो म्लेच्छानामन्त्यजानाञ्च स्पर्शविषये, सभाप्रवेशविषये, कूपोदक-ग्रहणविषये, देवालयप्रवेशविषये, जात्यन्तरापेक्षया तारतम्यसंरक्षण-विषये च समजनि विचारव्यवहारः ।

तारतम्य-संरक्षणं शास्त्रसम्मतमेवेत्यत्रैकमत्यं सर्वेषामेव सभारूढां, परन्तु श्रीमद् राजेश्वरशास्त्रि-गोपालशास्त्रिमहोदयाभ्यां 'गुणतारतम्ये चाण्डालापेक्षया म्लेच्छानां हीनत्वमस्त्येव निःसन्देहं,

किन्तु विषयविशेषे यवनादीनां चाण्डालादुत्कर्षोऽपि वर्त्तते—यथा—चाण्डालानां ग्रामवाह्यता, म्लेच्छानान्तु न तथा, देवालयप्रवेशेऽपि चाण्डालापेक्षया म्लेच्छानां सन्निकृष्टस्थानगमनाधिकारः, इत्यादि-विषये युक्तिः प्रमाणञ्च प्रादर्शि ।

अत्र च श्रीमत्पूर्णचन्द्राचार्य्य—रामशास्त्रि—लक्ष्मणतर्कतीर्थ-मार्कण्डेयमिश्रप्रभृतयो बहव एव पण्डिताः प्रतिवादमकार्षुः । अवकाशे चास्मिन् म० म० श्रीयुत दुर्गाचरणसांख्यवेदान्ततीर्थमहोदयै-रवाचि—"विद्यन्ते किल बंगदेशे ये नाम चाण्डालाः,सर्व एव ते देवद्विज-भक्तिपरायणा दयादाक्षिण्यादिगुणशालिनो लोकतः शास्त्रतश्च म्लेच्छा-दितो गुणैरुत्कृष्टाः ग्रामनिवासिन एव, न तु ग्रामबाह्याः, बहुकालं प्रचलिते ह्यस्मिन् विचारे नियामकनियमानुसारेण वादप्रतिवादीय प्रमाणयुक्त्यादिकं—लिपिवद्धमर्पितमन्तिके मध्यस्थानाम् ।

ततश्च सभासमयातिवाहादद्यतनं कृत्यमत्रैव परिसमाप्तमिति ॥०॥

## "सप्तमो दिवसः" ।

सौरकार्त्तिकस्याष्टादश दिवसे सूर्य्यवासरे द्विक घटिकायां पूर्व-पूर्वदिवसानुरूपं सभाकर्म्म समारब्धम् । अद्य किल श्रीयुतरमानाथभट्ट-महोदया नियामकपदमध्यतिष्ठन् । पूर्वदिवसीयावशिष्टांशविचारः प्रथमतः सञ्जातः—तत्र च कूपोदकादिग्रहणे अन्त्यजानामधिकारविषयो ह्यवलम्बितः । म० म० श्रीयुतदुर्गाचरणसांख्यवेदान्ततीर्थमहोदयैः—"चाण्डालादिभिश्चतुर्हस्तन्यूनपरिसरकूपजलस्पर्शे दोषोऽस्ति, तदधिक-परिसरस्य 'कूपस्योदकस्पर्शे च नास्त्येव दोषः कोऽपीति तत्साधकं—

समन्ताच्चतुर्हस्तस्तु जलाशयो भवेद् यदि । अन्त्यजैरपि संस्पृष्टः पूतो भवति निश्चित इति वृद्धयाज्ञवल्कीयप्रमाणमपि प्रादर्शि ।

किन्त्वत्र श्रीवलभद्रभट्ट—राजेश्वरशास्त्रिप्रभृतिभिः ' प्रत्यवादि । "चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलं"मित्यादिवचनेन याज्ञवल्क्या-वचनस्य विरोधपरिहारार्थं एवं वक्तव्यं यत्—तद्वचनं चाण्डालेतरपर-

त। परन्तु म० म० श्रीयुत दुर्गाचरणसांख्यवेदान्ततीर्थ प्रियनाथ-सांख्यतीर्थ—कृष्णचन्द्रस्मृतितीर्थ—प्रभृतिभिरेवमुक्तं—"न भवता-मेवंरीत्या विरोधपरिहारः समीचीनतया प्रतिभाति,—यतो येषां स्पृष्ट-जलमपेयं तैः स्पृष्टं जलाशयीयजलं कथं नाम पेयं स्यात्? सुतरां वृद्धयाज्ञवल्क्यीयवचनं चाण्डालेतरपरमिति तु न रमणीयम्। "चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जल"मित्यादिवचनं चतुर्हस्तन्न्यूनपरिसरकूपोदकपरिग्रहविषयकमेवेति भवति सर्वं सुसमञ्जसमिति।

किन्त्वेवमपि मतानैक्यादुभयपक्षस्य, तदुभयपक्षीयमतं लिपिबद्धं मध्यस्थसकाशे समर्पितम्।

ततोग्रामप्रवेशविषये, देवालयप्रवेशविषये च म्लेच्छादितार-तम्यसंरक्षणं कर्त्तव्यं नवेत्यत्रलक्ष्य चर्चा जाता।

श्रीमद्राजेश्वरशास्त्रिप्रभृतयः—प्रमाणप्रदर्शनपुरःसरं समभिदध-तिस्म चैव—"म्लेच्छादयः--चाण्डालादिभ्यः सर्वथा हीना अपि ग्राम-देवालयप्रवेशविषये कथञ्चित्तेभ्यः सोत्कर्षाः। यद्यपि नैतद्युक्ति-समुपबृंहितं नाम तथापि वाचनिकविषये युक्ति र्नसावसरेति।

किन्त्वत्र वङ्गीयाः अन्यान्यप्रदेशीयाश्च पण्डिताः नैतन्मतमुररी-चक्रुः। तैरप्यत्र प्रतिवादावसरे प्रमाणानि युक्तयश्च बहुशः प्रदर्शिता-नीति उभयपक्षस्य मतानैक्यादेतदपि लिपिबद्धं मध्यस्थानां सविधे समर्पितम्।

ततोव्रात्यसंस्कारविषये विचारः समजनि। अत्र श्रीयुतकृष्ण-चन्द्रस्मृतितीर्थैरेवमभिहितं "त्रिपुरुषादूर्द्ध्वं सावित्रीपतने व्रात्य-संस्कारः, प्रायश्चित्तं वा न शास्त्रसिद्धम्। बडोदा-वासि-श्रीमदमृतलाल शास्त्रिभिर प्रत्यवादि। तेषामयमभिप्रायः—"आपस्तम्बसूत्रार्थ-पर्य्यालोचनया एवमवगम्यते यत् प्रपितामहादूर्द्ध्वं बहवोऽपि पुरुषा यद्यनुपनीताः ..ापि व्रात्यप्रायश्चित्तान्ते उपनयनयोग्या एव। अत्र

म०म०पं० श्रीयुतानन्तकृष्णशास्त्रिणां प्रश्नः-यद्येवमेवाप स्तम्वसूत्रतात्पर्य मवगम्यते तदा प्रपितामहादिपदसार्थक्यं किं नाम स्यात्? किं पितामह-व्यावर्त्तकमेव वैतदिति? इत्यवसरे : श्रीमन्नारायणविद्यारत्नैरुक्तं—पारस्करगृह्यसूत्रे स्पष्टं निषेधो दृश्यते 'न चतुर्थे' अर्थात् चतुर्थपुरुषे व्रात्यसंस्कारो नयुज्यते, ततः प्रतिवादी सन्तोषजनकोत्तरविरहा-दगत्या निवृत्तिमेव स्म समालम्बते।

ततो विधवा--विवाहविषये समारब्धो विचारः विधवोद्वाहः सर्वथैवाशास्त्रीय एवेत्यत्र न कस्यचनापि वैमत्यं, किन्तु श्रीगिरिजा-भूषणगोस्वामिना केनचन विधवोद्वाहपौरोहित्यं-विदधता प्रतिवादोऽस्य व्यधायि। किन्तु शास्त्रे संस्कृतभाषायाञ्च तस्य व्युत्पत्तेरभावात् कियत्-कथनानन्तरमेव सलज्जो विषादमलीमसवदनो निरस्त स्तूष्णीम्बभूव।

निर्विवादमशास्त्रीयत्वसिद्धावपि विधवाविवाहे विधवोद्वाह-पक्षपातिनो ये नाम शास्त्रब्रुवा युक्त्यादिकं प्रमाणञ्च गृह्णन्ति तत्तदवलम्ब्य बहुक्षणं चर्च्चया भ्रमात्मकमेव विधवाविवाहसमर्थन-मिति सुदृढं सुस्पष्टञ्च स्थिरीकृतं सर्वैरेव पण्डितधौरेयैः।

ततश्च धर्म्मपरिवर्त्तनविषये आलोचना समारब्धा, अत्रापि विषये न केषामपि विप्रतिपत्तिः, अर्थात् धर्म्मपरिवर्त्तने अलौकिकज्ञानसम्पन्ना एव कालोपयोगितया प्रभवन्ति, नत्वत्र लौकिकानामधिकारः, महर्षि-भिरेव वेदतत्त्वं पर्य्यालोचयद्भिर्ज्ञानदृष्ट्या विभाव्य च बहुकालं योगज-बलेन सूक्ष्मदर्शिभिः, यद्यत् कालोपयोगितया समुपदिष्टं तत्परिवर्त्तने नाधुनिकाना मणुरप्यधिकारः।

एवमेवं सुचारु सम्पन्ने सकलविचारकार्ये विचारसभायां समा-गतेभ्यो धर्म्माचार्य्येभ्यो ब्राह्मणपण्डितेभ्यः—सन्न्यासिभ्यश्च सज्जन-संघेभ्यः सर्वेभ्य एव, म० म० पं० श्रीमदनन्तकृष्णशास्त्रिपादैः प्रदाय धन्यवादान् परिसमापितमतियोग्यतया सभाकृत्यमिति शम्॥

---

## धन्यवादाः ।

विगते कार्तिकमासे यदखिलभारतवर्षीयब्राह्मणमहासम्मेलनं निर्विघ्नतया सम्पन्नं तत्र केवलं भगवत्कृपैव कारणमिति निश्चयेनेदानीं वक्तुं शक्यते । यदि नाम भगवतो विश्वेश्वरस्य कृपाकटाक्षो नाभविष्यत्कथमपि नेदं सम्मेलनमभविष्यत् इति श्रीमतो जगदीश्वरस्य चरणारविन्दयोरसंख्याः प्रणतयो निवेद्यन्ते । सनातनधर्मविरोधिनः प्रायः सर्वएव सुधारकपदवाच्या नास्तिका अस्य सम्मेलनस्य विध्वंसनाय यथाशक्ति समचेष्टन्तेति तु प्रसिद्धमेव । ब्राह्मणपण्डिता अस्मदीया अपि दुरोदरदरीपूर्तये विरोधिनां धर्मविरोधिनां सेवां कुर्वाणा अन्नदोषेण कर्तव्याकर्तव्यविवेकज्ञानशून्या विशेषेणास्य विघाताय प्रायतन्तेति महता दुःखेनावेद्यते । केचिच्चास्मदीयहितचिन्तका इति बहिः प्रकाशयन्तोपि कर्मणा विरुद्धतामेव समाचरन्, अस्य सम्मेलनस्य स्वागताध्यक्षस्य विविधविरुदावलीविभूषितस्य श्रीमतः काशीनरेशस्यास्मिन्सम्मेलने स्वागताध्यक्षपदपरित्यागार्थं महान्तमायासमङ्गीचक्रुः । केचित्तु कथमिदं सम्मेलनं निर्विघ्नंसम्पाद्यते तद्द्रक्ष्यते सभामण्डपएव भस्मसात्करिष्यते इत्यपि प्रतिज्ञां कृत्व तस्याः सम्पादनाय सर्वात्मनाऽपेक्षितां सामग्रीं सम्पादयामासुः । अन्ये च वृत्तपत्रसम्पादका विरुद्धपूर्वापरासम्बद्धमिथ्यावृत्तान्तप्रचारादिभिरस्य सम्मेलनस्योपघाताय प्रयत्नं निरवशेषमकुर्वन्निति सुप्रसिद्धमेवैतत् सत्यप्येवं प्रत्यूहसन्दोहे यदिदं सम्मेलनमेवंरीत्या निर्विघ्नं सम्पन्नं तत्र नान्यत्किमपि कारणं केवलं भगवतः कृपैवं तत्र हेतुरित्यगत्या स्वीकर्तव्यम् । कथमितरथाऽद्य यावदेवंविधं पूर्वं कदाप्यभूतं ब्राह्मणमहासम्मेलनं संवृत्तं यत्र सार्धत्रिसहस्रसङ्ख्याकाः पण्डिता देशान्तरेभ्यः स्वव्ययेन महान्तं क्लेशं पथि श्रमं शरीरास्वास्थ्यमित्यादिबहुतरविघ्नबाहुल्ये सत्यपि समागत्य स्वगृहकार्यमिव किं बहुना स्वकीयकन्याया विवाहे यादृशः परिश्रमः स्वीक्रियते ततोऽप्यधिकतया परिश्रमं स्वीकृत्य कार्यं समपादयन्

काशीस्था देशान्तरेभ्यः समागताश्च स्वयमेव कथयन्ति नाद्य यावदेवं-विधं सम्मेलनं दृष्टपूर्वम्। यदसम्भावितं तदप्यनायासेन सम्पन्नमिति कथं नेदमीश्वरस्य चिकीर्षितम्। किं केनापि स्वप्नेऽप्येवं सम्भावित-मासीद्यत्परस्परविरोधिनः सर्वे धर्माचार्या एकत्रोपविश्य शान्ततापूर्वकं वादिप्रतिवादिनां मतानि सम्यगुपश्रुत्य विचिन्त्य च सर्वाविरोधेनै-कमत्येन निर्णयं प्रदास्यन्तीति। अनेन हि सम्मेलनेनाधुनातनानां राज-कीयाणां सुधारकाणां च य आक्षेपा आसन् तेषां सर्वथा कार्यरूपेण निरसनं कृतमित्यत्र नास्ति सन्देहः। राजकीयैः पुरुषैर्हि सर्वदेदमेव निगद्यते भारते वर्षे हि प्रायः सर्वे धर्माचार्याः परस्परं विरोधिनः केचिच्छैवा अपरे वैष्णवा अन्ये च शाक्ता इति कृत्वा परस्परं कलहमेवानिशप्रद-मारचयन्तो दृश्यन्ते तदनुयायिनश्च तदपेक्षयापि महान्तं विरोधमुत्पाद्य परस्परं युद्धमेव कुर्वन्त उपलभ्यन्ते इति यत्र देशे धर्मं निमित्तीकृत्य महानविवादो भवति कथं तस्मिन्देशे स्वराज्यवार्तापि क्षेमङ्करी स्यात्। तथैव सुधारका अपि राष्ट्रियसभाव्यपदेशेनेममेवार्थं पुरस्कृत्य धर्मवन्धनं सर्वथाऽनर्थायैव ब्राह्मणानां प्राधान्ये सर्वथाऽस्य देशस्य धर्मभेदनिब-न्धना महती दुरवस्था भवतीति धर्मचर्चा सर्वथा समुपेक्षणीयैवेति कथ-यन्तः जातिभेदं वर्णाश्रमधर्मव्यवस्थां च विलोपयितुमिच्छन्तो विधवाविवाहशुद्धिपतितपरावर्तनास्पृश्यतोच्छेदादिशास्त्रविरुद्धं कार्यमेव सम्प्रति भारतवर्षस्य समुन्नतिसाधनमित्यादि प्रजल्पन्तः ब्राह्मणाः सर्वथा शिलां गले वद्ध्वा सामुद्रेऽम्भसि निमज्जयितव्या इत्यादिकं वर्णयन्ति, अपरे च वदन्ति सर्वथा ब्राह्मणाः स्वार्थपरायणा एतैर्हि द्रव्यमन्तरा कि-मपि न क्रियते, द्रव्यप्रदाने च यत्किमपि कार्यमकार्यं वा तस्य विवेकमकृत्वा धर्मशास्त्रविरुद्धामपव्यवस्थां प्रदातुं किञ्चिदपि कुण्ठिता न भवन्ति। तत एभिर्देशोद्धारः कथं करिष्यते प्रतिवर्षं राष्ट्रियमहासभां कांग्रेसपदा-भिधेयां पश्यतामप्येतेषां मनसि नायं विवेकः समुदेति अहो एते पाश्चा-त्यशिक्षाशिक्षिताः स्वीयेनैव व्ययेन महान्तं श्रममङ्गीकृत्य प्रतिवर्षे सभायां

सम्मिलन्ति देशस्योन्नत्यर्थं नानाविधां चेष्टां कुर्वन्ति अस्माभिः किमि-तिस्वार्थत्यागो न विधेयइति। एतेषां सर्वेषामाक्षेपाणां प्रत्युत्तरं कार्यरू-पेणास्मिन्महासम्मेलने धर्माचार्यैर्ब्राह्मणपण्डितैश्च प्रदत्तमित्यत्र नास्ति-सन्देहः। सर्वेपि धर्माचार्याः स्वीयव्ययेनैव काश्यामागत्य पारस्परिकमत-भेदानद्य यावदनुवर्तमानानपि समुपेक्ष्य सनातनधर्मविषये सर्वेषामैकमत्यमे-वेति स्पष्टं प्रदर्शयन्तिस्म। सर्वेषामेकविधनिर्णये सम्मतिप्रदानेन जगद्गुरु श्री १०८ शङ्कराचार्याः, श्री १०८ रामानुजाचार्यचरणाः, प्रतिवादिभयङ्कर श्री १०८ मदनन्ताचार्यस्वामिनः, श्रीनाथद्वाराधिपति १०८ श्रीदामोदर लालमहाराजाः, कांकरोलीपीठाधिपतयः, मथुरापीठाधिपतयः, काशी-पीठाधिपतयश्च सर्व एव महान्तं श्रममङ्गीकृत्य सम्मेलनशोभां व्यवर्द्धय-न्निति कस्य नाम सचेतसो हर्षाय न स्यात्। अत्रागमने हि न किमपि दृष्टं प्रयोजनं साधनीयमासीत् यतोऽत्रागत्य प्रत्येकं धर्माचार्याणां स्वस्वश-क्त्यपेक्षयाप्याधिक्येनैव धनव्ययः सञ्जात इति न कस्यापि तिरोहितम्। तथा ब्राह्मणपण्डिता अपि निःस्वार्थभावेनैव समागता इति सर्वेषामि-दमेकमेवोद्देश्यमासीद्यत्कथमपि सनातनधर्मस्योपरि योऽयमाघातः सम्प्र-ति सुधारकैः क्रियते तस्य प्रतीकारकरणं नाम। एवंविधस्य भावस्य जागरणं हि श्रीभगवत्कृपाया एव फलमिति भगवन्तं पुनः पुनः प्रणम्य निवेद्यते-यद् धर्माचार्याणां ब्राह्मणपण्डितानां चायमनुग्रहो न कदापि विस्मरिष्यते तदर्थमनेकेधन्यवादास्समर्प्यन्ते। तत्रापि ये राजानः सर्वथा कोमलाङ्गाः क्लेशासहिष्णवस्तेपि बहुविधान्क्लेशान्विषह्य धनव्ययं च कृत्वा समा-गमन्नितितेभ्योऽनेके धन्यवादा वितीर्यन्ते। तत्रापि श्रीमहाराजाधिराजो दरभंगानरेशः शरीरास्वास्थ्ये सत्यपि वृद्धावस्थायामप्यनेकैः पण्डित-प्रकाण्डैः श्रीकुमाराभ्यामन्यैश्चपारिषद्यैः सह महता समारोहेण समागत्य सभापतिकार्यं सुसम्पादितवानिति विशेषतो धन्यवादार्हः। अस्मिन् कराल-समये यदि नाम दरभंगामहाराजेन सभापतिपदं न गृहीतं स्यात् कथमपि कार्यमिदं सम्पादितं न भवेदिति सर्वेषां निश्चितमेवासीत्। स्वाधीन-

नरपतिवर्गेषु प्रधानतमः श्रीमान् कृष्णगढ़नगराधीशः महाराजाधिराजः श्रीयज्ञनारायणसिंह वर्मा स्वाकीयैः पण्डितवरेण्यैः सममागत्य सनातन-धर्मे श्रद्धाविशेषं यत्प्रदर्शयामास तदिदमत्याश्चर्यकारणं काशिवासिना-मितरदेशीयानां च पश्यतां जनानामासीत्। यस्मिन्दिवसे भगवतो वेदनारायणस्य शोभायात्रा निर्गता यत्र हस्त्यश्वरथपदातीनां भूयसां सन्निवेश आसीत् यत्र सर्वेपि धर्माचार्या विशिष्टमान्दोलिकाप्रभृतिया-नमधिरुह्य विविधबिरुदावलीविभूषिताः शोभां संवर्द्धमामासुः यां शोभायात्रामवलोकयितुं लक्षसंख्याका जनाः सममिलन् तस्यां शोभा-यात्रायां श्रीकृष्णगढनगराधीशेन महाराजेन सत्यमात्मनो यज्ञनारायण-सिंह इति नाम सार्थकीकृतं श्रीमतां जगद्गुरु श्रीवल्लभाचार्यचरणप्रति-ष्ठापितदिव्यसिंहासनाधीश्वराणां गोस्वामि श्रीदामोदरलालमहाराजानां स्वर्णरत्नादिखचितं विशिष्टं सिंहासनमधिरुह्य गच्छतां दर्शनमात्रेणैव सपरिच्छेदोऽयं महाराजोऽनुचरैः सह दूरादेव पङ्किलायामपि भूमौ साष्टाङ्गं प्रणिपत्यानेकैर्धनिकैः शिष्यैरुद्दूह्यमानामान्दोलिकां स्वस्कन्धेन कियद्दूरमुद्वहतिस्म तदिदमस्य सनातनधर्मश्रद्धालुत्वमवलोक्य सर्वे एव विस्मयाविष्टाः शतशो धन्यवादान् प्रददुः धन्योऽयं धन्योऽयं राजेति, अस्माभिस्तु लोकापेक्षयाऽऽधिक्येन धन्यवादा दातुं न शक्यन्ते तावत्याः शक्तेरभावात् केवलमीश्वरचरणारविन्दयोरेत देव प्रार्थ्यते यदे-तादृशो गुरुभक्तः श्रीमान् महाराजश्चिरं धर्मं पालयंश्चिरं जीव्यादिति। तथा हथुवामहाराजः अमावांनगराधीश्वरः मकसुदपुरमहाराजश्च विशेषतो धन्यवादार्हाः इतोऽपि वहवस्तस्मिन्सम्मेलने समायाताः परं सर्वेषां नामधामादिकं सम्यङ्न विदितमिति कृत्वा नामग्राहं धन्यवादप्रदाने सामर्थ्याभावाद्ये ये समागतास्तेभ्यः सर्वेभ्योऽनेके धन्यवादा वितीर्यन्ते। एतस्य सम्मेलनस्य मूलभूतः प्रवर्त्तको यः स्वधर्मरक्षायै कृतनिजशरीरो-त्सर्गः स श्रीमान्महाराजश्रीशशिशेखरेश्वररायबहादुरो विशेषतोधन्यवा-दार्हः यस्य प्रयत्नेन सहस्रद्वयप्रदानेन च कार्यमिदमग्रेसरमभूत्। तथैव

गौरीपुराधिपतिः श्रीमान् भूम्यधिकारी श्रीव्रजेन्द्रकिशोररायचौधरी महोदयः, तथा हेमनगराधिपतिः श्रीहेरम्बचन्द्रचौधरी महाशयः तथा चौगामहाराजः राजा श्रीरमणीकान्तरायः सर्वेऽपि धन्यवादार्हाः। कलकत्ता मारवाड़ीपञ्चायत सभासदस्याः सनातनधर्ममण्डलप्रवर्त्तकाः, रायबहादुर सेठसाधुराम तुलारामगोयनका महोदयः, गौरीशंकरगोयनका महोदयः, रामधनदास झाझरिया, रामकुमारझुनझुनवाला महाशयः, रामरक्षपालझुनझुनवाला यमुनादासवैश्यप्रभृतयो विशेषतो धन्यवादार्हाः एतेषां सर्वेषांमूलभूतप्रवर्तकरङ्गलालपोद्दारमहाशस्य तु कार्यं सर्वथा प्रशंसास्पदं तस्यैव खलु प्रेरणया साधुराम तुलाराममहोदय एकादशशतं रूप्यकाणां प्रादादिति विशेषतो धन्यवादप्रदानार्हः। रायवहादुर रामेश्वरदासनाथानीमहोदयस्यस्तु सम्मेलनस्य जीवितमेवासीत् येनसार्द्धद्वादशसहस्रं रूप्यकाणां प्रदाय सम्मेलनमिदं सम्पादितमिति सर्वं श्रेय एतस्यैव वर्तते इति नातिशयोक्तिरियम्। श्रीमान् सर्ओंकारमलजटिया महोदयस्तु अत्यन्तकठिने समये साहाय्यं चकारेति तस्याधमर्णा एव सम्मेलनकार्यकर्तारः। वङ्गीयब्राह्मणमहासभासम्पादकः श्रीशरच्चन्द्र सांख्यतीर्थः कोषाध्यक्षः श्रीहृषीकेशवन्द्योपाध्यायमहाशयः सभ्याश्च सर्वे विशेषतो धन्यवादार्हाः। श्रीकाशीस्थ भारतधर्ममहामण्डलप्रधानभूताः श्रीमन्तो दयानन्दस्वामिनो विशेषेणास्मिन् कार्ये परिश्रमं व्यधुः कार्यकारिण्यां समित्यामनवरतं समागत्य प्रबन्धसम्पादनेन स्वीयकार्यकारिणां श्रीगोपालचन्द्रचक्रवर्तिनां तथा श्री अवधेशप्रसादशास्त्रिणां विन्ध्येश्वरीप्रसादशास्त्रिणामन्येषां चानुयायिनामुपरि कार्यभारं समर्प्य महदुपकृतवन्त इति ससभ्यानामेतेषां महान्तमुपकारं न विस्मरिष्यति सम्मेलनमिदम्। श्रीमान्पण्डित धूमावतीप्रसादपाण्डेयमहामहोपदेशकमहाशयस्य तु असंख्या उपकारावर्तन्ते सम्मेलनस्योपरि, यदनेन महाभागेन तथा पं० मुरलीधरचौधरीमहोदयेनचादित आरभ्यैव भूयान् परिश्रमः कृतस्तदर्थमनेके धन्यवादाः समर्प्यन्ते।

तथा काशीस्थाः पण्डिताग्रगण्या पण्डितरामभवनोपाध्यायाः, पण्डितदेवकीनन्दनशास्त्रिदर्शनालङ्काराः, पं० पूर्णचन्द्राचार्याः, पं० रामयशस्त्रिपाठिनः, पं० गणपतिशास्त्रिमोकाटेमहाशयाः, पं० श्रीहाराणचन्द्रशास्त्रिप्रभृतयः विशेषतः प्रशंसनीयाः। तत्रापि पं० पूर्णचन्द्राचार्याणां समुद्योगे नैवप्रतिवादिभयङ्करानन्ताचार्यस्वामिचरणानामागमनं संवृत्तमिति तेषां कृतज्ञाः सम्मेलनकार्यकारिणः। तथा काशीस्थधनिषु प्रधानभूतो राजा मोतीचन्द सी० आई० ई० महोदय, रायबहादुर बटुकप्रसादमहोदय, रायसाहेब माधवराम सण्डमहोदयः रायसाहेब रामरतनदास, कुमारश्रीकवीन्द्रनारायणसिंह महोदयप्रभृतयो विशेषेण स्मरिष्यन्ते सर्वदा, येषामेव साहाय्येन सम्मेलनार्थं स्थानमस्माभिरलभ्यत, इतरथा सम्मेलनमिदं दुर्घटमेव समभूत्। श्रीयुक्त मिष्टरडाक्टर कालीपदबन्द्योपाध्यायमहाशयस्यापि वयमधमर्णाः येन प्रबन्धकारिण्याः सभायाः कृते निरन्तरं स्वीयं स्थानं प्रदत्तम्। श्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालयप्रतिष्ठापकाः श्रीमन्तः पं० किशोरीलालशर्माणः तथा पं० मुरारिलाल शर्माणश्च सपरिवारा अस्मिन्सम्मेलने समागत्य सर्वेषां धर्माचार्याणां देशान्तरीयाणां च पण्डितानां विद्यालये समाव्हानपूर्वकं विशेषेण पादपूजादिपूर्वकं सदक्षिणाप्रदानादिना सत्कारं कृतवन्त इति विशेषतो धन्यवादार्हाः। श्रीयुत पं० खिस्ते नारायणशास्त्रिसाहित्याचार्याय, होशिंगोपाह्वजगन्नाथशास्त्रिणे, म० म० पं० पद्मनाथ विद्याविनोदभट्टाचार्यमहाशयेभ्यस्तथा अनन्तरामशास्त्रिप्रभृतिभ्योऽनेके धन्यवादाः प्रदीयन्ते। नागरकुलालङ्काराय ठाकुर पण्डित गोपालजी महोदयाय, पं० शम्भूरामजी महोदयाय, पण्डितप्रवराय श्रीश्यामाकान्ततर्कपञ्चाननभट्टाचार्याय, खण्डमहादेवशास्त्रिणे, रामाचार्याय, वैद्यरत्न श्री श्रीनिवासशास्त्रिणे, श्रीमुकुन्दपन्त पुणताम्कर इत्युपाख्याय, श्रीमण्डलीकर गोपीनाथशास्त्रिणे, पं०श्रीगोपालभट्टभट्टाय, पं० द्राविड़ श्रीविश्वनाथशास्त्रिणे, श्रीहेमेन्द्रकुमारभट्टाचार्याय, श्रीशिवरामशास्त्रिणे, यावन्तो धन्य-

वादा दीयेरन् तावन्तोऽल्पा एव, येषामनवरतपरिश्रमेणैतत्सम्मेलनं सफलमभूत् । तथा यैर्यैर्महाशयैः शिवबक्षबागड़ी श्रीकृष्णगोपालबागड़ी प्रभृतिभिः साहाय्यं कृतं सर्वेभ्योऽनेकेधन्यवादाः समर्प्यन्ते । प्रबन्धकारिण्याः समितेः सभापतिसहकारिसभापतिपदमलङ्कुर्वद्भ्यस्तत्र भवद्भ्यो म० म० पंचाननतर्करत्नमहोदयेभ्यस्तथा म० म० पं० वामाचरणभट्टाचार्यमहाशयेभ्यः, म० म० पं० श्रीलक्ष्मणशास्त्रिद्राविड़महाशयेभ्यः समर्प्यन्ते भूयांसो धन्यवादास्तथा म० म० पं० अनन्तकृष्णशास्त्रिवेदान्तविशारदेभ्यः, न्यायाचार्य पण्डित श्रीराजेश्वरशास्त्रिद्राविड़महोदयेभ्यः, साहित्याचार्य पं० श्रीताराचरणभट्टाचार्यमहाशयेभ्यः, पं० श्रीश्रीजीवन्यायतीर्थ एम्० ए० महोदयेभ्यो, मन्त्रिसहकारिमन्त्रिपदमलंकृतवद्भ्योपि येषामेव सततपरिश्रमेण देशान्तरपरिभ्रामेण निरर्गलया वाग्मितयाच सम्मेलनस्य निर्विघ्नं समाप्तिरभूत् । येषामेव महाभागानां परिश्रमेणैतावान् सन्नाहः सम्पन्नः, पुनरपि तेषां सविधे प्रार्थनमिदं यत्भवद्भिरुत्साहपूर्वकमेवमेव धर्मकार्ये साहाय्यं करणीयमिति ।



अखिलभारतवर्षीयब्राह्मणमहासम्मेलनेन

# स्वीकृताः प्रस्तावाः ।

—⁂—

## प्रथमः प्रस्तावः—

१ गोरक्षणं सनातनधर्मीयाणां मातृपालनमिव परमं कर्तव्यमिति सर्वैरपि सनातनधर्मीयैस्तदर्थं बद्धपरिकरैर्भाव्यमितीयं सभा साभिनिवेशं सूचयति ।

प्रस्तावकाः— १ पं० अखिलानन्द कविरत्नः ।

अनुमोदकाः—२ म० म०पं० विरूपाक्षशास्त्रिणः ।

३ म० म० पं०दुर्गाचरणसांख्यवेदान्ततीर्थाः ।

## द्वितीयः प्रस्तावः—

२ इदानीं किल व्यवस्थापकजानपदसभायां "शारदा बिल्" इति यः प्रस्तावो वर्तते, तस्य सनातनधर्ममर्मोच्छेदकत्वेन सनातनधर्मीयमानसमर्मविदारकत्वादियं सभा सुतीव्रं तं निषेधति । जोघुष्यते च महाराज्ञी व्हिक्टोरियादत्ताभिवचनानुसारेणायं प्रस्तावः सम्राट्प्रतिनिधिमहोदयैर्जानपदसभायां स्वाधिकारेण निरोद्धव्य इति । एतदर्थं च ब्राह्मणमहासम्मेलनेनानेन यथाशक्ति सर्वात्मना प्रयतितव्यं स्यात् । एतदुपायगवेषणाय कार्यकरणाय चोपसमितिरेका नियोज्यते—

( १ ) म० म० पं० गिरिधरशर्माणः ( राजपुताना )

( २ ) म० म० पं० अनन्तकृष्णशास्त्रिणः ( संपादकः )

( ३ ) शरच्चन्द्रसांख्यतीर्थमहाशयाः ( बङ्गाल )

( ४ ) एन० जी० सावरकर ( अकोला, महाराष्ट्र )

( ५ ) कनपर्त्ति मार्कण्डेयशर्मा ( मद्रास )

प्रस्तावकाः—१ म० म० पं० गिरिधर शर्माणः।

अनुमोदकाः—२ म० म० पं० हाथीभाई शास्त्रिणः।

३ म० म० पं० श्रीतातसुब्बरायशास्त्रिणः।

४ दर्शनालङ्कार पं० देवकीनन्दनशास्त्रिणः।

## तृतीयः प्रस्तावः—

३ एतद्ब्राह्मणसम्मेलनं भारतीयव्यवस्थापकसभां प्रादेशिकसभां च सनिर्बन्धं विज्ञापयति यथा व्यवस्थापकसभायां नगरपरिष्कारकसभायां च ये भारतीयवर्णाश्रमसनातनधर्मविरुद्धास्तत्तत्समाजव्यवस्थाविघातकाः प्रस्तावा उपस्थाप्यन्ते, तैर्भारतीयजनताया महान् व्याकोपो भवति, समाजधर्महानिश्च भवति। ततश्च ते तत्र कदाचन स्थानं न लभेरन्, तथा व्यवस्थापनीयम्। यदि तथाप्युपस्थापयिष्यन्ते, तर्हि भारतीयब्राह्मणैस्ते न स्वीकरिष्यन्ते, विरोधश्च करिष्यते।

प्रस्तावकाः—(१) पं० रमानाथमिश्राः।

अनुमोदकाः—(२) „ काशीनाथशास्त्रिणः।

(३) „ वामनदास विद्यासागराः।

## चतुर्थः प्रस्तावः—

४ इदं महासम्मेलनं तत्तद्देशीयानां सर्वभूतानां सर्वदेशीयानां च सन्दिग्धानां जटिलानां च समस्यानां निर्णयार्थं प्रतिप्रान्तं दशानां पण्डितानां धर्मपरिषद्घटनमावश्यकं मन्यते। तत्तत्प्रान्तीयानां सविधे प्रार्थ्यते—यत्तत्तत्संस्थाद्वारा स्वीयानि सूचनानि देयानि।

प्रस्तावकाः—(१) पं० गङ्गाविष्णुशर्माणः।

अनुमोदकाः—(२) „ कालूरामशास्त्रिणः।

(३) „ भगीरथ गोस्वामिनः।

(४) „ खगेन्द्रनाथशास्त्रिणः।

(५) „ माधवराव दाणीशर्माणः।

(६) „ रामभद्रोपाध्यायाः।

## पञ्चमः प्रस्तावः—

५ सनातनधर्मप्रदीपग्रन्थस्य पुनःसंस्कारार्थमागतानां समालोचनानामापाधोद्धापेन समीकरणार्थं चाधोनिर्दिष्टप्रकारेणोपसमितिरेका घटनीया, यया संवत्सरमध्ये तत्प्रकाशनार्थं समुचितः प्रबन्धः क्रियेत ।

१ म० म० पं० श्रीपञ्चाननतर्करत्नभट्टाचार्यः ।
२ „ „ „ श्रीलक्ष्मणशास्त्रिणो द्राविडाः ।
३ „ „ „ वामाचरणभट्टाचार्य महोदयाः ।
४ „ „ „ श्रीविरूपाक्षशास्त्रिणः ।
५ „ „ „ प्रभुदत्तशास्त्रिणोऽग्निहोत्रिणः ।
६ „ „ „ पद्मनाथविद्याविनोद भट्टाचार्याः ।
७ „ „ „ हाथीभाई शास्त्रिणः ।
८ „ „ „ शशिनाथ झा महोदयाः ।
९ „ „ „ हरिहरकृपालुशर्म महोदयाः ।
१० „ „ „ दुर्गाचरण साङ्ख्यवेदान्ततीर्थ महोदयाः ।
११ „ „ „ श्रीअनन्तकृष्णशास्त्रिणः ।
१२ „ „ „ गिरिधरशर्माणः ।
१३ पं० नागेशशास्त्रिणः ।
१४ पं० श्रीराजेश्वरशास्त्रिणो न्यायाचार्याः ।
१५ शुद्धाद्वैतभूषण पं० श्रीरमानाथ देवर्षिः ।
१६ पं० रेड्डी रङ्गाचार्यमहोदयः ।
१७ पं० शशिभूषण स्मृतितीर्थः ।
१८ पं० पूर्णचन्द्राचार्यः ।
१९ पं० भगवानदत्तशर्माणोऽग्निहोत्रिणः ।
२० पं० अखिलानन्द शर्मा कविरत्नः ।
२१ पं० माधवरावदाणी महोदयः ।
२२ पं० मल्लादि श्रीरामकृष्णशास्त्रिणो महाग्निचितः ।

२३ पं० गणपतिशास्त्री मोकाटे महोदयः ।

२३ पं० गुलाबझा महोदयः ।

२५ पं० ताराचरणभट्टाचार्यः ।

२६ पं० हाराणचन्द्रशास्त्री ।

२७ पं० श्रीश्रीजीवन्यायतीर्थः एम् ए० ।

२८ पं० रामभवनोपाध्यायाः ।

२९ पं० देवकृष्णाशास्त्रिणः ।

३० पं० दर्शनालङ्कार देवकीनन्दनशास्त्रिणः ।

३१ पं० कृष्णमाचार्य महोदयः ।

३२ पं० रमापति मिश्रः ।

३३ पं० ढएढराधाकृष्ण मिश्रः ।

तत्तत्सनातनधर्मसंस्था संपादकाः ।

धर्माचार्याणां द्वौ द्वौ प्रतिनिधी ।

प्रस्तावकाः—१ पं० श्रीछोटु महाराजाः ।

अनुमोदकाः—२ पं० वाणीभूषण श्रीनन्दकिशोर शर्माणः ।

३ पं० श्रीश्रीजीवन्यायतीर्थाः ।

४ पं० श्रीदेवकृष्णशास्त्रिणः ।

५ पं० तेयूर सुब्रह्मण्यशास्त्रिणः ।

## षष्ठः प्रस्तावः—

( ६ ) महासम्मेलनमिदं संस्कृतविश्वविद्यालयस्यैकस्य स्थापनमत्यावश्यकं मन्यते, तदर्थं धनसंग्रणार्थमधोनिर्दिष्टानां महाशयानां नामानि-निरूच्यन्ते—

सर्वे धर्माचार्याः ।

१ श्रीमन्महाराजाधिराज दरभङ्गानरेशः ।

२ म० म० पं० श्रीलक्ष्मणशास्त्रिणो द्राविडाः ।

३ म० म० पं० वामाचरणभट्टाचार्याः ।

४ म० म० पं० गिरिधरशर्माणः ।

५ म० म० पं० श्रीअनन्तकृष्णशास्त्रिणः ।

६ कलकत्तापञ्चायतसभा ।

७ राजाशशिशेखरेश्वरराय महोदयः ।

८ श्रीसाधुराम तुलाराम गोयनका ।

९ श्रीव्रजेन्द्रकिशोररायचौधरी ।

१० सर ओंकारमल जटिया ।

११ राजामोतीचन्द महोदयः, इत्यादयः ।

प्रस्तावकाः—१ म० म० पं० श्रीनन्तकृष्णशास्त्रिणः ।

अनुमोदकाः—२ म० म० पं० श्रीलक्ष्मणशास्त्रिणो द्राविडाः ।

३ पं० मदनमोहनशास्त्रिणः ।

४ पं० गोपीनाथशर्माणः बी० ए० ।

५ पं० रमापतिमिश्राः ।

६ श्रीमन्महाराजदरभङ्गानरेशः ।

## सप्तमः प्रस्तावः—

अतः परं सर्वेऽपि प्रस्तावाः स्वयं सभापतेरभ्यनुज्ञया श्रीअनन्तकृष्णशास्त्रिभिरेवोपन्यस्ताः ऐकमत्येन स्वीकृताश्च ।

(७) जानपदशासनसभायाः सभास्तारनिर्वाचनावसरे सर्वैरपि सनातनधर्मिभिः स्वीयं मतं तेभ्य एव प्रदातव्यम् , ये किल सनातनधर्मश्रद्धालवः शास्त्रैकशरणाः कदाचिदपि धर्मघातकप्रस्तावं स्वयं नोपन्यसिष्यन्ति वा नानुमोदिष्यन्ते जानपदशासनसभायां प्रादेशिकशासनसभायां चेतीयं सभा साग्रहं सूचयति ।

## अष्टमः प्रस्तावः—

(८) जानपदशासनसभायाः प्रादेशिकशासनसभायाश्च सभास्तारनिर्वाचने धर्माचार्याणां विशेषाधिकारस्तथा संस्कृतविद्यालयाधिगतो-

पाधीनां सर्वेषां शास्त्रिणां पंडितानां च स्वीयमतदानाधिकारश्चाविलम्बे-
नैव प्रदेय इत्यपीयं सभा सूचयति साग्रहम् ।

नवमः प्रस्तावः—

( ९ ) अखिलभारतीयब्राह्मणमहासम्मेलनकार्यकारिसमितिरेका श्री-
काशीधामनि तत्तद्देशीयानां समसंख्यानां प्रतिनिधीनां कार्यनिर्वाहक-
सदस्यानां निर्वाचनेन घटनीयेति मन्यते ।

सभापतिः—१ महाराजाधिराज श्रीदरभङ्गानरेशः ।

सहकारिसभापतिः—२ म० म० श्रीयुक्त पं० पञ्चाननतर्करत्नभट्टाचार्यः ।

सदस्याः—३ म० म० पं० वामाचरणभट्टाचार्याः ।

४ म० म० पं० गिरिधरशर्म्माणः ।

५ म० म० पं० हाथीभाईशास्त्रिणः ।

६ म० म० पं० पद्मनाथविद्याविनोद भट्टाचार्याः ।

७ म० म० पं० श्रीविरूपाक्ष शास्त्रिणः ।

८ म० म० पं० श्रीतातसुब्बरायशास्त्रिणः ।

९ म० म० पं० केशवराव ताम्हन महोदयाः ।

१० म० म० पं० अभ्यङ्कर श्रीवासुदेवशास्त्रिणः ।

११ म० म० पं० प्रभुदत्तशास्त्रिणोऽग्निहोत्रिणः ।

१२ म० म० पं० शशिनाथ झा महोदयाः ।

१३ म० म० पं० हरिहरकृपालुशर्मणामहोदयाः ।

१४ म० म० पं० हरिनारायणशास्त्रिणः ।

१५ म० म० पं० दुर्गाचरणसाङ्ख्यवेदान्ततीर्थ महोदयाः ।

१६ म० म० पं० श्रीलक्ष्मणशास्त्रिणो द्राविडाः ।

१७ म० म० पं० यादवजी त्रिकमजी आचार्य महोदयाः ।

१८ पण्डित श्रीरामभवनोपाध्यायमहोदयाः ।

१९ „ दर्शनालङ्कार श्रीदेवकीनन्दशास्त्रिणः ।

२० „ पूर्णचन्द्राचार्यः ।

२१ „ अखिलानन्दशर्माणः ।

२२ „ भगवानदत्त शर्माणोऽग्निहोत्रिणः ।

२३ „ भट्टश्रीनन्दकिशोरशास्त्रिणः ।

२४ „ तर्कविद्वान् श्रीनागेशशास्त्रिणः ।

२५ „ मल्लादि श्रीरामकृष्णशास्त्रिणो महाग्निचितः ।

२६ „ शास्त्ररत्नाकर श्रीकृष्णशास्त्रिणः ।

२७ „ गणपतिशास्त्री मोकाटे महोदयः ।

२८ „ गुलाबझा महोदयाः ।

२९ „ शरच्चन्द्र साङ्ख्यतीर्थः ।

३० „ माधवराव रामचन्द्रदाणी महोदयः एम्० ए०
काव्यतीर्थश्च ।

३१ „ गणेशचन्द्रजी काव्यतीर्थः ( चुरू )

३२ „ रेड्डी रङ्गाचार्य महोदयः ।

३३ „ बद्रीदासपुरोहितः ।

३४ „ देवदत्तमिश्रमहोदयः ।

सम्पादकः—३५म०म० पं०श्रीअनन्तकृष्णशास्त्रिणो वेदान्तविशारदाः ।

सहकारिसंपादकाः–३६ पण्डित ताराचरण भट्टाचार्यः ।

३७ „ श्रीराजेश्वरशास्त्रि द्राविडो न्यायाचार्यः ।

३८ „ श्रीहाराणचन्द्रशास्त्री ।

३९ „ श्रीश्रीजीवन्यायतीर्थः एम्० ए० ।

## दशमः प्रस्तावः—

(१०) सर्वेषां भारतवर्षीयाणां ब्राह्मणानां सङ्घटनार्थं च तत्तद्देशीयैः सर्वैरपि ब्राह्मणैः स्वस्वदेशे सम्मेलनस्य शाखासमितयः संस्थापनीयाः । यत्र च प्रदेशे पूर्वमेव ब्राह्मणसभा वर्तन्ते ताभिश्च शाखासमितित्वमवश्यमेव स्वीकर्तव्यम् ।

## एकादशः प्रस्तावः—

(११) तत्तज्जातिभिः स्वयं समुत्कृष्टजात्यन्तरभावावलम्बनेन तत्र तत्र समाजे इदानीं विशेषत आघाताः क्रियमाणा अत्यन्तमेव शास्त्रदृष्ट्या समाजदृष्ट्या चायोग्याः। यथा खाती, जाङ्गडाः, वैद्याः, सुवर्णवणिजः, तक्षाः, कायस्थाः, माहिष्याः, अम्बष्ठाः, कम्मरेड्डि, तन्तुवाय, कैवर्त प्रभृतयः।

## द्वादशः प्रस्तावः—

(१८) उत्तरास्मन् प्रदेशे श्रीमद्भगवत्पादशङ्कराचार्यस्थापितज्योतिर्मठस्य पुनश्च जीर्णोद्धारः कर्तव्य इतीयं सभा साभिनिवेशं सूचयति।

## त्रयोदशः प्रस्तावः—

(१३) त्रैलोक्यपावनश्रीभागीरथीप्रवाहः कुत्रापि न रोद्धव्यः, तथा मलमूत्रवाहकनलिकास्तत्र प्रवाहे नोत्सर्जनीयाः। तथा कृते धर्मनिष्ठानामस्माकं महती पीडा स्यात्, धर्महानिश्च भवति। इतीयं सभा सूचयति।

---

## प्रथममभ्यर्थनापत्रम्।

प्रधानत आलोच्या विषयाः—

१ विवाहः। २ शुद्धिः। ३ स्पृश्यास्पृश्यविचारः।
४ जातिपरिवृत्तिः। ५ आवश्यकं चान्यत्॥

परिस्थितिविशेषेण शास्त्रपरिवर्तनवादिनः केचन, केचन तु शास्त्रं प्रमाणमूरीकृत्यैव परिस्थित्यनुगुणं व्याख्यानपद्धतिमात्रपरिवर्तनवादिनः, अपरे च प्राचीनव्याख्यानपद्धतिमेवालम्ब्य तत्तत्प्रमाणविशेषेण परिस्थित्यनुगुणमर्थशास्त्रप्राधान्योपष्टंभनेन शास्त्रोपयोगं व्यवस्थापयन्तः परे च धर्मशास्त्राविरोधेनार्थशास्त्रोपयोगाङ्गीकारेण प्राचीनपद्धत्या यथावच्छास्त्रोपयोगपक्षोऽपि न दोषायेति वादिन इति भिन्नभिन्नप्रस्थानाः समाजा इति वस्तुस्थितिकथनमिदम्।

तत्रान्त्यपक्षावलम्बिनामुपान्त्यपक्षावलम्बिनां च संघटनं धर्मशास्त्रस्य वैयक्तिकाधिकारित्वमर्थशास्त्रस्य समाजाधिकारित्वमिति विवेचनेन, एवमन्तिमपक्षावलम्बिनामपि मध्ये शास्त्राणां प्राचीनपद्धत्यनुसारेण शुद्ध्यादौ प्रामाण्यमस्त्येव, तथा न तदस्तीति मतभेदनिरासेन संघटनम्, यथोपयोगं राजनीतिक्षेत्रेऽपि प्राचीनमतावलम्बिनां प्रवेशव्यवस्थापनं च विना जीवनाशाऽपि भारतीयानां सुदूरे इति नेदं कस्यापि तिरोहितम् । ततश्चेदमवश्यं प्राचीनमतावलम्बिनामप्यवसरप्राप्तम्-यत् स्वीयावान्तरसमाजकार्यानुपघातेन समाजान्तरैकवाक्यतया च यथासम्भवं समाजहितसमालोचनम्, तथा यथाशक्ति शक्तिमतिक्रम्य वा कार्यक्षेत्रेऽपि प्रवर्तनं चेति सर्व एव प्रतिग्रामं प्रतिगृहं चानुभवन्ति व्यवहरन्ति च; कार्यावसरे परं प्रायेण सर्वेप्यन्यथैव व्यवहरन्ति । एतन्निबन्धनमेव वयं मन्यामहे, व्यवस्थापकसभादिषु राजनीतिसभासु च प्राचीनधर्मविरोधिनो बहव एव प्रस्तावाः प्रस्तूयन्तेऽस्मदीयैरेव । अतोऽवसरप्राप्तमिदमस्माकं सर्वेषाम्-यत् प्रकृतसमयोपयोगिसमस्याविशेषाणां निष्पक्षपातं विना दुराग्रहं च व्यवस्था कथं शास्त्राणामपि यथायोगं रक्षणेन कर्तव्येति समालोचनम्, एवं यथाशक्ति कार्यक्षेत्रे प्रवर्तनं च । सर्वं चेदं सर्वेषां सनातनधर्मावलम्बिनां विना मेलनं न कार्यकारि भवतीति सनातनधर्मसभास्तास्ताः शाखारूपाः, एवं मूलसभा चैका सङ्घटनीया, यत्र सर्वेषां तत्तज्जात्यादिधर्मावलम्बिनां प्राचीनमतावलम्बिनां मेलनमवश्यं भावि । तदुपोद्घाततया चेदमवश्यं कर्तव्यम्-यत् सर्वासां समस्यानां पूर्वोक्तरीत्या समालोचनार्थं सर्वदेशीयपण्डितसम्मेलनम्, तथा तद्द्वारा प्रकृतसमस्यासु सनातनधर्मावलम्बिनामवलम्बनीयस्य मार्गस्योद्घोषणमिति सर्व एवेदं मन्यन्ते प्राचीनमतावलम्बिनः । यदा खलु सनातनधर्ममण्डलं कलकत्तानगरे स्थापितमासीत्तदा तेनापि प्रथमकर्तव्यतया पण्डितवरश्रीदीनदयालुव्याख्यानवाचस्पत्यादीनां प्रोत्साहनेनेदमेव निर्णातमासीत्; न केवलमे-

केनानेन, किन्तु वङ्गीयब्राह्मणसभया, तथान्याभिश्च बहुभिरेव सभाभिर्बहुवारमिदमेवोद्घोषितमासीदिति सर्व एवेदं विजानन्ति।

तमिमं सङ्कल्पं श्रीवङ्गीयब्राह्मणसभायाः, श्रीकलकत्तासनातनधर्ममण्डलस्य चान्यासां च सभानां फलेग्रहि व्यवस्थापयितुं काश्यां श्रीविश्वनाथप्रेरणया कार्तिकमासि सूर्योपरागादव्यवहितपूर्वं कार्तिककृष्णनवमीमारभ्य (६-११-१९२८) दिनत्रयं ब्राह्मणसम्मेलनमेकं सङ्घटनीयमिति निरणायि। इयन्तं हि कालं ब्राह्मणसम्मेलनी गौडादिप्रदेशेषु सङ्घटिता। शिवत्वप्राप्तकाशीवासिमहामहोपाध्यायश्रीशिवकुमारशास्त्रिप्रमुखाणाम्, मिथिलाधिपतेः, मद्रप्रदेशवास्तव्यमहामहोपाध्यायश्रीलक्ष्मणशास्त्रिप्रभृतीनामुत्कलमहामहोपाध्यायश्रीजगन्नाथमिश्रादीनां च तदा तत्र तत्र सम्मेलनं जातम्। तत्र तत्र सभाधिवेशने बहवः शास्त्रीयसिद्धान्ता अप्युद्घोषिताः। ये खलु कुत्रचन नवीनसंस्थासु तद्विरुद्धा आक्षेपा इदानीमुद्भाव्यन्ते, तत्समालोचनार्थमखिलभारतीयविद्वद्ब्राह्मणानाहूय विचारो ह्यवश्यकर्तव्यतां प्राप्तः। ये तावदाक्षेप्तारः, ये चाक्षेपपरिहर्तारः, सर्वेषामुपस्थितिः सादरमभ्यर्थ्यते।

एतदधिवेशनमहिम्ना यथावसरं ब्राह्मणमहासम्मेलन्यामखिलभारतीयब्राह्मणपण्डितानां सहयोगः, भारतीयप्रदेशान्तरेष्वपि पश्चादधिवेशनं च भविष्यतीति सम्यगाशास्यते; यतो मद्रास्प्रदेशाद् बहवस्तत्तद्ग्रामपञ्चायतनधर्माचार्यादीनां प्रतिनिधयः, बहवश्च बम्बई इत्यादिविभागात् स्वव्ययेन प्रेषयिष्यन्त इति समधिगता लिपिबद्धा प्रतिज्ञा, श्रीवङ्गीयब्राह्मणसभया च वङ्गदेशीयाः प्रायेण द्विशतं पण्डिताः स्वप्रतिनिधिरूपेणात्र स्थायिसदस्याः स्वव्ययेनोपस्थापयिष्यन्ते।

विश्वसिमो वयं वङ्गीयब्राह्मणसभाया एव नवममधिवेशनमिमामखिभारतवर्षीयब्राह्मणमहासम्मेलनरूपतां प्रापितमिति वङ्गीया बहव एवापरेऽपि पण्डितप्रवराः समुपस्थाय सम्मेलनकार्यं सफलयिष्यन्ति। सनातनधर्ममण्डलसभापि कलकत्तानगरीया, यया प्रायेण सर्वोऽपि सम्मे-

लनव्ययभारः स्वीकृतः, सापि मरुदेशीयानां बहूनां पण्डितानामत्रोपस्थापनव्यवस्थां कारयिष्यतीति सिद्धार्थकथनमिदम्। अतः साञ्जलिबन्धमिदमेव श्रीमतां सर्वेषां सविधे प्रार्थ्यते—यत् स्वव्ययेन, स्वग्रामपञ्चायतनव्ययेन, स्वीयराजस्थानव्ययेन, केषाञ्चन धार्मिकाणां व्ययेन वा ये खलु सम्मेलनसहयोगदानेनास्माननुगृहीतुमिच्छन्ति, ते मासाभ्यन्तर एव स्वनामधामादिसूचनेनानुगृह्णन्त्वस्मान् सदयमिति।

अन्ते च तत्तादृशान् राजमहाराजादिधनिकोत्तमान् सनातनधर्माभिमानिनः सविनयमिदं प्रार्थयामहे-यत् सूर्योपरागसमयं कार्यं च सामाजिकं काशीक्षेत्रं च परमं पावनमुपलक्ष्य यथाशक्ति प्रतिनिधीनां केषांचन धूमशकटव्ययमात्रव्यवस्थापनेन सम्मेलनकार्यसम्पादनार्थं प्रेषणेनानुग्रहः कर्तव्यः। श्रीकाशीक्षेत्रधूमशकटस्थानत आरभ्य शकटप्रबन्धभोजनप्रबन्धादिभारं सर्वमपि सम्मेलनकार्यकारिसभैव निर्वक्ष्यतीति केवलं धूमशकटव्ययमात्रेण पण्डितप्रेषणमेकमेव वयं प्रार्थयामहे, नान्यत्किमपि। साञ्जलिबन्धं तत्तत्सनातनधर्मसंस्थाप्रवर्तकानां सविधे इदं निवेद्यते-यत् यथासौकर्यमचिरेणैव मासाभ्यन्तरे स्वप्रतिनिधिप्रेषणव्यवस्थादिव्यवस्थापनपूर्वकं स्वीयसहयोगादिसूचनेन, कर्तव्यांशोपदेशप्रेषणेनालोच्यविषयेषु स्वीयमतस्य संगृह्य प्रेषणेन चानुग्रहः कर्तव्य इति।

इति विधेयतमाः।

श्रीयुक्तानन्तकृष्णशास्त्री,<br>
सम्पादकः<br>
श्रीराजेश्वरशास्त्री द्राविडः,<br>
श्रीश्रीजीवभट्टाचार्यः,<br>
श्रीताराचरणभट्टाचार्यश्च<br>
( संयुक्त सम्पादकाः )

श्रीयुक्तपञ्चाननतर्करत्नभट्टाचार्यः<br>
( प्रबन्धकारिसमितिसभापतिः)<br>
श्रीयुक्त लक्ष्मणशास्त्री द्राविडः<br>
श्रीयुक्तवामाचरणभट्टाचार्यः<br>
श्रीरामभवनोपाध्यायश्च<br>
( सहकारिसभापतयः)

# द्वितीयमभ्यर्थनम्—

महानुभावाः !

श्रीकाश्यामद्य कार्यनिर्वाहकसमित्येदमस्ति निर्धारितम्—यत् समालोच्येषु शुद्धि-विवाहजातिपरिवृत्त्यादिषु प्रश्नावली प्रथममेका या खल्वनन्तरपृष्ठे मुद्रापिता, पण्डितप्रवराणां श्रीमतां सविध उपस्थापनीया यस्या उत्तराणि समालोचयितुं तत्तद्देशीयानां विशिष्टानां पण्डितानामुपसमितिरेकाऽचिरेण संघटयिष्यते ।

उपसमितिश्चेयं सम्मेलनात्पूर्वं कार्तिककृष्णप्रतिपदमारभ्य २९-१०२८ कार्तिककृष्णाष्टमीपर्य्यन्तं सर्वेषामुत्तराणां सप्रमाणं विचारविनिर्णयबुद्ध्या विमर्शनेन प्रारप्स्यतीत्यपि कार्यनिर्वाहकसमित्याज्ञयोपक्षिप्यते । आशास्यते पण्डितप्रवराः सर्वेऽप्याश्विनकृष्णाष्टमीतः पूर्वम् ( ६-१०-१९२८ ) स्वीयानामुक्तप्रश्नावल्युत्तराणां सदयं प्रेषणेनानुग्रहीष्यन्तीति । अन्ते पुनरिदं सप्रश्रयं प्रार्थ्यते-यदुत्तरसंग्रहावसरे निबन्धकाराद्दृतमीमांसापद्धतिरेव यद्यलम्भ्यते, तर्हि महाननुग्रहः स्यात् ।

प्रश्नावल्या अस्याः समालोचनं ये कुर्वन्ति ये च तेषां सर्वेषां महासम्मेलनावसरे विचारसभावसरे वा समुपस्थाय कार्येषु सहयोगं दित्सवः तत्तत्सभाद्वारा तत्तद्विद्यालयद्वारा, तत्तत्संस्थानद्वारा, स्वयं वा स्वनामधामाद्यचिरेण प्रेषयन्त्विति सप्रश्रयमभ्यर्थ्यते ।

---

अधिक श्रावण शुद्धतृतीयायाम् शनिवासरे । ( १८-८-२८ )

इति विधेयतमः
श्रीपञ्चाननतर्करत्नभट्टाचार्यः ।

## स्वागतसभाध्यक्षः ।

हिज हाइनेस महाराजाधिराज काशी-नरेश श्री प्रभुनारायणजी सिंह बहादुर के० टी०, जी० सी० एस० आई०, जी० सी० आई० ई, एल० एल० डी० महोदयः ।

## सम्मेलनाध्यक्षः ।

हिज हाइनेस महाराजाधिराज आनरेबुल भारतधर्मदिवाकर सर रमेश्वरसिंहजी बहादुर जी० सी० आई० ई०, के० सी० आई० ई०, के० बी० ई०, डी० लिट् इत्यादि महोदयः ।

## पृष्ठपोषकाः—

१ शास्त्रैकजीविताः सर्वे धर्माचार्याः ।
कलकत्ता वङ्गीय ब्राह्मणसभा ।

२ राजा श्रीशशिशेखरेश्वरराय: रायबहादुर ।

३ कलकत्तासनातनधर्ममण्डलप्रवर्त्तको मारवाडीसमाजः ।

४ रायबहादुर श्रीरामेश्वरनाथानी ( दुदवेवाला )

---

# प्रबन्धकारिणीसमितिः ।

## सभापतिः—

महामहोपाध्यायः पं० श्रीपञ्चाननतर्करत्नभट्टाचार्यः ।

## सहकारिसभापतयः ।

महामहोपाध्याय पं० श्री वामाचरणभट्टाचार्य महामहोपाध्यायपण्डित श्रीलक्ष्मणशास्त्रिद्राविड पं० श्रीरामभवनोपाध्यायाः ।

सम्पादकाः

महामहोपाध्याय पं० श्रीयुक्तानन्तकृष्णशास्त्री,
पं० श्रीराजेश्वरशास्त्री द्राविडः, पं० श्रीताराचरणभट्टाचार्यः,
पं० श्रीश्रीजीवभट्टाचार्यः एम० ए० न्यायतीर्थश्च ।

---

## ब्राह्मणमहासम्मेलननियमाः—

( १ ) निबन्धपर्यन्तधर्मग्रन्थप्रामाण्याविरोधेनैव विचारो भवितुमर्हति।

( २ ) मीमांसापद्धतिरेव विचारावसरेऽवलम्बनीया ।

( ३ ) सनातनधर्मावलम्बिनो ब्राह्मणपण्डिता एव प्रतिनिधयो विचारकाश्च भवितुमर्हन्ति ।

( ४ ) चत्वारो वर्णा अपि दर्शकपदमर्हन्ति ।

( ५ ) विना प्रवेशपत्रं केषामपि सभायां न प्रवेशः ।

( ६ ) यैः खलु यस्मिन्विषये विचारः करिष्यते, तद्विषये स्वीयमतप्रकाशको निबन्धः सम्मेलनदिनस्यैकमासतः पूर्वं सम्पादकसविधे यथासम्भवं प्रेषणीयः ।

( ७ ) इतो मासद्वयाभ्यन्तरे प्रतिनिधीनां नामानि संख्या च तत्तद्देशीयसनातनधर्मसंस्थाभिः प्रेषणीयानि, येषां नाम्ना प्रवेशपत्रं यथावसरं प्रेष्येत ।

---

* श्रीविश्वनाथः शरणम् *

# अखिलभारतवर्षीयब्राह्मणमहासम्मेलनम् ।

## निमन्त्रणपत्रम् ।

विदितमिदं सर्वेषामखिलभारतवर्षीयब्राह्मणमहासम्मेलनस्य विचारसभा कार्तिककृष्णप्रतिपदामारभ्य, अर्थात् ( २९-१०-२८ ) दिनमारभ्योपक्रमिष्यते । कार्यनिर्वाहकसमित्या कार्यप्रणालीनिश्चयप्रसंगेनेदमस्ति निर्धारितम्—यत् विचारसभायामेव तत्तत्पक्षे तत्तत्पण्डितानां मतानि संगृह्योपस्थितानां सर्वेषां धर्माचार्याणां हस्ते तानि सर्वाणि मतान्युपहर्तव्यानि, धर्माचार्यैश्चात्र निर्णयः सम्यग्विचार्य पूर्वोत्तरमतानां सयुक्तिकं संगृह्य च स्वमुखेनैव प्रकाशयिष्यते कार्तिककृष्णनवम्यां महासम्मेलनोपक्रम इति ।

महदिदं सौभाग्यम्—पूज्यपादश्रीमज्जगद्गुरु १००८ सङ्केश्वरशङ्कराचार्यचरणाः, पूज्यपादश्रीवल्लभसम्प्रदायप्रवर्तकश्रीनाथद्वाराधिपश्री १००८ गोवर्धनलालगोस्वामिचरणाः, पूज्यचरणश्रीयदुगिरियतिराजमठाधिपश्री१००८तिरुनारायणजीयरस्वामिचरणाः श्रीवैष्णवसम्प्रदायप्रवर्तकाः, अन्ये च बहव एव धर्माचार्याः स्वयमुपस्थाय सम्मेलनकार्यसहयोगदानेन सनातनधर्मसमाजं स्वीयशुभाशीर्वादेन चानुग्रहीष्यन्तीति ।

तत्र महासम्मेलनप्रथमदिन एव ( ६-११-२८ ) सर्वेषां धर्माचार्याणां विचारनिर्णयोद्घोषणं भविष्यति शुभाशीर्वादपुरःसरम् । द्वितीयदिने तृतीयदिने च (७-११-२८,८-११-२८) महाराजाधिराजश्रीदरभङ्गाधीश्वरश्रीरामेश्वरसिंह बहादुरमहाशयानामाध्यक्ष्येणावशिष्टानि सनातनधर्मस-

ङ्कटनोपयोगितत्त्वादृशप्रस्तावादिकार्याणि सम्पत्स्यन्ते। अतः सविनयमिदं प्रार्थ्यते, प्रतिनिधिभिः पण्डितप्रवरैरन्यैश्च दर्शकमहोदयैराश्विनपूर्णिमादिने ( २८-१०-२८ ) एव श्रीकाश्यामुपस्थितिः कर्तव्या तथा स्वयंसेवकद्वारा प्रबन्धकरणार्थं केन शकटेन कस्मिन्नवसरे श्रीकाश्यामुपस्थास्यत इति सूचनमचिरेणैव प्रेषणीयम्।

विचारसभा हि शास्त्रतत्त्वनिर्णयार्थैवेति निबन्धपर्यन्तधर्मग्रन्थप्रामाण्योरीकारेण नियामकानामाज्ञयैव प्रश्नकरणे उत्तरदाने वा सर्वेषामधिकारो नान्यथेति व्यवस्थया चैव भविष्यतीत्यपि सविनयं सूच्यते।

अन्ते सप्रश्रयं श्रीमतां सर्वेषां सनातनधर्माभिमानिनां सविधे विज्ञाप्यते-प्रतिनिधिरूपेण वा विचारसभायां महासम्मेलने वोभयत्रोपस्थितिसूचकस्य पत्रस्य प्रेषणेनानुग्रहः कर्तव्यः। विदितवेदितव्यानां श्रीमतां पुरतः किमधिकविलेखनेन-

इति विधेयतमः

| | |
|---|---|
| १०७ नं० दशाश्वमेध घाट रोड, | श्रीपञ्चाननतर्करत्नभट्टाचार्यः। |
| ( बनारस ) | प्रबन्धकारिसभासभापतिः। |

---

सूचनम्ः—

( १ ) प्रवेशपत्रं विना सभायां केषामपि न प्रवेशः।

( २ ) प्रवेशपत्रं स्वयंसेवकद्वारा तत्तत्प्रतिनिधीनां दर्शकानां च श्रीकाश्यामेव दीयेत।

( ३ ) विचारसभायां प्रश्नान् उत्तराणि च सर्वाणि यथायथं विलिख्य सभायामेवानुवाच्य हस्ताक्षरमपि प्रष्टृसमाधात्रोः संगृह्येत।

( ४ ) कार्तिककृष्णप्रतिपदमारभ्य प्रातरष्टमघटिकापर्यन्तं सायं तृतीयघटिकामारभ्य पञ्चमघटिकापर्यन्तं प्रत्यहं विचारसभा, कार्तिककृष्णसप्तम्यां विचारसभासमाप्तिश्च भविष्यति ।

( ५ ) विचारसभायां प्रश्नावल्या एकैकप्रश्नसमालोचनानन्तरमेव भविष्यति । सत्यवसरेऽत्यावश्यकविषयान्तरविचारोऽपि भविष्यति ।

( ६ ) कार्तिककृष्णसप्तमीमारभ्यैकादशीपर्यन्तं सहस्रचण्डीयागः ।

( ७ ) कार्तिककृष्णनवमीमारभ्य दिनत्रयं महासम्मेलनम् ।

( ८ ) धर्माचार्याणां नगरप्रवेशादिसमयो सथासमयं सूच्येत ।

---

* श्रीविश्वनाथः शरणम् *

# निमन्त्रण-पत्र ।

## अखिलभारतवर्षीयब्राह्मणमहासम्मेलन

समस्त सनातनधर्मावलम्बीय महानुभावोंसे

## सादर निवेदन ।

महाशय !

आगामी कार्तिक कृष्ण १ से लेकर १२ पर्य्यन्त तदनुसार ता० २९ अक्टोबर से ६ नवम्बर सन् १९२८ई० तक अखिलभारतवर्षीयब्राह्मणमहासम्मेलन श्रीकाशीपुरी में होनेवाला है, जिसमें कार्तिककृष्ण १ से सप्तमी

तक विवादास्पद विषयों के ऊपर विशिष्ट परिडतों का लेखबद्ध विचार होगा, जिसका निर्णय नवमी से ३ तीन दिन तक होनेवाले महासम्मेलन में प्रथम दिन श्रीजगद्गुरु श्री १००८ शङ्कराचार्य करवीर संकेश्वरपीठ तथा द्वारका, श्रीनाथद्वाराधीश श्रीगोस्वामि श्री १००८ श्रीगोवर्द्धनलालजी महाराज, यदुगिरियतिराजमठाधीश तिरुनारायणजीयरस्वामिमहाराज आदि समस्त धर्माचार्यों के श्रीमुखों से घोषित किया जायगा। द्वितीय तृतीय दिन सनातनधर्म की रक्षा तथा सनातन धर्मियों का सङ्घटन इत्यादि विशिष्ट २ उपयोगी विषयों के निर्णय करने के लिये महाराजाधिराजदरभङ्गानरेशश्रीरामेश्वरसिंहजी बहादुर सम्मेलनाध्यक्ष के पद को अलंकृत करेंगे।

इस शुभ अवसर पर सर्व जगद् के कल्याणार्थ सहस्रचरडीयाग का भी ७सप्तमी से एकादशी तक विधिपूर्वक समारोह के साथ अनुष्ठान किया जायगा। देशदेशान्तर के कम से कम हजार गरायमान्य विशिष्ट विद्वानों के सम्मिलित होने की सूचना पत्रद्वारा प्राप्त हुई है। इस समय आप लोगों की उपस्थिति अत्यन्त प्रार्थनीय है। आशा है आप लोग पधारकर सम्मेलनको सफल बनावेंगे।

---

ता० २२-१०-२८

आप का शुभचिंतक—
श्रीपञ्चाननतर्करत्न भट्टाचार्यः
प्रबन्धकारिणीसभा सभापति।

---

नोट—प्रवेश पत्रके विना सभामें किसीका प्रवेश नही हो सकेगा। सूचना प्राप्त होनेसे प्रतिनिधि तथा दर्शक पत्र स्वयंसेवकों द्वारा सेवामें भेज दिया जायगा।

॥ श्री विश्वनाथः शरणम् ॥

# निमन्त्रण पत्र

## अखिलभारतवर्षीयब्राह्मणमहासम्मेलन ।

समस्त सनातनधर्मी हिन्दुजनतासे विदित किया जाता है कि वर्तमान देशकाल की आवश्यकताको जानकर अखिल भारतीय विद्वान् ब्राह्मण मण्डलीने पवित्र काशीपुरीमें एकत्रित होकर विवादग्रस्त सामाजिक तथा धार्मिक विषयोंमें शास्त्रमर्यादानुसार विचार करना और सकल विद्वानोंके द्वारा निर्णीत मतसे हिन्दुजनताके कल्याण के लिये घोषित करना निश्चय किया है। तदनुसार आगामी कार्त्तिक कृष्ण १ से ११ अर्थात् ता० २६ अक्टूबर से ८ नवम्बर तक काशीकी नैमिषारण्य भूमि (मिसिर पोखरा) में विशाल मण्डप बनाकर महती सभा की जायगी। प्रथम सात दिन समग्र भारतसे एकत्रित विशिष्ट विद्वान् पंडितोंकी विचार सभा होगी, जिसके निर्णय महासम्मेलनके प्रथम दिन पूज्य आचार्योंके द्वारा जनताके सन्मुख प्रकट किया जायगा। इस धर्म कार्यमें उत्साह तथा आशीर्वाद प्रदानके लिये जगद्गुरु शङ्कराचार्य, शुद्धाद्वैतमठाधीश नाथद्वाराधिपति, विशिष्टाद्वैताचार्य यदुगिरियतिराजमठाधीश आदि जगद्गुरु आचार्यगण अपने अपने शुभागमनसे महासम्मेलनको कृतार्थ करेंगे।

श्रीमान् भारतधर्मदिवाकर महाराजाधिराज दरभङ्गाधिपति महोदय महासम्मेलन के द्वितीय तथा तृतीय दिन सभापति पदको अलंकृत करेंगे। प्रयोजन होनेपर और एक दिन भी उत्सव बढ़ाया जा सकेगा। अष्टमीके (ता० ५—११—२८) दिन श्रीवेद भगवान्की सवारी आचार्यों, राजन्यवर्ग और विद्वानोंके साथ पताका तोरण हाथी घोड़े सवार गाजे बाजे समेत अपूर्व धूमधामसे नगर प्रदक्षिणा करेगी। इस शुभ अवसर पर जगत् कल्याणार्थ सप्तमीसे एकादशी पर्यन्त वि-

धिपूर्वक सम्मेलन स्थानपर सहस्रचण्डी यागका अनुष्ठान होगा। आशा है सनातनधर्मप्रेमी समस्त सज्जन इस अनोखे मौकेपर प्रतिदिन नियमित समय महासम्मेलन कार्य में सम्मिलित होकर इस पवित्र महान् उत्सवको सफल बनावेंगे। प्रवेशपत्र श्रीभारतधर्ममहामण्डल-कार्यालय तथा महासम्मेलन कार्यालयमें प्राप्त होगा। अथवा यथासमय सूचना मिलने पर स्वयंसेवकों द्वारा भी पहुंचाया जा सकेगा।

निवेदक—

| | |
|---|---|
| म० म० पं० पञ्चाननतर्करत्न भट्टाचार्य | स्वामी दयानन्दजी |
| म० म० पं० वामाचरण भट्टाचार्य | राजा मोतीचन्दजी (सी० आई० ई०) |
| म० म० पं० श्रीलक्ष्मणशास्त्री द्राविड | (रा० ब०) बाबू बटुकप्रसाद खत्री |
| म० म० पं० अनन्तकृष्णशास्त्री | (रा० ब०) कुं० नन्दलाल जी |
| म० म० पं० मुरलीधर झा | (रा० ब०) बाबू रामरतनदासजी |
| म० म० पं० प्रभुदत्तशास्त्री अग्निहोत्री | सेठ गौरीशङ्कर गोएनका |
| पं० रामभवनजी उपाध्याय | कुं० कवीन्द्रनारायण सिंह (एम्० एल० सी) |
| पं० भगवान्दत्तजी अग्निहोत्री | बाबू मङ्गलाप्रसाद सिंह |
| पं० देवकीनन्दनशास्त्री दर्शनालङ्कार | बाबू मूलचन्दजी खत्री |
| पं० रामयश त्रिपाठी | लालादामोदरदास खन्ना |
| पं० पूर्णचन्द्राचार्यजी | बाबू श्यामदासजी |
| पं० धर्मदत्तवेदशास्त्री | (रा० सा०) पं० रामचन्द्र नायक कालिया |
| पं० हरिनारायण तिवारी | (रा० सा०) पं माधोरामजी सण्ड |
| पं० गोपालभट्टभट्ट | मेहता पं० किशोरीलालजी |
| पं० विश्वेश्वरशास्त्री द्राविड | मेहता पं० मुरारीलालजी |
| पं० गणपतिशास्त्री मोकाटे | पं० जोशी दामोदर जी |

पं० गोपालशास्त्री नेने
पं० जगन्नाथशास्त्री भारद्वाज ( एम्० ए० एल० एल० बी० )
पं० नारायणशास्त्री खिस्ते
पं० शिवनाथजी झाडखण्डी एम्० ए०
पं० गङ्गाधरदीक्षित अग्निहोत्री
पं० गुलाब झा
पं० महादेव शास्त्रीजी
पं० विद्याविलास जी
पं० गौतमजी ज्योतिषी
पं० रणवीरदत्तजी सामवेदी
पं० विश्वेश्वरप्रसाद भट्टाचार्य
पं० मुरलीधरजी चौधरी
पं० धूमावतीप्रसाद पाण्डेय ।

---

## कार्यक्रम ।

विचार सभा—२९ अक्टूबरसे ४ नवम्बर तक । प्रतिदिन प्रातः ८ से १० तक और अपराह्ण ३ से ५ तक । स्थान—सनातनधर्म-विद्यालय, भुवेश्वर ।

शोभा यात्रा—५ नवम्बर मध्याह्न १२ से सन्ध्याकाल तक । सवारी सम्मेलनके स्थान मिसिर पोखरेसे उठेगी गोदौलिया चौक मैदागिन कबीरचौरा लहुराबीर बेनिया होते हुए सभा भवनमें जायगी ।

सम्मेलनोत्सव—६ नवम्बरसे ८ नवम्बर तक प्रतिदिन १२ बजेसे ५ बजे तक । प्रथम दिन आचार्यों द्वारा निर्णयका उद्घोष होगा । द्वितीय तृतीय दिन देश देशान्तरसे निमन्त्रित विद्वानोंके सुललित सारगर्भित वक्तृताएं भजनो-

पदेशक तथा गायकोंके मधुर सङ्गीत तथा आवश्यक मन्तव्यादि स्वीकार इत्यादि कार्य श्रीमान् महाराजाधिराज दरभङ्गानरेशके सभापतित्वमें होंगे।

सहस्रचण्डी याग—सप्तमीसे एकादशी तक, महासम्मेलनके स्थानपर।

नोट—बाहरसे आने वाले सज्जन कृपया कन्टूनमेन्ट स्टेशन पर ही उतरें।

---

* श्रीविश्वनाथः शरणम् *

## सूचना।

अखिल भारतवर्षीयब्राह्मणमहासम्मेलनके तरफ से कार्तिक कृष्ण ८ सोमवार ता० ५-११-२८ के दिन के ठीक १२ बजे श्रीवेदभगवान्‌का जुलूस निकलेगा, जिसमें श्री १०८ जगद्गुरुशङ्कराचार्य श्री १०८ रामानुजाचार्य, श्री १०८ वल्लभाचार्य, महाराज काशीनरेश, महाराज दरभङ्गा आदि राजन्यवर्ग, स्थानीय रईसगण, तथा देश देशान्तर के प्रतिनिधि रूपसे आये हुए और स्थानीय समस्त पण्डितवृन्द आदि सनातनधर्मावलम्बी सज्जन शामिल होंगे, इस अवसर पर सब लोगों की उपस्थिति अवश्य प्रार्थनीय है।

मन्त्री—
ब्राह्मणमहासम्मेलन

---

नोट—जुलूस सम्मेलन स्थानसे निकल कर गोदौलिया, चौक, मैदागिन, कबीरचौरा, लहुराबीर, बेनिया होते हुए सम्मेलन पण्डाल में पहुंचेगा।

* श्रीविश्वनाथः शरणम् *

# ब्राह्मणमहासम्मेलन-

## विचारसभानियमाः ।

( १ ) धर्माचार्यनिर्वाचितास्तत्तद्देशीयाः पञ्च सप्त वा मध्यस्था भविष्यन्ति ।

( २ ) सुयोग्यः कश्चन नियामकोऽपि भविष्यति, यस्याज्ञया प्रश्नकरणे उत्तरकरणे वा निर्दिष्टानामेवाधिकारः ।

( ३ ) प्रश्नोत्तरयोरुभयोरपि लिखितबद्धयोः प्रष्टृसमाधात्रोर्हस्ताक्षरेणसाकं सङ्कलनं भविष्यति ।

( ४ ) वादिसङ्ख्यायाः प्रतिवादिसङ्ख्यायाश्च तत्तन्मतावलम्बिनां मध्यादेव निर्वाचितायाः साम्यमपेक्ष्यते ।

( ५ ) निर्वाचितवादिप्रतिवादिव्यतिरेकेण कस्यापि भाषणे नाधिकारः ।

( ६ ) वादिप्रतिवादिनां मध्ये एकस्यैव यस्य कस्यापि भाषणेऽधिकारः, अनेन साकमस्यैवेति तु न व्यवस्था ।

( ७ ) निर्वाचितवादिप्रतिवादिव्यतिरेकेण तत्तन्मतावलम्बिनां दर्शकरूपेणैव प्रतिनिधीनामपि सतां स्वस्वमतावलम्बिनां निर्दिष्टस्थान एवोपवेशः समुचितः ।

( ८ ) वैषयिकदर्शकानां पृथक् स्थानप्रबन्धः प्रवेशपत्रं च व्यवस्थाप्येत ।

( ९ ) निबन्धपर्यन्तग्रन्थप्रामाण्योरीकारेण मीमांसकपद्धत्यैव विचारो भवितुमर्हति ।

१०—प्रश्नोत्तरप्रणाल्येव विचारावसरेऽवलम्बनीया,न व्याख्यानप्रणाली।

( १० ) वादिप्रतिवादियुक्तीनां तारतम्यविवेचनेन धर्माचार्याणां सविधे स्वाशयोपहरणमेव मध्यस्थानां कार्यम् ।

( ११ ) सयुक्तिसंग्रहं निर्णयोद्घोषणे धर्माचार्याणामेवाधिकारः ।
( १२ ) विना प्रवेशपत्रं न केषामपि विचारसभायां प्रवेशाधिकारः ।
( १३ ) प्रस्तुतविषयमतिरिच्य विषयान्तरवार्तापि न योग्या ।

इति विचारसभाव्यवस्थापकसभापतिः

प्रभुदत्तशास्त्री अग्निहोत्री ।

विचारसमिति मन्त्री

अनन्तकृष्णशास्त्री ।

---

# विचारसभाकार्यप्रणाली ।

धर्माचार्यैः शुभाशीर्वादपुरःसरं विचार सभा समुद्घाट्येत । महासम्मेलनान्यतमसम्पादकेन समागतप्रबन्धसारांशोपस्थापनपूर्वकं विचारोपोद्घातः क्रियेत ।

एकैकविषयसमाप्त्यनन्तरं विषयान्तरस्य समालोचनं भविष्यति ।

प्रथमो विषयः—(क) स्त्रीणां पुंसां च विवाहकालसमालोचनव्यवस्थे।
(ख) अवान्तरश्रेणीषु विवाहव्यवस्था ।

द्वितीयो विषयः—भागवतधर्मदीक्षास्वरूपाधिकार्यादिनिर्णयः ।

तृतीयो विषयः—पतितपरावर्तनम् ।

चतुर्थो विषयः—स्पर्शास्पर्शविचारः ।

पञ्चमो विषयः—व्रात्यसंस्कारः ।

षष्ठो विषयः—विधवाविवाहः ।

सप्तमो विषयः—चातुर्वर्ण्यव्यवस्था ।

---

स्थानम्—सनातनधर्मविद्यालयः, सूर्यकुण्डसमीपे । } दिनम्—कार्तिककृष्णप्रतिपदमारभ्य सप्तमीपर्यन्तम् ।

मध्याह्ने-१२ घटिकामारभ्य ५ घटिकान्तम् ।

# प्रश्नावली—

१:—स्त्रीणां पुंसां वा विवाहकालः कियदवधि कुत आरभ्य शास्त्रसम्मतः ?

२:—तत्र वर्तमानपरिस्थित्यनुसारेण, शास्त्रानुसारेण च नियमनं कियदवधि योग्यम् ?

३:—रजःप्रवृत्त्यनन्तरं विवाहस्य मुख्यत्वमुत गौणत्वमाहोस्वित् आपत्कल्पत्वम् ?

४:—ऋतुदर्शने वृषलीत्वबोधकानां वचनानां तात्पर्यं किम् ?

५:—ब्राह्मणादिजातिषु अवान्तरश्रेणीनां परस्परं विवाहसम्बन्धः शास्त्रसम्मतो न वा ?

६:—धर्मज्ञाः के वा कीदृशं वा धर्मपरिवर्तनं कर्तुमर्हन्ति ? किं सङ्कोचनाख्यम् ( उत प्रवर्तनाख्यं धर्मपरिवर्तनम् ) ।

७:—विधवाविवाहो दम्पत्योर्विवाहमोक्षश्च शास्त्रदृष्ट्या योग्यः, उताविरुद्ध आहो निन्द्यः ?

८:—अस्पृश्यानामस्पृश्यत्वं जातितो वा कर्मतो वा ?

९:—म्लेच्छानामन्त्यजानां च स्पर्शविषये सभाप्रवेशविषये कूपोदकग्रहणविषये देवालयप्रवेशविषये चान्येभ्यः तारतम्यरक्षणं योग्यं न वा ? यदि योग्यं तदा कीदृशं तारतम्यं रक्षणीयम् ?

१०:—भागवतधर्मदीक्षा जात्युत्कर्षप्रापिका वा न वा ?

११:—यवनादिजातिः किं कर्मकृता, उत जन्मसिद्धा ?

१२:—भागवतधर्मदीक्षायां जातिविशेषः प्रतिबन्धको वा न वा ?

१३:—देवलस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यमङ्गीकरणीयमुत न ?

१४:—कियदवधि म्लेच्छसंसर्गेण प्रायश्चित्तीयता ?

१५:—संवत्सरपर्य्यन्तं म्लेच्छसंसर्गिणां तदधिककालं यावत् म्लेच्छसंसर्गिणाञ्च प्रायश्चित्तविषये व्यवहार्यताविषये च किमैकरूप्यमुत वैरूप्यम् ?

१६:—व्रात्यसंस्कारः कियत्परम्परापर्यन्तं शास्त्रसिद्धः ?

१७:—जातिसामान्यमैहिककर्मकृतमव्यवस्थितमुत जन्मकृतं व्यवस्थितं च ?

---

विद्याविलास प्रेस, गोपालमन्दिर लेन, बनारस सिटी ।

# भूमिका

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

अखिलभारतवर्षीयब्राह्मणमहासम्मेलनप्रश्नावल्याः प्रथमद्वितीयतृतीयतुरीयपञ्चमषष्ठप्रष्ठप्रश्नानामुत्तराणि तत्तादृशां पण्डितवराणां श्रीमतां उपस्थितानां पुरतः सविनयं प्रथममुपहरामि ।

षण्णामपि प्रश्नोत्तराणां विशेषतः परस्परसम्बन्धो वर्तते इति प्रथमद्वितीयविषयसमालोचने विशेषतस्तत्साहाय्यं स्यादिति पिष्टपेषणमिदम् ।

महासम्मेलनं हि शास्त्ररक्षणेनापि समाजरक्षणोपायानालोचयितुमेव, सनातनधर्मावलम्बिनां संघटनार्थमेव च संघटितमिति सर्वसाधारणं धनमिति "परैस्तु कलहे प्राप्ते वयं पञ्चोत्तरं शत"मिति न्यायानुसारं सत्यपि मतभेदे मुक्त्यादिषूपास्यस्वरूपादिषु च सत्स्वद्धर्माचार्याणां विशिष्टविशिष्टानामुपस्थित्या सत्यं किमपि विशिष्टं प्रयोजनमादधीत, यदि सनातनधर्मावलम्बिनः सर्वेऽपि पण्डितप्रवराः वैयक्तिकविद्वेषादिपरित्यागेन परस्परं सुहृद्भावावलम्बेन च सम्यक् विचार्य कर्तव्यजातं निर्णेष्यन्तीति वस्तुस्थितिकथनमिदम् । यतः—

तत्त्वविनिर्णयार्थमेवेयं विचारसभा, न तु जयपराजयादिव्यवस्थापनार्थं बलाबलपरीक्षार्थं वेति ।

तुरीयप्रश्नान्तोत्तराणि श्रीमतां पुरतः षष्ठप्रश्नोत्तरेण सार्कं, पञ्चमप्रश्नोत्तरेण साकं प्रथमसमालोचनीयानि निर्दिष्टानीति

जानन्त्येव श्रीमन्तः सर्वेऽपि कार्यप्रणालीविचारसभानियमादर्शिनः ।

स्त्रीणां विवाहकालसमालोचनविषये श्रीमतां पुरत इदानीमेतावन्तो मतभेदा उपस्थिताः ।

(१) बाल्यकालमारभ्यैव विवाहः शास्त्रसम्मतः, एवमपि अष्टमवयसः पूर्वं विवाहनिषेधनियमनमत्यावश्यकमित्येकं मतम् । सर्ववर्णसाधारणमिदं—

सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।

इति वचनेन ।

द्वितीयं तु मतं अष्टवयसः पूर्वं विवाहनिषेधनियमनस्थाने दशमवयसः पूर्वमिति परिष्करणेन प्रथममतस्यैव परिष्कृतं रूपान्तरम् ।

अपरोऽयं विशेषः केषांचन मतेन—अष्टमवयसः पूर्वं विवाहनिषेधनियमनमिदं ब्राह्मणविषये, क्षत्रियादीनां तु एकादशवयसः पूर्वमेव विवाह इति नियमनं योग्यमिति । अपरं तु मतं द्वादशवयसः पूर्वं विवाहनिषेधनियमनं योग्यमिति पूर्वावधिनिष्कर्षः ।

तत्रोपस्थापितेषु सार्धशताधिकप्रबन्धेषु—(१२) तिरुपतिविद्यालयपण्डिताः, (१७) श्रीवाणीशझामहोदयाः, (३२) श्रीकृष्णकुमारशास्त्रिणः, (३५) ब्रह्मप्रान्तीयब्राह्मणसभापण्डिताः, (४०) जयपुर श्रीसीतारामशास्त्रिप्रभृतयः, (४८) श्रीयुक्तललितकुमारसांख्यवेदतीर्थमहाशयाः, (४४) जलासुवादिब्राह्मणपण्डिताः, (५४) श्रीनाथचन्द्रकाव्यतीर्थादयः, (४६) सुरेन्द्रलालस्मृतितीर्थाः, (५३) फरीदपुरविद्वत्समितिश्च द्वितीयमतवलम्बन्ते ।

तृतीयमतावलम्बिनस्तु—(११६) श्रीनरहरिवेंकटेशशास्त्रिणः, (१२१) श्रीबलवन्त जोशीमहोदयाश्च ।

अन्ये तु सर्वे प्रथममतावलम्बिन इति नेदं प्रबन्धसारदर्शिनां तिरोहितम् ।

परमावधिविषये तु—

केचन मन्यन्ते द्वादशवयसः पूर्वमेवर्तुदर्शने तददर्शने वा विवाहो योग्यः, न तु तदनन्तरम्, तदनन्तरं तु प्रायश्चित्तीयतेति ।

इतरे तु—रजोदर्शनात्पूर्वं षोडशवयःपर्यन्तमपि विवाहो योग्य इति ।

अपरे तु विंशतिवत्सरपर्यन्तं तदधिकवत्सरपर्यन्तं वा रजोदर्शनेऽपि विवाहो योग्य इति ।

तत्रापि प्रथममतावलम्बिनां पीयूषधारादिधृतवचनानुसारेणान्तःपुष्पवत्त्वमपि दोषायेति मतम्, द्वितीयमतावलम्बिनां तु—

क्षेत्रज्ञा पञ्चदशभिः षोडशे चाम्बिका स्मृता ।
एवं क्रमेण संपूज्या यावत्पुष्पं न जायते ॥

इति वचनानुसारेण केषांचन षोडशवयस्येव पुष्पवत्त्वसम्भव इति ।

सर्वथा तु मतद्वयेऽपि ऋतुदर्शनतः पूर्वं विवाह इत्यत्रैकमत्यमेव । इयान् विशेषः—रजोदर्शनानन्तरं वृषलीत्वस्य प्रायश्चित्तेनापि निवृत्तिरिति केषांचन मतम्, केषांचन तु आपत्कल्पतयाऽभ्यनुज्ञानात् तन्निवृत्तिरपि सम्भवतीति ।

ये तु रजोनन्तरविवाहोऽपि योग्य इति वदन्ति, तेऽहि प्रायश्चित्तं नाननुष्ठेयं मन्यन्ते । संभाव्यते एवेयान् विशेषः—यत् यावत्प्रायश्चित्तमव्यवहार्यतेति व्यवहार्यतेति च । अत्र द्वितीयमतावलम्बिनोऽव्यवहार्यतापक्षावलम्बिनः, तृतीममतावलम्बिनस्तु व्यवहार्यतापक्षावलम्बिन इति प्रतिभाति ।

तत्र केचन क्षत्रियादीनां गान्धर्वविवाहेन तद्योग्यतावादिनः,-केचित्तु सर्वेषां सर्वविवाहसाधारण्येन तद्योग्यतावादिनः । तत्र-

र्तुमती विवाहयोग्यतावादिनोऽधः प्रथमं निर्दिश्यन्ते।

तत्रापि केचित् वर्षत्रयपर्यन्तं तद्योग्यतावादिनः।

तत्र द्वितीयद्वितीयमतावलम्बिनः—

( ४४ ) श्रीगणेशलालसारस्वताः। ( ४५ ) रमानाथविद्यालङ्काराः।

द्वितीयप्रथममतावलम्बिनस्तु—

( ११७ ) वि० एल् वेङ्कटप्पशास्त्रिणः, ( १२६ ) श्रीकेशव लक्ष्मण दफ्तरी महोदयाः ( १३० ) श्रीरामचन्द्रशास्त्रिवेदान्तविशारद-काव्यव्याकरणशिरोमणयः।

प्रथममतालम्बिनस्तु—

( ३६ ) तेन्नालिराममूर्तिशास्त्रिणः ( ११० ) श्रीउमामहेश्वरशास्त्रिणः, (११) चिरुकुलपेद्दवेङ्कटरायशास्त्रिणः ( १४५ ) वाराणसीविद्वत्परिषत्। अन्ये तु सर्वे द्विजेतरसर्वसाधारण्येन रजोनन्तरविवाहस्यापत्कल्पत्ववादिन एव।

( ७६ ) श्रीमोदनाथविचाररत्नमहोदयास्तु—

अविवाहिता तु या कन्या पुष्पयुक्ता भवेद्यदि।
चान्द्रायणं व्रतं कुर्यात् सर्ववर्णेष्वयं विधिः॥

इति वचनात्सर्वसाधारण्येन रजोनन्तरविवाहस्यापत्कल्पत्वं प्रतिपादयन्ति।

प्रायश्चित्तानन्तरमपि तस्याः तत्पुत्रादेश्च पृथक् संस्थैव युक्तेति वादिनो ह्यत्र बहव एव वर्तन्ते।

पुसां विवाहकालनियमन तु अष्टादशमारभ्येति केचन, केचन षोडशमारभ्येति, केचनैकविंशतिवय आरभ्येति, प्रायेण सर्वे पञ्चाशद्वयसोधिकं विवाहनिषेधनियमनमेव योग्यं मन्यन्ते।

अथर्तुमतीविवाहोऽपि योग्य इति वादिनः-(११७)वि० एल० वेंकटप्पशास्त्रिणः ( १२१ ) श्रीकेशव लक्ष्मण दफ्तरी महोदयास्तु

कालदेशपरिस्थित्यनुसारेण शास्त्रादिपरिवर्त्तने सर्वेषामधिकारवा-दिन इति भवन्तो जानन्त्येव।

इदमेवात्र समालोचनीयम्—यत् धर्मप्रवर्त्तने सर्वेषां धर्म-ज्ञानामधिकार इति वदन्तः (१) श्रीसूर्यनारायणशास्त्रिणः, (१०१) मैमनसिंहहिन्दुसभापतयः ( १२१ ) श्रीकेशव बलवन्त जोशीमहो-दयाः परं परिवर्तनादौ दफ्तरीमहोदयादिमतावलम्बिनोपि—रजोऽनन्तरविवाहं परं न योग्यं मन्यन्ते। अन्ये तु रजोऽनन्त-रविवाहयोग्यतावादिनो न धर्मपरिवर्तनेऽधिकारं मन्यन्ते।

तत्र केचित्, मन्वादीनामेव प्रवर्त्तने निवर्त्तने चाधिकारः, इदानीन्तनानां तु शक्तिपर्यालोचनेन निवर्तनमात्रेऽधिकारः इति, परे तु इदानींतनानां तु शास्त्रार्थनिर्णय एव पारिषद इवाधिकार इति वदन्ति। सर्वमिदं श्रीमतां पुरतो विशदमुपन्यस्तमिति न विस्तरो विशेषतोऽपेक्ष्यते इति विश्वसिमः।

केचित् अवान्तरश्रेणीनियमस्तु शास्त्रासिद्धः, एवमप्या-चारसिद्धत्वात् परिपालनीय एवेति, अन्ये तु बहवः शास्त्रसिद्ध एवायमिति न कथमपि परिवर्त्य इति मन्यन्ते।
३०, ४२, ५१, ५६, ६०, ६१, ७५, ८०, १०१, ११७, १२८, १३०, १३२, १३७, १३८, १४३, १४५, संख्याकाः पण्डिताः नियमपरि-वर्तनं शास्त्रासिद्धत्वात् योग्यं मन्यन्ते।

तत्र केचन समानाचारास्ववान्तरश्रेणीषु नियमपरित्यागो योग्य इति वदन्ति, केचित्तु तत्रापि न योग्य इत्यपि सर्वमत्र विशदम्।

सत्रं चेदं श्रीमतां पण्डितप्रवराणां सानुग्रहेण प्रेमपूर्वकेण तत्त्वविनिर्णयेच्छामूलकेन वैयक्तिकभावविशेषादिसत्त्वे तदनुप-

योगेन च विचारेण विना कथमपि न निर्णीतं स्यादिति सप्रश्र-यं महासम्मेलनप्रबन्धकारिसभापक्षेणेदं प्रार्थ्यते, यत् सदयमस्मदनुरोधस्य सफलीकरणेन कृतार्थीकरणीयाः सर्वेपि सनातनधर्मावलम्बिन इति । इतः परं श्रीमन्तः पण्डितप्रवरा एव प्रमाणम् । इति ।

| | |
|---|---|
| कार्तिक कृष्ण १ सोमवारे<br>सम्वत् १९८५ | विधेयतमः<br>अनन्तकृष्णशास्त्री<br>सम्पादकः । |

* श्रीविश्वेश्वरः शरणम् *

अखिलभारतवर्षीय—

# ब्राह्मणमहासम्मेलने

समालोचनीय-प्रश्नावलीनामुत्तराणि ।

——:**:०:**:——

(१) प्रश्नः—स्त्रीणां पुंसां वा विवाहकालः कियदवधि कुत आरभ्य शास्त्रसम्मतः ?

(२) प्र०—तत्र वर्तमानपरिस्थित्यनुसारेण, शास्त्रानुसारेण च नियमनं कियदवधि योग्यम् ?

(३) प्र०—रजःप्रवृत्त्यनन्तरं विवाहस्य मुख्यत्वमुत गौणत्वमाहोस्वित् आपत्कल्पत्वम् ?

(४) प्र०—ऋतुदर्शने वृषलीत्वबोधकानां वचनानां तात्पर्यं किम् ?

(१) उत्तरम्—श्रीसूर्यनारायणशर्मणां व्याख्यानवाचस्पतीनाम् (जयपुरीयसंस्कृतपाठशालातः ।)

विवाहकालनियमे विवाहस्य केवलमैहिकफलत्वाभावात् शास्त्रमूलत्वस्यैव योग्यत्वात् शास्त्रानुसारेणैव योग्यत्वं न त्वायुर्वेदाद्यनुसारेण। धर्मशास्त्रेण च विवाहः "षडब्दमध्ये नोद्वाह्या" इति वचनात् षडब्दमध्ये सर्वथा निषिद्धः । एवं सप्तसंवत्सरादूर्ध्वमेव विवाहः सार्ववर्णिक इति विवाहस्य निर्दिष्टत्वात् सप्तमे वयस्यपि नात्यन्तशिष्टसम्मतत्वम् । तथा चाऽष्टमवयसः पूर्वं विवाहनिषेधनियमनमतीव योग्यम् । अष्टमवयस आरभ्य विवाहकालो दशमपर्यन्तं काम्यो न नित्यः, दशम-

वयसोऽनन्तरं रजस्वलात्ववचनं गौर्यादिप्रशंसार्थम्, तथा चैकादशेऽपि वयसि विवाहो योग्य एव. द्वादशं वयस्तु परोऽवधिः। अत्र पराशरादिवचनानि मूलानि। तदतिक्रमस्तु सर्वथा न योग्यः। तथा चाऽष्टमनवमदशमवयस्सु बहूनां दृष्ट्या फलास्नानात् प्रशस्तता, एकादशं तु वयो न प्रशस्तं न वा निन्दितम्। केषांचन मते तु दशमवयसि नग्निकात्वप्रतिपादनाद्दशमं वयोऽपि नग्निकादानस्य गर्हितत्वाज्जघन्यम्, एकादशं न तन्मतदृष्ट्याऽपि शास्त्रानुमतम्। सर्वथा तु रजोदर्शनात्प्राक् कन्यकादानमावश्यकम्। सति चैवं द्वादशेऽब्देऽस्य परावधेरेव बाल्यवैधव्यादिदुःखपरिहारार्थं लोकहितदृष्ट्या शास्त्राविरोधाच्च विवाहकालत्वव्यवस्थापनं योग्यम्। तत्रापि वरालाभादौ त्रयोदशं वयोऽपि ग्रहीतुं शक्यते। पुंसां तु—चतुर्विंशवर्षे विवाहः प्रथमकल्पः, विंशे मध्यमः, अष्टादशे गौणः, वर्त्तमानपरिस्थित्यनुसारेणाऽष्टादशात्पूर्वं पुंविवाहो वर्जनीयः। शक्तौ सत्यां पुत्रवतोपि चत्वारिंशत्पर्यन्तं विधुरस्य पुंसो विवाहो योग्यः, शक्तौ सन्तानाभावे तु पञ्चाशद्वयःपर्यन्तमपि विवाहो योग्यः, रजोनन्तरमपि स्त्रीणां विवाहः परमापत्कल्पतयाऽभ्यनुज्ञात एव। वृषलीत्वबोधकानां तु वचनानां तद्विवहनस्य प्रत्यवायहेतुतायामेव तात्पर्यम्।

(२) उ०—श्रीरामदेवत्रिपाठिनाम्। ( बहवाराज "आरा" )

प्रथमद्वितीयतृतीयचतुर्थप्रश्नानाम् न समालोचनमेतैर्महाशयैरुपक्षिप्तम्।

(३) उ०—श्रीगणेशदत्तनैय्यायिकानाम् ( शेखावाटी। )

शास्त्रानुसारेणाऽष्टमवय आरभ्य दशमवयःपर्यन्तम्। एकादशेपि वयसि परिस्थित्यनुसारेण विवाहव्यवस्था न दोषाय। द्वादशवर्षे तु रजस्वलैव सर्वापि। पीयूषधारायां "वर्षद्वादशकादूर्ध्वं यदि पुष्प

बहिर्न हि। अन्तः पुष्पं भवत्येव पनसोदुम्बरादिवत्।” इति वचनं दृश्यते। तथा च द्वादशवयसोऽनन्तरं रजस्वलाविवाह एव स्यात्। स च विना प्रायश्चित्तं क्रियमाणः पित्रादीनां निन्दाप्रयोजकः, कृते प्रायश्चित्ते तु सोऽपि न दोषाय। पुंसां तु सप्तदशवय आरभ्य भवितुमर्हति विवाहो नोत्तरावधिरेतैर्निर्दिष्टः।

(४) उ०—श्रीभगवान् शास्त्रिणाम्।

पुंसामुपनयनकालस्यैव स्त्रीणां विवाहकालत्वादनुपनयन इवाऽविवाहे ऋतुमत्या अपि कन्यायाः सर्वज्ञनारायणादिभिर्व्रात्यताया उक्तत्वात् अष्टवर्षमारभ्यर्तुकालपर्यन्तं स्त्रीणां विवाहकालः। विवाहात् प्रागृतुमत्याश्चण्डालीत्वं “व्रात्यया सह संयोगे चाण्डाल्यां तावदेव तु” इत्यादिमन्वादिवचनानुसारेण चतुर्वर्गचिन्तामणावपि प्रतिपादितम्। मुहूर्त्तमार्तण्डादिषु चतुर्थवत्सरवय आरभ्य दशमवयःपर्यन्तमेव विवाहयोग्यतेत्युक्तम्। तत्परिवर्तनं न कथमपि युक्तम्। पुरुषविषये किमपि नोक्तम्।

(५) उ०—वैदिकसमाज पालघाट, मदुरा धर्मशास्त्रसभा, कुम्भघोणसनातनधर्मसभा, मायूरब्राह्मणसमाज, त्रिशिरःपुरब्राह्मणसमाज, चिदम्बर विद्यालयपण्डितवर्गादीनां प्रायेण सार्धसहस्रजनानाम्।

शास्त्रदृष्ट्याऽति बाल्यकालमारभ्यापि विवाहो न निन्द्य ऋतुपर्यन्तम्। तथा च न शास्त्रतः पूर्वविधिविशेषे निन्दा गम्यते, तथापि परिस्थित्यनुसारेण शास्त्रानुसारेण चाऽष्टमवर्षात्पूर्वं विवाहनिषेधनियमनं स्त्रीणां, पुंसां षोडशवयसः पूर्वं विवाहनिषेधनियमनं स्त्रीणामृत्वनन्तरं पुंसां पञ्चाशद्वर्षवयसोऽनन्तरं विवाहनिषेधनियमनं च योग्यम्। सर्वेषामेतेषामापत्कल्पतयर्तुमतीविवाहोपि सम्मतः।

(६) उ०—तिरुवाड़ी विद्यालयपण्डितानां सर्वेषाम्।

सर्वेषु विषयेषु पालघाट वैदिकसमाजसिद्धान्तेनैकमता एव।

इयान् विशेषः—आपत्कल्पतयाऽपि रजोनन्तरं विवाहो न स्त्रीणां सम्भवतीति ते मन्यन्ते ।

(७) उ०—मायूरशिवकृष्णशास्त्रिणाम् ।

एतेऽपि पालघाटवैदिकसमाजसिद्धान्तेनैकमता एव, इयान् विशेषः—कालस्थित्यनुसारेण चत्वारिंशद्वयसोऽनन्तरं पुंसां विवाहनिराकरणनियमनमावश्यकं मन्यन्ते । अपरोऽयं विशेषः, यदापत्कल्पतयापि ऋत्वनन्तरं विवाहो न ब्राह्मणानां, किन्तु शूद्राणामेव । वृषलीत्ववर्णनाभिप्रायश्च विना प्रायश्चित्तम-व्यवहार्यतादावेव सर्वेषां मते ।

(८) उ०—विजयनगरपण्डितसमाजस्य ।

स्त्रीणां सप्तमवय आरभ्य विवाहकालः, पुरुषाणामष्टादश-वयसः, स्त्रीणामृतोः प्राक्, पुरुषाणां पञ्चादशद्वयसः प्राक् विवाहयोग्यता, ऋत्वनन्तरं स्त्रीणामापत्कल्पतया विवाहोऽभ्यनु-ज्ञातः शास्त्रेषु । परिस्थितिमनुसृत्य दशमवयस आरभ्य स्त्रीणां चत्वारिंशद्वयः पर्यन्तमिति पुंसां विवाहनियमनं योग्यम् ।

(९) उ०—नल्लान्चक्रवर्त्तिनाम् ।

सप्तमवयस आरभ्य वर्षद्वयं प्रशस्तः, तदनन्तरं वर्षद्वयं गौण एकादशेऽधमः, द्वादशे तु प्रायश्चित्तीयता, ऋत्वनन्तरं विवाहस्तु स्त्रीणां न योग्य एवेति वदन्ति । पुंसां विषये किमपि न वदन्ति ।

(१०) उ०—चित्पुरीपाठशालाध्यापकानाम् ।

गर्भाष्टमात् द्वादशवयः पर्यन्तं विवाहकालः स्त्रीणाम् । पुंसां तु पञ्चाशद्वयः पर्यन्तं विवाहकालः ।

(११) उ०—एम्० बी० सुब्रह्मण्यार्यादीनाम् ।

स्त्रीणां विवाहकाले न पूर्वावधिः । द्विवर्षात्प्रागपि विवादे खननिषेधश्रवणात्, पुंसामष्टमवयस्युपनयनानन्तरमेकशाखाध्ययन-कालानन्तरमेव विवाहयोग्यता, परिस्थित्यनुसारेण स्त्रीणामे-

कादशवयसः पूर्वं विवाहनिषेधो योग्यः। पुरुषविषये किमपि नोक्तम्।

(१२) उ०—तिरुपतिविद्यालयपण्डितानां सर्वेषाम्।

ते पालघाटवैदिकसमाजमतमेवानुवर्तन्ते। प्रायेण स्त्रीणां पुंसां विवाहविषये इयान् विशेषः—यद् दशवर्षमारभ्येति स्त्रीणां परं नियमनं पुंसां चाष्टादशवयस आरभ्येति नियमनं च योग्यं मन्यन्ते। रजोऽनन्तरविवाहस्त्वापत्कल्प एव, सोऽपि न संस्काररूपः, अर्थाद् तदनन्तरमूढायास्तत्पतेर्वा न कर्माधिकार इति चाभिप्रयन्ति। एतेषां मायूरशिवरामकृष्णशास्त्रिणां चास्मिन्नन्तिमेंऽशे साम्यमस्ति।

(१३) उ०—रामपुर राजपण्डित श्रीरामरत्न ओझा महाशयानाम्।

स्त्रीणामष्टवर्षमारभ्यर्तुकालपर्यन्तं षोडशवयस्यपि विवाहो भवितुमर्हति, एकादशवयस आरभ्येति नियमनं तु योग्यम्। पुंसां सप्तदशवयस आरभ्याष्टाचत्वारिं शद्वयःपर्यन्तं विवाहो योग्यः।

(१४) उ०—मल्लादि श्रीरामकृष्णसोमयाजि श्रीराघवशास्त्रि श्रीवेङ्कटविश्वनाथशर्मणाम्।

अष्टमवयस आरभ्यर्तुपर्यन्तं स्त्रीणां षोडशवय आरभ्य पञ्चाशद्वयःपर्यन्तं पुंसां च विवाहकालनियमनं शास्त्रपरिस्थित्युभयानुसारि भवति। रजस्वलाविवाहस्तु सर्वथा निन्द्यः।

(१५) उ०—मारवाड़ीब्राह्मणमहासम्मेलनसभापतीनाम्।

स्त्रीणामष्टमवयसः पूर्वं रजोदर्शनानन्तरं च विवाहो न युक्तः। पुंविषये तु किमपि नोक्तम्।

(१६) उ०—श्रीवाग्मीश झा (मिथिला) महोदयनाम्।

दशवर्षमारभ्य स्त्रीणां षोडशवय आरभ्य पुंसां च विवाहकालः ऋत्वनन्तरं विवाहो गौणः, पुंविषये किमपि नोक्तम्।

(१७) उ०—कुरुगंटिवेङ्कटरामशास्त्रिणां तेनालीवासिनाम्।

अष्टमवयस आरभ्य द्वादशवयःपर्यन्तं स्त्रीणां पुंसां च षोडशवय

आरभ्य चतुश्चत्वारिंशद्वयःपर्यन्तं विवाहो योग्यः, न तु स्त्रीणां, ततः पूर्वं पुंसां तत उत्तरं च स योग्यः। रजोऽनन्तरं विवाहस्तु नापत्कल्पोऽपि, तस्या ऊढायाः शूद्रातुल्यत्वेन तत्पुत्रस्य न दायाद्यधिकारितापीति बोधनमेव वृषलीत्ववचनेनावगम्यते।

(१६) उ०—श्रीमल्लय्याशास्त्रिणाम्।

विवाहस्य दानसप्तपदीसमावेशनादिरूपस्य दाने द्वितीयादिवयसोऽपि योग्यता, समावेशनादौ तु ऋत्वनन्तरमपि स योग्य इति। आपस्तम्बादिमते तु ऋत्वनन्तरमेव विवाहः समावेशनाङ्गविशिष्टः। गृह्यासंग्रहमते तु ऋतोः प्राक् वत्सरात् प्रागेव विवाहो युक्त इति मतम्। पुंविषये तु किमपि नोक्तम्।

(२०) उ०—परलाकमडिवैदिकसमाजस्य।

उत्कलनिबन्धकालसाराद्यनुसारेण स्त्रीणां जन्मावधि एकादशवयःपर्यन्तं विवाहयोग्यतावगम्यते। परन्तु शास्त्रपरिस्थित्युभयपर्यालोचने नवमवत्सरमारभ्यर्तुकालपर्यन्तं विवाहनियमनं योग्यम्। रजोनन्तरविवाहोऽपि स्त्रीणां योग्य एव, परंतु निबन्धाचाराद्यनुसारेण ब्राह्मणेतरविषयत्वमेव तस्य, ब्राह्मणानां त्वापत्कल्प एव।

(२१)—शामलकोटार्यमतसंघप्रतिनिधि श्रीसूर्यनारायणशास्त्रिणाम्।

स्त्रीणां सप्तमवय आरभ्य विवाहकालो रजोदर्शनतः पूर्वम्। पुरुषाणां सप्तदशवय आरभ्य पञ्चाशद्वयःपर्यन्तं विवाहयोग्यता, न तु ततः पूर्वमुत्तरं वा। रजस्वलाविवाहस्तु कलौ गान्धर्वादिविवाहकालस्य निषिद्धत्वादापत्कल्प एव।

(२२) उ०—शोलवन्दानयज्ञदीक्षितानाम्।

अष्टमवयस आरभ्य द्वादशवयःपर्यन्तं स्त्रीणां विवाहकालः। तदनन्तरं तु विवाहो रजोदर्शनानन्तरमापत्कल्पः।

(२३) उ०—हैद्राबादसनातनधर्मसंस्थापण्डितानाम्।

"द्वितीयमायुषो भागं कृतदारो गृहे वसेत्"इति वचनात् पञ्चवि-

शतिवर्षमारभ्य पुंसां विवाहकालः, ततः पूर्वं विवाहकरणं तु दशवर्षाद्योग्यमेव । स्त्रीणां तु रजोदर्शनानन्तरमापत्कल्प एव विवाहः ।

(२४) उ०—काम्पिल्लसुब्रह्मण्यशास्त्रिणाम् ।

ब्राह्मणकन्यानामष्टमवयस आरभ्य दशमवयःपर्यन्तं मुख्यकल्पः, तदनन्तरं प्रथमर्तुदर्शनपर्यन्तं गौणः, तदनन्तरमापत्कल्पो निन्द्य इति यावत् । क्षत्रियकन्यानां तु रजोदर्शनपर्यन्तं मुख्यः कल्पः, तदनन्तरमृतुत्रयपर्यन्तं गौणः, तत आपत्कल्पः स्वयंवरः । पुंसां तु षोडशवयसः पूर्वं पञ्चाशद्वत्सरानन्तरं च विवाहो योग्यः, तन्मध्येऽपि न नियमः, विवाहस्य पुरुषेषु काम्यत्वम् । रजस्वलाया आपत्कल्पतयोढाया न धर्मकार्येऽधिकारः ।

(२५) उ०—मधुरारामसुब्रह्मण्यशास्त्रिणाम् ।

बाल्यमारभ्य विवाहस्य शास्त्रसम्मतत्वेऽपि अष्टमवयसः पूर्वं स्त्रीणां विवाहश्च योग्यः । ब्राह्मणानां द्वादशवयसोऽनन्तरमृतोः प्रागपि विवाह आपत्कल्प एव । रजोनन्तरं तु विवाहिताया न धर्मोपयोगितेति वदन्ति ।

(२६) उ०—सीयालिसुब्रह्मण्यशास्त्रिणाम् ।

स्त्रीणामष्टमवयः, पुंसामेकोनविंशतिमारभ्य च विवाहनियमनं योग्यम् । रजोनन्तरं विवाहकरणं साहसकार्यमेव, नात्रापत्कल्पत्वमपि ।

(२७) उ०—पीठापुरस्थलक्ष्मीनारायणशास्त्रिणाम् ।

पुंसां षोडशवय आरभ्य स्त्रीणामष्टमवय आरभ्यर्तुदर्शनपर्यन्तं च विवाहो योग्यः, अष्टमवयसः पूर्वं रजोनन्तरं च स्त्रीणां विवाहो न योग्यः । तत्रापि रजोऽनन्तरं स्त्रीणां विवाहो नापत्कल्पोऽप्यभ्यनुज्ञायते ब्राह्मणविषये शास्त्रेषु ।

(२८) उ०—श्रीरमापतिमिश्रशर्म राजपतिमिश्र भिकुदेव जोशीप्रभृतीनाम्।

स्त्रीणां रजोदर्शनतः प्राक् पुंसां गोदानानन्तरं यथासौकर्यं विवाहसमयः, नात्र नियमनं परिस्थित्यनुसारेण सम्भवति. परिस्थितीनामनैकरूप्यात्, रजोनन्तरविवाहस्तु न मुख्यो न वा गौणो न वापत्कल्पः। तद्विवाहे तु सन्ततीनामप्राशस्त्यं भवति।

(२९) उ०—नेपालस्थार्यालवीरेन्द्रकेसरिशर्मणाम्।

अष्टवयस आरभ्य स्त्रीणां पुंसां षोडशवयस आरभ्य विवाहो योग्यः, ऋतोः प्राक्। ऋत्वनन्तरं त्वापत्कल्पतया प्रायश्चित्तपूर्वकं विवाहोऽप्यनुज्ञायते।

(३०) उ०—श्रीवेणीमाधवशास्त्रिणाम् ( धारवाड। )

सप्तमाद्वयसो विवाहोपक्रमनियमनं स्त्रीणां, दशीवर्षानन्तरं तु न योग्यम्। पुंसां षोडशवर्षादारभ्य पञ्चाशद्वयःपर्यन्तम्। परिस्थित्यनुसारेणाप्यनृतुमत्या एव षोडशवयःपर्यन्तमपि विवाहनियमो योग्यः। रजोनन्तराविवाहः सर्वथा निन्द्यः। तदनन्तरमूढा तु न धर्माधिकारिणी।

(३१) उ०—नागपुरब्राह्मणसभापण्डितानां म० म० पं० सदाशिवशास्त्रि म० म० पं० केशवशास्त्रि प्रभृतीनाम्।

स्त्रीणामष्टमवय आरभ्यर्तुकालपर्यन्तं विवाहो योग्यः। पुंसां विवाहकालावधिस्तु न कुत्रापि शास्त्रे दृश्यते। तथापि शिष्टाचारमनुसृत्याऽष्टादशवय आरभ्य पञ्चाशत्तमवयःपर्यन्तम्। ऋत्वनन्तरविवाहस्तु आपत्कल्प एव। ऋतोः प्राक् द्वादशवयसि कृतश्चेदपि सर्वेषां सम्मतो भवेदिति।

(३२) उ०—श्रीगणेशलाल सारस्वतानाम् ( आगरा )।

स्त्रीणां विवाहस्य केवलं प्रजोत्पत्त्यर्थत्वात् ऋत्वनन्तरमेव सम्भवाद्गर्भधारणशक्तिवैकल्यपरिहारार्थमृतोः प्रागेव विवाहः, एवं श्मश्रूद्गमानन्तरमेव पुंसां च विवाहो युक्तः। ऋत्वनन्तरं वृषलीत्ववचन-

यत् "काममामरणा"दित्यपि रुच्या न। ऋतुमतीविवाहोऽपि वर्ष-त्रयपर्यन्तं योग्य इति वदन्ति ।

(३३) उ०—श्रीकृष्णकुमारशास्त्रिणाम् ( आरा )।

स्त्रीणां शास्त्रदृष्ट्याऽष्टवयस आरभ्य शास्त्रपरिस्थित्युभयदृष्ट्या दशमवयस आरभ्य द्वादशमध्ये विवाहनियमनम्, पुंसां षोडश-वय आरभ्यैकपञ्चाशत्तमवयः पर्यन्तं विवाहनियमनं योग्यम्। रजो-नन्तरविवाहस्तु आपत्कल्पः। अन्यथा प्रायश्चित्तीयतेति वदन्ति।

(३४) उ०—अनिर्दिष्टनाम्नां प्रबन्धकाराणाम्।

पुंसां शास्त्रतः विंशतिवत्सरमारभ्याष्टाचत्वरिंशद्वयःपर्यन्तं, स्त्रीणां तु अष्टवर्षत आरभ्य ऋतुदर्शनपर्यन्तं विवाहकालः। ऋतु-मत्या विवाहो गौणः, विना प्रायश्चित्तं रजोवतीनां न व्यवहार्य-त्वमिति वदन्ति ।

(३५) उ०—शारदाप्रसादमिश्राणां ( कलकत्ताशाकद्वीपीयब्राह्मणसभा )।

स्त्रीणामष्टमवयसःपूर्वं विवाहो न योग्यः, पुंसां तु यज्ञोपवीता-दूर्ध्वं प्रायश्चित्तास्मरणाद्यावत्सामर्थ्यं विवाह इति शास्त्रार्थः । परिस्थित्यनुसारेण तु पुंसां षोडशवत्सरमारभ्य विवाहव्यवस्था युक्ता। शिष्टसमाजानुमत्या परावधिनिर्णयोऽपि न दोषाय।

(३६) उ०—कृष्णरायपुरस्थ श्रीवेंकटरामशास्त्रिणाम्

अस्ति बाल्यमारभ्यापि, "द्विवर्षात् प्राग्विवाहश्चेत् कन्याया मरणं यदि। खननं नैव कर्तव्यं मन्त्रसंस्कारमाचरेत्" इत्यादिवचनात् स्त्रीणां रजोदर्शनपर्यन्तं योग्यः, तदनन्तरं तु न योग्यः, पुंसां "पञ्चा-शद्वत्सरादूर्ध्वं न कुर्यात् पाणिपीडनम्" इति निषेधात् विवाहे प्रायश्चित्तीयतेति वदन्ति।

(३७) उ०—ब्रह्मप्रान्तीयब्राह्मणमहासभापण्डितानाम्।

शास्त्रतोऽष्टमवयस आरभ्य परिस्थित्यनुसारेण दशमवयस आर-भ्य स्त्रीणां रजोदर्शनपर्यन्तं पुंसां तु १६ वय आरभ्य पञ्चाशद्वयः

पर्यन्तं विवाहव्यवस्था युक्ता, रजोदर्शनानन्तरं च प्रायश्चित्ता-द्याधिक्यात् आपत्कल्पतयैव तदभ्यनुज्ञानसंभवः ।

(३८) उ०—श्रीराघवशास्त्रिणाम् । ( चिदम्बरम् ) ।

स्त्रीणां षष्ठवय आरभ्य द्वादशवयःपर्यन्तमापत्कल्पतया, अना-थानां रजोऽनन्तरमपि विवाहव्यवस्था न दोषाय । पुंसां तु षोडश-वयस आरभ्य पञ्चाशद्वयःपर्यन्तं विवाहो न दोषाय । तदनन्तरं तु स दोषायैवेति वदन्ति ।

(३९) उ०—तेन्नालि राममूर्त्तिशास्त्रिणाम् ।

ब्राह्मणस्त्रीणामष्टमवयसोऽनन्तरमृतुपर्यन्तं विवाहकालः । ऋत्वनन्तरं तु न सम्भवत्येव धर्माधिकारादिकं विवाहे । क्षत्रियादीनां तु गान्धर्वविवाहाभ्यनुज्ञानात् ऋत्वनन्तरं वर्षत्रयमध्ये विवाहो गौण इति मन्यते ।

(४०) उ०—जयपुर श्रीसीतारामशास्त्रिप्रभृतीनाम् ।

स्त्रीणां दशमवय आरभ्य पुंसां षोडशवय आरभ्य विवाहव्यव-स्था शास्त्रपरिस्थित्युभयानुसारेण भवति । रजोनन्तरं तु विवाहो दोषायैव ।

(४१,४२) उ०—श्रीपट्टाभिरामशास्त्रिणाम् अभिनवसरस्वतीसम्पादकानाम्, रामशास्त्रिणां च ।

अष्टमवयस आरभ्य द्वादशवयःपर्यन्तं स्त्रीणां षोडशवत्सरमा-रभ्य विवाहकालसंकोच एव कर्तव्यः, न तु तदुपचयः । रजोऽनन्तरं तु विवाहो न संभवत्येव धर्माधिकारप्रयोजकः ।

(४३) उ०—नोवाखालीसंस्कृतविद्यालयपण्डितानाम् ।

अष्टमवयस आरभ्य ऋतुकालपर्यन्तमेव शास्त्रपरिस्थित्युभया-नुसारेण नियमनं विवाहकालस्य स्त्रीणां, पुंसां समावर्तनानन्तरं शूद्रेतराणां, शूद्राणां तु षोडशवयस आरभ्य विवाहकालनियमनं

योग्यम् । कन्याया अलाभे एव पुंसां नोद्वाहो युक्तः । वृषलीत्व-बोधकानां वचनानां रजोदर्शनात्पूर्वं विवाहावश्यंभावार्थत्वम् ।

(४४) उ०—मेदिनीपुर जलासुवादिब्राह्मणपण्डितानाम् ।

कन्यकानामष्टमवयस आरभ्य शास्त्रानुसारेण, परिस्थित्यनुसारेण दशमवयसः प्राक् द्वादशवयःपर्यन्तं, पुंसामुपनयनानन्तरमेव शास्त्रतः, परिस्थित्यनुसारेण चतुर्विंशतिवयस आरभ्य विवाहकालनियमनं योग्यम् । रजोयोगे तु विवाहो गौण आपत्कल्पो वा ।

(४५) उ०—श्रीरमानाथविद्यालङ्काराणाम् ।

अष्टमादिवय आरभ्य रजोदर्शनतः पूर्वं विवाहो योग्यः, रजोदर्शनानन्तरं तु षोडशवत्सरमध्ये आपत्कल्पतया विवाहः स्त्रीणामभ्यनुज्ञायते । बाल्यविवाहप्रथारक्षणमेव योग्यं, न तु तत्परित्याजनम् ।

(४६) उ०—श्रीसुरेन्द्रनाथतर्करत्नभट्टाचार्याणाम् ।

राजमार्तण्डे—

सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।

इत्यादिवचनात् सप्तवर्षानन्तरं दशवर्षपर्यन्तं कन्याया विवाहकालो मुख्यः । ततः परं नग्निकाया विवाहकालो गौणः । वृषलीत्वबोधकवचनानामप्राशस्त्यपरत्वं परिस्थित्यनुसारेण सप्तवर्षानन्तरं द्वादशवर्षात्प्राक् कन्यायाः, एकविंशतिवर्षानन्तरं त्रिंशद्वर्षपर्यन्तं पुरुषस्य विवाहः सङ्गतः ।

(४७) उ०—खुलनाजिलांतर्गतकतिपयग्रामनिवासिपण्डितानाम् ।

सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।

इत्यादिवचनम् । स्मार्तभट्टाचार्यैः द्विवर्षायाः शूद्रपत्न्याः पञ्चवर्षीयशूद्रेणापि विवाहः स्वीकृतः ।

अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् ।
मृत्युं समधिगच्छेत्तु मासं तस्यापि बांधवाः ॥

इतिशङ्खवचनं च

चत्वारिंशद्वत्सराणां साष्टानां च परे यदि ।
स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः ।
अष्टचत्वारिंशदब्दं वयो यावन्न पूर्यते ।
पुत्रभार्याविहीनस्य नास्ति यज्ञेऽधिकारिता ॥

इति भविष्यपुराणम् ।

एतद्वचनानुसारेण वर्तमानपरिस्थित्यनुसारेण नियमनमुपयुज्यते। ऋतुदर्शने वृषलीत्वबोधकवचनानि अनापदि पित्रादीनां तद्वोढुश्च प्रत्यवायमवगमयन्ति ।

(४८) उ०—श्रीयुक्तललितकुमारसाङ्ख्यवेदतीर्थमहाशयानाम् ।

रजःप्रवृत्तेः प्रागेव कन्याया विवाहः कार्यः, अनूढायाः रजोदर्शने मातापितृभ्रातॄणां दोषस्मरणात् अनूढायाः कन्यायाः रजोदर्शने वृषलीत्वेन भ्रूणहत्याश्रवणेन च सर्वथा अव्यवहार्यत्वं गम्यते। परिस्थित्यनुसारेण दशमवर्षीयायाः विवाहो योग्यः । तथापि सप्तसंवत्सरादूर्ध्वमेव विवाहः शास्त्रीयः कन्यानां, पुरुषाणां एकविंशतिमारभ्य त्रिंशत्पर्यन्तं विवाहः शास्त्रसम्मतः ।

(४९) उ०—श्रीनारायणविद्यारत्न श्रीविश्वनाथतर्कभूषणमहोदययोः ।

वर्तमानपरिस्थित्यनुसारेण ऋतुप्रवृत्तिसमयात्पूर्वपर्यन्तं स्त्रीणां विवाहनियमनं योग्यम् । रजःप्रवृत्यनन्तरं विवाहस्याऽऽपत्कालिकवृषलीत्वबोधकवचनानां प्रायश्चित्तार्हत्वे निन्द्यत्वे च तात्पर्यम्।

(५०)उ०—मैमनसिंहधर्मसभापण्डितानाम् ।

शास्त्रीयनियमपरिवर्तनं न युक्तम् ।

(५१) उ०—श्रीदुर्गासुन्दरभट्टाचार्याणाम् ।

सामाजिकपारिवारिकपारिपार्श्विकव्यवहारेण विवाहात्परमेव-अस्मद्देशीयस्त्रीणामवगुण्ठनं दृश्यते, ततः पूर्वं तदभावात् याद्वच्छिकगमनादितश्च मनोविकारकपुरुषसंलापादिसंसर्गविभावना-

प्रायश एव सम्भवितुमर्हति। उपयुक्तशिक्षासंयमाभ्यासप्रयोगे अभिभावका अनेके एवासमर्थाः। विवाहात्पूर्वं रजोदर्शने आत्यन्तिकनिन्दाश्रुतेश्च रजोदर्शनपूर्वकालपर्यन्तं विवाहसमयनिरूपणं कर्तव्यम्। अतएव धृताधोवसनाया गौर्याः प्राप्तौ विवाहकर्त्रा यतनीयमित्युक्तमुद्वाहचन्द्रालोके।

(५२) उ०—श्रीसीतानाथविद्याभूषणानाम्।

वर्तमानपरिस्थितेः शास्त्राननुमोदितत्वात्तदनुसारेण यत्किञ्चिदपि नियमनं शास्त्रैकशरणानामनभिप्रेतमेव सर्वदा भावि।

(५३) उ०—श्रीकुमुदचन्द्रकाव्यव्याकरणतीर्थानाम्।

तदेव।

(५४) उ०—श्रीनाथचन्द्रकाव्यतीर्थद्वारकानाथवेदान्ततीर्थयोः।

स्त्रीणां मासत्रयाधिकषड्वर्षात् दशमवर्षपर्यन्तं विवाहकालो मुख्यः, पुंसामुपनयनानन्तरं अष्टचत्वारिंशद्वर्षपर्यन्तम्। रजःप्रवृत्यनन्तरं विवाहस्यापत्कल्पत्वमेव। वृषलीत्वबोधकवचनानां व्यवहारायोग्यत्व एव तात्पर्यम्।

(५५) उ०—श्रीविनोदविकासदेवन्यायतीर्थानाम्।

पूर्ववदेव। परिस्थित्यनुसारेण शास्त्रानुसारेण च रजोदर्शनात्पूर्वं षोडशवर्षपर्यन्तं नियमनं योग्यं, रजःप्रवृत्यनन्तरं विवाहस्य अत्यापत्कल्पत्वम्।

(५६) उ०—श्रीरामपदस्मृतितीर्थानाम्।

परिस्थित्यनुसारेण द्वादशवर्षादारभ्य षोडशवर्षपर्यन्तं स्त्रीणां, पुंसां च विंशतिवर्षावधि त्रिंशद्वर्षपर्यन्तं विवाहकालः शास्त्रसम्मतः। विशेषकारणवशात् पुंसां विवाहः अष्टचत्वारिंशद्वर्षपर्यन्तं शास्त्रसम्मतः। ऋतुदर्शनात् प्राक् कन्यादानमत्यन्तमावश्यकम्।

(५७) उ०—श्रीभूतनाथवेदान्तशास्त्रिणाम्।

पुंसां सप्तदशवर्षादारभ्य अष्टचत्वारिंशद्वर्षपर्यन्तं विवाहकालः

शास्त्रसम्मतः। स्त्रीणां च प्राग्रजोदर्शनात्। रजसि प्रवृत्ते योषितां बहुदोषसम्भावनाऽस्ति। सरजस्कतया तस्याश्चित्त विक्षेपः, तदार्त्तववैफल्यम्, पित्रोः सहोदरस्य च भ्रूणहत्यादिपापं, तस्याः कन्यायाश्च वृषलीत्वादि पातित्यं, तद्भर्तुः वृषलीपतित्वदोषश्च।

रजःप्रवृत्ते नारीणां रिरंसा जायते भृशम्।

इत्यादिवचनान्यत्र प्रमाणानि। अन्या च महती शारीरिकी हानिः, या पुनरनूढा असंस्कृता पितुर्निलये रजो दृष्ट्वा स्वभावरिरंसुतया स्वप्ने मैथुनमाचरेत्, तां प्रकृत्योक्तमायुर्वेदे—

ऋतुस्नाता तु या नारी स्वप्ने मैथुनमाचरेत्।
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि॥
मासि मासि प्रवर्धेत स गर्भो गर्भलक्षणः।
कललं जायते तस्मात् वर्जितः पैतृकैर्गुणैः॥

केशस्नाय्वस्थिशिराधमनीदन्तनखरेतः शून्यं कललं जायत इत्यर्थः। अन्यच्च भावप्रकाशे—

यदा नार्यावुपेयातां वृषस्यन्तौ कथञ्चन।
मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते॥

अनस्थिः अल्पकोमलास्थिरित्यर्थ इति टीका। परं सुशासितायामपि कन्यायां न प्रसह्य प्रकृतिमवरोद्धुं शक्नोति कश्चित्। यद्येवमनिष्टं जायेत, तर्हि का गतिरस्माकं धर्मैकजीवितानामार्याणामिति चिन्त्यम्। अतएव मनुनाप्युक्तम्—

कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः। इति परिस्थित्यनुसारेणापि इयमेव व्यवस्था।

रजोदर्शनात्प्राक्कन्या देया इत्यनेन भारतवासिनामार्याणां नैकविधः काल उक्तः, देशभेदेन प्रकृतिस्वास्थ्यादिभेदेन चात्र कालभेदस्य अवश्यम्भावित्वात्। अत एव सुष्ठूक्तं मेधातिथिना

'अष्टवर्षात् (आरभ्य) ऋतोः प्राक्' इति। रजःप्रवृत्त्यनन्तरं विवाहस्य न मुख्यत्वं, किं तु हेयत्वं हानिकरत्वं च। हानिरपि दैहिकी सामाजिकी च। वृषलीत्वबोधकवचनानां व्रात्यवत्पातित्यसूचकत्वम्। पाश्चात्याः कथयन्ति सङ्करप्रजा बलवत्यो भवन्ति इति, तदर्थं ते सङ्करोत्पादनाय यतन्ते। येन केनाप्युपायेन अर्थजनबलवृद्धिरवश्यं करणीयेति तद्देशीयानां सिद्धान्तः। नास्माभिरेवंविधं अनुचितं बलमभिलष्यते।

(५८) उ०—पूर्वस्थलीब्राह्मणमहासम्मेलनोपसमितिपण्डितानाम्।

अन्यत्सर्वं पूर्ववदेव। परन्तु—

नैनः किंचिदवाप्नोति न च यं साऽधिगच्छति।

इत्यनेन ऋतुमत्याः कन्याया वोढुश्च दोषाभावो दर्शितः, तथाऽपि पुरुषान्तरोपभुक्तत्वसंशयाल्लोकविद्विष्ट एव।

(५९) उ०—श्रीसुरेन्द्रलालस्मृतितीर्थानाम्।

स्त्रीणां दशमे वर्षे पुंसां चतुर्विंशतिवर्षे शूद्रस्य षोडशवर्षे विवाहनियमनं योग्यम्। ऋतमतीविवाहो लोकविद्विष्ट एव।

(६०) उ०—श्रीचिन्तामणिस्मृतितीर्थानाम्।

स्त्रीणां शूद्राणां च चूडाकालद्विवर्षानन्तरं द्विजानां समावर्तनसंस्कारानन्तरं आजीवनमेव विवाहः शास्त्रसम्मतः। न च—

सप्तसंवत्सरादूर्ध्वं विवाहः शास्त्रसम्मतः।
कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः॥

इति वचनात्सप्तवर्षाभ्यंतरे न विवाहो भवितुमर्हतीति वाच्यम्। तत्र 'शस्यते' 'धर्मगर्हित' इत्याभ्यां निन्दितत्वस्यैव प्रतिपादनात्। अत एवोक्तं शुद्धितत्वे—'यत्र द्विवर्षीयायाः शूद्रपत्न्या मरणे स्वमशौचं तत्र तद्वोढुः पञ्चमाब्दीयस्य मरणे द्वादशाहाशौचवैषम्यापत्ते'रेति। न च तथापि—

साष्टचत्वारिंशदब्दं वयो यावन्न पूर्यते ।
पुत्रभार्याविंयुक्तस्य नास्ति यज्ञेऽधिकारिता ॥

इति वचनात् अष्टचत्वारिंशद्वर्षानन्तरं विवाहस्याशास्त्रीयत्वमिति वाच्यम् । तत्र यज्ञकर्मानधिकारप्रतिपादनमुखेन तन्मध्ये विवाहावश्यकत्ताया एव प्रतिपादितत्वात् । न च पुत्रोत्पादनायोग्यदशायां कथं विवहः, तदानीमपि—

नक्रमपि विना कुर्यात् विधानं भार्यया द्विजः ।

इत्यादिवचनावगतवैधकर्मानुष्ठानोपयोगात् । वर्तमानपरिस्थित्यनुसारेण विवाहस्य पूर्वोक्तं शास्त्रीयकालमुल्लङ्घ्य अन्यथा कालकल्पनं शास्त्रविदां सर्वथा असम्मतमेव ।

(६१) उ०— श्रीअन्नदानाथभट्टाचार्याणाम् ।

सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटकगृहगौरीणां सप्तजन्मानुगं फलम् ॥

इति स्मृतिः गौर्या दानं विशेषतः प्रशंसति ।

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ।

इतिसंवर्तवचने दशवर्षाधिकवयस्कायाः निन्दाश्रवणात् सप्तमवर्षादूर्ध्वं दशवर्षपर्यन्तं विवाहो युक्तः । विश्वसारतन्त्रोक्तद्वादशाब्दादारभ्य विंशतिवर्षपर्यन्तं यत्सुकुमारीत्वविधानं तत्कौलानां कुमारीपूजने ज्ञेयम् । द्विजातिपुरुषाणां तु समावर्तनानन्तरमेव विवाहकालः । सद्धर्मग्रासो वर्तमानकालस्तु प्राचीनकालवर्तिस्त्रीरपेक्ष्य वर्तमानस्त्रीणामल्पे वयसि रजोयोगमुत्पादयति । तथा च वृषलीकन्याया विवाहे रजोदोषश्रवणात्सम्प्रति कालव्यवहारस्थित्या विवाहकालस्य सङ्कोच एव प्राप्तः । रजोनन्तरविवाहस्य गौणत्वापत्कल्पत्वसंदेहेऽस्माभिः पृच्छ्यते, प्रमादकृतरजःप्रवृत्यनन्तरं विवाहस्य गौणत्वजिज्ञासा ? आहोस्वित् इच्छाकृतरजः प्रवृत्यनन्तरम् ? प्रथमे कल्पे, विवाहः आपत्कल्प एव, द्वितीये

गौणत्वम् । वृषलीत्वबोधकवचनानां वृषलीविवाहनिषेधे तात्पर्यम् ।

(६२) उ०—श्रीदयालतर्कतीर्थानाम् ।

सर्वमपि पूर्ववत् । वृषलीत्वबोधकवचनानां तद्वोढुर्द्दढतर-पापभागित्वे तात्पर्यम् ।

(६३) उ०—फरीदपुर विद्वत्समिति सम्पादकानाम् ।

स्त्रीणां द्वादशवर्षतश्च मुनिभिः पुंसां चतुर्विंशके
उद्वाहो विहितस्तु वेदविहितो लोकस्थितिं कांक्षिभिः ।
एषा पद्धतिरेव सम्प्रति पुनर्योग्या भृशं भारते
नान्या स्याद्गतिरत्र विज्ञविदुषां नूनं मता सर्वतः ॥
कालोऽयं त्वतिदुस्तरः कलिरहो यस्य प्रभुत्वं स्फुटं
यस्मादद्य हि धर्मसम्मतगतिर्नो सम्मता सर्वतः ।
येषां शास्त्रमतेन कृत्यकरणे ह्यास्था परा धर्मतः
तेषां स्मार्तविधानतोऽष्टप्रभृतौ कन्याप्रदानक्षमः ॥

गौरीदानविधेर्विरोधनिपुणैः प्रोक्तं व्यवस्थाप्यते
ये वा सम्प्रति चञ्चलास्तु चपलाः संस्कारमाकांक्षिणः ।
तेषां मोहविमोचनात्तु सुतरां पुष्पोद्गमात् पूर्वतः
कन्याया दशवर्षतो गणनतो द्वित्र्युत्तराद्वा पुनः ॥

विवाहात्पूर्वतः स्त्रीणां रजश्चेत्परिदृश्यते ।
आपत्कल्पत्वमेवात्र भविता कस्यचिन्मते ॥
वयं तु न हि लुप्ताः स्मस्तत्रापि साम्प्रतं पुनः ।
यतः कौलीन्यमेवाद्य नामशेषत्वमृच्छति ॥
तस्मात्साङ्कर्यदोषेण समाजो जर्जरायते ।
कालेऽप्यनूढकन्यानां जातं चेदृतुदर्शनम् ॥
तादृग्भार्योद्वाहकारिपत्युर्नरकगामिता ।
सर्वथा वर्जनीयोऽसौ समाजहितकामिभिः ॥

(६४) उ०—श्रीहृषीकेशवेदान्ततीर्थानाम् ।

पूर्ववदेव ।

(६५) उ०—श्रीहरकुमार स्मृतितीर्थ तर्कपञ्चाननकविरत्नानाम् ।

रजोदर्शनात् पूर्वं कन्याया विवाहः । रण्डाश्रमित्वात्पूर्वं पुरुषस्य विवाहः शास्त्रसिद्धः । रजःप्रवृत्त्यनन्तरं विवाहस्य मुख्यत्वम् । वृषलीत्वबोधकं तु शास्त्रं किञ्चिन्न्यूनतां बोधयति ।

(६६) उ०—तर्कतीर्थ श्रीभवरञ्जनशर्मणाम् ।

स्त्रीणां जन्मकालमारभ्य मासत्रयाधिकषड्वर्षानन्तरमाजीवनं विवाहकालः । पुंसामपि विंशतिवर्षानन्तरमाजीवनम् । सम्भवति चेदष्टचत्वारिंशद्वर्षाभ्यन्तरे ।

(६७) उ०—श्रीहरिदाससिद्धान्तवागीशभट्टाचार्याणाम् ।

पूर्ववदेव ।

(६८) उ०—महेन्द्रकुमारस्मृतिभूषणभट्टाचार्याणाम् ।

शास्त्रोदितनियमपरिवर्तनं न युक्तं, वृषलीत्वबोधकवचनात्यर्थवादः ।

(६९) उ०—श्रीरामदेवशर्मणाम् ।

पूर्ववदेव ।

(७०) उ०—भिषक्पुराणतीर्थोपाधिकश्रीगदाधरमङ्गलानाम् ।

पूर्ववदेव ।

(७१) उ०—सतीनाथस्मृतितीर्थानाम् ।

पूर्ववदेव ।

(७२) उ०—श्रीसुरेशचन्द्रकर्मविद्यानिधीनाम् ।

पूर्ववदेव ।

(७३) उ०—सुरेन्द्रनाथदेवशर्मणाम् ।

षोडशवर्षाया विवाहबोधकं महाभारतवचनं युगान्तरविषयं

शैत्यप्रधानदेशविशेषपरं वा। श्रूयते च पुनः ऋग्वेदे कुष्ठरोगाक्रान्तायाः कस्याश्चित् कन्याया आरोग्यलाभानन्तरं चत्वारिंशद्वर्षमतीत्य ततः परं तस्या विवाहः, तेनैव किं चत्वारिंशद्वर्षे सर्वासां स्त्रीणां विवाहकालः कल्प्येत ? । तेन ऋतुदर्शनात् प्राक् स्त्रीणां विवाहो योग्यः, पुंसां तु पूर्ववदेव ।

एतैस्तु प्राचीनमतपोषकाणि पूर्वोक्तानि निखिलान्यपि प्रमाणानि महता परिश्रमेणान्विष्यान्विष्य लिखितानि ।

(७४) उ०—श्रीकालीचन्द्रस्मृतितीर्थानाम् ।

वर्तमानपरिस्थित्यनुसारेणापि वयोनियमनं न योग्यम् । रूपगुणार्थवैषम्येन नियमपरिपालनासम्भवात् महानर्थसम्भवाच्च । अन्यत्सर्वं पूर्ववदेव ।

(७५) उ०—श्रीआनन्दकुमारतर्कवागीशानाम् ।

पूर्ववदेव ।

(७६) उ०—श्रीप्राणानन्दकविभूषणसिद्धान्तरत्नसरस्वतीनाम् ।

पूर्ववदेव ।

(७७) उ०—श्रीसूर्यकुमारतर्कसरस्वतीनाम् ।

पूर्ववदेव ।

(७८) उ०—श्रीरामगोपालस्मृतिरत्नानाम् ।

पूर्ववदेव ।

(७९) उ०—श्रीमोदनाथविचाररत्नानां कूचविहारराजसभापण्डितानाम् ।

यत्तु—

वर्षपञ्चदशं यावत्कन्यादानं न दुष्यति ।
देशाचारात् कुलाचारान्नान्यदीयं विधर्मतः ॥

इति विवाहभास्करधृतकुलाचारलिखितस्मृतिवचनं तदरजस्काविषयमेव । न च प्रागृतोः कन्याया न दानमिति मनुभाष्यकारमेधातिथिव्याख्यानात् ऋतुदर्शनान्तरं कन्याया विवाह इति

वाच्यम् । तस्यायमर्थः, यथा आद्यऋतोरन्यत्र कन्याया दानं तथा ऋतुदर्शनात्प्रागेव कन्याया दानमित्यर्थः । नन्वस्तु तावद्ब्राह्मणपक्ष एव अरजस्काविवाहविधिः ।

यस्तु तामुद्वहेत कन्यां ब्राह्मणो मदमोहितः ।
असम्भाष्यो ह्यपाङ्क्तेयस्स ज्ञेयो वृषलीपतिः ॥

इति वाक्यात्, न पुनः क्षत्रियादाविति चेन्न ।

अविवाहिता तु या कन्या पुष्पयुक्ता भवेद्यदि ।
चान्द्रायणं व्रतं कुर्यात् सर्ववर्णेष्वयं विधिः ॥

इति रिपुञ्जयवचनात् ब्राह्मणादिसर्ववर्णानामेव प्रायश्चित्तश्रवणात्। पुंसस्तु कन्यापेक्षया त्रिगुणकालेन सार्धद्विगुणकालेन सपादैकगुणेन चाष्टचत्वारिंशद्वर्षपर्यन्तं विवाहो निरूपितः । तत्र क्रमेण प्रमाणानि-

वर्षैरेकगुणां भार्यां त्रिगुणः स्वयमुद्वहेत् ।

इति कल्पतरूद्धृतविष्णुपुराणवचनम् ।

त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।

इति मनुवचनम् ।

पुमान्विंशतिवर्षश्चेत् पूर्णषोडशवर्षया ।

इतिभुजवलभीमवचनम् ।

अष्टचत्वारिंशदब्दं वयो यावन्न पूर्यते ।
भार्यापुत्रविहीनस्य नास्ति यज्ञेऽधिकारता ॥ इति ॥
पञ्चाशोर्ध्वं वनं व्रजेत् । इति वचनं च ।

(८०) उ०—श्रीचट्टलग्रामधर्ममण्डलीपण्डितसभायाः ।

पूर्ववदेव ।

(८१) उ०—प्राचीनकामरूपपण्डितसभायाः ;

पूर्ववदेव ।

(८२) उ०—श्रीजगदीशचन्द्रदेवशर्मणाम् ।

पूर्ववदेव ।

(८३) उ०—चट्टग्रामान्तर्गतकेलीशहरस्थपण्डितसमितेः ।

अनाश्रमी न तिष्ठेत्तु क्षणमात्रमपि द्विजः ।

आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते त्वसौ ।

समावर्तनोत्तरकालो मुख्यः प्रतीयते ।

(८४) उ०—श्रीनवीनचन्द्रन्यायपञ्चाननानां श्रीरामन्यायरत्नानां च ।

वृषलीत्वबोधकवचनानां द्विजातेर्विवाहनिषेधबोधकतया ज्ञानतोऽज्ञानतो वा विवाहे कृते वृषलीत्वमापन्नायाः कन्याया-स्तत्पत्युरपि तदुत्पन्नसन्ततेरपि पातित्यमित्येव तात्पर्यम् ।

(८५) उ०—श्रीमहेन्द्रचन्द्रकाव्यतीर्थसांख्यार्णवानाम् ।

पूर्ववदेव ।

(८६) उ०—श्रीसूर्यनारायणस्मृतिभूषणभट्टाचार्याणाम् ।

रजःप्रवृत्त्यनन्तरं वृषलीत्वबोधकवचनेषु ब्राह्मणमात्रपरिदर्श-नादुपलक्षणत्वग्राहकप्रमाणान्तरादर्शनाच्च ब्राह्मणवरस्यैतादृ-शकन्यापरिणयात्तादृशो दोषः ।

(८७) उ०—श्रीगोपालचन्द्रस्मृतिव्याकरणतर्कतीर्थभागवतिस्मृतिन्याय-वेदान्तरत्नानाम् ।

स्त्रीणामपुष्पितानां गौणमुख्यभेदेनाष्टमवर्षात् षोडशवर्षपर्यन्तं विवाहकालः शास्त्रसम्मतः । तथा च स्मृतिसारः—सप्तमाद्वत्सरा-दित्यादि अन्यथा धर्मगर्हित इत्यन्तम् ।

अङ्गिराः—अष्टवर्षा भवेद्गौरी अत ऊर्द्ध्वं रजस्वला—इत्यन्तम् । रजस्व-लेति अन्तरस्थरजोयुक्ता भवतीत्यर्थः । गौणकालमाह—कुलाचारे स्मृतिः—

वर्षंपञ्चदशं यावत् कन्यादानं न दुष्यति ।
देशाचारात्कुलाचारान्नान्यदीयं विधर्मतः ॥

महाभारते—

त्रिंशद्वर्षः षोडशवर्षां भार्यां विन्देत नग्निकाम् ।
अतोऽप्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत् ॥

इति विवाहभास्करे लिखनात् । अत एव एकवर्षा भवेत्सन्ध्ये-त्याद्यभिधाय—

क्षेत्रज्ञा पञ्चदशभिः षोडशे चाम्बिका स्मृता ।
एवं क्रमेण सम्पूज्या यावत्पुष्पं न जायते ॥

इति तन्त्रसारधृतयामलीयेनाप्येवंविधायाः पूज्यत्वमुक्तम् । यत्तु

प्राप्ते तु द्वादशे वर्षे यदा कन्या न दीयते ।

इत्यादिवचनान्तरं, तत्प्रकटरजस्काविषयमिति तत्रैवोक्तम् । पुंसां तु समावर्तनकालादारभ्य त्रिंशद्वर्षपर्यन्तं मुख्यकालः, ततः पञ्चाशद्वर्षपर्यन्तं गौणकालः प्रतीयते । 'वने पञ्चाशतो व्रजेत्' इति श्रुतेः । रजःप्रवृत्त्यनन्तरं 'यस्तु तां वरयेत्कन्याम्' इत्यादिकाश्यपीये तादृशकन्याया धर्म्यविवाहे ब्राह्मणस्य दोषश्रवणादसवर्णीयावद्वैदिकविवाहानुष्ठानादिकं विना संगृहीतारूपगौणकल्पत्वमेव विवाहस्य भवितुमर्हति । इतरत्रैवर्णिकानां तु तादृशकन्याविवाहे न दोषः । एतदेव शम्भुनाथेन भास्करग्रन्थेऽभिहितं यथा—"तेन एवंविधया शकुन्तलया दुष्यन्तविवाहोऽपि श्रूयते । मनुनापि,

गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥

इत्यादिनां तादृशविवाहस्य क्षत्रियादेर्नाधर्महेतुत्वमुक्तम् । वृषलीत्वमपि ब्राह्मण्या एव, ब्राह्मणप्रतियोगिकविवाहे ब्राह्मण्या एव प्रागुपस्थितत्वा"दिति । 'अक्षता च क्षता चैव'इतियाज्ञवल्क्यीयमपि क्षत्रियादिविषयमिति । किं च वरकन्ययोः संस्कारविशेषो हि वि-

वाह इति भास्करकृतविवाहलणक्षमप्यत्र न सङ्गच्छते, कन्यात्वाभावादिति। वृषलीत्वबोधकवचनानां तु 'न गृहम्' इत्यादिवाक्ये 'सर्वान्पुरुषार्थान्समश्नुते' इत्यत्र सर्वशब्दस्य यावत्वावच्छिन्ने शक्तत्वात् 'सपत्नीको धर्ममाचरेत्' इति श्रवणाच्च ब्राह्मणस्य ब्राह्मादित्रयविवाहे यथा धर्मार्थकाममोक्षपुरुषार्थचतुष्टयं स्यात् तथा तया सह न स्यादित्यत्र तात्पर्यम्।

(८८) उ०—श्रीरामलालतर्कतीर्थानाम्।

पूर्ववदेव।

(८९) उ०—ठक्कुर श्रीराखालानन्दशास्त्रिणाम्।

रजःप्रवृत्तौ वृषलीत्वबोधकानां वचनानां अव्यवहार्यत्वे तात्पर्यं द्रष्टव्यम्। तत्संसर्गिणामपि तथाविधानदर्शनात्।

(९०) उ०—श्रीबंकिमविहारिकाव्यतीर्थानाम्।

पूर्ववदेव।

(९१) उ०—श्रीशारदाचरणस्मृतितीर्थानाम्।

स्त्रीणां सप्तसंवत्सरादूर्ध्वं द्वादशवत्सरपर्यन्तं प्रशस्तो विवाहः। अतः परमप्रशस्तो न तु पर्युदस्तः। पुंसां तु ब्राह्मणस्योपनयनात्परं, एवं क्षत्रियवैश्ययोरपि, शूद्रस्य चतुर्विंशतिवर्षात्परं, सर्वेषामष्टचत्वारिंशद्वर्षपर्यन्तम्। अतः पूर्वापरयोर्न पर्युदासः, किं तु न प्रशस्तः। वर्तमानसमये स्तनोद्गमसमये एव प्रशस्तो विवाहकालः। अगत्या तु तदधिककालेऽपि स्त्रीणां विवाहः। पुंसां तु समाजरीत्यनुसारेण।

(९२) उ०—श्रीवासुदेवचौधरी व्याकरणतर्कतीर्थन्यायरत्नानाम्।

वर्तमानसमयेऽपि शास्त्रनिर्दिष्टनियम एव माननीयः। यद्यपि कालप्रभावेण लोकोऽसद्वृत्तिमाचरति, तथापि असद्वृत्त्याचरणविधायकं किमपि नियमनं न सम्भवति। वृषलीत्वबो

धकवचनैरिदं ज्ञायते यद्रजःप्रवृत्त्यनन्तरं स्त्रीणां विवाहदानं पापजनकं गृहस्थस्य सर्व्वतोभावेनाममङ्गलकरं तदिति ।

(६३) उ०—श्रीत्रैलोक्यनाथस्मृतिभूषणानाम् ।

पूर्ववदेव ।

(६४) उ०—श्रीध्रुवानन्दन्यायरत्नानाम् ।

शतानन्दः—

गर्भादष्टमवर्षे तु दशमे द्वादशेऽपि वा ।
कन्यापरिणयः शस्त इति वात्स्यादिसम्मतम् ॥

गर्भादिति सर्व्वत्रान्वयः । अत एव जन्मावधि सप्तमे वर्षे गौरीत्वमाह कश्यपः—

सप्तवर्षा भवेद्गौरी दशवर्षा तु कन्यका ॥ इति ॥

कन्याविवाहकाल एव वरविवाहस्य मुख्यः कालः । कन्याधिकवयसः कन्याधिकप्रमाणस्य च वरस्य विधानकालो गौणः । 'अनाश्रमो न तिष्ठेत्'इत्यादिवचनात् ।

(६५) उ०–श्रीदेवुलवाडचतुष्पाठीपण्डितानाम् ।

वृषलीवत् तस्यास्तद्वोढुश्च दैवादिकृत्येषु अनधिकारित्वसूचनाय वृषलीति संज्ञा ।

(६६) उ०—चटगाँव एनाथबाजार संस्कृतविद्यालयपण्डितानाम् ।

पूर्व्ववदेव ।

(६७) उ०—श्रीदिनाजपुरधर्मसभापण्डितानाम् ।

वर्तमानपरिस्थित्यनुसारेण शास्त्रानुसारेण च रजोदर्शनात्पूर्वमेव विवाहकालनियमनं स्त्रियो योग्यम् । यतः स्त्रीणां रजःप्रवृत्त्यनन्तरमपि विवाहाभावे—

दीर्घं वा युवती कन्या निवसेत् पितृवेश्मनि ।
विना तु भर्तृसंसर्गं भ्रष्टात्वं साधिगच्छति ॥

इति नीतिशास्त्रेण भ्रष्टात्वं स्यात्, ततः स्वच्छन्दचारिणीनां

स्त्रीणां त्यागः शास्त्रे विहितः, न तु कदापि ग्रहणं सम्भवति। पुंसामपि कलौ दीर्घकालब्रह्मचर्याभावेऽपि विवाहे असमाप्तजिगीषस्य स्त्रीचिन्तनेन अध्ययनप्रतिबन्धकताशङ्कया, किं च चतुर्विंशतिवर्षात्पूर्वं सर्वेषामङ्गप्रत्यङ्गानामदार्ढ्यात् तत्पूर्वमेव रामानुरक्तौ तदानीं तत्र जातानां तनयानां दौर्बल्यमल्पायुष्ट्वं च स्यादिति चतुर्विंशतिवर्षमारभ्यैव विवाहकालनियमनम्। रजःप्रवृत्त्यनन्तरं विवाहस्य न मुख्यत्वं न वा गौणत्वं न वाऽऽपत्कल्पत्वं, परंतु,

यस्तु तामुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः।
असम्भाष्यो ह्यपाङ्क्तेयः स ज्ञेयो वृषलीपतिः॥

इति निन्दार्थकवाक्येन निषिद्धत्वमेवावगम्यते, ततश्च शास्त्रान्तरे रजःप्रवृत्त्यनन्तरं दानप्राशस्त्यविधायकं वचनं यदि समूलं प्रमितं स्यात् तदा तत्कलीतरपरत्वेन व्याख्येयम्। न च दृष्टरजस्काया निन्दनं कलीतरपरं, प्राशस्त्यं तु कलिपरं, इति वैपरीत्यं कुतो न स्यादिति वाच्यम्। यतो हेतुरित्यधिकृत्य—

स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि।

इत्यादिभागवतीयकलिवर्णनश्लोकैः कलौ जनानां शिश्नोदरपरायणत्वावगमात्, अविशेषेण स्त्रीपुंसोरुभयोरेव दीर्घकालीनब्रह्मचर्यनिषेधात्, 'स्वैरिण्यश्च स्त्रियः सदा' इत्यनेन कलौ स्त्रीणां स्वैरिणीत्वख्यापनेन रजःप्रवृत्त्यनन्तरमपि विवाहे व्यभिचारिणीत्वादिशंका दुर्निवारा, ततश्च कलौ रजःप्रवृत्त्यनन्तरं विवाहस्य निषिद्धत्वमेव न्याय्यम्। ननु यदि कलौ शिश्नोदरपरायणत्वमेव दीर्घकाले ब्रह्मचर्याभावे हेतुरिति उपन्यस्यते, तर्हि पुंसां कथं चतुर्विंशतिवर्षात्पूर्वं विवाहो निषिध्यत इति चेन्न, कलौ शिश्नोदरपरायणत्वात् दीर्घकालीनं शास्त्रोक्तब्रह्म-

चर्यं स्त्रीपुंसोरुभयोरेवाशक्यम्, ततश्च चतुर्विंशतिवर्षमारभ्य यो विवाहकालोऽभिहितः, स तत्पूर्वमङ्गप्रत्यङ्गानामदार्ढ्यात् तत्परं च दार्ढ्यात् सन्तानानां दीर्घायुष्ट्वाय, न तु तत्पूर्वं सर्वथैव विवाहाभावो ज्ञाप्यते। न चैवं स्त्रीणामपि चतुर्विंशतिवर्षात्पूर्वं सर्वाङ्गानामदार्ढ्यात् चतुर्विंशतिवर्षमारभ्यैव विवाहकालोऽस्त्विति वाच्यम्। बीजदार्ढ्यादेव सन्तानस्य दृढत्वात्, तत्र क्षेत्रदार्ढ्यस्यानुपयोगित्वात्। दृष्टा हि लोके उर्वरायां भूमौ सलिलसंसिक्तायां कोमलायां न तु दृढायां परिपुष्टदृढबीजवपने बलवतां वृक्षाणामुत्पत्तिः। तत्र यथा एतद् बीजमेभिर्दिनैः परिपुष्टं भवतीति कालनियमोऽस्ति, न तथा एतत्क्षेत्रमेभिर्दिनैः परिपुष्टं भवतीति कालनियमोऽस्ति। यदा यदैव सलिलसंसिक्तं कर्षितं च स्यात्, तदा तदैव तत्कालीनपुष्टबीजवपने पुष्टवृक्षाणामुत्पत्तिस्तद्वदत्रापि। यदा यदैव उर्वरा नारी ऋतुमती स्यात्, तदा तदैव परिपुष्टरेतसा परिपुष्टसन्तानानामुत्पत्तिः, नात्र स्त्रीणां वयःकृतं किंचिदप्युपयोगित्वमस्ति। अथैवं कलौ विधवास्त्रीणां दीर्घकालीनब्रह्मचर्यरक्षणं कथमुपपद्येतेति चेत्। सत्यम्। सम्भोगाशैव रतिप्रवृत्तौ हेतुः। विधवास्त्रीणां तु इह जन्मनि सम्भोगाशाविरहेण रतिप्रवृत्त्यभावात्, 'निराशः सुखी पिङ्गलावत्' इति सांख्यदर्शनोक्तदृष्टान्तेन सुखेनैव ब्रह्मचर्यरक्षणं सम्भवति। प्राप्तयौवनानां कुमारीणां तु समवयस्कायाः कस्याश्चिद्विवाहे कदा वयं वयस्यावत् स्वामिसङ्गता भविष्याम इत्याकांक्षायाः प्राबल्याद् ब्रह्मचर्यरक्षणं प्रायश एव सुदूरपराहतमिति दिक्।

(६८) उ०—श्रीतारानाथन्यायतर्कतीर्थ-श्रीतारकेश्वरस्मृतितीर्थयोः।
पूर्ववदेव।

(६९) उ०—श्रीपूर्ववङ्गीयसुवर्णग्रामान्तर्गतकृष्णपुरासनातनधर्ममण्डलप्रतिनिधीनाम्।

यमः—

अग्रे माहिषिकं दृष्ट्वा मध्ये च वृषलीपतिम् ।
अन्ते वार्धुषिकं दृष्ट्वा निराशाः पितरो गताः ॥

मनुः—

अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ।

(१००) उ०—श्रीरजनीनाथस्मृतितीर्थनाम् ।

पूर्ववदेव ।

(१०१) उ०—मैमनसिंहहिन्दुसभापतीनाम् ।

ऋतुमतीविवाहः शास्त्रविरुद्धः । इतिहासतस्तु ज्ञायते सीतासावित्रीदमयन्तीनां ऋतुकालात्परत्र विवाहो जातः । पुंसां तु षोडशवर्षात्पूर्वं विवाहस्तु कथमपि न योग्यः, चतुर्विंशतिवत्सरादूर्ध्वं तु प्रशस्तः । परिस्थित्यनुसारेण विविच्यमाने चतुर्दशवर्षात्प्राक् कुमार्या विवाहः कथमपि न योग्यः । पुंसां चाष्टादशवत्सरात्पूर्वं विवाहो न योग्यः । वृषलीत्वबोधकवचनानां तत्पूर्वंतनविवाहप्राशस्त्ये तात्पर्यम् ।

(१०२) उ०—श्रीरामकिंकरतर्करत्नभट्टाचार्यणाम ।

कन्यायाः पञ्चमवर्षात्परं दशवर्षपर्यन्तं पुंसः पञ्चदशवर्षादष्टचत्वारिंशद्वर्षपर्यन्तं विवाहः शास्त्रसम्मतः । वर्तमानसमयानुसारेण अष्टमवर्षात्परं रजःप्रकाशकालपूर्वपर्यन्तं कन्यायाः. पुंसस्तु पञ्चदशवर्षात्परं त्रिंशत्तमवर्षपर्यन्तं योग्यः ।

'पित्रागारे कुचकुसुमयोः सम्भवो वा यदि स्यात् ।'
इत्यादिद्विरागमनकर्तव्यताबोधकवचनबलात् द्विरागमनस्य रजःप्रकाशात्पूर्वं यथाऽवसरः स्यात् तावत्पर्यन्तमिति प्रतिभाति ।

(१०३) उ०—श्रीतारिणीचरणतर्कचूडामणीनाम् ।

वृषलीत्वबोधकवचनानां पातित्यबोधकत्वम् ।

(१०४) उ०—श्रीदयालकृष्णतर्कतीर्थानाम् ।

पूर्ववदेव ।

(१०५) उ०—श्रीआशुतोषस्मृतिरत्नानाम् ।

स्त्रीशूद्रयोर्विवाहपूर्वावधिकस्य शास्त्रतः सुस्पष्टमनुपलभ्यमानतया चूडाकरणानन्तरं तत्कालः कल्पनीयः ।

येषां च न कृताः पित्रा संस्कारविधयः क्रमात् ।

इत्यादिनारदवचने संस्काराणां क्रमकर्तव्यताभिधानात् ।

आवृत्ततीर्थगमने प्रतिघाते च कर्मणि ।

कालात्यये च कन्यायाः कालदोषो न विद्यते ॥

अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।

दशमे कन्यका प्रोक्ता अत ऊर्ध्वं रजस्वला ॥

तस्मात्संवत्सरे प्राप्ते दशमे कन्यका बुधैः ।

प्रदातव्या प्रयत्नेन न दोषः कालदोषतः ॥

इत्यङ्गिरोवचनेऽष्टमवर्षाद्युपादानं प्रशंसार्थम् । यत्तु शूद्रस्य षोडशवर्षोपरि विवाहकालो बहुशो दर्शितः शुद्धितत्त्वे रघुनन्दनेन, तदपि न्यायवर्तिशूद्राणां विवाहप्रशस्तकालपरतया बोद्धव्यम् । न तु तत्पूर्वकालव्यवच्छेदार्थम्, रघुनन्दनेनैव पञ्चमाब्दीयशूद्रस्य द्विवर्षायाः कन्यायाश्च विवाहस्याङ्गीकृतत्वात् । पुरुषस्य तु भार्यात्वसम्पादकज्ञानरूपविवाहकर्तृत्वेन पञ्चमाब्दादर्वाक् तादृशज्ञानानुदयात् शूद्रस्याप्यपूर्णपञ्चमाब्दस्य न विवाहव्यवहारः । शास्त्रसम्मतविवादकालः प्रागवधारितः, वर्तमानपरिस्थित्यनुसारेण तत्र नियमान्तरकल्पनं नानुमन्यामहे । वस्तुतस्तु शास्त्रोक्तश्रुतशीलव्रते वराय प्रदत्तायां कन्यायां दोषलेशस्याप्यसम्भवात् राज्ञां सामाजिकानां च बलमवलम्ब्य शास्त्रयुक्त्यनुमोदिताष्टमादिवर्षीयकन्यादाननिवारणापेक्षया दस्यूनामिव स्वच्छन्दचारिणां "ऋतौ भार्यामुपेयात्" इत्यादिशास्त्रातिक्रामणां

लोकातिवर्तिनां च दुर्वृत्तानां कुमार्यामवैधाचरणनिवर्तने राजकीयादिबलावलम्बनमेव युक्ततरमिति मन्यते ।

(१०६) उ०—श्रीहरेन्द्रचन्द्रसिद्धान्तवागीशानाम् ।

सर्वत्र चिरन्तनसदाचारपरिरक्षणमेव योग्यम् ।

(१०७) उ०—श्रीदिवाकरमिश्रवेदान्तपञ्चाननानाम् ।

जन्मावधिमासद्वयाधिकषड्वर्षानन्तरं जन्मावध्येकादशवर्षपर्यन्तं स्त्रीणां विवाहकालो मुख्यः । त्रिगुणितकन्याविवाहकाल एव वरविवाहस्य मुख्यकालः शास्त्रानुगुणः, व्यवहारानुसारेण स्त्रीणां रजोदर्शनात्प्रागेव विवाहकालो गौणः । कन्यालाभ एव कन्याधिकवयसः कन्याधिकप्रमाणस्य च वरस्य विवाहकालो गौणः । रजःप्रवृत्त्यनन्तरं कन्याविवाहस्य आपत्कल्पत्वम् । अत्र गुणवत्पात्रालाभरूपा आपत् । वृषलीत्वबोधकानां वचनानां वोढुर्निन्द्यत्वे तात्पर्यम् ।

(१०८) उ०—श्रीगुरुचरणस्मृतिरत्नानाम् ।

सप्तसंवत्सरादूर्ध्वं द्वादशवर्षात्पूर्वं स्त्रीणां विवाहकालः । द्विजातीनां पुंसां ब्रह्मचर्यात्परं सप्ततिवर्षपर्यन्तं विवाहकालः, शूद्रादीनां षोडशवर्षात्परम् । सर्वदा विवाहकालस्य शास्त्रानुसारेणैव नियमनं योग्यम् । रजःप्रवृत्त्यनन्तरं विवाहस्य जघन्यत्वम् । वृषलीत्वबोधकवचनानां नग्निकावस्थायामवश्यदाने तात्पर्यम् ।

(१०६) उ०—श्री पं० रविनाथशर्मणाम् ।

रोमकाले तु सम्प्राप्ते सोमो भुञ्जीत कन्यकाम् ।
रजःकाले तु गन्धर्वा अग्निर्भुङ्क्ते कुचागमे ॥
तस्मादव्यञ्जनोपेतामरजामपयोधराम् ।
अभुक्तां चैव सोमाद्यैर्दद्याद्दुहितरं सदा ॥
गौरीं ददद्विष्णुलोकं ब्रह्मलोकं तु रोहिणीम् ।
कन्यां ददत् स्वर्गलोकं रौरवं च रजस्वलाम् ॥

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

इत्यादिभिरंगिरोवचनैःपञ्चमवर्षमारभ्य दशवर्षपर्यन्तं कन्याविवाहः प्रशस्त इति ज्ञायते । स्त्रीणां विवाहस्योपनयनस्थानीयत्वेन उपनयने पञ्चमाब्दादधिकारस्य सर्वसम्मतत्वात् । स्मृत्यन्तरे तु

जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् ।

कुमारीवरणं दानं मेखलाबन्धनं तथा ॥

इति स्पष्टमेवोक्तम् । वस्तुतस्तु—

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।

तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥

सोमोददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये ।

रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम् ।

इति श्रुत्या—

पूर्वं स्त्रियः स्युर्भुक्ताश्च:सोमगन्धर्ववह्निभिः ।

इत्यादिस्मृत्या च जन्मोत्तरं सार्धवर्षसप्तकं वर्षषट्कं वा यावत् सोमादिभिर्भुज्यमानतया नान्यभोग्या भवितुमर्हति । अतएव—

षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।

सोमो भुंक्ते ततस्तद्वत् गन्धर्वश्च तथाऽनलः ॥

इति ज्योतिर्निबन्धग्रन्थः संगच्छते । तर्हि अंगिरोवचनस्य का गतिरिति चेत्, प्रत्यक्षश्रुतिविरोधेऽप्रामाण्यमेव । रजोदर्शनात्पूर्वं विवाहः प्रशस्ततर इति वा तस्य तात्पर्यम् । द्वादशवर्षं यावत् वर्तमानपरिस्थित्यनुसारेण विवाहो योग्य इति वक्तुं साम्प्रतम् । तदयं निष्कर्षः, पञ्चमाब्दमारभ्य दशवर्षं यावत्, षष्ठवर्षमारभ्य वा दशाब्दं यावत्, सप्तमवर्षमारभ्य दशाब्दं वा, अष्टमवर्षमारभ्य दशवर्षपर्यन्तं वा, कन्यादानं मतभेदेन साम्प्रतम् । एकादशवर्षमारभ्य द्वादशवर्षपर्यन्तं यावत्कन्यादानं

मध्यमम् । त्रयोदशमारभ्य षोडशहायनं यावत् सर्वथा रजोयोग-सम्भवात् निन्द्यम् ।

वन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥
तस्याः पतिर्यो वृषलस्तदन्नमतिनिन्दितम् ।
वृषलान्नं प्रगृह्णन्ति वृषलास्ते प्रकीर्तिताः ॥

इत्यादिवचनाद् वृषलीपतेरन्नस्य निन्द्यत्वात् सर्वथा तस्या विवाहो निन्द्य इति तद्वचनम् ।

(११०) उ०—श्रीउमामहेश्वरशास्त्रिणाम् ।

स्त्रीविवाहकालविषये श्रुतिर्वीरमित्रोदये,
पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥

इति स्मृतिषु च गर्भाष्टमादिदशवर्षान्तकाले विवाहो विधीयते सार्ववर्णिकीनां स्त्रीणाम् । कुत्रचित्तु जन्मप्रभृति आसप्तमवर्षं, एकादशवर्षप्रभृति आरजोदर्शनं कालो विहितः, कुत्रचन रजोद-र्शनानन्तरमपि यावद्वर्षचतुष्टयं कालो विहितः कुत्रचन रजोद-र्शनानन्तरं प्रायश्चित्तं विधाय विवाह उक्तः । कुत्रचित्तु रजोदर्श-नानन्तरं परित्यागं विधाय विवाहाभाव उक्तः । एवं पञ्चधा विप्र-तिपत्तिः । तत्र एवं व्यवस्था, सार्ववर्णिकीनामेव कन्यानां गर्भा-ष्टमादिदशमपर्यन्तो मुख्यो विवाहकालः । जन्मप्रभृति सप्तमा-न्तः एकादशवर्षप्रभृतिरजोदर्शनपूर्वभावी च कालो गौणः सार्वव-र्णिकीनाम् । रजोदर्शनोत्तरं वर्षत्रयावधिकः प्रायश्चित्तपूर्वकः पित्रादिकर्तृकविवाहकालः चतुर्थवार्षिकस्वयम्वरकालश्च क्षत्रि-यादीनामापत्कल्पः, न तु ब्राह्मणीनाम् । दृष्टरजस्कानां ब्राह्मणीनां तु परित्यागो विवाहाभावश्च, न तु कयाचिदपि दिशा प्राय-श्चित्तादिपूर्वको विवाहः । यावद्दात्रभावप्रयुक्तस्वयम्बरोऽपि

राजानुमतिपूर्वको रजोदर्शनपूर्वभावी ब्राह्मणीनामापत्कल्पः प्रायश्चित्तपूर्वकः । अदृष्टरजस्कानां क्षत्रियादीनां तु प्रायश्चित्तरहितः स इति । समावर्तनकालोत्तरं पुंसां विवाहकालः । समावर्त्तनकालश्च शास्त्रतो ज्ञेयः । इदानीं च वेदाध्ययनस्य प्रायशो लुप्तत्वात् म्लेच्छभाषाशिक्षणस्यैव तत्स्थानापन्नतया ब्रह्मचर्यस्य तत्रानावश्यकतया उपनयनोत्तरमेव पुंसां विवाहकालो योग्यः । वर्तमानपरिस्थित्यनुसारेणापि शास्त्रीयकालपरिवर्तनं न युक्तम् ।

चण्डाली वर्धकी वेश्या रजःस्था या च कन्यका ।
ऊढा च या सगोत्रेण वृषल्यः पञ्च कीर्तिताः ॥

इत्यादिविज्ञानेश्वराद्युदाहृतस्मृतिवचनानुरोधेन चाण्डाल्यादिवद्वर्ज्यत्वबोधने एव वृषलीत्वबोधकवचनानां तात्पर्यम् । तथाहि, हेमाद्रौ प्रायश्चित्तकाण्डे "असंस्कृतकन्यारजोदर्शनप्रायश्चित्त" मिति प्रतीकमुपादायोक्तम् , "देवलः,

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तद्भर्ता वृषलीपतिः ॥

वृषलः शूद्रः । मार्कण्डेयः,

या कन्या पितृवेश्मस्था यदि पुष्पवती भवेत् ।
असंस्कृता परित्याज्या न पश्येत्तां कदाचन ॥
विवाहे च न योग्या स्यात् लोकद्वयविगर्हिता ।
एतां परिणयन्विप्रो न योग्यो हव्यकव्ययोः ॥
स तस्यां जनयेत्पुत्रं कानीन इति कथ्यते ।
माता पिता च पुत्रश्च त्रयस्ते वृषलाः स्मृताः ॥
यदा पुष्पवती कन्या तदैव त्यक्तमर्हति ।
न तत्र दोषस्तस्यास्ति गेहस्था चेत्स दोषभाक् ॥" इति ।

अत्र तस्यामुत्पन्नस्य कानीनत्वकथनेन पितृदायाद्यनधिकारित्वमपि सूच्यते, कानीनस्य अक्रमोढासुतत्वेन,

उभौ चानर्हतां भागं जारजातककामजौ ।

इत्यनेन जारजातत्वकामजत्वाभ्यां दायाभावस्य व्यवहार-काण्डे स्पष्टत्वात् ।

(१११) उ०—एम्० वी० शङ्करनारायणशास्त्रिणाम् ।

स्त्रीणां गर्भाष्टमाद्द्वादशं मुख्यः कालो विवाहस्य, ततः परं ऋतोः प्राग्गौणः कालः । पुंसां विवाहकालो विंशादापञ्चाशत् ,ततः परं न शास्त्रसम्मतः । गर्भपञ्चमोपनयने तु सप्तदशादारभ्यापि शास्त्रीयः । वर्तमानपरिस्थित्यनुसारेण शास्त्रानुसारेण च ऋतु-कालपर्यन्तं स्त्रीणां विवाहकालः कथंचिदभ्युपगन्तुं शक्यः । वृष-लीत्वबोधकवचनानां तात्पर्यं बृहस्पतिराविश्चकार । बृहस्पतिः,

पितुर्गेहे तु या नारी रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा नारी वृषली स्मृता ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥
यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
स भैक्षभुक् जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥
वृषलीगमनं चैव मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं मृतः श्वा चैव जायते ॥ इति ।

बौधायनः—

दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

(११२) उ०—मल्लादिदक्षिणामूर्तिशास्त्रिणाम् पुष्पगिरिशङ्कराचार्यमठ-प्रतिनिधीनाम् ।

स्त्रीणां द्विवर्षादारभ्य यावद्दशवर्षपर्यन्तं विवाहस्य मुख्यः कालः । पुंसां तु समावर्तनानन्तरं मुख्यः काल इति शास्त्र-व्यवस्था । वर्तमानपरिस्थितिः न शास्त्रविरुद्धा, अतः परिव-

र्तनस्य नैवावसरोऽस्ति। परिवर्तनस्यावश्यकर्तव्यत्वेऽपि दशवर्षा-भ्यन्तर एव विवाहः कार्य इति नियमः कर्तव्यः। एवमपि आधुनिकसंस्कारकाणामप्रियमेव सम्पत्स्यते। रजोनन्तरविवाहस्य आपत्कल्पत्वमेव। वृषलीत्वबोधकवचनानां कन्यापतिप्रभृतीनामसंव्यवहार्यत्वबोधकत्वम्।

(११३) उ०—श्री अमृत उर्फ बापू सदाशिव गणकशिरोमणिधर्मोपदेशकानाम्।

जन्मतो गर्भतो वा पञ्चमप्रभृति अष्टमवर्षपर्यन्तं कन्याविवाहे उचितः कालः। षड्वर्षोत्तरं वर्षद्वयं प्रशस्तः। नवमदशमयोर्मध्यमः। एकादशवर्षे अधमः द्वादशाब्दे प्रायश्चित्तार्हः पुंसस्तु षोडशवर्षादारभ्य योग्यः। वर्तमानपरिस्थित्यनुसारेण द्वादशवर्षात्प्रागेव कन्याविवाहः प्रशस्तः। रजोदर्शनानन्तरविवाहो गौण एव। परन्तु वधूवरयोः जातकमेलनं यदि रजोदर्शनात्प्राक् न भवति तदानीं तु मुख्य एव। वृषलीत्वबोधकवचनैः पत्युः स्त्रीत्वप्राप्तिः, स्त्रियाश्च पुरुषत्वप्राप्तिर्बोध्यते।

(११४) उ०—श्रीचिरुकुलपेद्दवेङ्कटरमणशास्त्रिणाम्।

अष्टमवर्षप्रभृति दशमवर्षपर्यन्तं स्त्रीणां विवाहकालो मुख्यः। एकादशद्वादशवर्षीयायास्तु ऋतोः प्राक् विवाहकालो गौणः। षोडशवर्षात्प्रभृति चत्वारिंशत्पर्यन्तं पुंसां विवाहकालो मुख्यः। एवं च परिस्थित्यनुसारेण स्त्रीणां अष्टमवर्षात्प्रभृति, पुंसां च षोडशवर्षात्प्रभृति विवाहनियमनं योग्यम्। रजस्वलाविवाहः शास्त्रदृष्ट्या ब्राह्मणानां न मुख्यः, न गौणः न वा आपत्कल्पः। ब्राह्मणकन्या रजस्वलात्वात्प्रागेव विवाह्या, न पश्चादित्येव वृषलीत्वबोधकवचनानां तात्पर्यम्।

(११५) उ०—बडोदास्थराजकीयपण्डितानाम्।

स्त्रीणां विवाहोऽष्टमवर्षादारभ्य रजोदर्शनात्प्राक्। पुंसां च

विंशतिवर्षादूर्ध्वं यौवनपर्यन्तं शास्त्रसम्मतः। नियमनस्यावधिरप्ययमेव। रजोनन्तरं विवाहस्यापत्कल्पत्वम्। वृषलीत्वबोधकवचनानां प्रायश्चित्तप्रसङ्गनिवारणे तात्पर्यम्।

(११६) उ०—कुम्भकोणस्थराजकीयसंस्कृतकलाशालापण्डितानाम्।
न किमपि लिखितम्।

(११७) उ०—सी० एल० वेङ्कटप्पशास्त्रिणाम्।

अनुरूपवरलाभकालः स्त्रीणां विवाहकाल इति शास्त्रसिद्धान्तः। पुंसामपि षोडशादूर्ध्वं अष्टाचत्वारिंशद्वर्षपर्यन्तमिति बहुधा प्रतिपादितेऽपि विद्याग्रहणात्परं विवाहकालः समुचित इति भाति।

वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम्।
विवाहा न कलौ धर्म्या न शिष्यगुरुसंस्थितिः।

इत्यादिवचनानुसारेण—

प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थं च मानवाः।

इतिमनुवचनानुसारेण च

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।
त्रिंशदब्दः षोडशाब्दां भार्यां विन्देत नग्निकाम्।
रोमकाले तु सम्प्राप्ते सोमो भुङ्क्ते च कन्यकाम्।
स्तनौ दृष्ट्वा तु गन्धर्वो रजो दृष्ट्वा हुताशनः॥
देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः।

इत्यादिवचनैः, 'सोमः प्रथमो विविदे' 'गृभ्णामि ते सुप्रजास्त्वाय' 'अपश्यं त्वा मनसा' 'आरोहोरु' इत्यादिमन्त्रलिङ्गबलात्, विवाहे समावेशनस्य प्रधानाङ्गत्वाच्च रजोदर्शनादूर्ध्वं स्त्रीणां विवाहकालस्य मुख्यकालत्वाभ्युपगमे न कापि क्षतिरिति प्रतिभाति। एवंरीत्या रजोनन्तरविवाहस्य मुख्यत्वमेव। उदितसूर्यार्घ्यनिन्दा अनुदितसूर्यार्घ्यश्लाघामेव करोतीतिन्यायानुसारेण वृषलीत्वबोधकवचनं रजोदर्शनात्पूर्वकालीनदानस्य श्लाघामेव करोति।

न चेदेवं, गार्गीमैत्रेयीप्रभृतिब्रह्मवादिनीनामपि वृषलीत्वप्राप्त्या महाननर्थः स्यात्। दानविवाहयोश्च अन्योन्यसम्बन्धो नास्त्येव।

(११८) उ०—श्रीनरहरि व्यङ्कटेश शास्त्रि अष्टाधिकारिणामअवैतनिकप्रचारकाणाम्।

ऋक्संहिताभाष्ये सायणाचार्यैः कामोत्पत्तेः पूर्वं सोमः, अल्पकामोत्पत्तौ गन्धर्वः, पूर्णकामोत्पत्तौ अग्निश्च भुङ्क्ते, अनन्तरं च मनुष्यः इति पारस्करगृह्यसूत्रे च प्रतिपादितत्वात् पूर्णकामोत्पत्तिकालात् द्वादशवर्षादूर्ध्वमेव कन्याया विवाहो योग्यः। तथा पारस्करगृह्यसूत्रे 'अजातलोम्नीं विपुंसीं च नोपहसेत् ( का०२क०१८सू०६ ) इत्यत्र हरिहरगदाधरौ—"समयेपि न जातानि लोमानि यस्याः सा अजातलोम्नी, कूर्चादिविकारेण पुरुषाकारां स्त्रियं नोपहसेत्, उपगमनशब्देन अभिगमनमुच्यते" इत्युक्तवन्तौ। तथा आश्वलायनगृह्यसूत्रेऽपि "त्रिरात्रमक्षारालवणाशिनौ स्यातामधः शयीयाताम् ( अ० १ खं० ८)' इत्यत्र "अक्षारालवणाशिनौ ब्रह्मचारिणौ अलङ्कुर्वाणौ अधः शायिनौ स्याताम्, अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रं सम्वत्सरं वा एक ऋषिर्जायते" इति तद्व्याख्यातृभिः सूत्रोक्तनियमपरिपालनानन्तरमेव पतिगोत्रप्राप्तिः कन्याया भवतीति स्पष्टमेव प्रतिपादितम्। अतः परिस्थित्यनुसारेण स्त्रीणां विवाहस्य द्वादशवर्षमारभ्य पञ्चदशवर्षपर्यन्तं मुख्यकालनियमनं योग्यं, तदितरकालेषु तु सर्वथाऽयोग्यम्। पुंसां च एकविंशतिवर्षादारभ्य त्रिंशद्वर्षपर्यन्तं विवाहनियमनं योग्यम्, तदुपरितनवयस्कैस्तु विवाहेच्छुभिर्विधवाविवाहः कार्यः। ऋतुदर्शनोत्तरं विवाहो मुख्य एव, "सम्वत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः" इतिपारस्करसूत्रोपरि जयरामहरिहराभ्यां "सम्वत्सरादिपक्षाशक्तौ त्रिरात्रपक्षाश्रयोऽपि, चतुर्थीकर्मानन्तरं

पञ्चम्यादिरात्रावभिगमनम्। चतुर्थीकर्मणः प्राक् तस्याः भार्यात्वमेव नोत्पन्नं, विवाहैकदेशत्वाच्चतुर्थीकर्मण" इत्युक्तत्वात्। एवं च पञ्चदशवर्षानन्तरं षोडशवर्ष एव कन्याविवाहस्य गौणः कालः। उभयकालातिक्रमे आपत्कल्पः। वृषलीत्वबोधकवचनानां तु उपनयनस्थानापन्नविवाहोत्तरं अवश्यकर्तव्यब्राह्मणोचितसन्ध्यावन्दनादिव्रतलोपनिमित्तप्रत्यवायबोधने तात्पर्यम्। प्रायश्चित्तेन च तादृशप्रत्यवायपरिहरणमगत्या करणीयम्।

(११९) उ०—श्रीमधुसूदनस्मृतिरत्नानाम्।

प्राचीनपक्षवदेव।

(१२०) उ०—श्रीदामोदरमिश्राणाम्।

पूर्ववदेव।

(१२१) उ०—श्रीकेशव बलवन्त जोशी महोदयानाम्।

पुंसां २१ तः ३० वर्षपर्यन्तम्। स्त्रीणां च १३ तः २० पर्यन्तं विवाहनियमनं योग्यम्, वैद्यकशास्त्रानुसारात्। ऋत्वनन्तरविवाहः आपद्धर्म एव, निन्द्यश्च। वृषलीत्वबोधकवचनानां ऋतुमत्या असंस्कृतायाः शङ्कितव्यभिचारत्वबोधने तात्पर्यम्।

(१२२) उ०—श्रीसीताराम विट्ठल टिकेकर महोदयानाम्।

प्राचीन पक्षः।

(१२३) उ०—श्रीधुण्डिराज पुरुषोत्तम विवलकर महोदयानाम्।

(१२४) उ०—श्रीमहाराज नाथूराम शर्मणाम्।

(१२५) उ०—श्री पं० जगदीश झा शर्मणाम्।

(१२६) उ०—रमेश्वरलताविद्यालयपण्डितानाम्।

प्राचीनपक्षः।

(१२७) उ०—श्रीजीवनदत्तशर्मब्रह्मचारिमहोदयानाम्।

ननु चिकित्साशास्त्रे अष्टाङ्गहृदये प्रथमाध्याये,

पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता।

शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥
वीर्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥

इत्युक्ततया पूर्वोक्तधर्मशास्त्राणां विरोध इति चेन्न । तस्य गर्भाधानपरत्वेन विवाहपरत्वाभावात् ।

(१२८) उ०—श्रीलक्ष्मण बलवन्त चितले शास्त्रि महोदयानाम् ।

प्राचीनपक्ष एव ।

(१२९) उ०—श्रीकेशव लक्ष्मण दफ्तरी महोदयानाम् ।

ऋतुमतीविवाहोपि योग्य एव । तत्र दोषस्तु दशाविशेषे वसिष्ठेनोक्तः,

यावन्ति कन्यामृतवः स्पृशन्ति,
तुल्यैः सकामामभियाच्यमानाम् ।
भ्रूणानि तावन्ति हतानि ताभ्यां
मातापितृभ्यामिति धर्मवादः ॥

तथा च कन्येच्छाधीनौ विवाहाविवाहाविति फलितम् । पुंसां तु शास्त्रोक्तविवाहकालः प्राशस्त्यार्थ एवेति सर्वमवदातम् ।

(१३०) उ०—श्रीरामचन्द्रशास्त्रिवेदान्तविशारदव्याकरणकाव्यशिरोमणीनाम् ।

ब्राह्मणस्य ऋतुमतीविवाहः सङ्गत एव ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

इति वचनं तु न हि कश्चिदभिवाञ्छेत्संवर्ध्य कन्यकां गुणहीनाय प्रदातुं शारिकामिव बिडालायेति हेतोः ऋतोःप्राक् विवाहस्य स्तावकमेव । अत एवाभिज्ञानशाकुन्तले शकुन्तलाया विवाहात् प्राक् रजस्वलात्ववर्णनमपि सङ्गतम् । तथा च ऋतोः प्राक्कालस्य मुख्यत्वेऽपि गुणवद्वरलाभानुरोधेन रजस्वलाविवाहोपि न्याय्य एव । वृषलीत्वबोधकवचनानां च—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

इत्यादिना तुल्ययोगक्षेमत्वमेव ।

(१३१) उ०—कुम्भकोणस्थ पण्डित श्रीसुन्दरशास्त्रिणाम् ।

(१३२) उ०—कुम्भकोणस्थश्रीशेषशाघ्ध्यय्यङ्गार्यमहोदयानाम् ।
न किमपि लिखितम् ।

(१३३) उ०—श्रीभागवतुलवेङ्कटरामावधानिनाम् ।

(१३४) उ०—श्रीहीरालालशास्त्रिणाम् ।
प्राचीनपक्षः ।

(१३५) उ०—श्रीकाञ्चीकामकोटिपीठेशजगद्गुरुशङ्कराचार्यमठास्थान-
पण्डित श्रीपञ्चापगेशशास्त्रिणाम् ।
अत्र विषये किमपि न लिखितम् ।

(१३६) उ०—विद्याविशारद के० रामशास्त्रिणाम् ।

(१३७) उ०—श्रीललितमोहनस्मृतितीर्थानाम् ।
प्राचीनपक्षः ।

(१३८) उ०—कुम्भकोणस्थ अग्निहोत्रिगोपालदेशिकाचार्याणाम् ।
न किमपि लिखितम् ।

(१३९) उ०—कुम्भकोणस्थाग्निहोत्रिदेशिकताताचार्याणाम् ।
प्राचीनपक्षः ।

(१४०) उ०—कुम्भकोणस्थ के० श्रीनिवासताताचार्याणाम् ।
न किमपि लिखितम् ।

(१४१) उ०—श्रीललितकुमारसाङ्ख्यवेदान्ततीर्थानाम् ।

(१४२) उ०—श्रीभगवतीलालशर्मविद्याभूषणानाम् । (जोधपुर, मारवाड)

(१४३) उ०—श्रीहरिरामशास्त्रिणाम् ।

(१४४) उ०—श्रीमोहनजी काशीरामजी शास्त्रिणाम् ।
प्राचीनपक्षः ।

(१४५) उ०—वाराणसीविद्यापरिषद्विदुषाम् ।

स्त्रीणां मध्ये ब्राह्मणीनां विवाहकालोऽष्टमवर्षात्मको मुख्यः प्रशस्ततमः, नवमवर्षात्मकः प्रशस्ततरः, दशमवर्षात्मकः प्रशस्तः । तदूर्ध्वं यावद्रजःप्रवृत्तिर्न स्यात् तावत् सामान्यकालः । सामान्यकालमध्ये एकादशादिवर्षात्मक उत्तरोत्तरस्मात् श्रेयान् पूर्वः पूर्वः, श्रेयःपात्रलाभेऽष्टमवर्षात् पूर्वमपि विवाहः सम्भवति । क्षत्रियादीनां स्त्रीणामष्टमनवमवर्षयोर्विवाहः फलविशेषार्थः, ऋतुकालात् पूर्वं सप्तमाद् वर्षादूर्ध्वञ्च स्त्रीणां विवाहः सार्ववर्णिकः । क्षत्रियस्त्रीणां गान्धर्वविवाहस्तु गुणवत्पात्रालाभप्रयुक्तऋतुकालानन्तरमपि भवति शास्त्रार्थाक्षिप्तः । द्विजातिस्त्रीणां विवाहस्योपनयनसंस्कारस्थानपातिताया मनुना कीर्त्तनात् । क्षत्रियस्त्रीणामेकादशवर्षात्मककालो वैश्यस्त्रीणाञ्च द्वादशवर्षात्मकः कालो मुख्य इति गम्यते । स च कालो गर्भादेव गणनीयः । "गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विश" इति मनुना तयोरुपनयनमुख्यकालकीर्त्तनात् । किन्तु तत्र रजःप्रवृत्तिसम्भावनायां तत्पूर्वमेव विवाहः । सम्भावना च शरीरावस्थादर्शनाद् भवति । द्विजातीनां पुंसां समावर्त्तनोत्तरम् अष्टचत्वारिंशाब्दवयःपर्यन्तं विवाहसामान्यकालः, त्रिंशद्वर्षपर्यन्तः कालस्तु श्रेयान्, तत्र तत्र पूर्वः पूर्वः प्रशस्तः । शूद्रस्य तु पुंसः षोड़शवर्षात्मकः कालो मुख्यः, तदुत्तरं क्रमादपकृष्टो यावच्छक्तिस्थितिमिति सामान्यकालः । अत्र च प्रमाणम्—"सप्तमाद्वत्सरादूर्ध्वं विवाहः सार्ववर्णिक" इति । अत्र च "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशमे कन्यका प्रोक्ता अत ऊर्ध्वं रजस्वला ॥ सम्प्राप्ते द्वादशे वर्षे यस्तु कन्यां न यच्छति । मासि मासि रजस्तस्याः पिता पिबति शोणितं" इति । ततः षोड़शवर्षीयां भार्य्यां विन्देत नग्निकाम्"इति, "वैवाहिको विधिः स्त्रीणां

संस्कारो वैदिकः स्मृतः" इति "ऋतुत्रयं प्रतीक्ष्यैव कन्या कुर्यात् स्वयम्वरम् ।" इत्यादीनि प्रमाणानि ।

सप्तमवर्षपर्यन्तं स्त्रीणां विवाहो न देय इति नियमनं कर्त्तुं शक्यते । पुंसां तु विवाहवयोनियमनं द्विजातिषु समावर्त्तननियमाधीनं, समावर्त्तननियमने विवाहवयोनियमने च "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विज" इत्यादिवचनस्य व्याघातः प्रसज्येत । समावर्तनसंस्कारस्तु षोडशवर्षादर्वाग् न व्यवस्थापयितव्यः । अतः षोडशवर्षप्रवृत्तेःपूर्वं विवाहो न विधेय इति नियमनं कर्त्तुं शक्यते । अवधिकालस्तु सपुत्रत्वापुत्रत्वशरीरपाटवादिभेदप्रयुक्त इति समाजविवेकाधीनः । इदञ्च नियमनं सामाजिकशक्त्यधीनं न तु राजशक्त्यधीनं कर्त्तव्यम् ।

रजःप्रवृत्त्यनन्तरं विवाहस्य मुख्यत्वं नास्ति, ब्राह्मणीनां तादृग्विवाहस्यापत्कल्पत्वं, क्षत्रियादिस्त्रीणां गौणत्वम् ।

ऋतुदर्शनात् पूर्वं पात्रालाभे ऋतुमत्या विवाहः सम्भवति, तस्याश्च विवाहः प्रायश्चित्तं विना न कार्यं इति प्रतिपादनाय वृषलीत्ववचनम् ।

(१४६) उ०—श्रीकाशीपण्डितसभायाः ।

"यावच्चैलं न गृह्णाति यावत्क्रीडति पांसुभिः ।
यावद्दोषं न गृह्णाति तावद्भवति नग्निका ॥"

इति नग्निकालक्षणस्यातिबाल्यावस्थामारभ्य, "नग्निकानागतार्तवा" इतिकोशानुसारेणर्तुकालपर्यन्तमवगमात् प्रयच्छेन्नग्निकां कन्यामृतुकालभयात् पिता"इत्यादिवचनेन मैथिलनिबन्धाशौचकौमुद्यादौ वङ्गीयस्मार्तभट्टाचार्यादिनिबन्धेषु च द्विवर्षमारभ्यापि विवाहे आशौचव्यवस्थाददर्शनेन चातिबाल्यावस्थामारभ्यापि विवाहो न शास्त्रविरुद्धः, "षडब्दमध्ये नोद्वाह्या"- इति निर्णयसिन्ध्वाद्युदाहृतं वचनम्,

जन्मतो गर्भाधानाद्वा पञ्चमाब्दात् परं शुभम् ।
कुमारीवरणं दानं मेखलाबन्धनं तथा ॥

इति वर्जनं तु ततः पूर्वतनस्य विवाहस्य मुख्यत्वनिषेधपरम्, न तु तन्निन्द्यत्वपरम् । तथा चाद्ययावदनुष्ठितानां बाल्यविवाहानां न शास्त्रविरुद्धत्वं, न वा तदुत्पन्नसन्तानानामधर्मप्रजात्वं चेति स्पष्टं प्रतीयते इति स्त्रीणां विषये ऋतुकालपर्यन्तं विवाहकालः । तत्राष्टमवयस आरभ्य फलास्नानात् ततो दशमवयःपर्यन्तं मुख्यकालत्वम् । ततः पूर्वमनन्तरं चर्तुकालपर्यन्तं गौणकालत्वम् : ततः परं तु वृषलीत्वादिकीर्तनात् निन्द्यत्वमापत्कल्पत्वं वा, तत्रापि वर्षत्रयमध्य एव विवाहेन धर्मप्रजोत्पत्तिः, तदन्दतरं तु वृषलीपतित्वादिना धर्मव्यवहारायोग्यत्वादिकमितिव्यवस्थाऽनुसन्धेया । यत्तु पुनर्विवाहिताया रजोदर्शने वृषलीत्वमुक्तम्, तदिदं क्षत्रियादीनां येषां वृषलीविवाहो निषिद्धः, तेषामपि रजोऽनन्तरविवाहायोग्यतापरम्, तथा च—

यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः ।

इति वचने ब्राह्मणपदं क्षत्रियादेरप्युपलक्षणम् । अत एव—

यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।

इति निन्दावाक्ये द्विजनिर्देश उपपद्यते, सर्वथा तु रजोनन्तरविवाहो द्विजविषय आपत्कल्प एव । केचित्तु क्षत्रियाणां गान्धर्वविवाहस्य स्वयंवरणस्य च संस्काररत्नमालायां दर्शनात् स्वयंवरणस्य च—

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्मात् विन्देत सदृशं पतिम् ॥

इति विधानात् वर्षचतुष्टयपर्यन्तं रजोऽनन्तरमपि स्वयंवरणं,

परं गौणमिति वदन्ति। सर्वथा दानपूर्वकविवाहो द्विजानां रजो-नन्तरमापत्कल्प एव।

पुंसां तु केशान्तश्चैवं षोडश इति समावर्तनस्य षोडशे वयस्यभ्यनुज्ञानात्; तदारभ्यापि विवाहो न दोषाय। परमावधिस्तु—

चत्वारिंशद्वत्सराणां साष्टानां च परे यदि।
स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः॥
अष्टचत्वारिंशदब्दं वयो यावन्न पूर्यते।
पुत्रभार्यावियुक्तस्य नास्ति यज्ञेऽधिकारिता॥

इति अष्टाचत्वारिंशद्वयसोऽनन्तरं यज्ञानधिकारबोधनाच्च;

अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः।

इतिवचनसिद्धधानाश्रमित्वदोषाप्रसक्तेश्च न विवाहावश्यकता।

पञ्चाशद्वत्सरादूर्ध्वं न कुर्यात् पाणिपीडनम्।

इति निषेधोऽप्यत्रानुसन्धेयः।

इदानीं तु स्त्रीणां कामोद्रेकादिना रजोदर्शनस्य द्वादशादिवयसि प्रायेण नियतं सम्भाव्यमानतया द्वादशवयसः पूर्वमवश्यं विवाहः कर्तव्यः, तथाऽष्टमवयसोऽनन्तरमेव विवाहः कर्तव्य इति नियमनं च परिस्थित्यनुगुणं योग्यमेव। अष्टमनवमदशमैकादशवयोमध्ये विवाहकालविशेषनियमनं तत्तत्पञ्चायतनसभाधीनं तत्तत्पितृभ्रात्रादनिर्णयाधीनं च न दोषाय। साधारणपरिस्थितिस्तु शास्त्रानुसारिणी अष्टमवयसः पूर्वं विवाहनिषेधनियमनमात्रे उपयुक्ता; यतो मुख्यकालप्रतीक्षणानन्तरं गौणकल्पानुसरणस्यैव मुख्यत्वम्, न तु तदप्रतीक्षणेनेति स्त्रीविषये व्यवस्था। पुंविषये तु व्यवस्था पूर्वमेवोपक्षिप्ता।

—⁂—

* श्रीविश्वनाथः शरणम् *

अखिलभारतवर्षीय—

# ब्राह्मणमहासम्मेलने

## समालोचनीयप्रश्नावलीनामुत्तराणि ।

——:*:——

(५) पञ्चमः प्रश्नः—ब्राह्मणादिजातिषु अवान्तरश्रेणीनां परस्परं विवाहसम्बन्धः शास्त्रसम्मतो न वा ?

(१) †उत्तरम्—अवान्तरश्रेणीनां परस्परविवाहसम्बन्धः शास्त्राविरुद्धः, विवाहादौ ब्राह्मणादिजातेरिवावान्तरश्रेणीनामनुल्लेखात् । परं तु चिरप्रचलिताचारविरुद्धत्वात् न तत्प्रवर्तनं योग्यम् ।

(२) उ०—भिन्नाचारवतां भिन्नशीलानां चावान्तरश्रेणीनां विवाहसम्बन्धो वर्णसङ्करवदनर्थायैव । विवाहे समानशीलत्वमप्येकं निमित्तम् । तथा च नावान्तरश्रेणीनां विवाहसम्बन्धं युक्तं पश्यामः ।

(३) उ०—शास्त्राविरुद्ध एवावान्तरश्रेणीनां परस्परं विवाहसम्बन्धः, तथाप्याचारादिविरोधात् न तत्प्रवर्तनं योग्यम् ।

(४) उ०—न किमपि लिखितम् ।

(५,६,७) उ०—देशकुलधर्माणां शास्त्राविरुद्धानां प्रमाणत्वात् देशकुलाद्याचारसंरक्षणान्यथानुपपत्त्या नावान्तरश्रेणीनां विवाहसम्बन्धो योग्यः, आचारसाङ्कर्यादिसंभवात् । एवं च द्वितीयमतेनैकवाक्यता । कुलपरीक्षार्थमपि तस्योपयोगः । सह्याद्रिखण्डादौ

† निबन्धकाराणां नामानि प्रथमप्रश्नोत्तरनिबन्धस्थसङ्ख्यानुसारेण ज्ञेयानि । विशेषस्थलेष्वेव निबन्धानां सङ्गृहीतत्वात्तदतिरिक्तांशलेखनं निबन्धकर्तृभिः क्षन्तव्यमिति प्रार्थयामः ।

अवान्तरश्रेणीनां विवाहसम्बन्धो निषिद्धोऽपि । स्मृतिसारस-मुच्चयेऽपि निषेधो वर्तते । प्रायश्चित्तानुष्ठानादि तत्रैव विवेचितम् ।

(८) उ०—देशभेदप्रयुक्तावान्तरश्रेणीनां विवाहसम्बन्धो न कार्य इत्यु-द्वाह्यकन्यालक्षणपरिशीलनेनावगम्यते । तथा च प्रथममतेनैक-वाक्यता ।

(९) उ०—न किमपि लिखितम् ।

(१०, ११, १२, १३, १४, १५, १६, १७, १८, १९) उ०—अनिषिद्धोऽप्य-वान्तरश्रेणीनां विवाहसम्बन्ध आचारविरोधादप्रमाणम् । प्रथम-मतेनैकवाक्यता ।

(२०) उ०—आचारभेदात्, अवान्तरश्रेणीनां देवलकादीनां कर्मविशेष-कृतत्वात्, कुण्डगोलकादीनामव्यवहार्याणां संस्थाभेदात्, संस्था-भेदेषु तद्रक्षणेन विवाहसम्बन्ध एव योग्यः, न तु तद्विघटनेन ।

(२१) उ०—स्पष्टं विरोधाभावेपि आचारविरोधान्नावान्तरश्रेणीनां विवाहो योग्यः ।

(२२) उ०—तुल्यदेशसमयाचारेष्वेव विवाहसम्बन्धो योग्यः ।

(२३) उ०—न किमप्यत्र लिखितम् ।

(२४) उ०—आचारानुसार्येवार्थो ग्रहीतव्यः ।

(२५) उ०—कुलपरीक्षणोपयोगितयाऽवान्तरश्रेणीरक्षणमत्यावश्यकं विवाहे,

शिखां पुण्ड्रं च सूत्रं च समयाचारमेव च ।
पूर्वैराचरितं कुर्यादन्यथा पतितो भवेत् ॥

इति वचनात् ।

(२६) उ०—

सामयाचारिका धर्मा जातिभेदकुलोद्भवाः ।
ग्रामाचाराः परिग्राह्या ये च विध्यविरोधिनः ॥

इति देवलवचनादिसिद्धतत्तदवान्तराचाराविरोधाच्चावान्तरश्रेणीरक्षण-मत्यावश्यकम् ।

(२७) उ०—

कन्यादानं पितुः श्राद्धं सोमपानं तथैव च ।
स्वबन्धुष्वेव कुर्वीत नान्यथा, पतितो भवेत् ॥
यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ।
नित्यं स व्यवहार्यः स्यात् वेदाच्चैतःप्रदर्श्यते ॥

इत्यादिनिर्णयसिन्धूद्धृतवचनैर्देशाचारादिरक्षणस्यावश्यकत्वात् विवाहे तत्तदवान्तरानादिसिद्धभेदपरिपालनमावश्यकम् ।

(२८) उ०—न किमपि लिखितम् ।

(२९) उ०—आचारभेदाद्देशभेदादिना न विवाहः सम्भवति तत्तदवान्तर-श्रेणीपरित्यागेन ।

(३०) उ०—यत्र कूटस्थेषु पातित्यादिकं, तां विहायावान्तरश्रेणीसम्बन्धो न दोषाय । हेमाद्रौ प्रायश्चित्ताध्यायेऽवान्तरश्रेणीषु विवाहा-करणस्याहंकारमूलकत्वप्रतिपादनात् ।

(३१) उ०—"यथा कन्या तथा हवि" रिति वचनेन परस्परमार्त्विज्यश्रा-द्धभोजनादिकं यत्रावान्तरश्रेण्यां, तत्रैव विवाहो योग्यो नान्यत्र, समानदेशीयानामपि भिन्नकुलाचारादीनां न विवाहसम्ब-न्धो योग्यः ।

(३२) उ०—शास्त्रतो यद्यपि न निषेधः स्पष्टः, तथाप्याचारविरोधाद-प्रामाणिकः ।

(३३) उ०—आचारव्यवहारादिभेदान्नावान्तरश्रेणीनां विवाहसम्बन्धः शास्त्रसम्मतः ।

(३४) उ०—आचाराभावान्न, भवति, शिष्टैर्व्यवस्थापनं तु यदि योग्यं मन्यते, तर्हि कर्तुं शक्यते ।

(३४) उ०—आचारादिभेदान्न विवाहसम्बन्धोऽवान्तरश्रेणीषु सम्भवति ।

(३६) उ०—न किमपि लिखितम् ।

(३७) उ०—त्रयस्त्रिंशप्रबन्धकाराणामेवेदं प्रबन्धान्तरम् ।

(३८) उ०—कुलशुद्धिज्ञानार्थमवान्तरश्रेणीनियमो विवाहेऽपेक्षित एव ।

(३९) उ०—गुर्जरत्वाद्यवान्तरजातिर्दत्तकादाविव कन्यादानेऽप्यपेक्षितेति धर्मसिन्धुतोऽवगम्यते, तत्तदवान्तरजातिष्वपि आचारादिभेदान्न विवाहसम्बन्धो युक्त इति ।

(४०) उ०—न किमपि लिखितम् ।

(४१) उ०—शास्त्रानिषिद्ध एव, परं तु आचारविरुद्धः ।

(४२) उ०—अवान्तरश्रेण्यवान्तरश्रेणीपरित्यागोऽपि संभवति ।

(४३) उ०—अवान्तरश्रेणीनियमो न शास्त्रसिद्धः ।

(४४) उ०—अवान्तरश्रेणीनियमपरित्यागो न दोषाय ।

(४५) उ०—कुलाचारविरोधादप्रामाण्यं स्पष्टं, शास्त्रनिषेधो नास्ति ।

(४६) उ०—तदेव ।

(४७) उ०—तदेव ।

(४८) उ०—ब्राह्मणादिषु अवान्तश्रेणीनां परस्परविवाहसम्बन्धाद्वर्ण-संकरो भवेत् ।

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥

इति गीतावचनात् ।

(४९) उ०—अवान्तरश्रेणीषु परस्परं विवाहोऽप्रशस्त एव, 'सदृशानाहरेद्दारान्' इत्यादिवचनात्, सदाचाराभावाच्च ।

(५०) उ०—ब्राह्मणादिष्ववान्तरश्रेणीनां विवाहसम्बन्धो न शास्त्रसम्मतः ।

(५१) उ०—अवान्तरश्रेणीषु विवाहो भवितुमर्हति ।

(५२) उ०—अवान्तरश्रेणीनां परस्परं विवाहसम्बन्धो न योग्य इत्यत्र वचनं नोपलभ्यते ।

(५३, ५४, ५५, ५६, ५७ ) उ०—
पूर्ववदेव ।

(५८) उ०—अवान्तरश्रेणीनां विवाहो न विरुद्धः, भोजनवत् ।

(५६) उ०—एवमेव ।

(६०) उ०—एवमेव ।

(६१) उ०—ब्राह्मणजातिषु अवान्तरश्रेणयो यथा, स्कन्दपुराणे—

सारस्वताः कान्यकुब्जा गौड़ा मैथिलकोत्कलाः ।
पञ्च गौडा इति ख्याता विंध्यस्योत्तरवासिनः ॥

तथा, वैदिकवारेन्द्राभ्यामपि भेदः, कायस्थे उत्तरराढीदक्षिणराढीवंगजवारेन्द्रकायस्थश्रेणयः । तथा च रामानन्दधृतकायस्थकुलदीपिकायां,

अथ वल्लालभूपश्च अम्बष्ठकुलनन्दनः ।
चकारातिप्रयत्नेन कुलशास्त्रनिरूपणम् ॥
आदिशूरानीतान्विप्रान् शूद्रांश्चैव तथाऽपरान् ।
एतेषां संततीः सर्वा आनयत्स निजालये ॥
यत्र यत्र स्थिता विप्रास्तत्र देशे निरूपिताः ।
श्रेणीद्वयं तु निर्णीतं राढीवारेन्द्रसंज्ञकम् ॥
तथैव द्विविधं प्रोक्तं कुलं च तद्द्विजोत्तम ।
शूद्रस्यातश्चतस्रश्च नृपेण श्रेणयः कृताः ॥
उदग्दक्षिणराढौ च वंगवारेन्द्रकौ तथा ।
इति चतस्रः संज्ञाः स्युस्तत्तद्देशनिवासिनाम् ।
कुलं चतुर्विधं तेषां श्रेणीश्रेणीविशेषतः ॥ इति ॥

एवं च सारस्वतादिपञ्चब्राह्मणानामेकवर्णत्वेन परस्परविवाहे प्राचीनाचाराभाव एव प्रतिबन्धकः ।

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।

इत्यादिवचनेन सवर्णविवाहस्यैवोपदेशात् । तथा कायस्थानामपि एवमेव ज्ञेयम् । असवर्णब्राह्मणानां तु परस्परान्नपानादिभक्षणाभावात् विवाहो निषिद्ध एव ।

(६२) उ०—पूर्ववदेव ।

(६३) उ०—श्रेणीतोऽवान्तराणां हि ब्राह्मणादिषु जातिषु ।

दोषायाल्पोपि संसर्गः कुतो वोद्वाहसम्मतिः ॥

(७५) उ०—अवान्तरश्रेणीनां परस्परविवाहे न कापि क्षतिः ।

(८०) उ०—कान्यकुब्जीयानां मैथिलानां वैदिकानां वारेन्द्रश्रेणीयानां च परस्परं विवाहो न शास्त्रतो निषिद्धः, किं तु चण्डालादिपुरोहितानां ब्राह्मणानां तदितरेषां च परस्परं विवाहादिसम्बन्धः शास्त्रनिषिद्ध एव ।

(६०) उ०—

ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवेत् ।

तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥

(१०१) उ०—अवान्तरश्रेणीषु विवाहो योग्यः ।

(१०७) उ०—अवान्तरश्रेणीनां परस्परं विवाहः आचारविरुद्धत्वात् त्याज्यः ।

(१०८) उ०—अवान्तरश्रेणीषु विवाहः न शास्त्रविरुद्धः ।

(१०६) उ०—

उत्कृष्टायाभिरूपाय वराय सदृशाय च ।

अप्राप्तामपि तां कन्यां तस्मै दद्याद्यथाविधि ॥

इति मनुवचनात्सदृशे कन्या देया । सादृश्यं च तयोर्न ब्राह्मणादिजातित्वेन, अपि त्वाचारवत्त्वेन, तस्य च तासां भक्ष्याभक्ष्येषु मातुलदुहितृपरिणयादिषु च परस्परं भेदात् न तासां पर-

स्परं विवाहः सम्भवति ।

(११०) उ०—येषामाचारभेदो मतभेदो वा नास्ति, तेषामवान्तरश्रेणीस्थानां परस्परं विवाहः न शास्त्रविरुद्धः, किं तु सदाचारविरुद्धः।

(१११) अवान्तरश्रेणीषु विवाहो न युक्तः, आचारविरोधात् ।

(११२) उ०—ब्राह्मणादिजातिषु अवान्तरश्रेणीनां विवाहः शास्त्रदृष्ट्या दुष्टः, तथाहि, विदितसूत्रगोत्रयोः एकशाखासम्बद्धयोः अनुस्यूतसम्बन्धयोरेव पाणिग्रहः शास्त्रसम्मतः। अस्ति च प्राचीनैः कथ्यमाना एतद्विषयसमर्थनपरा कथा काचित् । कश्चन शिष्टमूर्धन्यः एलेश्वरोपाध्यायः स्वकन्यायै समुचितं वरमन्वेषमाणः औत्तरेभ्यो देशेभ्य आगताय विदितविद्याय ब्राह्मणवेषधारिणे कस्मैचिच्चाण्डालाय अविदिततद्वृत्तान्तः तां दत्वा अनन्तरं तद्वृत्तान्तं ज्ञात्वा तां सह तेन चण्डालेन निष्कासितां कृत्वा कृतप्रायश्चित्तः तदाप्रभृत्येव शिष्टसम्मत्या आन्ध्रदेशवर्तिनां ब्राह्मणानां वेलनाडू तेलगाण्यं इत्यादिशाखाविभागमारचयामास। अद्यापि च शिष्टाः वेलनाडूसम्बन्धिनः तेलगाण्यंशिष्टानां कन्याः न परिणयन्ति, नापि वा तेलगाण्यंशिष्टा वेलनाडूशिष्टकन्या विवाहयन्ति । अपि च सम्प्रदायभेदाच्च नैवावान्तरश्रेणीनां पाणिपीडनं शास्त्रसम्मतम् । तथाहि । सन्दृश्यन्ते किल दाक्षिणात्यानामान्ध्रदेशीयानां च सम्प्रदायभेदा बहवस्तथैव अन्यास्वपि शाखासु । अतः अवान्तरश्रेणीनां विवाहः न शास्त्रसम्मतः ।

(११३) उ०—परम्परानुसारेण वेदशाखासूत्रकुलधर्मकुलाचारमन्त्राचारविचारैः सदृशश्रेणीकानामेव परस्परं विवाहो योग्यः, तदुक्तं पराशरयमाङ्गिरोभिः—

कुलमार्गेण चोद्वहेत्—इति ।

(११४) उ०—अवान्तरश्रेणीनां परस्परं विवाहो न शास्त्रसम्मतः, आचारविरुद्धत्वात् ।

(११५) उ०—आर्यावर्तवासिनो बहवो ब्राह्मणाः सम्मिलिताः सुखोपजीवनार्थं देशान्तराणि गत्वा तत्र समुदायीभूय सुखेन कालं नयन्ति स्म। तदानीं देशाद्देशान्तरगमने वाहनादिसौकर्याभावात् तत्तद्देशोचितवेषभाषाचारादीन् कल्पयित्वा न्यवसन्। कालपरिणामेन वंगाः, तैलंगाः, आन्ध्राः, द्राविडाः, कार्नाटाः, महाराष्ट्राः, कोङ्कणाः, माध्वा इति पृथक् पृथक् तत्तद्देशनाम्ना प्रसिद्धिं गताः। तस्माद्ब्राह्मणेषु अवान्तरजातिकल्पनमसंगतमेव। तेषां विवाहादिसम्बन्धकरणे को वा शास्त्रप्रतिषेध इति न ज्ञायते।

(११८) उ०—नारायणभट्टः,

स्वशाखी चेद्वरो न स्यात् कस्मै देया तु कन्यका।
स्वशाखोक्तविधानेन दद्यात्तां परशाखिने॥

इति धर्मप्रवृत्तौ उक्तवान्।

कुलं शीलं वपुर्विद्या वयो वित्तं सनाथता।
गुणाः सप्त वरे यस्मिंस्तस्मै कन्या प्रदीयते॥

इत्यादिवचनैः शास्त्रविरुद्धत्वावगमेऽपि परिस्थित्यनुसारेण अवान्तरश्रेणीषु परस्परं विवाहो योग्य एव।

(११९. १२०, १२१) उ०—परस्परं विवाहः शास्त्रविरुद्धो नास्ति॥

(१२२) उ०—अवान्तरश्रेणीषु विवाहो न योग्यः।

(१२३) उ०—मातुलकन्यापरिणेतृव्यतिरिक्तावान्तरश्रेणीषु परस्परं विवाहसम्बन्धो योग्यः।

(१२४) उ०—द्राविडानां द्राविडेषु गौडानां गौडेषु विवाहो योग्यः, सर्वत्र समानाचारेषु विवाहो योग्य इति तत्त्वम्।

(१२५,१२६,१२७,१२८) उ०—अवान्तरश्रेणीषु विवाहो न योग्यः।

(१२९) उ०—अवान्तरश्रेणीनामुल्लेखस्तु कस्यामपि स्मृतौ नास्त्येव। महार्णवग्रन्थे तु तत्र जातीनां केवलं निवासदेशा एव कथिताः, तावतां च किमपि न निश्चितं भवति।

(१३२) उ०—अवान्तरश्रेणीष्वपि परस्परं विवाहो योग्यः ।

(१३०) उ०—अवान्तरश्रेणीषु प्रमाणानि तावदुच्यन्ते । तथाहि । "शूद्राणामनिरवसितानामि"ति सूत्रे अवान्तरभेदं प्रकल्पयति पाणिनिस्तदनुगुणां लौकिकीं व्यवस्थां च । पतञ्जलिर्धर्मशास्त्रकाराश्चात्रानुकूलाः । मिताक्षरायां "गोपनापितकुम्भकारकुलमित्रार्धिकनिवेदितात्मानो भोज्यान्नाः"इत्युक्तम् । देवलका नाम अवान्तरो भेदः, तेषां परस्परं भेदाश्च सन्ति । तथा हि आगमप्रामाण्ये अत्रिः—"अवालुका देवलकाः, कल्पदेवलकाः, गणभोगदेवलकाः, भागवतवृत्तिरिति चतुर्थः, एते उपब्राह्मणाः" इति॥

(१३३) उ०—अवान्तरश्रेणीषु विवाहो न दोषाय ।

(१३६) उ०—अवान्तरश्रेणीषु विवाहो न शास्त्रसम्मतः,आचारविरोधात् ।

(१३७,१३८) उ०—अवान्तरश्रेणीषु विवाहसम्बन्धः शास्त्रीयः ।

(१४३) उ०—न शास्त्रीयः ।

(१४४) उ०—रूढ्या निषिद्धः ।

(१४५) उ०—अवान्तरश्रेणयो हि द्विरूपाः, शास्त्रमूलाः कल्पिताश्च । कल्पना च प्रायेण रागद्वेषमूला । रागद्वेषौ च क्वचित् शास्त्रानुकूलौ क्वचिदतद्रूपौ च । शास्त्रमूलाः श्रेणयो नागरब्राह्मणेषु दृश्यन्ते । तथा दाक्षिणात्योदीच्यानां विप्रत्तिपत्तिभेदस्य बौधायनोक्तस्य दर्शनादनुमीयते सारस्वतादिदशविधा ब्राह्मणश्रेणयश्च । एवं भेदमूलकविवाहाभावः शास्त्रीयभेदाख्यानादनुमितो नागरब्राह्मणविषये कण्ठतश्चोक्तः । कल्पिताश्च श्रेणयो या गौणमण्डले कान्यकुब्जमैथिलराढीयवारेन्द्रश्रेणयः, कायस्थादीनाञ्च काश्चिदवान्तरश्रेणयः, तासामन्योन्यं विवाहाभावः साक्षाच्छास्त्रतो न गम्यते, परमाचारतः प्रवर्तते । अस्याचारस्य मूलप्रतिज्ञानात् शास्त्रनिषिद्धाचरणप्रतिरोधाय परित्यागोपि भवितुमर्हति, यदि तत्र श्रेयोऽनुमन्येरन्निति ।

(११६) उ०—

"भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत् ।"

इति मनुवचनप्रसङ्गेन दत्तकदीधितिदत्तकतिलकदत्तकसिद्धान्तमञ्जर्यादौ, निर्णयसिन्ध्वादौ, विवाहसम्बन्धयोग्यजातिविशेषविचारप्रसङ्गेन, सह्याद्रिखण्डे च पञ्चद्राविडपञ्चगौडाद्यवान्तरविभागस्य व्यवस्थापनपूर्वकं पुत्रादिदानप्रतिग्रहयोग्यत्वं तत्तद्वान्तरश्रेणीनामेवेति व्यवस्थापनात्, स्कान्दे नागरखण्डे,

चतुर्वेदा अपि त्याज्या अन्यस्थानसमुद्भवाः ।
दैवे कर्मणि पित्र्ये च कन्यादाने विशेषतः ॥

इति स्थानभेदेन तत्तदवान्तरविभागमादायैव विवाहादिगुरुतरसम्बन्धव्यवस्थापनात्,

"अध्वर्यूद्गातृहोतॄणां सन्ति सूत्राण्यनेकशः ।
यत्रास्ते योनिसम्बन्धः सूत्रज्ञातिकुलोचितः ॥
विवाहे सोमश्राद्धे च अग्न्याधाने विशेषतः ।
एतैः स्वजातिभिः कुर्यादन्यथा पतितो भवेत् ॥"

इति बौधायनीयधर्मरहस्ये विवाहादौ सूत्रविशेषजातिविशेषकुलविशेषणामेव सम्बन्धो योग्यः, न तु ब्राह्मणत्वादिव्यापकजातिमादायेति निरूपणात्,

कन्यादाने तथा श्राद्धे कुलीनो ब्राह्मणस्सदा ।

इति कुलीनत्वस्य विशेषतोऽपेक्षितस्य परीक्षोपयोगितया कुलपञ्चिकादिरक्षणाद्यावश्यकत्वस्य कुमारिलपादादिभिरपि तन्त्रवार्तिकादौ विवेचनात्,

अन्येऽपि नागराः सन्ति वेदवेदाङ्गपारगाः ।
श्राद्धार्हा यज्ञयोग्याश्च कन्यायोग्या विशेषतः ॥
प्रधानत्वेन सर्वेषां नागरैश्चापि कृत्स्नशः ।
तेन ते गौरवं प्राप्ताः स्थानेऽत्रैव विशेषतः ॥

तस्माच्छ्राद्धं प्रकर्तव्यं विप्रैश्चाष्टकुलोद्भवैः ।
अप्राप्तौ चैव तेषां तु कार्यं नागरसम्भवैः ॥

इति गत्यन्तरासम्भव एव नागरेष्वेवावान्तरविभागान्तरेषु विवाह योग्यत्वोपपादनात्,

एवं ज्ञात्वा प्रयत्नेन श्राद्धे यज्ञे च पार्थिव ।
कन्यादाने विशेषेण योज्याश्चाष्टकुलोद्भवाः ॥

इति विशिष्य कन्यादाने तत्तदवान्तरकुलनियमावश्यकतायाः ज्ञापनात्, स्मृतिसारसमुच्चयेऽवान्तरविभागान्तरे विवाहकरणे दाक्षिणात्यानां गङ्गास्नानस्यान्येषां श्रीरामेश्वरयात्रायाश्च, अथ वा समाजदण्डस्य प्रायश्चित्तस्य व्यवस्थापनाच्च विवाहेऽवान्तरश्रेणीनियमो बहोः कालादनुवर्तमानोऽवश्यपरिपालनीयः । गत्यन्तराभावादतिव्याप्यावान्तरश्रेणीपरित्यागस्तु,

स्वशाखी चेद् वरो न स्यात् कस्मै देया तु कन्यका ।
स्वगृह्योक्तविधानेन दद्यात्तां परशाखिने ॥

इति वचनात् समाजानुमत्या नायोग्य इति तु वयं पश्यामः । सांप्रतं कथमपि वरालाभाद्यापत्तिनिर्णयस्तु, तत्तदवान्तरसमाजाधीन एव, न तु तत्तद्व्यक्त्यधीन इति तु नियमोऽवश्यभावीति मन्यामहे ।

---

प्रथमप्रश्नोत्तरनिबन्धकारनामावलीसङ्ख्यानुरोधेनैवात्रापि निबन्धकाराणां नामानि ज्ञेयानि ।

* श्रीविश्वनाथः शरणम् *

अखिलभारतवर्षीय—

# ब्राह्मणमहासम्मेलने

## समालोचनीयप्रश्नावलीनामुत्तराणि ।

---

( ६ ) षष्ठः प्रश्नः—धर्मज्ञाः के वा कीदृशं वा धर्मपरिवर्तनं कर्तुमर्हन्ति ? किं सङ्कोचनाख्यम् ? उत प्रवर्तनाख्यं धर्मपरिवर्तनम् ?

( १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९ ) उत्तरम्—धर्मज्ञानां स्वार्थनिरपेक्षाणां श्रुतिस्मृतिपुराणादिपूर्वापरसंदर्भविदां सङ्कोचनाख्यं धर्मपरिवर्तनमेव कर्तुमर्हतेत्यत्र सर्वेषामैकमत्यम् । तिरुपतिविद्यालयपण्डितास्तु प्रायश्चित्तविषये प्रवर्तनाख्यमपि परिवर्तनं शक्तिपर्यालोचनानुसारेण कर्तुं शक्नुवन्तीति वदन्ति । शेखावाटीश्रीसीतारामशास्त्रिणस्तु धर्मस्य वेदमूलत्वात् न कीदृगपि परिवर्तनं धर्मज्ञाः कर्तुमर्हन्तीति वदन्ति । तेनालीवेंकटरामशास्त्रिणस्तु स्मृत्यर्थनिर्णय एवाधिकारो धर्मज्ञानाम्, न तु संकोचने प्रवर्तने वाधिकार इति वदन्ति । मायूरशिवरामकृष्णशास्त्रिणो नेदानींतनानां धर्मज्ञानां संकोचेऽप्यधिकारः, मन्वादीनां त्वासीदिति वदन्ति । मदनमोहनवेदान्तशास्त्रिणोऽपि न परिवर्तनं धर्मस्य युक्तमिति वदन्ति अन्यैस्तूत्तरं न दत्तम् ।

(२०,२१) उ०—किमपि न लिखितम् ।

(२२) उ०—मन्वादीनामेव परिवर्तनाधिकारोऽतीन्द्रियज्ञानशक्तिमतां नास्मदादीनामिति मन्यते ।

(२३) उ०—न किमपि लिखितम् ।

(२४) उ०—श्रुतिस्मृत्याद्यविरुद्धे धर्मपरिवर्तने धर्मज्ञा अधिकारिणः ।

(२५,२६) उ०—पूर्ववदेव ।

(२७) उ०—धर्मज्ञानां संकोचन एवाधिकारः ।

(२८) उ०—धर्मज्ञानां न परिवर्तनलेशोऽप्यधिकारः, स तु मन्वादीनामेव; इदानीं तु तदर्थनिर्णय एवाधिकारः ।

(२९) उ०—धर्मानुष्ठातारो विज्ञाश्च धर्मज्ञाः संकोचे कालभेदेनावस्थाभेदेन च समर्थाः ।

(३०) उ०—इदमेव मन्यते ।

(३१) उ०—जीवानां धर्मज्ञानां न प्रवर्तनाख्यपरिवर्तनाधिकारः, किन्तु संकोचनाख्यधर्मपरिवर्तन एवाधिकारः ।

(३२) उ०—

त्र्यवरा परिषत् ज्ञेया धर्मसंशयनिर्णये एवाधिकारः ।

इति मनुवचनात् धर्मनिर्णय एवाधिकारः ।

(३३) उ०—न किमपि लिखितम् ।

(३४) उ०—कालशक्त्यनुसारिवेदशास्त्रार्थनिर्णय एव धर्मज्ञानामधिकारो न नूतनधर्मप्रवर्तने ।

(३५) उ०—संकोचन एवाधिकारः ।

(३६,३७) उ०—न किमपि लिखितम् ।

(३८) उ०—मन्वादीनामेव परिवर्तनाधिकारः, नाधुनातनानाम् ।

(३९,४०) उ०—न किमपि लिखितम् ।

(४१) उ०—अधीतवेदशास्त्रा धर्मज्ञा धर्मनिर्णय एवाधिकारिणो न तु धर्माधर्मव्यवस्थापनायाम्, तत्र मन्वादीनामेवाधिकारात् ।

(४२) उ०—संकोचन एवाधिकारः । तत्रापि नेदानींतनानामधिकारः ।

( ४३, ४४, ४५, ४६ ) उ०—प्रायश्चित्तादिसंकोचन एवाधिकारः ।

(४७) उ०—मन्वादयो मुनय एव धर्मज्ञाः, ते संकोचनं परिवर्तनं च कर्तुमर्हन्ति ।

(४६) उ०—इदानीन्तनानां धर्मपरिवर्तने धर्मसङ्कोचने च नाधिकारः।

न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः।

इत्यादिवचनात्।

(५०) उ०—ऋषिभिस्तत्तुल्यैर्वा विना धर्मपरिवर्तने कोपि न क्षमः।

(५१) उ०—देशकालपात्रानुसारेण कुत्रचित्सङ्कोचनं कुत्रचित्प्रवर्तनं च धर्मज्ञैः कर्तव्यम्।

(५२,५३) उ०—शक्तिहीनैरिदानीन्तनैः सङ्कोचनादिकं कर्तुमशक्यम्।

(५४) उ०—शास्त्रज्ञा यथावदाचरणशीला धर्मज्ञाः शास्त्रविरुद्धं प्रवर्त्तनाख्यं धर्मपरिवर्तनं कर्तुमर्हन्ति।

(५५) उ०—विष्णुस्मरणरूपं सङ्कोचनाख्यं धर्मपरिवर्तनं कर्तुमर्हन्ति।

(५६) उ०—धृतिक्षमादिमनूक्तधर्माचरणरताः वर्तमानपरिस्थित्यनुसारेण धर्मपरिवर्तनं कर्तुमर्हन्ति।

(५७,५८,५६,६०,६१,६२,६३) उ०—त्रिकालदर्शिन एव धर्मज्ञाः, ये च ऐहिकप्रतिष्ठार्थं कदर्थेन शास्त्रं व्याख्याय स्वधर्मं प्रचारयन्ति ते दण्ड्याः, न तु धर्मज्ञाः।

(६४) उ०—स्वस्वजातिमनतिक्रम्य धर्मपरिवर्तनं युक्तिसहम्।

(६६) उ०—नियमनिषेधविधिविहितधर्मेतरधर्मं वेदार्थाविरोधिना तर्केण वेदधर्मोपदेशानुसन्धायिनस्ते धर्मज्ञाः संकोचयितुमर्हन्ति।

(७७) उ०—मीमांसारीत्या धर्मपरिवर्तनं युक्तम्।

७६) उ०—श्रुतिस्मृत्युदीरितं धर्ममाचरन्तो येऽन्यानुपदिशन्ति ते खलु धर्मज्ञा मन्यन्ते। अत एव के वयं धर्मपरिवर्तनकर्तारः, तादृशज्ञानाभावात्।

(८०) उ०—संकोचनाख्यं धर्मपरिवर्तनं कर्तुमर्हन्ति।

(८३) उ०—वानप्रस्थादानरूपं प्रवर्तनाख्यं धर्मपरिवर्तनं कर्तुमर्हन्ति।

अपि च "चण्डालः श्वपचःक्षत्ता" इत्यादि, "रजकश्चर्मकारश्च" इत्यादिजातिभिन्नानां तन्तुवायसूत्रधारप्रभृतिजाति-

विशेषाणां वर्तमानपरिस्थित्यनुसारेण सच्छूद्रान्तर्गतत्वेन जात्युत्कर्षविषये न क्षतिर्भविष्यति । तत्स्पृष्टजलपाने शास्त्रतो विशेषदोषाश्रवणादिति ।

(१००) उ०– इदानीं यादृशधर्माचरणं भवति, तदालोचनेन प्रायश एव ब्राह्मणादीनां सन्ध्यादिवर्जनं दृष्टम्, किंम्बहुना आहारादावपि अन्यथाचरणं सर्वथा दृष्टम्, अतोस्य संकोचे महाननर्थः सम्भवति, अतः सन्ध्यावन्दनादिकं यथायोग्यं आहारादावपि संयमनं स्वीकर्तुमुचितम् ।

(१०१) उ०–इतिहासतत्वज्ञाः समाजहितनिर्धारणसमर्था धर्मज्ञाः सर्वविधमपि धर्मपरिवर्तनं कर्तुमर्हन्ति । तच्च परिवर्तनं न परिवर्तनं, किं तु सनातनधर्ममूलतत्वानुसारेण वर्तमानावस्थायां तस्य समाजोपकारितासम्पादनमेव ।

(१०७) उ०–धर्मस्य सनातनत्वेन संकोचनाख्यं प्रवर्तनाख्यं वा परिवर्तनं न सम्भवति ।

(१०८) उ०–मन्वादय एव धर्मज्ञाः ।

(१०९) उ०–चत्वारो वेदधर्मज्ञा इत्यादिवचनोक्ता परिषत् यत्किञ्चिदपि धर्मपरिपर्तनं कर्तुमर्हति. नान्यः ।

(११०) उ०–मन्वादय एव धर्मज्ञाः, यत्कृतव्यवस्थानुसरणमेवास्माभिः कर्तव्यं, न परिवर्तनादि ।

(१११)उ०–मन्वादय एव धर्मज्ञाः,अत एव“धर्मज्ञसमयः प्रमाण”मित्यापस्तम्बसूत्रे “धर्मज्ञा मन्वादय” इति व्याख्यातं हरदत्तेन ।

(११२) उ०—स्मृतिकारा मनुपराशरयाज्ञवल्क्यप्रभृतयः श्रीशङ्करप्रमुखा अवतारपुरुषाः धर्मज्ञाः तेषामपि संकोचनाख्य एव धर्मपरिवर्तनेऽधिकारः ।

(११३) उ०—शास्त्रानुसारिधर्मानुष्ठानशक्ताः धर्मज्ञाः, ते धर्मपरिवर्तनं कर्तुमर्हन्ति ।

(११५) उ०—त्रैविद्यवृद्धा धर्मज्ञाः। वेदधर्मशास्त्रानुसारेण सङ्कोचनं प्रवर्तनं वा ते कर्तुमर्हन्ति।

(११७) उ०—परिस्थितिपर्यालोचनेन तत्तत्कालोचितान् धर्मान् ज्ञात्वा प्रवर्तयन्ति ये त एव धर्मज्ञाः। मनुमरीच्यादयो हि धर्मज्ञाः तत्कालीनपरिस्थित्यनुसारेण वर्णाश्रमान्धर्मान् मुख्यत्वेन परिवर्त्य व्यवस्थापितवन्तः। तदुक्तं मुण्डकोपनिषदि, आगमशास्त्रे च,

"मन्त्रेषु कर्माणि कवयो यान्यपश्यन्।
तानि त्रेतायां बहुधा सन्ततानि" इति।

अस्मिन् कलियुगे एतत्कालोपयोगितया ये ये धर्मान् परिवर्तयन्ति त एव धर्मज्ञाः। एते संकोचेन विकोचेन वा प्रवर्तनेन वा निवर्तनेन वा सर्वथा धर्मान् परिवर्तयितुमर्हन्ति।

(१२१) उ०—पूज्यानां धर्मज्ञानां अहिन्दुहिन्दुकरणाख्यधर्मपरिवर्तनेऽधिकारः।

(१२२) उ०—प्राचीनपक्षः।

(१२२) उ०—जगद्गुरुपीठाधिपतयो धर्माधिकारिणश्च धर्मपरिवर्तनं कर्तुमर्हन्ति।

(१२४,१२५,१२६,१२७,१२८) उ०—प्राचीनपक्षः।

(१२६) उ०—ऐतिहासिका एव धर्मज्ञाः। इतिहासदृष्ट्या च धर्मपरिवर्तनं सर्वविधमेव योग्यम्। तथा चोक्तं महाभारते राजधर्मानुशासनपर्वणि,

युधिष्ठिर उवाच—इमे वै मानवाः सर्वे धर्मं प्रति विशंकिताः।
कोऽयं धर्मः कुतो धर्मस्तन्मे ब्रूहि पितामह॥
धर्मस्त्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत्।
उभयार्थोऽपि वा धर्मस्तन्मे ब्रूहि पितामह॥

भीष्म उवाच—लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः।
उभयत्र सुखोदर्क इह चैव परत्र च॥

इत्यादिवचनैः स्पष्टमेव धर्मस्य दृष्टार्थत्वमवगम्यते ।

(१३६,१३७,१४१) उ०—प्राचीनपक्षः ।

(१४२) उ०—पञ्चायतनसभाधिष्ठातारो धर्मज्ञाः तेषं कमपि समाजच्युतं समाजप्रविष्टं च कर्तुमर्हन्ति ।

(१४३,१४४) प्राचीनपक्षः ।

(१४५) उ०—साक्षात्कृतधर्माणो योगर्द्धिसम्पन्ना धर्मपरिवर्तनं कर्तुमर्हन्ति । अलूक्षा धर्म्मकामाः शास्त्रार्थतत्वज्ञा वैदेशिकशिक्षया विकृतमतित्वमप्राप्ताः स्वयमाचारवन्तश्च ब्राह्मणाः साधवस्ते सङ्कोचनाख्यं धर्म्मपरिवर्तनं कर्तुमर्हन्ति । सङ्कोचनमपि द्विविधं, निवर्तनरूपं प्रवर्तनरूपञ्च । तत्राद्यं यथा कलिवर्ज्यप्रकरणोक्तं, अन्त्यं यथा शूद्रादिनां क्वचिदुक्तदशाहाशौचादिप्रवर्त्तनरूपं मासाशौचसङ्कोचनम् । प्रवर्तनरूपं सङ्कोचनन्तु नेदानीन्तना अर्वाग्दृशः कर्तुमर्हन्ति ।

(११६) उ०—स्वार्थनिरपेक्षा धर्मकामा भगवदाम्नायादिपरतन्त्रा धर्मज्ञा मन्वादयो धर्मसंकोचने, परिषत्तु :पूर्वापरसंदर्भशक्त्यशक्त्यादिविवेचनेन व्यक्तिविशेषानुष्ठेयप्रायश्चित्तादिव्यवस्थायां चाधिकारिणः । सामान्येन कालविशेषादिपुरस्कारेण कलिवर्ज्यप्रकरणादिकमिव व्यवस्थापयितुं न पण्डितपरिषदपि मन्वादय इव प्रभवतीति तु निष्कर्षः ।

———:*:———

प्रथमादिचतुर्थान्तप्रश्नोत्तर-

# परिशिष्टम् ।

---

(१४८) उ०—अ० नारायणचार्य विदुषाम् ।

प्राचीनपक्षः । मनुः—

वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥

(१४९) उ०—को० रङ्गाचार्याणाम् ।

प्राचीनपक्षः ।

(१५०) उ०—श्रीचन्द्रनारायणभट्टाचार्याणाम् ।

कन्याशब्दो विवाहितास्वपि प्रयुज्यते ।
कन्यामपि पतिर्भार्यां रक्षेद्यत्नेन मानवः ॥

इति जावालिवचनात् । अतः कन्यादाने रजोदर्शनात्पूर्वं एव कालः ।

(१५१) उ०—वी० राम शास्त्रिणाम् ।

(१५२) उ०—रूपावतारं श्रीशेषशास्त्रिणाम् ।

(१५३) उ०—घंडिकोटसुब्रह्मण्यशास्त्रिणाम् ।

(१५४) उ०—कनुपर्ति मार्कण्डेयशर्मणाम् ।

(१५५) उ०—मल्लादि वेंकटविश्वनाथशर्मणाम् ।

(१५६) उ०—श्रीप्रमेशचन्द्रभट्टाचार्य काव्यतीर्थसांख्यविनोदस्मृतिवाचस्पतीनाम् ।

प्राचीनपक्षः ।

(१५७) उ०—श्रीलक्ष्मीकान्तदेवगोस्वामिविद्याविनोदानाम् ।

(१५८) उ०—श्रीरूपेश्वरस्मृतिरत्नानाम् ।

(१५९) उ०—श्रीउपेन्द्रचन्द्रतर्काचार्याणाम् ।

(१६०) उ०—प्रबन्धकाराणां नाम न लिखितम् ।

(१६१) उ०—श्रीमहेन्द्रनाथसांख्यस्मृतिरत्नानाम् ।

(१६२) उ०—श्रीयमुनाप्रसादशर्मणाम् ।

(१६३) उ०—श्रीलक्ष्मणप्रसादशर्मणाम् ।

(१६४) अखिलभारतवर्षीयमारवाडीब्राह्मणमहासभायाः ।

(१६५) उ०—पं० शिवानन्द ब्रह्मचारिणाम् ।

प्राचीनपक्षः ।

(१६६) उ०—पं० सदाशिवशास्त्रि मुसलगांवकर महोदयानाम् ।

ब्रह्मपुराणे गौतमीमाहात्म्ये,

भानुरुवाच—

चतुर्थाद्वत्सरादूर्ध्वं यावन्न दशमात्ययः ।
तावद्विवाहः कन्यायाः पित्रा कार्यः प्रयत्नतः ॥

इति वचनन्तु शूद्रादिपरम् ।

(१६७) उ०—शास्त्रतिलकश्रीयज्ञस्वामिशास्त्रिणाम् ।

अत्र विषये किमपि न लिखितम् ।

(१६८) उ०—श्री० खेन्धरत्रिपाठिनाम् ।

प्राचीनपक्षः ।

(१६९) उ०—श्रीश्यामसुन्दरझामहोदयानाम् ।

ब्रह्मपुराणे,

कृते विवाहे वर्षन्तु वस्तव्यं ब्रह्मचारिणा ।
यद्यष्टवर्षा कन्या स्यात् तथा तत्त्रिगुणः पुमान् ॥
अथ वा द्वादशाहानि त्रिंशद्वर्षेण सर्वदा ।

यदि द्वादशवर्षा स्यात् कन्या रूपगुणान्विता ॥
त्रिंशद्वर्षेण पूर्णेन यदि षोडशवार्षिकी ।
लब्धा तदा तु षड्रात्रं वस्तव्यं संयमेन तु ।
विंशत्यब्दा यदा कन्या वस्तव्यं तत्र वै त्र्यहम् ॥
अत उर्ध्वमहोरात्रं वस्तव्यमिति सम्मतम् ॥ इति ।

(१७०) उ०—श्रीचन्द्रशेखरब्रह्मसांख्यवेदान्ततीर्थसाहित्योपाध्यायानाम् ।

(१७१) उ०—गोस्वामिकुलकौस्तुभश्री १०८ गोकुलनाथशर्ममहारा
प्रतिनिधीनां देवर्षि पं० रमानाथशर्मणाम् ।

प्राचीनपक्षः ।

(१७२) उ०—आर्यसोमयाजिनाम् ।

नवीनपक्ष एव ।

(१७३) उ०—कूडूलिगीनिवासिनां विंकी रामण्णाशास्त्रिणाम् ।

(१७४) उ०—नन्यालग्रामवासिनां बी० रामशास्त्रिणाम् ।

(१६५) उ०—वादिमत्तेभकण्ठीरवसिंहाद्रयप्पमाचार्याणाम् ।

प्राचीनपक्षः ।

(१७६) उ०—विजयनगरनिवासिनां सरिपल्लीसन्नय्याशास्त्रिणाम् ।

परिस्थित्यनुसारिविचारः ।

(१७७) उ०—वेमूरि नृसिंहशास्त्रिणां शतावधानिनाम् ।

प्राचीनपक्षः ।

एतदतिरिक्ता अपि स्वतन्त्रविषयानधिकृत्य प्रेषिताः प्रबन्धा बहवो वर्तन्ते । समयाभावात्स्वतन्त्रविषयत्वाच्च तेषां संग्रहोऽत्र न कृतः ।

---

## पञ्चमप्रश्नोत्तरपरिशिष्टम् ।

(१५१,१५२,१५३) उ०—प्राचीनपक्षः ।

(१५४) उ०—अवान्तरश्रेणीषु आहारविहारभेदाभावे विवाहो न दोषाय।

(१५७) उ०—प्राचीनपक्षः ।

(१५९) उ०—अवान्तरश्रेणीषु परस्परं विवाहसम्बन्धो योग्यः ।

(१६०) उ—ब्राह्मणादिजातिषु स्वापेक्षया नीचश्रेणीजातकन्यायाः स्वेन सह विवाहः शास्त्रसिद्धः । यथाह मनुः "स्त्रीरत्नं दुष्कुलादपि" इति ।

(१६१,१६२) उ०—न कश्चिद्दोषः ।

(१६४) उ०—प्राचीनपक्षः ।

(१६५) उ०—न कश्चिद्दोषः ।

(१६६) उ०—"नमस्तक्षभ्यो रथकारेभ्यश्च वो नम" इत्यादिश्रुतौ बहूनां जातिभेदानां नाम वर्तते, तथा ब्राह्मणेष्वपि जातिभेदप्रतिपादिका याजुषी श्रुतिराधानविषयिणी लभ्यते । "भृगूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामीति भृग्वंगिरसामादध्यात् । आदित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानाम्" इत्यादिः । तथा विष्णुपुराणे तृतीयेंऽशे तृतीयाध्याये,

> वेदवृक्षस्य मैत्रेय शाखाभेदः सहस्रशः ।
> न शक्यो विस्ताराद्वक्तुं संक्षेपेण शृणुष्व तम् ।

इति । किं च विवाहे आचारस्य प्राधान्यं श्रुतावुक्तं "विवाहश्मशानयोर्ग्रामं प्रविशतात्" इति । वृद्धस्त्रियः पूर्वं पुरुषैरनुष्ठीयमानं सदाचारं स्मरन्ति, तस्मात् विवाहश्मशानयोः सदाचारबोधकं तासमपि वचनं प्रमाणत्वेन स्वीकर्तव्यमिति श्रुत्यर्थः। आचाराश्च तेषां विभिन्नाः । यथा तैलङ्गेषु मातुलसुतापरिणयः,

इतरेषु मातुलसुतापरिणये प्रायश्चित्तम्। वाजसनेयिषु मातुलगोत्रमपि विचिन्त्यते विवाहे। पंचद्राविडान्तर्गता एव गुर्जराः, परं तेषु स्त्रीणां मुक्तकच्छत्वम्। ततश्च सदातनसदाचारस्थितिरक्षणाय पूर्वजक्षुण्णोऽयं पन्थाः बलवदापदं विना न हेयः।

(१६८, १६९, १७०, १७१) उ०—प्राचीनपक्षः।

---

## षष्ठप्रश्नपरिशिष्टम्।

(१४८, १४९, १५२, १५३, १५४, १५५, १५८, १५९, १६०, १६१, १६२, १६३, १६४, १६५, १६६,) उ०—प्राचीनपक्षः।

(१६७)—प्राचीनपक्षानुकूलः प्रबन्धः।

(१६८, १६९, १७०, १७१,) उ०—प्राचीनपक्षः।

* श्रीविश्वनाथः शरणम् *

द्वितीयो भागः ।

अखिलभारतवर्षीय—

# ब्राह्मणमहासम्मेलने

## समालोचनीयप्रश्नावलीनामुत्तराणि ।

(७) सप्तमः प्रश्नः—विधवाविवाहो दम्पत्योर्विवाहमोक्षश्च शास्त्रदृष्ट्या-योग्यः, उताविरुद्ध आहो निन्द्यः ?

(१, २, ३, ४, ५, ६, ७, ८, ६, १०, ११, १२, १३, १४, १५, १६, १७, १८, १६, २०, २१, २२, २३, २४, २५, २६, २७, २८, २६, ३०, ३१ ३२, ३३, ३४, ३५, ३६, ३७, ३८, ३६, ४०, ४१, ४२, ४३, ४४)

उत्तरम्—द्विजविधवानां विवाहो नियोगो वा न केवलं शास्त्रा-सिद्धः, किन्तु निन्द्य इति सर्वेषामेतेषामग्रेतनानां च सम्मतम्।

(अग्रेतननिबन्धेषु विशेषांशः परं लिख्यते ।)

(४५)उ०—

न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते ।

इति मनुवचनात् विधवाविवाहस्त्रीपुंविवाहमोक्षयोर्निन्द्यता-वगम्यते।

(५१) उ०—

अज्ञातश्च द्विजो यस्तु विधवामुद्वहेद्यदि ।

परित्यज्यैव वै तां च प्रायश्चित्तं समाचरेत् ॥

इति लघ्वाश्वलायनस्मृतिः ।

(५५) उ०—

हीनवर्णोपभुक्ता या त्याज्या वध्यापि वा भवेत् ।

इति वृहस्पत्यादिवचनतर्यालोचनया दम्पत्योर्विवाहमोक्षः प्रतीयते।

कुक्कुरमुण्डासंस्थानाधिपति



हरिभक्तिपरायण श्रीसन्तोजी महाराज ।

(५८) उ०—वायवीयसंहिता;

मृते जीवति वा पत्यौ न सुतो देवरादितः ।
क्रान्तसप्तपदां कन्यां नोद्वहेच्च कलौ युगे ॥

यत्तु बृहस्पत्यादिवचनानि । बृहस्पतिः,

विवाहेच्छा यदा स्त्रीणां भर्तृनाशे प्रजायते ।
पुनरक्षतयोनीनां विवाहकरणं मतम् ॥

गौतमः,

मरणानन्तरं भर्तुः यद्यनाहतयोनयः ।
स्त्रियो विवाहमिच्छन्ति नात्र कार्या विचारणा ॥

वसिष्ठः,

पाणिग्राहे मृते बाला केवलं मन्त्रसंस्कृता ।
सा चेदक्षतयोनिः स्यात्पुनःसंस्कारमर्हति ॥

नारदः,

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

इत्यादीनि, तानि कलीतरयुगपराणि, स्मृतिप्रमाणस्य युगान्तरविषयत्वेन निर्विषयत्वाभावात् निरवकाशेन पौराणिकवचनेन बाधस्यावश्यकत्वात् , 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायात् । प्रकृते तु स्मृतिवचनमप्युपन्यस्तमेव । 'नष्टे मृते' इत्यादि पराशरवचनं तु वाग्दत्तविषयम् । अन्ये तु पराशरवचने व्यभिचारोपदेशं वर्णयन्ति । तथाहि । यासां जातीनां जीवत्यपि भर्तरि व्यभिचारिण्याः स्त्रियाः पापापनोदार्थः प्रायश्चित्तपरित्यागव्यवहारो न कुलधर्मः, केवलं स्वजातिकुटुम्बादीनां भोजनेन परितोषणमेव दोषक्षालनं, तदुद्देशेनैव 'पतिरन्यो विधीयते' इति । ब्राह्मणक्षत्रियवैश्यसच्छूद्राणां तु वैधव्यमाप्तानां स्त्रीणां वैधव्यपरिपालनमेव धर्मः ।

न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ।

इति वचनात् ।

(६०) उ०—विधवाविवाहे गोत्रोल्लेखः कथं भविष्यति ।

(६४) उ०—विधवाविवाहो युगमाहात्म्येन शास्त्रसम्मतः ।

(६८) उ०—

अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च ॥

इति मनुवचनात्,

एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ।

इति वचनाच्च पुरुषैरिव स्त्रियाऽपि पुत्रार्थं बहुपुत्रार्थं वा प्रयत्नः कार्यः । एवं च यासां विधवानां पुत्रार्थं बहुपुत्रार्थं वा अनुरागो वर्तते तासामेव विवाहः शास्त्रसम्मत इति प्रतीयते । एवं च कलिवर्ज्यप्रकरणं तदितरविधवापरम् । यत्तु,

एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्तितानि कार्य्याणि व्यवस्थापूर्वकं बुधैः ॥

इत्यादित्यपुराणवचनेन कलौ तन्निषेधश्रवणं, तत् यत्र यत्र विधवाविवाहे परमायुःक्षयहेतुभूतत्वादिना लोकक्षयसम्भावना वर्तते तत्परम्, न तु प्रजोत्पादननिमित्तीभूतपुनर्विवाहमात्रपरम्, अन्यथा "एतानि लोकगुप्त्यर्थं" मितिहेतुकथनानुपपत्तेः । अत एवाशौचनिर्णये, "तत्र सजातीयपरपूर्वाभार्याप्रसवमरणयोः संग्रहीतुस्त्रिरात्राशौचम्,

परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।
त्रिरात्रं स्यात् तथाऽऽचार्ये स्वभार्यास्वन्यगासु च ॥

इति कौर्मात् । अतएव महामहोपाध्यायरघुनन्दभट्टाचार्येण शुद्धितत्त्वे "वस्तुतस्तु प्रागुक्तादित्यपुराणात् कलौ क्षेत्र-

जपुत्रकरणनिषेधात्, स च पुत्रो वीजिनामेव. इदानीं व्यवहारोऽपि तथा" इत्युक्तम् । वृहस्पतिः,

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।

मृतेष्वाप्लुत्य शुद्ध्येत्तु त्रिरात्रेण द्विजोत्तमः ॥

इति शुद्धिचिन्तामणिः । शूलपाणिमहामहोपाध्यायेनापि,

दद्युस्ते बीजिने पिण्डं माता चेच्छुल्कतो हृता ।

इति, तदेतच्छुल्केन स्त्रीसंग्रहणे बोद्धव्यमिति लिखितम् ।

एवं च,

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।

पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

इति पराशरवचनेनाप्यानुकूल्यं प्रदर्श्यते । किं तु स विधवाविवाहोऽप्रशस्तः, तस्यां धर्मपत्नीत्वाभावात्, तस्यां जातपुत्रस्यौरसत्वाभावाच्च । किं च,

परपूर्वा यस्य गेहे भार्या स्यात्तत्र नित्यशः ।

आशौचं सर्वकार्येषु देहे भवति नित्यशः ।

दानं प्रतिग्रहः स्नानं सर्वं तस्य वृथा भवेत् ॥

इति ब्रह्मपुराणवचनेन निन्दा श्रूयते ।

(६६) उ०—शूद्रादिजात्यधमश्रेणीषु विधवादिस्त्रीणां पुरुषासक्ततया भ्रूणहत्यादिपापैर्जगत्परिप्लुतं जायते, ब्राह्मणादिजातिष्वपि एतद्भयादेव वर्तमानसमयानुसारेण तासां पुरुषान्तरग्रहणनियमपद्धत्या भागवतधर्माचरणजन्यभिन्नजात्यन्तराश्रयणेनानुग्रहः कार्यः, न तु स्वधर्मनिरतानां विधवानां एतादृशी व्यवस्था ।

(७२) उ०—

अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते ।

सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥

इति वचनात्, वृहन्नारदीये,

देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते,
इति वचनाच्च विधवाविवाहो न योग्यः।

(७४) उ०—पद्मपुराणे पृथिवीखण्डे दिव्यादेव्युपाख्यानेपि यथा,

विवाहो दृश्यते राजन् कन्यायास्तु विधानतः।
पतिर्मृत्युं प्रयात्यस्या नो चेत्सङ्गं करोति च॥
महाधिव्याधिना ग्रस्तस्त्यागं कृत्वा प्रयाति च।
प्रव्राजितो भवेद्राजन् धर्मशास्त्रेषु दृश्यते॥
अनुद्वाहितायाः कन्याया उद्वाहः क्रियते बुधैः।
न स्याद्रजस्वला यावदन्यः पतिर्विधीयते॥
विवाहं तु विधानेन पिता कुर्यान्न संशयः।
एवं राजन्समादिष्टं धर्मशास्त्रं बुधैर्जनैः॥

इति वचनैर्वाग्दत्ताया एव पत्यादिमरणे विवाहान्तरं गम्यते। "नष्टे मृते" इत्यादिवचनं नारदस्मृतौ राजनीतिप्रकरणे वर्तते, अतस्तस्य विधवायाः पुरुषान्तराश्रयणे राजदण्डाभावमात्रपरत्वम्। किं च पराशरसंहिताया द्वितीयाध्याय एव कलिधर्मा उच्यन्ते, न तु समग्रपुस्तकं कलिपरम्। अन्यथा,

अतः परं गृहस्थस्य धर्माचारं कलौ युगे।

इत्यादिद्वितीयाध्यायोक्तविशेषनिर्देशो व्यर्थः स्यात्। द्वितीयाध्यायात्परं क्षेत्रजपुत्राश्वमेधयज्ञादीनां युगान्तरधर्माणां विधानेन च तथा प्रतीयते। अतः "पतिरन्यो विधीयते" इत्यादिवचनं न कलिपरं, किन्तु युगान्तरपरम्। पुनर्विवाहिता विधवापुनर्भूपदवाच्या, तद्गर्भजातः पुत्रः पौनर्भवः, स च कलौ निषिद्धः, एतेनापि पराशरवचनं कलीतरपरमिति वक्तुमुचितम्। भार्गवीयकर्मविपाके च,

क्लीबं वा दूषितं वापि व्याधितं वृद्धमेव वा।
सुस्थितं दुःस्थितं वापि पतिमेकं न लङ्घयेत्॥

या भर्तारं परित्यज्य जारं चरति दुर्मतिः ।
उलूकी जायतेऽरण्ये वृक्षकोटरशायनी ॥
पुरा विप्रकुले जाता सर्वावयवसुन्दरी ।
विरूपं स्वामिनं सा तु दृष्ट्वा यौवनगर्विता ॥
दिवा निन्दति दुर्वाक्यैः शय्यां न लभते निशि ।
तेन दोषेण वैदेहि वैधव्यत्वमुपागता ॥

इत्यादिना स्पष्टमेव विधवाविवाहः पत्यादिमरणेऽपि निषिद्ध इत्यवगम्यते ।

(६७) उ —एतावुभावेव शास्त्रदृष्ट्या विरुद्धौ । तथाहि । "मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वा" इति विष्णुसूत्रेण विधवास्त्रीणां ब्रह्मचर्यरक्षणस्य उक्तत्वात् , तथा,

तैलाभ्यङ्गं न कुर्वीत न हि पश्यति दर्पणम् ।
मुखं च परपुंसां च यात्रानृत्यं महोत्सवम् ॥
नर्तकं गायनं चैव सुवेशं पुरुषं शुभम् ।

इति ब्रह्मवैवर्ते–( श्रीकृष्णजन्मखण्डे ८३ अध्याये) वचनेन परपुरुषमुखदर्शनस्यापि निषिद्धत्वाच्च विधवाविवाहः कैमुतिकन्यायेन दूरमपसारितः । एवं,

असद्वंशप्रसूता या दुःशीला धर्मवर्जिता ।
मुखदुष्टा योनिदुष्टा पतिं निन्दति कोपतः ॥
या स्त्री द्वेष्टि सर्वपरं पतिं विष्णुसमं गुरुम् ।
कुम्भीपाके पचति सा यावदिन्द्राश्चतुर्दश ॥
व्रतं चानशनं दानं सत्यं पुण्यं तपश्चिरम् ।
पतिभक्तिविहीनाया भस्मीभूतं निरर्थकम् ॥

इति ब्रह्मवैवर्ते ( श्रीकृष्णजन्मखण्डे ५७ अध्याये ) । तथा,

यस्य भार्या श्रितान्यत्र परवेश्माभिकाङ्क्षिणी ।
कुक्रिया त्यक्तलज्जा च सा जरा न जरा जरा ॥

इति गारुडेनीतिसारे ( १०८, १०९ अध्याये )। तथा,

कुत्सितं पतितं मूढं दरिद्रं रोगिणं जडम्।
कुलजा विष्णुतुल्यं च कान्तं पश्यति सन्ततम्॥

इति ब्रह्मवैवर्ते ( गणेशखण्डे ४० अध्याये )। इत्यादिभिर्वचनैः स्त्रीणामन्यसंसर्गेण योनिदूषणस्य पत्युर्निन्दनकोपनद्वेषणानां पत्यौ भक्तिहीनत्वस्य पत्युराश्रयत्यागेन अन्यगृहाभिलाषित्वस्य च निन्दार्थवादमूलकनिषेधविधिकल्पनया निषिद्धत्वेन, कुत्सित-पतितादेरपि पत्युर्विष्णुतुल्यत्वदर्शनाभिधानेन तत्परित्यागो निषिद्धः। प्रति प्रति कोपद्वेषादिकं विना विष्णुतुल्यदर्शने च तत्परित्यागोऽसम्भवीति ज्ञेयम्। एवं पुंसामपि।

अनपत्यां च युवतिं कुलजां च पतिव्रताम्।
त्यक्त्वा भवेद्यः संन्यासी ब्रह्मचारी यतीति वा॥
वाणिजो वा प्रवासी वा चिरं दूरं प्रयाति यः।
तीर्थं वा तपसे वापि मोक्षार्थं जन्म खण्डितुम्।
न मोक्षस्तस्य भवति धर्माच्च स्खलनं ध्रुवम्॥
अभिशापेन भार्याया नरकं च परत्र च॥

इति वैवर्ते—( श्रीकृष्णजन्मखण्डे ११२ अध्याये ) वचनेन संन्यासाद्यर्थमपि भार्यापरित्यागस्य निषिद्धत्वेन, तथा,

बहुदारः पुमान्यस्तु रागादेकां त्यजेत्स्त्रियम्।
स पापभाक् स्त्रीजितश्च तस्याशौचं सनातनम्॥

इति कालिकापुराणवचनेन ( २० अध्याये ) अन्यस्त्र्यनुरागाद्भार्यात्यागस्य निषिद्धत्वेन, तथा,

क्रोधाद्यदि त्यजेद्भार्यां वयःस्थां च गुणाधिकाम्।
ऋषिचान्द्रायणं कृत्वा पुनः संग्रहमादिशेत्॥

इति प्रायश्चित्ततत्त्वधृतमत्स्यतन्त्रवचनेन क्रोधादनापि भार्या-त्यागस्य निषिद्धत्वेन, तथा,

न त्यागोऽस्ति द्विषन्त्याश्च न च दारापवर्तनम् ।

इति मनुवचनेन (अध्याये ६) द्विषन्त्या अपि भार्यायास्त्यागस्य निषिद्धत्वेन, तथा

न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते । इति,

तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ ।
यथा नाभिचरेतां तौ वियुक्ताविततरेतरम् ॥

इत्यनेन विक्रयत्यागाभ्यामपि भार्यात्वमोक्षाभावस्य इतरेतरत्यागेन स्थित्यभावस्य चाभिहितत्वेन, तथा,

पितृपुत्रसुहृद्भ्रातृदम्पत्याचार्यशिष्यकाः ।
एषामपतितानां तु त्यागी च शतदण्डभाक् ॥

इति प्रायश्चित्ततत्त्वधृतयाज्ञवल्क्यवचनेन पातित्यं विना दाम्पत्यसम्बन्धत्यागे दण्डविधानेन च दम्पत्योर्विवाहमोक्षः शास्त्रदृष्ट्या विरुद्ध एव ।

(६८) उ०—"उदीर्ष्व नारी" इति मन्त्रस्य "तामुत्थापयेद्देवरः पतिस्थानीयः अन्तेवासी जरद्दासो वा उदीर्ष्व नार्यभिजीवलोक" मित्याश्वलायनकृतविनियोगदर्शनात्, मृतपतिकायाः सहमरणेच्छोः सति शिशुपुत्रादौ तत्प्रतिपालनार्थं पुनः प्रत्यानयन एव तात्पर्यं ज्ञायते । दिधिषोः गर्भस्य निधातुस्तवास्य पत्युः सम्बन्धादागतं जनित्वं जायात्वमभिलक्ष्य सम्बभूथ सम्भूतासि, अनुसरणनिश्चयमकार्षीरित्यर्थः । "पाणिग्राहे मृते बाला" इत्यादिवसिष्ठवचनमपि न विधवाविवाहपरं, अपि तु यदि काचित्कन्या केनापि बलाच्छलाद्वा नीत्वा पाणिग्रहणमन्त्रादिभिरभिमन्त्रिता भवति, वैधदानं तु न जायते, एवंदशायां तस्य पाणिग्राहकस्य मरणे तस्याः कन्याया विवाहविधायकम्, तथा चास्य व्याख्या:—बाला या कन्या केवलं मन्त्रसंस्कृता वैधदानादिकं विनैव कथंचित् पाणिग्रहणमन्त्रादिभिरभिमन्त्र्य गृहीता, तु-

किं तु, यदि अक्षतयोनिः अकृतमैथुना स्यात्, तदा तस्याः पाणिग्राहे उक्तरूपे पाणिग्राहके मृते सा चेत्पुनःसंस्कारं पुरुषान्तरेण परिणयमर्हतीति । अस्य वचनस्य एतादृश-समाधानं प्रति एतच्छ्लोकीयं "केवल" मिति पदं विधवाविवाह-निषेधकानि च वसिष्ठादिवचनान्यपि बहूनि साधकानि । तानि यथा,

> अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि ।
> न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥
> बलाच्चेदाहृता कन्या मन्त्रैर्यदि न संस्कृता ।
> अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥

या च क्लीवं पतितमुन्मत्तं वा भर्तारमुत्सृज्यान्यं पतिं विन्दते मृते वा सा पुनर्भूर्भवतीति ।

(१०१) उ०—विधवाविवाहः शास्त्रसम्मतः । ब्रह्मचर्यपरिपालनसमर्थानां तु विधवानां ब्रह्मचर्यपरिपालनं प्रशंसार्हमेव । ऋतुकालात्पूर्वं तु प्रमीतपतिकानां अक्षतयोनिविधवानां पुनर्विवाहसम्पादनमेव समाजस्य नैतिकदृष्ट्या उन्नतिसाधकं भवितुमर्हति, नान्यत् । ऋत्वनन्तरे प्रमीतभर्तृकाणामपि इच्छासत्वे पुनर्विवाहः कर्तव्य एव । सन्तानवतीनां पुनर्विवाहो निन्दनीयः । प्राचीनशास्त्रानुसारेण दाम्पत्यमोक्षोपि सङ्गत एव, । तथापि समाजदृष्ट्या तु स सर्वदा निन्दनीय एव ।

(१०४) उ०—"नष्टे मृते प्रव्रजित" इति वाक्ये अपतौ इति च्छेदः, अन्यथा पतौ इत्येव स्यात् ।

> प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते ।
> पूर्वं मृतं च भर्तारं पश्चात्साध्व्यनुगच्छति ॥

इति भारतीयशाकुन्तलोपाख्यानश्लोकेन च भार्यायाः प्रथममरणे पतिप्रतीक्षणं, पत्युः प्रथममरणे च तदनुगमनमभिहितं, न तु

पत्यन्तरग्रहणम् । ननु विधवाविवाहस्य एकान्ततोऽशास्त्रीयत्वे महर्षीणां परपूर्वाभार्यामरणाशौचाद्यभिधानं कथं सङ्गच्छते । तथाहि हारीतः,

परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।
मातामहे त्रिरात्रं स्यात् एकाहं त्वसपिण्डतः ॥

त्रिरात्रेण शुद्ध्येदित्यनुवृत्तौ विष्णुः,

परपूर्वासु भार्यासु प्रसूतासु मृतासु च ।

इति । ब्रह्मपुराणे,

आदावन्यस्य दत्तायां कुत्रचित्पूर्वयोर्द्वयोः ।
पितुर्यत्र त्रिरात्रं स्यादेकं तत्र सपिण्डनाम् ॥
एका माता द्वयोर्यत्र पितरौ द्वौ च कुत्रचित् ।
तयोः स्यात्सूतकादैक्यं मृतकात्तु परस्परम् ॥

इति शुद्धिचिन्तामणिः । चतुर्थीतः प्रागन्येन पुनर्भूकरणे प्रसवात्प्राक् पितृगोत्रम्, तदनन्तरं पूर्वपतिगोत्रम् ।

पदे तु सप्तमे या तु बलात्काचिद्धृता भवेत् ।
स्वामिगोत्रं भवेत्तस्यास्तच्च भूयो विशिष्यते ॥
पैतृकं त्वप्रसूतायास्ततः पौर्विकभर्तृकम् ।

इति हारीतवचनात्, इति श्राद्धचिन्तामणिः । सत्यम् । उक्तवचननिचयस्थभार्यापदं न विवाहितस्त्रीपरं, किं तु पुनर्भूकरणादिना संगृहीतस्त्रीपरम् । अत एवात्र त्रिरात्राशौचमभिहितम् । विवाहितस्त्रीणां हि प्रसवे मरणे वा सम्पूर्णाशौचमेव । पुनर्भूकरणं तु न विवाहः, किन्तु अवैधस्त्रीग्रहणम् ।

सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ॥
उदकस्पर्शिता या च या च पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूः प्रसवा च या ॥

इत्येताः कश्यपेनोक्ता दहन्ति कुलमग्निवत् ।

इति रघुनन्दनभट्टाचार्यधृतकाश्यपवचनेन,

अन्यदत्ता तु या कन्या पुनरन्यस्य दीयते ।
तस्याश्चान्नं न भोक्तव्यं पुनर्भूः सा प्रकीर्तिता ॥

इत्यङ्गिरोवचनेन च पुनर्भूकरणादीनां निन्दाश्रवणात् । ब्रह्मपुराणे,

अन्यपूर्वा गृहे यस्य भार्या स्यात्तस्य नित्यशः ।
अशौचं सर्वकार्येषु देहे भवति सर्वदा ॥
दानं प्रतिग्रहः स्नानं सर्वं तस्य वृथा भवेत् ।

अन्यपूर्वा आदावन्येन परिणीता उपभुक्ता वा सती या उपभुज्येत सा, इदं च यावज्जीवमशौचं परपूर्वाधारणजन्यं, तत्प्रसवमरणयोस्तु त्र्यहाशौचं सर्वसाधारणम् । न तु प्रतिग्रहपदवशाद्ब्राह्मणमात्रस्यैवेदम्, उपक्रमस्थ'यस्ये'तिपदस्वरसादित्यनेन अन्यपूर्वाग्रहणे यावज्जीवमशौचमभिहितम् । एवमुपसंहारे । अत्र च परपूर्वभार्याप्रवसरणयोर्द्विजोत्तमस्य यन्महाशौचमुक्तं, तत्तु प्रसवादिजन्याशौचव्यपगमपरं. तत्संग्रहजन्यं त्वाशौचं सर्वस्य यावज्जीवमेवेत्युक्तं शुद्धिचिन्तामणौ । शूलपाणिरपि स्त्रीणां संग्रहे भोजने चान्द्रायणं प्रायश्चित्तमाह । तथाहि, आपस्तम्बः,

याजकान्नं नवश्राद्धं संग्रहे चैव भोजनम् ।
नारीणां प्रथमे गर्भे भुक्त्वा चान्द्रायणं चरेत् ॥°

संग्रहे स्त्रीणामेव इति प्रायश्चित्तविवेकः । संग्रहरीतिस्तु इदानीमपि कुत्रचिद्देशे अन्त्यजादीनामस्ति ।

(१०५) उ०—"नष्टे मृते प्रव्रजित" इत्यादेर्वाग्दानानन्तरपरत्वम् । न च स्वर्गकामा ब्रह्मचर्यं कुर्यात्, तदन्या पत्यन्तरं गृह्णीयात् इत्यधिकारविधिभेदान्न विरोध इति वाच्यम् । तथाविधिकल्पनासम्भवात् । तथाहि, वैदिकलिङ्त्वावच्छेदेनापूर्वे शक्तिकल्पनेति

मीमांसकसिद्धान्तात् तदन्या पत्यन्तरं गृह्णीयादित्यस्य स्वर्गकामेतरमृतपतिकायाः पत्यन्तरग्रहणजन्यमपूर्वमिति शाब्दबोधे तदपूर्वस्य च स्वर्गफलकत्वासम्भवेन परिशेषात् नरकफलकत्वापत्तिः स्यात्। अत्रापि इष्टापत्तौ न विवादः। न च शुष्यत्सस्यसञ्जीवनाय वृष्टिकामिना कारीर्यादियागः क्रियते, तज्जन्यमपूर्वं वृष्टिरूपदृष्टफलमेव जनयति, तथा अत्रापि पत्यन्तरग्रहणजन्यमपूर्वं ग्रासाच्छादनादिरूपदृष्टफलमेव जनयत्विति वाच्यम्। तस्य शास्त्रं विनाप्युपपन्नतया तत्र शास्त्रापेक्षाभावादिति।

(१०७) उ०—विधवाविवाहः कलौ वर्ज्यः। दम्पत्योर्विवाहमोक्षः शास्त्रनिषिद्धः।

अतिक्रामेत् प्रमत्तं या मत्तं रोगार्त्तमेव वा।
सा त्रीन् मासान् परित्याज्या विभूषणपरिच्छदा॥
उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम्।
न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्तनम्॥

इति मनुवचनात्।

दारिद्रं व्याधितं क्लीवं भर्तारं या न मन्यते।
सा मृता जायते व्याली वैधव्यं च पुनः पुनः॥
अदुष्टां पतितां भार्यां यौवने यः परित्यजेत्।
सप्त जन्म भवेत्स्त्रीत्वं वैधव्यं च पुनः पुनः॥

इति पराशरवचनाच्च।

(१०८, १०६, ११०, १११, ११२) उ०—विधवाविवाहो दम्पत्योर्विवाहमोक्षश्च शास्त्रविरुद्धः।

११३) उ०—विधवाविवाहः ज्यौतिषशास्त्रदृष्ट्या एतैः खण्डितः।

(११४) उ०—त्रैवर्णिकानां विधवाविवाहः शास्त्रनिषिद्धो विवाहमोक्षोपि तथैव।

(११७) उ०—

नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

इति मनुवचनेन विधवाविवाहः शास्त्रीयतया योग्य एव । कलेरादौ अनुगमनविध्यनुष्ठानप्राचुर्येण तत्कालोचितमालोच्य कैश्चिन्निवर्तितेऽपि विधवाविवाहे इदानीमनुगमनविधिनिवर्तनेन एतत्कालोचिततया इदानीन्तनैर्विधवाविवाहप्रवर्तनं कर्तव्यमेवेत्यत्र न कोपि विशयलेशः । अपि च वसिष्ठनारदबौधायनादिभिरनुज्ञायते ।

अन्यच्च—ईर्ष्यादम्भादयो येऽन्ये चत्वारः समुदाहृताः ।
त्यक्तव्यास्ते पतितवत् क्षतयोन्योपि हि स्त्रियः ॥
आक्षिप्तमोघवीजाभ्यां कृतेऽपि पतिकर्मणि ।
पत्युरन्यश्रिता नारी वत्सरार्धं परीक्ष्य तु ॥
विवादशीली स्वयमर्थचोरिणी
परानुकूला परपुरुषभाषिणी ।
अग्राशिनी अन्यगृहप्रवेशिनी
भार्यान्त्यजेत्पुत्रदशप्रसूतिकाम् ॥

इत्यादिवचनैः सति प्रतिवन्धके दम्पत्योरन्योन्यविवाहमोक्षः शास्त्रीय एव ।

(११८) उ०—"कुमार्याः पाणिं गृहीयात् " इतिपारस्करसूत्रोपरि कर्कादयो वदन्ति, "कुमारीग्रहणं विंशतिप्रसूताव्युदासार्थ" मिति ।

बृहस्पतिः—विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु ।
एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ॥

च्यवनः—चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः ।
भर्त्रा संयुज्यते पत्नी तद्गोत्रा तेन सा भवेत् ॥

शातातपः—पूर्वं निषेकान्नारीणां मृते पत्यौ विधेर्वशात् ।
दशाहाभ्यन्तरे कुर्यात्पुनः परिणयं पिता ॥

मनुः—पाणिग्राहे मृते बाला केवलं मन्त्रसंस्कृता ।
सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति ॥
पराशरः—यत्पापं ब्रह्महत्यायां द्विगुणं गर्भपातने ।

इत्यादिवचनैः स्पष्टमेव चातुर्वर्ण्ये विधवाविवाहः कर्तव्यतया प्रतीयते । एतदनुसारेणैव 'अकोला ब्राह्मण परिषदि' अस्माभिरेव विधवाविवाहप्रस्तावः उपस्थाप्य स्वीकारितः । तत्र च विरोधकारणानि इत्यान्येव सम्भवन्ति ।

१ शूद्रादिष्विव प्राणघातिनी अव्यवस्था ।

२ स्वकीयपूज्यत्वहानिप्रसङ्गः ।

३ शूद्रैःसाम्यप्रसङ्गश्च । इत्यादीनि ।

तेषु प्रथमकारणस्य कथंचिद्योग्यत्वेऽपि द्वितीयतृतीयकारणे सर्वथा अयोग्ये एव इति स्पष्टमेव । पूज्यत्वहानिप्रसङ्गस्य विधवाविवाहामूलकत्वात् । प्रत्युत 'स्मर्यते' हि विंशतिप्रसूतिकायाः पुनर्विवाह इति स्पष्टमुल्लेखसत्वेऽपि तदकरणेन भ्रूणहत्यागर्भहत्याबालहत्यास्त्रीहत्यादिपातकप्रवर्तनमेव भवतामपूज्यत्वे कारणमिति मन्यामहे । "अष्टपुत्रा सौभाग्यवती भव" इत्याशीर्वादस्य सत्यताकरणार्थमपि विधवाविवाह आवश्यक एव । किं च गुर्जरदेशे धेनुजामोंढब्राह्मणेषु पल्लेवालब्राह्मणेषु विधवाविवाहो भवतीत्येतदपि आलोचनीयम् । पेशवाराज्ये न्यायाधीशैः प्रभुणेरामशास्त्रिभिरपि इतिहासे विधवाविवाहसमर्थनं कृतमासीदित्यपि विचारणीयम् ।

(११९, १२०) उ०—प्राचीनपक्षः ।

अर्यमणं नु देवं कन्या अग्निमयक्षत ।
स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वहा ॥

इति मन्त्रः । अत्र जयरामभाष्यम्—कन्या पूर्वं प्रथममर्यमणं सूर्यं देवं कान्तमग्निस्वरूपं वरलाभायायक्षत अयजत् लङ-

श्छान्दसं रूपम् । स चार्यमा देवस्ताभिरिष्टो यतो नोऽस्मा-
निदानीं परिणीताः कन्या इतः पितृकुलत्वात्प्रमुञ्चतु प्रमोचयतु ।
यद्वा वरो ब्रूते कन्येयमग्निरूपेणार्यमणमयजत्, सोऽयमर्मा देवः
पतेः पत्युः मत्तः सकाशादिमां नो प्रमुञ्चतु मा प्रमोचयतु ।
इतः अस्याः कन्यायाः सकाशात् मा मां न प्रमुञ्चतु इतीति ।
इयं कन्याऽर्यमणं सूर्यमयक्षत पूजयते किम्भूतमग्निमग्निरूपम् ।
किमर्थम् । अर्यमा देव इतः पतेः सकाशान्मा मां नो प्रमुञ्चतु
न प्रमोचयतु इत्येतदर्थम् । इयं कन्या पत्या सहावियोगसिद्ध्य-
र्थमर्यमणं यजत इति वाक्यार्थ इति हलायुधः ।

> गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।
> भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥

हे कन्ये ! ते तव साङ्गुष्ठं हस्तं करं गृभ्णामि गृण्हामि । हृग्रहोर्भश्छ-
न्दसीति भत्वम् । यथा येन गृहीतेन मया पत्या सह जरदष्टिर्जर-
च्छरीराऽऽयुष्मती, आसः भवसीत्यर्थे निपात इति जयरामभा-
ष्यम् । ते तव हस्तं गृभ्णामि किमर्थं सौभगत्वाय सौभाग्याय
यथा मया पत्या जरदष्टिरासः वृद्धा भवसीत्यर्थ इति हलायु-
धभाष्यम् । अनयोर्हि यावज्जीवमवियोगः प्रार्थ्यते । पत्यन्त-
रेण संस्कारार्हत्वे पत्नीकर्तृका वियोगप्रार्थनाऽसङ्गता । पत्य-
वियोगो हि कामार्थसाधनम् । तत्त्वं च पत्यन्तरसम्बन्धेऽपि
सम्भवति । किं च "अर्यमणं नु देवम्" इत्यादिमन्त्रस्य न पुनः
संस्कारकरणता । तस्याः कन्यात्वाभावान्मन्त्रस्य च कन्याशब्द-
घटितत्वात् । अत एव मनुनाप्युक्तम्—

> पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
> नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः ॥ इति ।

(१२१) उ०—परिस्थित्यनुरोधेन विधवाविवाहो योग्य एव । योग्यकारण-
सत्त्वे दम्पत्योर्विवाहमोक्षोऽपि पञ्चायतनसभाद्वारा कर्तव्य एव ।

(१२२) उ०—परिस्थित्यनुसारेण विधवाविवाहो योग्यः, अथवा विधवानां विषयवासनैव यथा नोत्पद्येत तादृशमौषधं किमपि व्यवस्थापनीयम् ।

(१२३, १२४, १२५, १२६, १२७, ११८) उ०—प्राचीनपक्षः ।

(१२९) उ०—अक्षतयोनिविधवाविवाहः शास्त्रसम्मत एव । कलिवर्ज्यप्रकरणं तु कैश्चित्कल्पितत्वादप्रमाणमेव, प्राचीननिबन्धेष्वनुपलम्भात् ।

(१३०) उ०—शास्त्रे नियोगनिषेधोपलम्भेऽपि पुनर्विवाहनिषेधो न दृश्यते कथञ्चित्पुनरुद्वाहनिषेधकवचनोपलम्भेऽपि तेषामौदुम्बरी सर्वा वेष्टनीयेति स्मृतिवच्छ्रुतिविरोधादुपेक्ष्यत्वमेव । श्रुतयश्च—

उदीर्ष्व नार्यभिजीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभिसंबभूव ॥
..........................................................
कुहस्विद्दोषा
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥
या पूर्वं पतिं वित्वाऽथान्यं विदन्ते परम् ।
समानलोको भवति पुनर्भुवा परः पतिः ॥

इत्याद्याः । स्मृतयश्च प्रसिद्धा एव "नष्टे मृते" इत्याद्याः । पताविति रूपस्याशुद्धत्वात्पतिरिवाचरतीति पतिरिति व्युत्पत्तिमाश्रित्य वाग्दत्तापरत्वं "नष्टे मृत" इति वचनस्य केचिद्वर्णयन्ति । तन्न युक्तम् । बहुषु स्मृतिषु व्याकरणविरुद्धप्रयोगदर्शनात् ।

(१३१, १३४) उ०—प्राचीनपक्षः ।

(१३५) उ०—न योग्यः । तथाहि, तैत्तिरीयश्रुतिः—

यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते

( १३६, १३७, १४१, १४२, १४३, १४४ ) उ०—प्राचीनपक्षः ।

(१३८) उ०—विधवाविवाहशब्दो विकल्पवृत्तिकः, "न विवाहविधावुक्तं विधवावेदनं पुनः" इति मनूक्त्या विवाहविषये विधवाया

अनधिकारात्। यत्तु पराशरस्य पत्यन्तरविधानं विधवायाः, तदपि वाग्दानमात्रमरणेन, पाणिग्रहणे श्रुत्या जायायाः पतिशरीराद्धर्धत्वप्रतिपादनात् "अस्थ्नाऽस्थीनि त्वचा त्वचम्" इति मन्त्रलिङ्गाच्च, मृतेऽपि पाणिग्राहे जायां प्रति तस्य पतित्वानिवृत्तेः। अत एव सपिण्डीकरणे "पतिनैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रिया" इति। "तर्पणं प्रत्यहं कार्यं भर्त्तुः कुशतिलोदकैः" इति च मृतस्य पतित्वेन तत्र तत्र निर्देशः सङ्गच्छते। यदि च पतित्वानिवृत्तिः, तदा "नैकस्यै सह पतय" इति श्रुत्या प्रतिषिद्ध एव पत्यन्तरपरिग्रहः। मृतस्यापि पाणिग्राहस्य तत्र पतित्वसत्त्वात्, परस्य च पतित्वे सहानेकपतित्वस्यावश्यम्भावात् स्पष्टीकृतश्चैषोऽर्थो याजुषश्रुतौ "तस्मान्नैका द्वौ पती विन्दते" (तै० सं० प्र० ५ का० ६ अ० ४) अपि च मन्त्रः "सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः, तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजा" इति। अत्र सोमादीनां पूर्वं पूर्वं पतित्वमुत्तरोत्तरस्मै दानेन निवर्त्तते, चतुर्थस्य पत्युर्मनुष्यस्य अन्यस्मै पत्नीदानाविधानात् न तस्य पतित्वनिवृत्तिः, नाऽपि वैवाहिकमन्त्रगणे पाठ्योऽयं विधवायामुपयुज्यते. नापि वक्ष्यमाणो मन्त्रः "सोमोऽददद् गन्धर्वाय गन्धर्वोऽददग्नये। रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्।" यदि मनुष्येषु द्वितीयः पतिरभिमतस्तदा कथमग्निकर्तृकं द्वितीयपात्राय दानमघटिष्यत, अग्नेस्तत् पूर्वं प्रथमपात्रदानावसरे पतित्वनिवृत्तेरित्यादिश्रुत्यर्थोपनिबन्धमनुवचनानि—"न विवाहविधावुक्तं विधवावेदनं पुनरिति, "न द्वितीयश्च साध्वीनां क्वचिद् भर्त्तोपदिश्यत" इति. "कामात्तु क्षपयेद् देहं पुष्पमूलफलैश्शुभैः। न तु नामाऽपि गृह्णीयात् पत्यौ प्रेते परस्य तु" इत्यादीनि। तस्मात् पराशरवचने "पतिते पतौ" इति द्वितीयशब्दः अपताविति पतिसदृशबोधकः। प्रश्लिष्टा-

कारो वा "यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः" इति मनुवचने वाग्दानमात्रप्रतिपादकपतिशब्दवद्वा प्रयुक्त इत्यभ्युपगन्तव्यम्। अन्यथा मनुविरोधेन श्रुतिविरोधेन च तद्वचनस्याप्रामाण्यं प्रसज्येत। "ऊढायाः पुनरुद्वाह" मित्युपक्रम्य "कलौ पञ्च विवर्जयेदिति" क्रतुवचनं पराशरवचनस्याऽनूढापरत्वं व्यनक्ति। तथा च "सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः। वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला" इत्यादि काश्यपवचने अनूढानां यासां पुनर्भूत्वकीर्त्तनं वर्जनीयत्वप्रतिपादनञ्च। कलौ पञ्चस्वापत्सु तदपवादकं पराशरवचनमिति नास्ति विवाहे कथमपि विधवाया अधिकारः। यत्तु मनुनोक्तं विधवायाः पुनर्भवेन पुत्रोत्पादनं, तत् कुण्डगोलकचाण्डालाद्युत्पत्तिवत् रागप्राप्तप्रतिषिद्धकर्माचरणप्रयुक्तफलस्य सामाजिकस्थानस्वरूपादिज्ञापनार्थं, न तु तद्विधानार्थम्। तथा सति चाण्डालादिजन्महेतुस्त्रीसंयोगोऽपि मनुना विहित इत्यभ्युपगम्यताम्। तत्रेष्टापत्तौ तत्र तत्र बाधकानि तानि तानि मनुवचनानि व्याकुप्येरन्। एवञ्च विवाहे विधवागोचरत्वं शास्त्रविरुद्धम्। प्रश्नोक्तभाषानुवादे तु विधवाविवाहः शास्त्रविरुद्ध इति पर्यवस्यति। "सकृदंशो निपतति सकृत् कन्या प्रदीयत" इत्युपक्रम्य विवाहप्रकरणं यावत् नारदेन विवाहमोक्षानभिधानात्, स्त्रीसंग्रहप्रकरणे वाग्दानदशायां च वरत्यागाद्यभिधानात्। पाणिग्रहणानन्तरं दम्पत्योर्विवाहमोक्षो "न निष्क्रियविसर्गाभ्यां भर्त्तुर्भार्य्या विमुच्यते" "पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी" इति वचनाच्च मोक्षो न भवत्येव। यत्तु साम्प्रतं कालप्रभावतो द्विजात्यादावपि धर्मभ्रष्टानां स्त्रीणां पुरुषान्तरग्रहणं दृश्यते, तेन कालान्तरेण काचिद्वान्तरजातिरुत्पत्स्यत इत्यनुमीयते।

(१४६) उ०—विधवाविवाहस्य स्पष्टं मन्वादिषु पशुधर्मत्वकथनात् 'नष्टे मृते' इत्यादीनां वाग्दत्तापरत्वात्, पितृमेधप्रकरणगतानां मन्त्राणामुदीर्ष्व नार्यभिजीवलोकमित्यादीनां विवाह्यनिर्णयानुपयोगित्वात्, उपयोगेऽपि तेषां विधवाविवाहनिषेध एव तात्पर्यस्य सायणादिभाष्यतोऽवगतत्वात्, "उत यत् पतयो दश स्त्रियाः पूर्वे अब्राह्मणाः" इति ब्राह्मणविषये स्पष्टं विधवाविवाहनिषेधात्,

> शूद्राणामेव धर्मोऽयं पत्यौ प्रेतेऽन्यसंश्रयः ।
> लोभान्मूढैरविद्वद्भिः क्षत्रियैरपि वर्यते ॥

इत्यादिवृद्धमनुवचनैः शूद्रेतराणां वर्णानां विधवाविवाहनिन्दनात्, अन्यमिच्छस्व सुभगे पतिं मत्" इति यमयमोसम्वादस्य सोदरीविवाहे सोदरस्यानधिकार इत्यत्रैव तात्पर्येण विधवाविवाहेऽतात्पर्यात् 'विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ' इति ऋङ्मन्त्रस्य "विधवेव" "मर्यं न" इति दृष्टान्तद्वयस्यैव विवक्षणात् विधवादेवरवरणस्य वानरादितिर्यग्जातिविषयत्वावगमाच्च विधवाविवाहस्त्रैवर्णिकानां धर्मतया निन्द्य एवेति निष्कर्षः ।

---

सप्तमप्रश्नोत्तर—

# परिशिष्टम् ।

---

( १४८, १४६, १५१, १५२, १५३, १५४, १५५, १५६, १५७, १५८, १५६, १६०, १६१, १६२, १६३, १६४, १६५, १६६, १६८, १६९, १७०, १७१ )
उ०—प्राचीनपक्षः ।

---

* श्रीविश्वनाथः शरणम् *

तृतीयो भागः ।

अखिलभारतवर्षीय—

# ब्राह्मणमहासम्मेलने-

## समालोचनीयप्रश्नावलीनामुत्तराणि ।

—·——******——·——

(८) प्रश्नः—अस्पृश्यानामस्पृश्यत्वं जातितो वा कर्मतो वा ?

(९) प्र०—म्लेच्छानामन्त्यजानां च स्पर्शविषये सभाप्रवेशविषये कूपोदकग्रहणविषये देवालयप्रवेशविषये चान्येभ्यस्तारतम्यरक्षणं योग्यं न वा ? यदि योग्यं तदा कीदृशं तारतम्यं रक्षणीयम् ?

१, २, ३, ४, ५. ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९ ) उ०—जयपुरस्थसूर्यनारायणशास्त्रिणोऽस्पृश्यानामस्पृश्यत्वं जातितः । तेषां कूपोदकग्रहणविषये सभाप्रवेशविषये देवालयप्रवेशविषये च तारतम्यं रक्षणीयम् । सभायां तेषां पृथक् स्थानव्यवस्थापनेन, पृथक्कूपव्यवस्थापनेन कुड्याद्यनन्तरिते देवालये दूराद्दर्शनव्यवस्थादानेन च ते उपकर्तव्याः । यवनानां कूपादिव्यवहारस्तु आपदेव, परं तु स हिन्दुसमाजस्य कलङ्क एवेति विवेचयन्ति ।

इदमेव मतं श्रीरामदेवत्रिपाठिनामपि । गणेशदत्तनैयायिका अपि पृथगन्त्यजानां व्यवस्थाकरणेन सहयोगमेव कर्तव्यं मन्यन्ते शास्त्राविरोधेन । ब्राह्मणैरन्त्यजानामालापोऽपि न कर्तव्य इति व्यवस्थामात्रमिदानीं परिवर्तनीयं परिस्थित्यनुसारेणेति वदन्ति । अस्पृश्यत्वं तु जातित एवान्त्यजादीनाम्, पतितानां तु कर्मत इति वदन्ति ।

चित्पुरीवेदशास्त्रपाठशालाध्यापकाः, भगवान्शास्त्रिणः, नल्लान् चक्रवर्तिमहाशयाः, मल्लय्याशास्त्रिणः, रामपुरराजपण्डिताश्च नोत्तरयन्तीमौ प्रश्नौ ।

पालघाटवैदिकसमाजादयः, तिरुवाड़ीविद्यालयपण्डिताश्च जातितोऽन्त्यजानामस्पृश्यत्वं कूपोदकादिव्यवहारायोग्यतां यथा-वैखानसागमं देवालयादौ ग्रामादौ च व्यवस्थिते स्थानेऽवस्थाय दर्शनव्यवस्थानं च कर्तव्यं मन्यन्ते । म्लेच्छापेक्षयाऽन्त्यजानां निकृष्टत्वमेवेति ते वदन्ति । इयमेव व्यवस्था मायूरशिवरामकृष्णशास्त्रिणां विजयनगरपण्डितानां सुब्रह्मण्यार्यादीनां तिरुपतिविद्यालयपण्डितानां वेङ्कटरामशास्त्रिणां मल्लादिश्रीरामकृष्णशास्त्रिप्रभृतीनां च सम्मता ।

शेखावाटीश्रीसीतारामशास्त्रिणस्तु परम्परागतसदाचारवत् तारतम्यरक्षणं योग्यम्, अथ वाऽन्त्यजवन्म्लेच्छानामपि व्यवहारः कर्तव्य इति वदन्ति ।

वाणीशभ्रामहोदयास्तु सामान्यप्रायश्चित्तेन गङ्गास्नानादिना, हरिनामस्मरणादिना वा शुद्धिव्यवस्थापनेनान्त्यजानां स्पर्शो न दोषायेति स्थापनं कर्तव्यम्, कूपोदकविषये तारतम्यरक्षणमसम्भवि । देवालयादौ देवदर्शनार्थं कश्चनोपायः कर्तव्य इति वदन्ति ।

(२०) उ०—म्लेच्छपतितान्त्यजानामुत्तरोत्तरमधिकमस्पृश्यत्वमिति निबन्धकाराशयः । अस्पृश्यत्वं तु अन्त्यजानां जन्मकृतम्, द्विजादीनामशौचादिकृतम् ।

(२१) उ०—किमपि न लिखितम् ।

(२२) उ०—कर्मणा जन्मना चाधिकारिभेदेनास्पृश्यत्वम् । उत्सवादिषु रथ्यादौ भगवद्दर्शन एवाधिकारोऽस्पृश्यानां न मण्डपादिप्रवेशादौ, उत्सवादावपि स्पर्शदोषो वर्तते एव, अत एव शान्तिप्रयोगा अपि रथोत्सवादौ क्रियन्ते ।

(२३) उ०—श्वपाकादीनां जातितोऽस्पृश्यत्वम्, न तु कर्मतः, तेषां कूपोदकग्रहणादौ दोषो वर्तते एव। देवालयप्रवेशविषये किमपि न लिखितम्।

(२४) उ०—जन्मत एवास्पृश्यत्वं श्वपचादीनाम्, कर्मतोऽपि सर्वेषामाशौचादि न भवति। स्पर्शविषये तारतम्यं रक्षणीयमेव। सभाप्रवेशविषये सहासनादिसंसर्गसम्भवादत्यन्तायोग्यता। कूपोदकग्रहणविषयेऽपि निषेधो वर्तते। देवालये बहिरवस्थाय दर्शनं कर्तुं शक्नुवन्ति। देशविशेषाचारादिकं कूपोदकग्रहणविषयादौ यदि म्लेच्छानां वर्तते, तर्हि तत्र तथैव भवतु, सर्वत्र प्रवर्तनं परमयोग्यम्।

(२५) उ०—स्पर्शविषये पराशराद्युक्तप्रकारेण चतुर्युगादिव्यवधानपरिपालनं कर्तव्यम्। कूपोदकादग्रहणादौ देवालयप्रवेशादौ चानादिसिद्धसम्प्रदाय एव परिपालनीयः। वैखानसाद्यागमानुरोधित्वमनुवर्तमानस्याचारस्य।

(२६, २७) उ०—देवालयप्रवेशादिकं तु निषिद्धमेव, पृथग्देवालयादिस्थापनेन प्रबन्धः कर्त्तव्यः।

(२८) उ०—स्पर्शे कूपोदकग्रहणे देवालयप्रवेशे च दोषो वर्तत एव। अन्त्यजानां म्लेच्छानां च पृथक् कूपादिव्यवस्था कर्तव्या।

(२९) उ०—अस्पृश्यान्नभक्षणादिकं निषिद्धमेव, देवालये दर्शनमात्रव्यवस्था कर्तव्या। उदकग्रहणे नद्यादौ कालपर्यायेण व्यवस्थायां न दोषः। जातित एवास्पृश्यत्वम्।

(३०) उ०—साक्षात् स्पर्शे स्नानादिप्रायश्चित्तम्, देवालयप्रवेशे संप्रोक्षणादिना शुद्धिः, बहुजनसमाजे साक्षात्स्पृष्टस्यैव स्नानम्। सर्वथा तु जातित एव तेऽस्पृश्याः।

(३१) उ०—जातिपतितानामस्पृश्यानां नास्पृश्यतानिवृत्तिः। अन्त्यजादीनां म्लेच्छानां चास्पृश्यत्वं समानमेव। सभाप्रवेशः कूपोदकग्रहणं

देवालयप्रवेशनं च निषिद्धमेव ।

(३२) उ०—अन्त्यजानां दर्शनभाषणादिकमपि व्यासादिभिर्यदि निषिद्धं तर्हि कैव कथा सभाप्रवेशादिविषये ।

(३३) उ०—जातितोऽस्पृश्यानामप्येतेषां पृथक् कूपादिव्यवस्थया देवदर्शने यथोचितव्यवस्थाकरणेन च साहाय्यं कर्तव्यम् ।

(३४) उ०—कूपोदकग्रहणादौ श्वपचम्लेच्छानां दोषो वर्तत एव, यात्रोत्सवादौ संकटविषये गोबालव्यजनपर्यन्तमन्ततो गत्वा व्यवधानेन तारतम्यरक्षणं कर्तव्यम् ।

(३५) उ०—अस्पृश्यानां जातितोऽस्पृश्यत्वम् । तारतम्यं तु रक्षणीयमेव, शास्त्रीयत्वात् ।

(३६) उ०—न किमपि लिखितम् ।

(३७) उ०—त्रयस्त्रिंशप्रबन्धवदेव ।

(३८) उ०—म्लेच्छानां जातितोऽस्पृश्यानां धर्मसभादौ न प्रवेशाधिकारः । जानपदसभादिषु न विरुद्धस्तत्प्रवेशः । देवालयप्रवेशस्त्वागमविरोधादयुक्त एव ।

(३९, ४० ) न किमपि लिखितम् ।

(४१) उ०—चाण्डालतुरुष्कयोरस्पृश्यतायां न विशेषः, जातित एवोभयोरस्पृश्यत्वम् ।

चण्डालश्च तुरुष्कश्च द्वावेतौ तुल्यपापिनौ ।

इति हेमाद्रिधृतवचनात् । अत उभयोरपि स्पर्शादिकं परिहरणीयमेव ।

(४२) उ०—स्पर्शकूपोदकग्रहणदेवालयप्रवेशादौ म्लेच्छान्त्यजानां सर्वेषामपि दोषापादकत्वमेव, बहुतरस्मृतियुक्त्यागमादिविरोधात् ।

(४३) उ०—जातितोऽस्पृश्यानां तारतम्यं देशविशेषे स्थानविशेषे तीर्थविशेषे च चिरतरप्रथानुसारेण रक्षणीयम् ।

यस्मिन् देशे च यच्छौचं धर्माचारश्च यादृशः ।

इत्यादिशास्त्रात् ।

(४४) उ०—

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाऽप्यनुलोमजः ।
पूजयेत् सततं लिङ्गं तत्तन्मन्त्रेण सादरम् ॥

इति वचनात् अनुलोमपर्यन्तं स्वयंभूलिङ्गपूजायामधिकारः । प्रतिष्ठिते तु न सर्वसाधारणोऽधिकारः । अन्त्यजानां जात्याऽस्पृश्यानां देवालयप्रवेशादौ नाधिकारः । बहुतरजलपूर्णकूपोदकग्रहणे नोदकग्रहणनिषेध इति वदन्ति ।

(४५) उ०—अस्पृश्यानां चण्डालादीनामस्पृश्यत्वं जातितः कर्मतोपि । म्लेच्छादीनां साधारणकूपोदकादिग्रहणं दूषणीयमेव । भक्त्यतिशये दूरतो दर्शनादौ न निषेधः ।

(४६) उ०—म्लेच्छादीनां स्पर्शादिविषये यथादेशाचारं व्यवस्था ।

(४७, ४८) उ०—म्लेच्छानामन्त्यजानां च स्पर्शविषये प्रतिष्ठितदेवालयप्रवेशप्रतिषेधविषये तारतम्यं कर्तव्यम् । अबद्धे पक्वेष्टकाबद्धे कूपे च अन्त्यजातीनां अन्येभ्यो नास्ति तारतम्यम् ।

(४९) उ०—म्लेच्छान्त्यजादीनां देवालयप्रवेशादिषु कदापि न योग्यता ।

(५०) उ०—म्लेच्छानामन्त्यजानां च स्पर्शविषये सभाप्रवेशविषये कूपोदकविषये देवालयप्रवेशविषये च अन्येभ्यस्तारतम्यं कर्तव्यम् । चतुर्हस्तकूपे तु न दोषः ।

(५१) उ०—चण्डालवत् म्लेच्छा अपि पतितत्वादस्पृश्याः । पतितशब्देन म्लेच्छानामपि ग्रहणे प्रायश्चित्ततत्वं प्रमाणम् । चण्डालस्पर्शे गङ्गाजलं व्यवहार्यम् । म्लेच्छस्पर्शे त्वव्यवहार्यम् ।

सर्वत्र पावनी गङ्गा त्रिषु स्थानेषु दूषिता ।
म्लेच्छस्पर्शे सुराभाण्डे कूपोदकविमिश्रणे ॥

इति वचनात् ।

भाषाख्या लौकिका मन्त्राः प्रपत्त्यर्थविभावनाः ।
सर्वेभ्यः प्रतिलोमेभ्यो देयाः कामं द्विजातिभिः ॥

इति नारदपञ्चरात्रीयवचनात् अन्त्यजादीनां भाषारूपमन्त्रग्रहणाधिकारित्वदर्शनाच्च म्लेच्छापेक्षया उत्कर्षः । अस्पृश्यानामपि कुत्रचित् कार्ये देशे च स्पर्शदोषो नास्ति । तथा च अत्रिः,

देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥

विष्ण्वालयसमीपस्थान् विष्णुसेवार्थमागतान् ।
चाण्डालान्पतितान्वापि न स्पृष्ट्वा स्नानमाचरेत् ॥
इति संवत्सरप्रदीपे । बृहस्पतिः,

उत्सवे वासुदेवस्य स्नायाद्योऽशुचिशङ्कया ।
तादृशं कल्मषं दृष्ट्वा सवासा जलमाविशेत् ॥
तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥

आचारपल्लवे,

कुण्डे मञ्चे शिलापृष्ठे नौकायां गजवृषयोः ।
संग्रामे संकटे चैव स्पर्शदोषो न विद्यते ॥

सभाप्रवेशविषयेऽपि तारतम्यं रक्षणीयम् । सभ्यानां सभाप्रवेशाधिकारात् । सभ्यः सभायां साधुः । तथाविधानाह याज्ञवल्क्यः,

श्रुताध्ययनसम्पन्नाः कुलीनाः सत्यवादिनः ।
राज्ञा सभासदः कार्याः शत्रौ मित्रे च ये समाः ॥ इति ।

शुक्रनीतिपरिशिष्टे—

यद्वर्णजो भवेद्राजा योज्यस्तद्वर्णजः सदा ।
तद्वर्णा एव गुणिनः प्रायशः सम्भवन्ति हि ॥
व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः ।
रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः ॥
निरालस्या जितक्रोधकामलोभाः प्रियंवदाः ।

राज्ञा ते च नियोज्याः स्युः सभ्याः सर्वासु जातिषु ॥

प्रायश्चित्तार्थी तु सर्व एव सभायां प्रविशति । अर्थिप्रत्यर्थिनौ साक्षिणश्च । कूपोदकग्रहणविषयेऽपि तारतम्यमस्त्येव । चतु-र्दिक्षु चतुर्हस्तपरिमितकूपोदकग्रहणे दोषो नास्ति ।

समन्ततश्चतुर्हस्तो जलाधारो भवेद्यदि ।
अन्त्यजैरपि संस्पृष्टः पूतो वाप्यादिवद्भवेत् ॥

इति मत्स्यसूक्ते श्रूयते । देवालयप्रवेशेऽपि तारतम्यं विधान-पारिजाते कौर्मे,

ब्राह्मण्यपि हरं विष्णुं न स्पृशेच्छ्रेय इच्छती ।
सनाथा मृतनाथा वा तस्या नास्त्येव निष्कृतिः ॥

नारदीये,

पाषण्डपूजितं लिङ्गं विष्णुं वापि नमेत्तु यः ।
स कोटिकुलसंयुक्तो रौरवे नरके वसेत् ॥

तदेतत्सर्वमिदं प्रतिष्ठितलिङ्गादिविषयं, न तु पुराणप्रसिद्धमहिम-लिङ्गादिविषयमिति विधानपारिजाते,

यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि ।

इत्यादिशिवपुराणोक्तेः । अत एव स्कान्दे काशीलिङ्गानि प्रकृ-त्योक्तम् .

अदृश्यान्यपि दृश्यानि दुरवस्थान्यपि प्रिये ।
भग्नान्यपि च कालेन तानि पूज्यानि सुन्दरि ॥

दुरवस्थानि स्त्रीशूद्रादिपूजितानीति विधानपारिजातकृत् । अस्पृ-श्यस्पृष्टानीति कश्चित् ।

नारदीये,

यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि ।
ततः प्रभृति शूद्रश्च योषिच्चापि न संस्पृशेत् ॥

प्रागुक्ते एकादशीतत्त्वधृत "विष्णवालयसमीपस्था" नित्यादिवच-

नात् भङ्ग्या प्रवेशाधिकारोऽन्त्यजादीनां नास्तीति प्रतीयते।

(५२, ५३; ५४; ५५) उ०—तारतम्यरक्षणं युक्तम्। इत्थमेव तत्। तथाहि; येषां यद्याजकत्वं येषु च यद्याजकत्वं शास्त्रसिद्धं तेषामेव परस्परं स्पर्शविषये कूपोदकग्रहणविषये च दोषो नास्ति; इतो वैपरीत्ये तु दोषोऽस्तीति। म्लेच्छानामन्त्यजानां सभाप्रवेशविषये प्रमाणाभावेन दोषाभावात्तारतम्यं नास्ति। अन्यत्सर्वं पूर्ववदेव।

(५६) उ०—अस्पृश्यजातिर्जन्मकृता। तारतम्यरक्षणं योग्यम्।

(५७) उ०—देवलस्मृतिः।

सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते।

अन्त्यजास्तु;

रजकश्चर्मकारश्च नटो बुरुड एव च।
कैवर्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः॥
वापीकूपतडागानां दूषितानां च शोधनम्।
कुम्भानां शतमुद्धृत्य पञ्चगव्यं ततः क्षिपेत्॥
कूपो मूत्रपुरीषेण यवनेन च दूषितः।
श्वशृगालखरोष्ट्रैश्च क्रव्याद्भिश्च जुगुप्सितः॥
उद्धृत्यैव तु तत्तोयं सप्त पिण्डान् समुद्धरेत्।
पञ्चगव्यं मृदा पूतं कूपे तच्छोधनं मतम्॥
अन्त्यजैः स्वीकृते तीर्थे तडागेषु नदीषु च।
शुद्ध्यते पञ्चगव्येन पीत्वा तोयमकामतः॥

इत्यादिना अन्त्यजादिस्पर्शे दोषः श्रूयते। देवतादिस्पर्शेऽप्येवमेव। कूपोदकस्पर्शे कूपस्य संस्कारः। देवतास्पर्शे तस्याः पुनः प्रतिष्ठैव; परं तु दूरतो जलग्रहणं देवतादर्शनं च न वारणीयम्। स्पर्शस्तु अत्यन्तं निषिद्ध एव। साधारणसभाप्रवेशश्चैषां कथमवरुद्ध्येत। परं तु ब्राह्मणपण्डितानां सभाप्रवेशः सर्वथा निरस्यः।

(५८) उ०—सभाप्रवेशविषये प्रतिष्ठितकूपादिविषये अनादिदेवालय-

प्रवेशविषये च तारतम्यरक्षणमयुक्तम् ।

(५९) उ०—म्लेच्छादीनां सभाप्रवेशविषये च स्पर्शविषये च अन्त्येभ्यस्तारतम्यमावश्यकम् । देवालयप्रवेशविशये च उत्सवादिभ्योऽन्यत्र स्पर्शनादि कृत्वा स्नानादिकं कुर्यादेव । सभाप्रवेशविषये च धर्मसभादौ प्रवेशनं न युक्तम् । राजकीयसभादौ तु आसनादेर्यथासम्भवं पृथङ्निर्देशः कर्तव्यः । सर्वसाधारणजलाशये पुष्करिण्यादौ न दोषः । कूपे दोषोऽस्त्येव । तीर्थादेरन्यत्र साधारणदेवालयेऽपि म्लेच्छानामन्त्यजानां च प्रवेशो नैव विधेयः । तीर्थादावपि देवालये म्लेच्छानां न प्रवेशः, सर्वधर्मपरित्यागश्रवणात् तेषां दर्शनादौ प्रायश्चित्तस्मरणाच्च । तद्यथा, "कृतलक्षणैः दर्शनस्पर्शनसम्भाषणानि वर्जयेत् ।" कृतलक्षणैः पतितैः । देवलः,

चण्डालेन शुना वापि दृष्टे हविरयज्ञियम् ।
विडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत् ॥

शातातपः,

क्लीबाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः ।
दृष्टं वा स्याद्यदन्नं तु तस्य निष्कृतिरुच्यते ॥

देवलः,

चण्डालैरुषितं यत्र यत्र विन्यस्यते शवः ।
विण्मूत्रोपहतं यच्च कुणपो यत्र दृश्यते ।
एवं कश्मलभूयिष्ठा भूरमेध्येति कथ्यते ॥ इति ।

(६०) उ०—चण्डालस्पर्शादिनिषेधस्तु पूर्ववदेव "चण्डालदर्शने ज्योतिषां दर्शनम्, ब्राह्मणभाषणे भाषणादिकं, उच्छिष्टस्य चाण्डालस्य दर्शने एकरात्रमुपवासः; सम्भाषणे द्विरात्रं; स्पर्शने सहगमने च सचैलस्नानम्" इति बौधायनेनोक्ततया दर्शनादेरपि निषिद्धत्वात् । सभाप्रवेशप्रतिष्ठितदेवालयप्रवेशावपि निषिद्धौ; "पतितस्पर्शदूषिते"त्यादिवचनात् ।

( ६१ ) उ०—सर्वं पूर्ववदेव । पतितश्च मार्कण्डेयपुराणे—

स्वधर्मं यः समुच्छिद्य परधर्मं समाश्रयेत् ।
अनापदि स विद्वद्भिः पतितः परिकीर्तितः ॥ इति ॥

यत्तु कैश्चिदुच्यते—बृहस्पतिः;

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥

अत्रिः—

देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न दुष्यति ॥
प्राकाररोधे विषमप्रदेशे
सेनानिवेशे भवनस्य दाहे ।
आरब्धयज्ञेषु महोत्सवेषु
तथैव दोषा न विकल्पनीयाः ॥ इति ।

अत्रेदं विचार्यते; यदुक्तेषु बृहस्पत्यादिवाक्येषु उत्सवादिषु स्पृष्टास्पृष्टिदोषाभाव उक्तः, स च;

चण्डालैरन्त्यजैश्चैव तथान्यप्रतिलोमजैः ।
म्लेच्छैश्च नीचचाण्डालैर्गुरुनिन्दादिदूषतैः ॥
एवमादिभिः संस्पृष्टे देवागारे विशेषतः ।
स्पृष्टे प्रवेशने बाधा पूजाकाले च दर्शने ॥

इति भृगुसंहितोक्तेः सामान्यतो देवालये स्पृष्टे दोषापवादः; न त्वस्पृश्यानां देवतास्पर्शविधायकः । तथा चोक्तं तन्त्रे;

ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि ।
स्त्रीशूद्रकरसंस्पर्शो वज्रपाताधिको मम ॥

इत्यादिवाक्यैस्तावत् स्त्रीशूद्राणामपि स्पर्शने नास्त्यधिकारः; किमुत चण्डालादीनां म्लेच्छानामिति । अत्र केचित्; सर्व-स्पर्शदोषापवादकत्वेन बृहस्पत्यादिवाक्यं प्रमाणयन्ति; निद-

शंयन्ति च महापीठे कालीघट्टादौ वर्णनिर्विशेषेण सर्वेषामेव प्रवेशाधिकारं, अन्त्यजानां तत्र देवालयप्रवेशः सर्वैरेव आसीणैरङ्गीक्रियते। तत्र केचन तान्त्रिकाः,

अनादिभूतभूतेशमहिमा वाणगोचरः।
महापीठे तथार्चायामस्पृश्यस्पर्शदूषणम्॥
विद्यते सुव्रते नैतल्लिङ्गरूपधरे हरे।
यथा चक्रार्चने देवि कोपि दोषो न विद्यते॥
शिवक्षेत्रे महातीर्थे तथा च मं हि कालिके।

इति महनिर्वाणतन्त्रवाक्यं प्रमाणयन्तो महापीठे कालीघट्टादौ अन्त्यजानामपि देवतास्पर्शनेऽधिकारं वर्णयन्ति। यदपि च "पञ्च-महापातकैश्चाण्डालाद्यैश्चालये प्रविष्टे तत्स्पृष्टनिवेदने च सप्ताहं महाशान्तिं हुत्वा देवं कलशैः संस्नाप्य पुनः प्रतिष्ठां कारयेत्" इत्यादिश्रीवैखानसादिप्रमाणं, तत् पुनःप्रतिष्ठावचनात् प्रतिष्ठि-तविग्रहस्पर्शदोषपरमित्यपि कथयन्ति। वस्तुतस्तु चक्रानदर्शन-प्रदर्शनेन महानिर्वाणतन्त्रवाक्यं कौलपरमेवेति शिष्टसम्मतम्। तथा च सर्वथापि देवतास्पर्शने अन्त्यजानां नाधिकारः। म्लेच्छान्त्यजस्पर्शभयात् सभाप्रवेशादावपि अधिकारसामर्थ्य-भेदात् यथोपयुक्ततारतम्यरक्षणं कर्तव्यमेवेति।

(६४) उ०—कर्मणैवास्पृश्यानामस्पृश्यता, न जातितः, अत एव गुहक-श्चाण्डालः स्वसखरामेणानुगृहीत इति रामायणे लिखि-तम्। श्रीगौराङ्गप्रभृतीनामपि एतदनुकूल एवाचारः श्रूयते। यवनभिन्नानामन्त्यजानां स्पर्शविषये सभाप्रवेशे कूपोदकग्रहणे देवालयप्रवेशविषये च अन्येभ्यो ब्राह्मणादिभ्यः तारतम्यरक्षा नोचिता। केवलं देवालयं प्रविश्य यथासम्भवं पूजोपकरणनैवेद्या-दिस्पर्शो न कर्तव्यस्तैः। विश्वेश्वरादिमन्दिरादौ जातिनिर्विशे-षेण सर्वेषां प्रवेशाधिकारः सर्वदा दृष्टचरः। परिषदि हट्टादौ

धूमशकटे च परस्परस्पर्शनमनिवार्यम् । पुष्करिण्यादेर्जलग्रहणं न शास्त्रविरुद्धं चेत्, कूपादौ कश्चापराधो धर्मभीरुभिर्दिव्य-दृष्ट्याऽवलोकितः । जगन्नाथक्षेत्रे यवनमन्तरेण पानभोजनादौ सर्वेषां तुल्योऽधिकारः, नास्ति तत्र धर्मशास्त्रप्रचारकाणां निबन्धॄ-णां च विचारावसरः । तीर्थमाहात्म्यमुररीकृतं चेत्, मद्विधानां पतितधुर्याणां वाचालता सामाजिकानां कथं विरक्तिमावहतीति क्षन्तव्यमिति ।

(६८) उ०—तारतम्यरक्षणं युक्तम् । ब्राह्मणादिभिः म्लेच्छानामन्त्यजानां च कूपोदकग्रहणं न कर्तव्यम् । अन्यत्सर्वमपि पूर्ववदेव ।

(६९) उ०—म्लेच्छानामन्त्यजानां च सम्भाषणस्पर्शनेतरसम्बन्धः परिव-र्जनीयः । सभायां च गुणवतां पृथगासनं दातव्यम् ।

(७१) उ०—सभाप्रवेशविषये म्लेच्छानामन्त्यजानां च परिषत्त्वं निषिद्धम् । यदाह वसिष्ठः,

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥

अर्थिप्रत्यर्थित्वं न निषिद्धं, तत्र सर्वेषामधिकारात् । किं तु मन्त्र-णासमये म्लेच्छादीनपसारयेत्, यथा मनुः—

जडमूकान्धबधिरान् तैर्यग्योनान् वयोतिगान् ।
स्त्रीम्लेच्छव्याधितान् व्यङ्गान् मन्त्रकालेऽपसारयेत् ॥

कूपोदकग्रहणविषये कल्पतरौ देवलः,

चाण्डालपतितादीनां पुष्करिण्यां ह्रदेऽपि वा ।
जानुदघ्नाच्छुचि ज्ञेयमधस्तादशुचि स्मृतम् ॥

जानुदघ्नात् जानुपरिमितात् । वृद्धयाज्ञवल्क्यः,

समन्ताच्चतुर्हस्तस्तु जलाशयो भवेद्यदि ।
अन्त्यजैरपि स स्पृष्टः पूतो भवति सर्वतः ॥

इत्यादिवचनादन्येभ्यस्तारतम्यरक्षणं योग्यमेव । देवालयप्रवे-

शविषये तु पुराणप्रसिद्धमहिमलिङ्गादौ अस्पृश्यस्पर्शादौ न दोषः। अत एवोक्तं स्कान्दे काशीलिङ्गानि प्रकृत्य,

अदृश्यानि च दृश्यानि दुरवस्थान्यपि प्रिये।
भग्नान्यपि च कालेन तानि पूज्यानि सुन्दरि ॥

दुरवस्थानि अपृश्यस्पृष्टानीति।

(७४) उ०—शातातपः,

रजकश्चर्मकृच्चैव व्याधजालोपजीविनौ।
निर्णेजकः सौनिकश्च ठकः शैलूषकस्तथा ॥
मुखेभगस्तथा श्वा च वनिता सर्ववर्णगा।
चक्री ध्वजी वध्यघाती ग्राम्यशूकरकुक्कुटौ ॥
एभिर्यदङ्गं संस्पृष्टं शिरोवर्ज्यं द्विजातिषु।
तोयेन क्षालनं कृत्वा आचान्तः शुचितामियात् ॥

अन्त्यजेभ्यो म्लेच्छानां जघन्यताया युक्तत्वेऽपि

दासीकृतो बलाम्लेच्छैश्चण्डालाद्यैश्च दस्युभिः ॥

इत्यादिदेवलवचनात् प्रायश्चित्ततत्त्वादौ चण्डालैः सह म्लेच्छानां प्रायश्चित्तविषये तुल्यत्वमुक्तम्। अतः स्पर्शादिविषयेऽपि उभयोस्तुल्यता युक्ता, तथापि शिष्टा अन्त्यजेभ्यः स्पर्शादिविषये म्लेच्छानां जघन्यत्वं मन्यन्ते। व्यवहारोऽपि तथा, तेभ्यो ह्येतयोर्जघन्याचारत्वात्। स्मृतितत्त्वे बौधायनः।

"अनेकोद्ध्राह्ये दारुशिले भूमिसम इष्टकाश्च संकीर्णीभूता"

इति। संकीर्णीभूताः परस्परसम्बद्धाः। शुद्धिचन्द्रालोके,

ग्रामाद्दण्डशतं त्यक्त्वा नगराच्च चतुर्गुणम्।
भूमिः सर्वत्र शुद्धा स्यात् यत्र लेपो नदृश्यते ॥
आसनं शयनं यानं नावः पथि तृणानि च।
चाण्डालपतितस्पृष्टं मारुते नव शुद्ध्यति ॥

गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः।

अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च ॥

गङ्गाजलस्पर्शेऽपि म्लेच्छं विनाऽन्त्यैः सह अन्त्यजानां समत्वम्। तथा च स्मृतिः,

सर्वत्र पावनी गङ्गा त्रिषु स्थानेषु वर्जिता ।
म्लेच्छस्पृष्टे सुराभाण्डे कूपोदकविमिश्रणे ॥

बृहद्धर्मपुराणवचनेनापि तथा प्रतीयते ।

चण्डालेनापि यस्यास्ये न्यस्येत् गङ्गाजलं परम् ।
सोऽपि मुक्तिं लभेन्मर्त्यः किं वा पुत्रादिना द्विज ॥
नीचोत्तमविचारं तु कालाकालविचारणाम् ।
देशादेशविचारं तु न गङ्गासलिले चरेत् ॥
प्राप्तमात्रं तु गंगाम्बु प्रणमेत् संग्रहेत् पिबेत् ।

एवं रीत्याऽन्त्यजानां म्लेच्छेभ्यस्तारतम्यं वर्तते,स्पर्शविषये सभा-प्रवेशविषये तु अन्त्यजानां म्लेच्छानां च ऐकरूप्यमेव । कूपोदक-ग्रहणविषये जानुपरिमाणादूर्ध्वं चेज्जलं आपदि स्नानपानादौ ग्रहणीयम् । अन्यैरस्पृश्यानामन्त्यजानां स्पृष्टत्वेपि यथा, शुद्धि-चन्द्रालोके कल्पतरौ देवलः,

चाण्डालपतितादीनां पुष्करिण्यां ह्रदेऽपि वा ।
जानुदघ्नाच्छुचि ज्ञेयं अधस्तादशुचि स्मृतम् ॥

एतच्चापदि स्नानयात्रादौ बौधायनः

खलक्षेत्रेषु यद्धान्यं कूपवापीषु यज्जलम् ।
अभोज्यादपि तद्भोज्यं यच्च गोष्ठगतं पयः ॥

शुद्धिचन्द्रालोके उशनाः,

नद्यः कूपतडागानि सरांसि सरितस्तथा ।
असंवृतान्यदोषाणि मनुः स्वायंभुवोऽब्रवीत् ।

सरितः सरणशीलाः निर्झररूपाः । असंवृतानीत्यनेन अस्पृश्य-स्पर्शसम्भावना दर्शिता । अत एव असंवृतानि अस्पृश्यस्पृष्टत्वा-

पीति लक्ष्मीधरः। एतदपि देवलवचनानुसाराज्जानुदघ्नादूर्ध्व-भिति ज्ञेयम्। एतदन्यत्र अन्त्यजादिस्पृष्टकूपोदकं न ग्राह्यमन्यैः,

श्वपाकचाण्डालपरिग्रहे तु—

पीत्वा जलं पञ्चगव्येन शुद्ध्यति, इत्यादिवचनात्।

(७८) उ०—

महापातकिसंस्पर्शे स्नानमेव विधीयते।

संस्पृष्टस्तु यदा भुङ्क्ते तत्तत्कृच्छ्रं समाचरेत्॥

"अमेध्यचाण्डालपतितपुक्कसरजस्वलाऽवधूतकुणिकुष्ठिस्पृष्टानि भुक्त्वा कृच्छ्रं चरेत्" इति शङ्खवचने साहचर्यदर्शनात् चाण्डा-लादिस्पर्शेऽप्येतद्वेदितव्यम्।

सर्वेषामन्त्यजातीनां स्पर्शे त्वाचमनं विदुः।

येषां तु ब्राह्मणो नास्ति तेषां स्नानं विधीयते॥

इति आपस्तम्बवचनेन अन्त्यजस्पर्शात् चाण्डालादिस्पर्शे विशेषो व्यवस्थापितः। चण्डालादिस्पृष्टकूपजलपाने स्पृष्टवदेव प्रायश्चित्तमिति रिपुञ्जयेण लिखितम्।

(८०) उ०—

म्लेच्छानामन्त्यजानां च स्पर्शादिविषये तारतम्यरक्षणं यथा-सम्भवं स्वस्वदेशरीत्या करणीयम्। कूपोदकग्रहणविषये तारत-म्यरक्षणं न योग्यम्।

आकराः शुचयः सर्वे वर्जयित्वा सुराकरम्।

इति मनुवचनात्।

(८२) उ०—यवनस्य म्लेच्छत्वमप्युक्तं विष्णुपुराणे तथा कृतान्यवनादी-नुपक्रम्य "ते चात्र धर्मपरित्यागान्म्लेच्छत्वं ययु" रिति।

दासीकृतो बलान्म्लेच्छैश्चाण्डालाद्यैश्च दस्युभिः।

इति देवलवचनात् चाण्डालानां यवनैः साम्यमिति। बौधा-यनः "चाण्डालदर्शने ज्योतिषां दर्शनं" इति। इत्यादि बहुवचन-

पर्यालोचनया सम्भावयति तावत्। इतरजात्यपेक्षया म्लेच्छाना-मन्त्यजानां च स्पर्शनविषये प्रायश्चित्ताधिक्यदर्शनात्। बौधायनसूत्रे चाण्डालदर्शनादिषु प्रायश्चित्तविशेषश्रवणाच्च। प्रायश्चित्ततारतम्यात् अन्यत्रापि तारतम्यं स्फुटमेव, यत्र दर्शन एव प्रायश्चित्तश्रुतिस्तत्र स्पर्शने किमु वक्तव्यम्। कूपोदकग्रहण-विषये यथा,

आकराः शुचयः सर्वे वर्जयित्वा सुरालयम्।

इतिदेवलवचनात्,

प्रदद्यात्सर्वभूतेभ्यो जलपूर्णं जलाशयम्।

इति मत्स्यपुराणवचनाच्च, जलाशयोत्सर्गस्य सर्वभूतसम्प्रदा-यकत्वेन अपकृष्टचेतनोद्देश्यकत्वात्। एवं,

सामान्यं सर्वभूतेभ्यो मया दत्तमिदं जलम्।
रमन्तु सर्वभूतानि स्नानपानावगाहनैः॥

इति मन्त्रलिङ्गाच्च धर्मार्थदेयजलाशयजलादानविषये सर्वेषामे-वाधिकारः। देवालयप्रवेशविषये तु ब्राह्मणादयः स्वस्वदेवालयं गत्वा सुखासनमुपविश्य हरिस्मरणाचमनन्यासादिभिः पाञ्च-भौतिकं संशोध्याहरहः क्रियमाणनित्यनैमित्तिकक्रियाकलापैः पूतदेहो ध्येयं सदा चिन्तयन्ति, यदि म्लेच्छान्त्यजास्तं प्रविशेयुः तदा तद्दर्शने तद्देहाशुद्धौ तदाचरितकार्यकलापफलं नाप्नुयुरत-स्तत्र तद्गमनमनुचितम्'।

बहिर्ग्रामान्त्यजान् सूतो पतितं च रजस्लाम्।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे॥

यत्र दर्शनं विरुद्धं तत्र प्रवेशने किं वक्तव्यम्। अपि च देवालये बहूनि आसादितहवनीयद्रव्याणि स्युः, यदि दैवात्तत्र चाण्डा-लादयः प्रविशेयुस्तदा तत्सर्वमयज्ञियं स्यात्।

तथा च देवलः,

चण्डालेन शुना वापि दृष्टे हविरयज्ञियम् ।
विडालादिरुच्छिष्टं विवर्जयेत् ॥

अतस्तद्गमनं न विधेयम् ।

(८६) उ०—म्लेच्छानामन्त्यजातीनां च स्पर्शादिविषये यथासम्भवं तारतम्यं रक्षणीयं, तदितरत्र सर्वथेति मतमस्माकम् ।

(६१) उ—म्लेच्छानामन्त्यजानां च स्पर्शविषये समानदोषः, स तु सहनीयः, सभाप्रवेशविषये च पुष्करिण्यादिवत्कूपोदकग्रहणेऽपि देवालयप्रवेशो म्लेच्छानां नाधिकारः। तदितरेषां अन्त्यजादीनां तु देवालयप्रवेशो न तु गुरुतरदोषावहः, परं तु देवतास्पर्शाधिकारो नास्ति ।

(६४) उ०—कूपोदकग्रहणविषये साधारणकूपादसाधारणकूपाद्वा म्लेच्छादिभिर्न भाण्डेनाहरणीयमन्यैस्तु स्वभाण्डेनापि आहर्तुं शक्यते, एवं तारतम्यम् ।

चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥

इति धावकवचनात् । प्रायश्चित्ततत्वे.

दासीकृतो बलान्म्लेच्छैश्चाण्डालाद्यैश्च दस्युभिः ।

इत्यादिवचनैर्म्लेच्छचाण्डालयोः साम्याभिधानात् पराशरवचने चाण्डालपदेन म्लेच्छस्यापि धर्तुं शक्यत्वात् । म्लेच्छानां तु सर्वधर्मराहित्येन कुत्रापि प्रवेशाधिकारो नास्ति, अन्त्यजानां तु यस्मिन्देशे यस्मिन्देवालये प्रवेशाधिकारो वर्तते तत्रैव न चान्यत्र ।

(६५) उ०—स्वभाण्डभिन्नेन कूपजलं ग्रहीतुं चण्डालतया म्लेच्छादिभिः शक्यम् ।

(६७) उ०—कूपोदकग्रहणविषये तु म्लेच्छान्त्यजयोरपि तारतम्यमस्ति, तथा च म्लेच्छचाण्डालादिभिः खानिते कूपे अन्यखानिततत्परिगृहीतोदके च जलस्य दूषकता, अन्त्यजादिभिस्तु

खानिते कूप एव नत्वन्यखानिततत्परिगृहीतोदकोऽपि । चाण्डाला-दिभिरित्यादिपदं अन्त्यजस्याप्युपलक्षकम् । एतानि च,

चण्डालकूपभाण्डेषु यस्त्वज्ञानाज्जलं पिबेत् ।
स तु त्र्यहेण शुद्ध्येत शूद्रस्त्वेकेन शुध्यति ॥

तथा,

चाण्डालपरिगृहीते यो ह्यज्ञानादुदकं पिबेत् ।
तस्य शुद्धिं विजानीयात्प्राजापत्येन नित्यशः ॥

तथा,

श्वपाकचाण्डालपरिग्रहेषु
पीत्वा जलं शुध्यति पञ्चगव्यैः ॥

तथा,

म्लेच्छभाण्डस्थिता दुष्टाः ।

तथा,

अन्त्यजैः खानिता कूपास्तडागानि तथैव च ।
एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुध्यति ॥

इत्यादिप्रायश्चित्तविवेकधृतदेवलाङ्गिरआपस्तम्बयमवचनेभ्य उन्नेयानि । देवालयप्रवेशविषये तु देवपूजादीनां यागत्वात् तदुपकरणानां च हविष्ट्वात् म्लेच्छचाण्डालयोः सास्याभिधानम् ।

चाण्डालेन शुना वापि दृष्टं हविरयज्ञियम् ।

इति देवलवचनेन चाण्डालादिदृष्टे च तस्यायज्ञियत्वाभिधानात् म्लेच्छचाण्डालादीनां देवालयप्रवेशे च पूजोपकरणदर्शन-स्यावश्यंभावित्वात् देवालयप्रवेशे तेषामनधिकारः । न चैवं पूजोपकरणरहिते देवालयेऽथवा मुद्रितनेत्रे अन्धे वा चण्डा-लादौ प्रविष्टे दोषो मा भूदिति वाच्यम् । "चाण्डालसङ्करेषु भवनदहनं वपनं सर्वभाण्डभेदनं दारवाणां तक्षणं शङ्खशुक्ति-

सुवर्णरजतचैलानामद्भिः प्रक्षालनं कांस्यताम्राणामाकरे शुद्धिः सौवीरपयोदधितक्राणां परित्याग" इत्यादिविवेककारधृतच्यवनवचनेन चाण्डालादिसंसर्गे गृहादीनामपि दुष्टत्वाभिधानात् चातुर्वर्ण्यस्य तु देवालयप्रवेशे न गृहादीनां दुष्टत्वमिति तारतम्यं ज्ञेयम् ।

(९८) उ०—चर्मकारवेनचाण्डालादिप्रसङ्गे मनुः,

न तैः समयमन्विच्छेत् पुरुषो धर्ममाचरन् ।

अत्र भाष्यकारो मेधातिथिः, "एकत्र स्थानासनविहारास्तैर्न कर्तव्या इति । तेन अन्त्यजादीनां सभाप्रवेशो निषिद्ध इति ज्ञायते । कूपोदकग्रहणविषये,

चण्डालपात्रसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्रेण विशुद्ध्यति ॥

संवर्तः (अध्याय१श्लो० १०२) ।

चण्डालभाण्डस्पृष्टस्य निषेधेन चण्डालस्पृष्टस्यापि निषेधस्तात्पर्यतो लभ्यत एव । चण्डालपदेन यथा म्लेच्छानामन्त्यजानां च सर्वेषां परिग्रहस्तथाऽग्रे वक्ष्यते ।

अन्त्यजैः स्वीकृते तीर्थे तडागेषु नदीषु च ।
शुध्यते पञ्चगव्येन पीत्वा तोयमकामतः ॥

संवर्तः (अ०१श्लो०,१८३०) ।

चण्डालखातवापीषु पीत्वा सलिलमग्रजः ।
अज्ञानाच्चैव नक्तेन त्वहोरात्रेण शुध्यति ॥

पराशरः (अ०६श्लो०३३ ।

इति वचनयोरन्त्यजाधिकृतचण्डालखातवाप्यादिपर्यन्तस्यापि दुष्टत्वप्रतिपादनात् तत्स्पृष्टकूतजले सुतरामेव दुष्टत्वमवगन्तव्यम् ।

देवालयप्रवेशविषये—

अन्त्यजातिरविज्ञातो निविशेद्यस्य वेश्मनि ।
स वै ज्ञात्वा तु कालेन कुर्यात्तत्र विशोधनम् ॥

आपस्तम्बः,

अविज्ञातश्च चाण्डालः सन्तिष्ठेत्तस्य वेश्मनि ।
विज्ञाते तूपसन्नस्य द्विजाः कुर्वन्त्यनुग्रहम् ॥

पराशरः,

इत्यादिवचनैः उच्चजातीयानां गृहे चाण्डालादिप्रवेशे दोषप्रतिपादनात् । द्रव्यशुद्धिप्रस्तावे मनुः—

"मार्जनोपाञ्जनैर्वेश्म" (५अ०१२२) इति । अत्र मेधातिथिभाष्यम्, "एतच्च शवचाण्डालादिभिर्भित्तिसंस्पर्शे व्यापिनि द्रष्टव्यम्, अव्याप्तौ तु तावन्मात्रस्यैवे"ति । एतादृशग्रन्थेनापि साधारणगृहादीनामपि शुद्धिविधानात् तदपेक्षया पवित्रे देवगृहादौ म्लेच्छादिप्रवेशे दैवस्य तथा तद्गृहाभ्यन्तरस्थजलादीनामपवित्रत्वं सुतरामायाति । चाण्डालान्त्यस्त्रियो गत्वा" इत्यादिवचने म्लेच्छानां चण्डालतुल्यव्यवस्थतया अन्त्यशब्दपाठात् विशेषानुक्तौ चण्डालसमानप्रायश्चित्तमेव स्यादिति स्मार्तभट्टाचार्यसमाधानम् । तथा च पूर्वोक्तेषु प्रमाणीभूतेषु वचनेषु प्रायशः चण्डालपदसत्त्वेपि अन्त्यजानामपि ग्रहणं बोध्यम् । अन्ते भवा अन्त्या इति व्युत्पत्त्या अन्त्यशब्दस्य म्लेच्छादिबोधकत्वं याज्ञवल्क्यदीपकलिकायां समर्थितमतः चाण्डालान्त्यजातिसाम्येन म्लेच्छानामपि व्यवस्था ज्ञेया ।

(३६) उ०—म्लेच्छानामन्त्यजानां च "इन्दार" इति ख्यातवृहत्कूपविषये सार्वजनीनसभाप्रवेशविषये च तारतम्यं न रक्षणीयम् ।

स्मृतिः—

कूपे काष्ठे रणे यज्ञे नौकायां गजपृष्ठके ।

लोकयात्राविवाहेषु स्पर्शदोषो न विद्यते ॥

(१००) उ०—म्लेच्छानामन्त्यजानां च स्पर्शविषये सभाप्रवेशविषये च साधारणं पापम् । किन्तु कूपोदकग्रहणविषये देवालयप्रवेशनविषये च दोषो भवत्येव, "अन्त्यजैः खनिता कूपा" इत्यादिवचने अन्त्यजादिकर्तृकखानितकूपस्थितजलस्य अव्यवहार्यत्वे कूपोदकस्पर्शे कैमुतिकन्यायाद्दोषः स्वतः सिद्ध एव ।

(१०१) उ०—वर्तमानकाले येऽस्पृश्याः वर्तन्ते तेषु बहवः जात्यैवास्पृश्याः बहवश्च कर्मणा समाजशास्त्या अस्पृश्यतां गताः । सत्कर्मानुष्ठानेन नीचवर्णस्यापि उत्कृष्टवर्णप्राप्तिः शास्त्रसम्मता । शास्त्रे तत्र प्रमाणानि उदाहरणरूपेण बहूनि सन्ति । म्लेच्छान्त्यजयोस्तारतम्यमवश्यं रक्षणीयमेव, हिन्दुधर्मविश्वासाविश्वासयोस्तारतम्यप्रयोजकयोरनिवार्यत्वात् । स्पर्शविषये सभाप्रवेशविषये कूपोदकग्रहणविषये च सर्वेषां समानाधिकारप्रदानमेवोचितम् । अनादिकालप्रसिद्धसिद्धमहापुरुषप्रतिष्ठितदेवालयेषु सर्वेषामेव प्रवेशाधिकारः । पारिवारिकदेवमन्दिरेष्वपि मन्दिराधिकारिणामनुमत्या प्रवेशः सम्भवति ।

(१०२) उ०—म्लेच्छानामन्त्यजानां अन्येभ्यस्तारतम्यरक्षणं सर्वत्र योग्यमेव । तत्तारतम्यरक्षणप्रकारस्तु, म्लेच्छानामन्त्यजानां साक्षात्स्पर्शो निषिद्ध एव । परम्परास्पर्शस्तु चतुर्थपर्यन्तं निषिद्धः । बहुजनाकीर्णसभाप्रवेशे यात्रोत्सवादौ च स्पृश्यास्पृश्यविचाराभावात्तेषां स्पर्शो न दोषाय कल्पते । देवालयस्य बहिर्द्वारात् बहिःस्पर्शे न दोषः । बहिर्द्वारादभ्यन्तरप्रवेशस्तु निषिद्ध एव । श्रीश्रीपुरुषोत्तमधामविराजमानश्रीश्रीपुरुषोत्तमतोरणद्वारबहिर्भागे म्लेच्छादीनामवस्थानं तोरणद्वारावधितदभ्यन्तरगमनं तु निरवधि निषिद्धमिति । कूपोदकग्रहणे तु एकव्यक्तिप्रयत्नसाध्यैकाहोरात्रजलोत्तोलनवशान्निर्जलकूपे म्लेच्छान्त्यजाना

साक्षाज्जलग्रहणं निषिद्धम् । अशोध्यकूपे तु विशुद्धरज्जुद्वारा विशुद्धपात्रद्वारा जलाहरणं न दोषाय भवति, पुष्करिण्यादौ मृतजीवादिपतनमरणापवित्रीकृतजलादौ तथा दर्शनात् ।

(१०३) उ०—

दीर्घकाष्ठे शिलापृष्ठे नौकायां जाह्नवीतटे ।
महातीर्थे तु सम्प्राप्ते स्पर्शदोषो न विद्यते ॥

इति स्मृतिः ।

(१०५) उ०—कूपोदकग्रहणविषये तु,

चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥

इति पराशरवचनात् चण्डालभाण्डस्पृष्टकूपोदकपाने प्रायश्चित्तीयता, अन्येषां न तथेति वैशिष्ट्यम् ।

(१०७) उ०—चाण्डालादीनां जातितोऽस्पृश्यत्वम् । पतितादीनां ब्राह्मणादीनां तु कर्मतः. म्लेच्छानामन्त्यजानां च तीर्थादौ स्पर्शविषये तारतम्यं नास्ति । सभाप्रवेशविषये सहासनपरित्यागरूपं तारतम्यं अन्येभ्यो रक्षणीयम् । कूपोदकग्रहणविषये साधारणकूपादसाधारणकूपाद्वा म्लेच्छादिभिः स्वभाण्डेन न तोयमाहरणीयम् । अन्यैस्तु स्वभाण्डेनापि सलिलमाहर्तुं शक्यमित्येव तारतम्यम्,

चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।

इत्यादिपराशरवचनात् । "दासीकृतो बलान्म्लेच्छै"रित्यादिदेवलवचने म्लेच्छचाण्डालयोः साम्याभिधानात् पूर्ववचने चण्डालनिषेधे म्लेच्छस्यापि निषेधः । म्लेच्छानां सर्वधर्मराहित्येन कुत्रापि देवालये प्रवेशाधिकारो नास्ति अन्त्यजानां तु देवालयप्रवेशविषये तत्तद्देशानुसारेण व्यवस्था कर्तव्या ।

(१०८) उ०—जातितः कर्मतश्चास्पृश्यत्वम् । स्पर्शविषये म्लेच्छाना-मन्त्यजानां च अन्येभ्यस्तारतम्यरक्षणं योग्यम् । सभाप्रवेशविषये चतुर्हस्तपरिमितकूपोद्ग्रहणविषये च तारतम्यं नास्ति । पीठस्थानादन्यत्र देवालयप्रवेशविषये तारतम्यमस्त्येव ।

(१०९) उ०—जातिविशिष्टकर्मकृतमस्पृश्यत्वम् । म्लेच्छानामन्त्यजानां च स्पर्शविषये दोषोऽस्त्येव । तथाहि—

चण्डालेन यदा स्पृष्टं द्विजवर्णः कथञ्चन ।
अनभ्युक्ष्य पिबेत्तोयं प्रायश्चित्तं कथं भवेत् ॥
ब्राह्मणस्य त्रिरात्रं तु पञ्चगव्येन शुद्ध्यति ।
अहोरात्रं तु वैश्यस्य पञ्चगव्येन शुद्ध्यति ॥
क्षत्रियस्य द्विरात्रं तु पञ्चगव्येन शुद्ध्यति ।
चतुर्थस्य तु वर्णस्य प्रायश्चित्तं कथं भवेत् ॥
व्रतं नास्ति तपो नास्ति होमो नैव च विद्यते ।
पञ्चगव्यं न दातव्यं तस्य मन्त्रविवर्जनात् ॥
ख्यापयित्वा द्विजानां तु शूद्रो दानेन शुद्ध्यति ।

इत्यापस्तम्बवचनात्,

चर्मको रजको वैण्यो धीवरो नटकस्तथा ॥
एतान् स्पृष्ट्वा द्विजो मोहात् आचामेत्प्रयतोऽपि सन् ।
एतैः स्पृष्टो द्विजो नित्यमेकरात्रं पयः पिबेत् ॥
एकशाखां समारूढश्चाण्डालो वा रजस्वला ।
ब्राह्मणश्च समं तत्र सवासाः स्नानमाचरेत् ॥

इत्यादिवचनेभ्यः,

रजकं चर्मकारं च नटं धीवरमेव च ।
बुरुडं च तथा स्पृष्ट्वा शुद्ध्येदाचमनाद् द्विजः ॥

इत्यङ्गिरोवचनाच्च दोषश्रवणात् ।

तथा चाण्डालसंकरे स्वभवनदहनं पवनं दारवाणां तक्षणं शङ्ख-

शुक्तिसुवर्णरजतचैलानामद्भिः प्रक्षालेन कांस्यताम्राणामाकरे शुद्धिः सौवीरपयोदधितक्राणां परित्यागः, शेषरसद्रवसद्रव्यरक्षणं गोमूत्रयावकाहारो मासं क्षपयेत्। बालस्त्रीवृद्धानामर्धप्रायश्चित्तं चीर्णे प्रायश्चित्ते ब्राह्मणभोजनं गोशतं च प्रदद्यात् अभावे सर्वस्वम्”।

अन्त्यजातिरविज्ञातो निवसेद्यस्य वेश्मनि।
तस्य ज्ञात्वा तु कालेन कुर्यात्तस्य विशोधनम्॥
प्राजापत्यं तु शूद्रस्य शेषं तदनुसारतः।
तेषामपि च यैर्भुक्तं कृच्छ्रार्धं तु विधीयते॥
तेषामपि च यैर्भुक्तं कृच्छ्रपादो विधीयते।
एकशाखां समारूढश्चाण्डालादिर्यदा भवेत्॥
ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात्।
एकवृक्षसमारूढौ चाण्डालब्राह्मणौ यदि।
फलं भक्षयतस्तत्र प्रायश्चित्तं कथं भवेत्।
ब्राह्मणानामनुज्ञाप्य सवासा स्नानमाचरेत्॥
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति।
एकशाखां समारूढः फलान्यश्नात्यसौ यदि॥
प्रायश्चित्तं त्रिरात्रं स्यात् पञ्चगव्यविशोधनम्।

इत्यादिभ्यो वचनेभ्यः। सभाप्रवेशोऽपि न योग्यः,

सभायां स्पर्शने चैव म्लेच्छेन सह संविशेत्।
कुर्यात्स्नानं सचैलं तु दिनमेकमभोजनम्॥

इति देवलवचनात्। कूपोदकविषये तु,

कूपैकपानदुष्टानां तथा संसर्गदूषणे।
उपवासेन शुद्धिः स्यात् पञ्चगव्येन शुद्ध्यति।

देवालयप्रवेशेऽपि,

शालग्रामं न स्पृशेत्तु हीनवर्णो वसुन्धरे।

इत्यादिवचनानि प्रमाणानि ।

(११०) उ०—अस्पृश्यत्वं क्वचिज्जातितः कर्मतश्च, चाण्डालान्त्यजयोः स्पर्शदोषो वर्तत एव कूपोदकग्रहणविषये आपस्तम्बः;

कूपो मूत्रपरीषेण यवनेनापि दूषितः ।

इत्यादि । संवर्तः—

पञ्चगव्यं मृदा पूतं कूपे तच्छोधनं मतम् ।
अन्त्यजैः स्वीकृते तीर्थे तडागेषु नदीषु च ॥
शुद्ध्यते पञ्चगव्येन पीत्वा तोयमकामतः ।
जलाशयेष्वथाल्पेषु स्थावरेषु महीतले ॥
कूपवत्कथिता शुद्धिर्महत्सु तु न दूषणम् ।

इत्यादिवचनैर्वर्णबाह्यमतबाह्यम्लेच्छान्त्यजादीनां स्पर्शः कूपे निषिद्ध एवावगम्यते ।

(११३) उ०—संन्यासिव्यतिरिक्तानां बुद्ध्या अस्पृश्यता जातिकृता वर्तत एव—

युद्धे भूपतिदर्शने भयवने घाते च पाते हठे
जलौघप्रतरणे शत्रौघ उच्चाटने ।
सिंहद्रव्यशरे गजे च महिषे चाश्वे मृगे धार्यते ।
एतदतिरिक्तस्थले अस्पृश्यदोषो ज्ञातव्यः ।

देवताया अभक्तानां देवालये प्रवेशो न योग्यः, कूपोदकग्रहणादि-विषये तु तारतम्यरक्षणं योग्यमेव ।

(११५) उ०—अस्पृश्यानामस्पृश्यत्वं जातित एव, म्लेच्छानामन्त्यजानां च तत्तद्देशीयशिष्टाचारानुरोधेन तारतम्यरक्षणं योग्यम् ।

(११७) उ०—मनुष्याणामन्योन्यास्पृश्यत्वमौपाधिकमेव न तु आगम-सिद्धम् । यथा वा अस्पृश्यत्वमशुद्ध्यादिना सम्भाव्यते । अशु-द्धिश्च मालिन्यदौर्गन्ध्यादिना जायते, मालिन्यादिकं धातुक्षोभव-

शाद् देहे संक्रामति, क्षोभश्च जनिमृतिश्रवणदूराध्वगमक्षौररोन-गपतनादिक्रियाविशेषेणोद्भवति। स्नानशौचादना सद्विचारेण सदसद्विवेकेन च बाह्याभ्यन्तरशुद्धिश्चर्जायते इति गारुडवचनम्। तस्माद् देहाऽपवित्रत्वं कादाचित्कमेव इति द्योत्यते। धर्म-शास्त्रकारैर्म्लेच्छचाण्डालपुक्सा इति जातिकल्पनेन व्यव-हृतेऽपि तज्जातिकल्पनं मनुवचनेन खण्डितं भवति।

ब्राह्मणाः क्षत्रियाः वैश्यास्त्रयो वर्णा द्विजातयः।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः॥

इति। अतश्चाण्डालत्वादिकं वृत्त्यैव जायते, न तु जात्या। तादृशो ब्राह्मणोपि चण्डालतामियात्।
तदुक्तं मनुसंहितायाम्,

न जातिः पूज्यते राजन् गुणाः कल्याणदायकाः।
चाण्डालमपि सद्वृत्तं तं देवा ब्राह्मणं विदुः॥

शूद्राणां तु,

भविष्यच्छूद्रयोन्यां तु तपश्चर्या कलौ युगे।

इति रामायणोक्त्या इदानीं ब्राह्मणसमानकर्माधिकारसिद्धिः।

(११९) उ०—अन्त्यजानां जातितोऽस्पृश्यत्वं पतितानां कर्मतः। तेषां च सभाप्रवेशे "इन्दारा"ख्यकूपे पीठस्थानदेवालयेषु प्रवेशे महोत्सवादिषु स्पर्शे चाधिकारः, नान्यत्र।

(१२०) उ०—अस्पृश्यानां मन्दिरप्रवेशोऽनधिकार एव। अत एव तेषां मन्दिरप्रवेशे वृद्धहारीतेन मन्दिरसंस्कारो विहितः। तथाहि,

प्रासाददेवहर्म्याणां चाण्डालपतितादिषु।
अन्तः प्रविष्टेषु तथा शुद्धिः स्यात्केन कर्मणा॥
गोभिः सङ्क्रमणं कृत्वा गोमूत्रेणैव लेपयेत्॥ ६। ४०६॥
पुण्याहं वाचयित्वा तु तत्तोर्दैर्दर्भसंयुतैः॥
सम्प्रोक्ष्य सर्वतः पश्चाद्देवं समभिषेचयेत्॥ ६। ४१०॥

पञ्चामृतैः पञ्चगव्यैः स्नापयित्वाथ वैष्णवः ।
प्रत्यृचं पावमान्यैश्च वैष्णवैश्चाभिषेचयेत् ॥ ३।४११ ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ।
चतुर्भिर्वैष्णवैर्मन्त्रैः स्नाप्य पुष्पाञ्जलिं तथा ॥ ३।४१२ ।
श्रीसूक्तेन तदा दिव्यैर्दद्यान्नीराजनां द्विजः । इति ।

यत्तु केचित्, धूमयानादिषु चाण्डालादिस्पर्शस्य सर्वैः क्रियमाणत्वादन्यत्रापि तत्स्पर्शो न दोषावह इति, ते त्वित्थं वाच्याः, पुरीषमुत्सृज्य शौचं कुर्वद्भिर्भवद्भिः पुरीषस्पर्शोऽवश्यं क्रियत इति भोजनकालेपि क्रियतामिति । वस्तुतस्तु अवर्जनीयस्थलेषु स्पर्शे दोष एव नास्ति, "देवयात्राविवाहेष्वि" त्याद्यत्रिसंहितावचनात् । अत एव "पथि शूद्रवदाचरे" दिति सामान्येनोपादानम् ।

(१२१) उ०—जातितः कर्मतश्चास्पृश्यत्वमुत्पद्यते । सुशिक्षयाऽन्तःशुद्धौ सत्यामपि वहिर्व्यवहारेऽस्पृश्यतावर्जनं तु समाजघातकमेव । यवनानां देवालयाः कूपाश्च पृथक्कर्तव्याः म्लेच्छानां यावानधिकारो हिन्दुभिः प्रदीयते तावांस्तु अन्त्यजेभ्यः अवश्यं देयः । अन्त्यजानां परधर्मप्रवेशे कारणं तु मोहम्मदादिगृहेषु जीविकालाभ एव । नान्यत्किमपि ।

(१२३, १२४) उ०—प्राचीनपक्षः ।

(१२५, १२६, १२७) उ०—चाण्डालादिस्पृष्टकूपोदकग्रहणविषये हारीतः,

अमेध्यशवचाण्डालमद्यमांसादिदूषितात् ।
कूपादुद्धृत्य कलशैः सहस्रं रेचयेज्जलम् ॥
निक्षिप्य पञ्च गव्यानि वारुणैरपि मन्त्रयेत् ।

एवमन्यस्मिन्नपि चाण्डालादिदूषिते हारीतः,

तडागस्यापि शुद्ध्यर्थं गोभिः संक्रामयेज्जलम् ।
धान्ये तु क्षालनाच्छुद्धिर्बाहुल्यं मोक्षणादपि ॥
रसानां तु परित्यागश्चाण्डालादिप्रदूषणात् ।

एवं देवालयादिप्रवेशविषयेऽपि देवलः,

प्रासाददेवहर्म्याणां चाण्डालपतितादिषु ।
अन्तः प्रविष्टेषु तथा शुद्धिः स्यात् केन कर्मणा ॥
गोभिः संक्रमणं कृत्वा गोमूत्रेण च लेपयेत् ।
पुण्याहं वाचयित्वा तु तत्तोयैर्दर्भसंयुतैः ॥
सम्प्रोक्ष्य सर्वतः पश्चाद्देवं समभिषेचयेत् ॥

इत्यादि । तथा चास्त्येव तारतम्यम् ।

(१२८) उ०—म्लेच्छजातीयानां वेश्यानां तत्सहायानां च देवालये राजसभादिषु च नृत्यगीतादिप्रसंगेन चिरकालाद्रूढिरिति तेषां तत्तत्कार्येषु स्पृश्यत्वमेव । अन्त्यजानां तु न तथा । जलाशयास्तु उभयोरपि पृथक् करणीयाः ।

(१२९) उ०—म्लेच्छापेक्षायाऽन्त्यजानामुत्कर्ष एव योग्यः ।

(१३४) उ०—प्राचीनपक्षः ।

(१३५) उ०—चाण्डालादिजातिर्जन्मसिद्धैव । तदस्पृश्यत्वमपि शास्त्रानुमतमेव । वेदव्यासः—

वराटो मेदचण्डालौ दासश्वपचकोलिकाः ।
एतेऽन्त्यजाः समाख्याता ये चान्ये च गवाशनाः ॥
एषां सम्भाषणे स्नानं दर्शनादर्कवीक्षणम् । इति ।

(१३६, १३७) उ०—अस्पृश्यस्पर्शादि दोषायैव ।

(१४२) उ०—म्लेच्छान्त्यजयोः सभाप्रवेशचर्चैवास्मत्प्रान्ते नास्ति ।

(१४३) उ०—अस्पृश्यानामस्पृश्यत्वे प्रमाणं पञ्चतन्त्रमेव,

श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्तिताः ।
खरोष्ट्रौ तु विशेषेण तस्मादेतान् विवर्जयेत् ॥ इति ।

(१४४) उ०—प्राचीनपक्षः ।

(१४५) उ०—महास्नानादिकं स्थानशुद्धिश्च वैखानसादिशास्त्रसम्मत्या कर्त्तव्ये । कार्यार्थिनां राजसभाप्रवेशादावप्यस्ति तारतम्यं तेषां

स्थानविशेषनिर्देशात् । व्यसनादौ स्पृष्टास्पृष्टिदोषापवाद उक्तः । स च दोषः क्रियाव्यतिहारप्रयुक्तः, तेन सम्मर्दः सूचितः, न त्वसम्मर्देऽस्यैच्छिकस्पर्शापवादोऽस्ति । कूपोदकविषये पराशर आह—"चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् । गोमूत्रयावकाहारास्त्रिरात्राच्छुद्धिमाप्नुयात्" । म्लेच्छान्त्यजानां स्पर्शादावन्येभ्यस्तारतम्यरक्षणं न वेत्यत्र प्रमाणानि प्रदर्श्यन्ते,— "कृतपञ्चमहापातकैः चण्डालाद्यैश्चालये प्रविष्टे तत्स्पृष्टनिवेदने च सप्ताहं महाशान्ति हुत्वा देवं कलशैः संस्नाप्य प्रतिष्ठां कारये" दिति मरीचिः । चण्डालादिप्रवेशे गृहाशुद्धिमाह पराशरः— "गृहस्याभ्यन्तरं गच्छेच्चाण्डालो यदि कस्यचित् । तमागाराद् विनिर्वास्य मृद्भाण्डं तु विसर्जयेत् । गोमयेन तु संमिश्रैर्जलैः प्रोक्षेद् गृहं तथे"ति । अशुद्धगृहे प्रतिष्ठितदेवतासत्त्वे तत्र देवासान्निध्यमुक्तम् आदित्यपुराणे—"खण्डिते स्फुटिते दग्धे भ्रष्टे स्थानविवर्जिते । यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु । अन्यमन्त्रार्चिते चैव अस्पृश्यस्पर्शदूषिते । दशस्वेतेषु नो चक्रुः सन्निधानं दिवौकसः ।" इत्यादि । अत्र दुष्टभूमिस्थितेरेव देवतास्वरूपप्रच्युतिरूपपातित्यम्, अर्थान्तराभ्युपगमे "भ्रष्टे स्थानविवर्जिते" इत्येताभ्यां पौनरुक्त्यं स्यात् । रजकाद्यन्त्यजानां चण्डालाद्यपेक्षयोत्कर्षेण चाण्डालजनिताशुद्धिमपेक्ष्य अद्धमात्रा शुद्धिः कल्प्यते । तादृशशुद्धिविशेषाभिधानात् । तथाह पराशरः—"रजकी चर्मकारी च लुब्धकी वेणुजीविनी । चातुर्वर्ण्यस्य च गृहे त्वज्ञाता यदि तिष्ठति । ज्ञात्वा तु निष्कृतिं कुर्यात् पूर्वोक्तस्यार्धमेव च ।

(१४६) उ०—अस्पृश्यत्वं पतितानामाशौचिनां च कर्मतः सम्बन्धविशेषादिना च । अन्त्यजानामन्यदृष्ट्या तु जातित एव । तत्रान्त्यजानां चण्डालानां "बहिर्ग्रामात् प्रतिश्रयः" "चण्डाल कुटीराणि पूर्वस्यां क्रोशमात्रे स्युः"

अभोज्यान्नः स्वयं शूद्रैरस्पृश्योऽपि भवेत् पुनः ।
ग्रामादिष्वपराह्णे तु प्रविशेद्दण्डमर्हति ॥
ग्रामाच्चैव तथा दण्डपञ्चविंशतिमात्रके ।
दूरे चैव स्थितं प्रोक्तं ब्राह्मणाच्च विशेषतः ॥

"शूद्रात् ब्राह्मण्यां चण्डालस्सीसकालायसाभरणो वध्रीवद्धकण्ठः कक्षे झल्लरीयुक्तो यतस्ततः संचरन् सर्वकर्मबहिष्कृतः पूर्वाह्णे ग्रामादौ वीथ्यामन्यत्रापि मलान्यपकृष्य बहिरपोहति । ग्रामाद्बहिर्दूरे स्वजातीयैर्निवसेत् मध्याह्नात् परं ग्रामे न विशति, प्रविशेच्चेत् राज्ञा वध्यः, अन्यथा भ्रूणहत्यामवाप्नोति" इति मनुयमकामिकागमवैखानसगृह्यसूत्रवचनैर्ग्रामबाह्यत्वं यथावगम्यते, न तथा मोहम्मदादीनां तक्षायस्कारादीनां वा ग्रामबाह्यत्वमवगम्यते इति जातितोऽस्पृश्यानामपि म्लेच्छानां ग्रामप्रवेशविषये भाषणादिविषये वा चण्डालादिभ्यस्तारतम्यमवश्यं रक्षणीयं गम्यते । अत एव "शूद्राणामनिरवसितानाम्" इति सूत्रे "शकयवनम्" "तक्षायस्कारम्" इत्युदाहरणं "मृतपचण्डाला" इति च प्रत्युदाहरणं सङ्गच्छते ।

देवालयप्रवेशे अस्पृश्यानां सर्वेषां द्वितीयावरणपर्यन्तं प्रवेशस्य निषिद्धत्वेऽपि म्लेच्छानां चतुर्थप्राकारेऽन्त्यजानां पञ्चमप्राकारे आलयाद् बहिरवस्थाय दर्शन एवाधिकारस्य कामिकागमादिषु वर्णनात् तारतम्यरक्षणं योग्यमेव ।

तदिदं कामिकागमगतवचनम्—

"म्लेच्छः पाषण्डकश्चैव वेदबाह्यश्च नास्तिकः ।
एतान्यपि च सर्वाणि मर्यादौ च प्रदर्शयेत् ।
अन्येषां चण्डालकादीनां महामर्या प्रदर्शयेत् ॥

इति । मर्या नाम बहिर्देशादनन्तर्ध्वजबाह्यस्थानम् । महामर्या नामालयादायन्तं बहिः स्थानमित्यागमनिर्णयः । उत्सवादौ तु सर्व-

षां देवालयात् बहिरवस्थाय दर्शनेऽधिकारस्तु वर्तत एव। सर्वथा तु वास्तुपरावधिबाह्यदेशस्यैव महामर्यात्वात् तत्रावस्थाय दर्शनं योग्यमेव। वास्तुनिर्णयस्तूत्सवारम्भे वास्तुशान्तिसंस्कारो यावत्पर्यन्तं भवति तावत्पर्यन्तमेवेति सर्व एवेदं विजानन्ति। कूपोदकग्रहणविषये तु—

चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपोदकं नरः।

इत्यादिवचनात् स्पष्टमेव कूपव्यवहारो निषिद्ध इति गम्यते।

अन्त्यजैरपि कृते कूपे सेतौ वाप्यादिके तथा।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते॥

इति वचनं तु अन्त्यजानां खनितृत्वमात्रेण कूपशौचानन्तरं स्वप्रोक्षणाद्यनन्तरमपि नाशुचित्वमित्येवं परमेव, न तु सर्वथा एककूपोदकव्यवहारस्यापि साधुतापरम्।

पुष्करिण्यादौ तु घट्टविशेषस्थापनेन तत्रापि जानूर्ध्वजलस्यैव तद्व्यवहार्यत्वव्यवस्थापनेन व्यवहारो न दोषाय।

तदुक्तम्—म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा।
जानूर्ध्वं तु शुचि ज्ञेयमधस्तादशुचि स्मृतम्॥ इति।

जानुपर्यन्तजलस्य स्पृष्टांशमात्रस्यैवाशुचित्वं, न तु सर्वांशेनेति—

तत्राक्षोभ्यतटाकानि नदीवाप्यः सरांसि च।
कश्मलाशुचियुक्तानि तीर्थतः परिवर्जयेत्॥

इति देवलवचनानुसारेण वीरमित्रोदये—"तीर्थतः" इत्यस्य "तीर्थत इति सप्तम्यां तसिः। तेन घट्ट इत्यर्थ" इति विवरणपूर्वकं विवेचितम्। तथा च कूपोदकेनैकव्यवहारो न कथमपि सम्भवति म्लेच्छादिभिः साकमपि।

इदम् "चण्डालभाण्डसंस्पृष्टं पीत्वा कूपोदकम्" इत्यत्र चण्डालपदं बहुषु स्थलेषु म्लेच्छानां साहचर्यात् म्लेच्छानामप्युपलक्षणमिति मत्वोपवर्णितम्। तदुपलक्षणत्वं तु योग्यं वा न वेति विचारसभानिर्णयाधीनमेवास्माभिरपि योग्यं मन्यते।

अत्र पुष्कारिणीह्रदसरआदिपदं कूपाधिकपरिमाणह्रदादिपरम्, तदनधिकपरिमाणह्रदादौ तु—

जलाशयेष्वथाल्पेषु स्थावरेषु महीतले।
कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम्॥

इति विष्णुस्मरणात् कूपह्रदव्यवहार्यतैव युक्तेति गम्यते। अरण्यादिनिर्जनप्रदेशगतोऽज्ञातचाण्डालादिस्पर्शः कूपस्त्वसंवृतः पुष्करिण्यादिवददोषायैवान्त्यजस्पर्शेऽपीति वीरमित्रोदये,

नद्यः कूपतटाकानि सरांसि सरितस्तथा।
असंवृतान्यदोषाणि मनुः स्वायंभुवोऽब्रवीत्॥

इति वचनेन बोध्यते।

स्पर्शविषये तु "स्पृष्टास्पृष्टिर्न विद्यते" इति कर्मव्यतीहारे बहुव्रीहिरिति विचक्षणेनान्त्यजानां तदीययाजकानां च दानप्रतिग्रहादिपुरुषद्वयसाध्यकर्मण्यदोषताबोधनमेव, न तु सर्वथाऽदोषत्वप्रतिपादनपरमिति नन्दपण्डितादिभिर्स्मार्तभट्टाचार्यादिभिश्च विवेचितम्। तथा च स्पर्शदोषाभावपराणां वचनानां विशिष्टदोषत्वनिरास एव तात्पर्यम्, न तु सर्वथाऽदोषत्वप्रतिपादने।

संकटे विषमे चैव दुर्गे चैव विशेषतः।
हट्टपत्तनमार्गे च यथासम्भवमिष्यते॥
तृणकाष्ठादिघातेन कुड्येनान्तरिते तथा।
गोबालव्यजने चैव स्नानं तत्र न विद्यते॥

इति संवर्तवचनमुपपद्यते। तथा च—

रजकश्चर्मकारश्च नटो बुरुड एव च।

इति वचनेन "नाभेरूर्ध्वं तु तत्स्पर्शे प्रक्षाल्य शुध्यति" इतिप्रक्षालनमात्रेण शुध्यभिधानमपि संकरादिपरमित्यवगम्यते। वस्तुतस्तु—"नाभेरधस्तात् प्रबाहुषु कायिकैर्मलैः श्वादिभिश्चापहतस्तदङ्गं प्रक्षाल्य शुद्ध्यति, अन्यत्रोपहतस्तदङ्गं प्रक्षाल्य

स्नानेने" ति विष्णुस्मृत्येकवाक्यतया स्नानसमुच्चयपक्ष एवात्र योग्यः। सर्वथा तु आपद्यपि अन्त्यजस्पर्शस्य सर्वदाऽदोषत्वं न कस्यापि सम्मतम्। परमार्थतस्तु माधवाचार्यैर्नन्दपण्डितैश्चाशौचादनैमित्तिकाशुचित्वाभावबोधन एव स्पर्शादोषाभावपराणां वचनानां तात्पर्यम्, न तु नित्याशुचिस्पर्शादोषताबोधन इति न किञ्चिदवर्ण्यम्।

सभाप्रवेशविषये तु—सभागृहभेदादिकल्पनेनैव, न त्वेकच्छायासम्बन्धेनापि, तत्रापि स्पृश्यानां सभायामस्पृश्यानामेवाधिकारो नास्पृश्यानां सभायां स्पृश्यानामित्यपरार्के स्पष्टं विवेचितम्। तदुक्तमपरार्के प्रचेताः—

चण्डालगृहप्रवेशने चण्डालेनैकगृहे वृक्षच्छायायां वा सहावस्थाने चण्डाल एव स्यात् ब्राह्मणानुशिष्टं षाण्मासिकं प्रायश्चित्तं कृच्छ्रं वेति।

पराशरेणाप्युक्तम्—

चण्डालेन समं सुप्त्वा त्रिरात्रेण विशुद्ध्यति।
चण्डालैकमयीं गत्वा सावित्रीस्मरणाच्छुचिः॥ इति॥

अत्रापि चण्डालपदमेव दृश्यते, न म्लेच्छपदमिति सभादौ पृथक्स्थानकल्पनेन ग्रामाबाह्यानां सभाप्रवेशो न दोषायेति सामान्यतोऽवगम्यते। परं तु—

सभायां स्पर्शने चैव म्लेच्छेन सह संविशेत्।

इति देवलवचनात् सभायां म्लेच्छानामपि प्रवेशे स्नानं कर्तव्यमित्येवावगम्यते। तथा च सभाप्रवेशविषये न तारतम्यरक्षणं योग्यमिति निष्कर्षः। शुद्धयवनविषय एवेयं व्यवस्था न प्रविष्टयवनादिविषये। अयं शुद्धोऽयं प्रविष्ट इति निर्णये तु तत्तत्समाज एवाधिकारी, यदा प्रविष्ट इति निर्णयस्तदा तत्पूर्वतनजातिधर्म एव परिपालनीयः। समाजधर्मसंरक्षणदृष्ट्या

तु धार्मिकेषु व्यवहारेषु म्लेच्छानां कर्मतोऽतिनीचत्वभावनया सनातनधर्मसंस्थासु गृहभेदादिकल्पनेनापि प्रवेशनिषेधस्तु नितरामावश्यक इति मन्यते ।

(१४८) उ०—म्लेच्छास्तु जात्या चाण्डाला एव, तथा चामरसिंहः,

चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः ।
निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः ॥

भेदाः किरातशवरपुलिन्दा म्लेच्छजातयः ॥ इति ।

तद्व्याख्याने,

गोमांसभक्षको यस्तु लोकबाह्यं च भाषते ।
सर्वाचारविहीनोऽसौ म्लेच्छ इत्यभिधीयते ॥

(१४९) उ०—प्राचीनपक्षः । म्लेच्छानां तु कूपोदकग्रहणं तत्सभाप्रवेशनं चानादिसिद्धं वर्तते ।

(१५१) उ०—षोडशविधा ग्रामचाण्डालाः ।

रजकश्चर्मकारश्च नटो वुरुड एव च ।
कैवर्तम्लेच्छभिल्लाश्च स्वर्णकारश्च सौचिकः ॥
तक्षकस्तिलयन्त्री च सूनुश्चक्री तथा ध्वजी ।
नापितः कारुकश्चैव षोडशैते जघन्यजाः ॥

एते प्रतिलोमजाश्च सर्वेऽपि चण्डालपदवाच्या अस्पृश्याश्च । एतेषां सप्तमादियुगे जात्युत्कर्षप्राप्तिर्भवति । एवं च कूपोदकादिग्रहणविषये रजकनापितादिवद्ग्रामचाण्डाला अपि म्लेच्छा अनाद्याचारानुसारेण ग्राह्या एवेति ।

(१५२) उ०—प्राचीनपक्षः ।

(१५३) उ०—"तस्मादश्लीलनामंश्चित्रे । नावस्येन्न यजेत" इति तैत्तिरीयब्राह्मणभाष्ये सायणाचार्यैर्म्लेच्छभूयिष्ठस्थलेषु वासयागादि निषिद्धमिति प्रतिपादितम् । देवालयप्रवेशविषये नीलकण्ठाचार्यविरचितकारिकावृत्तौ,

वैश्यानामपि शूद्राणां भद्रमण्डपसेवनम् ।
इतरेषां तु वर्णानां गोपुरं तु विधीयते ॥
चण्डालपतितादीनां गोपुराद्बहिरेव हि ॥

इति । कारणागमे प्रायश्चित्तकाण्डे,

रुद्रस्य वाथ विष्णोर्वा प्राकाराभ्यन्तरे यदि ।
रजस्वला वधूश्चैव चण्डालश्च समागतः ॥
ततो ग्रामोत्सवे हस्तशताभ्यन्तरतो यदि ।
तद्देवस्य कलाहानिः राज्ञो मरणमेव च ॥
तद्ग्रामस्य क्षयः प्रोक्तः सस्यानां नाशनं ध्रुवम् ॥ इति ॥

(१५३) उ०—देवलः,

चण्डालश्च तुरुष्कश्च द्वावेतौ तुल्यपापिनौ ।

"चण्डालतुरुष्कयोरीषद्भेदो नास्ति" इति हेमाद्रिः प्रायश्चित्त-प्रकरणे ।

(१५४, १५५, १५७, १५८, १५९) उ०—प्राचीनपक्षः ।

(१६०) उ०—याज्ञवल्क्यः,

चाण्डालं पुल्कसं म्लेच्छं भिल्लं पारसिकादिकान् ।
महापातकिनश्चैव स्पृष्ट्वा स्नायात्सचैलकः ॥

पारसिका यवनादय इति । आपस्तम्बः,

सर्वेषामन्त्यजातीनां स्पर्शे त्वाचमनं विदुः ।
येषां तु ब्राह्मणो नास्ति तेषां स्नानं विधीयते ॥

(१६१, १६२, १६३, १६४, १६५) उ०—प्राचीनपक्षः ।

(१६६) उ०—"तस्मान्न जनमियान्नान्तमिया" दिति श्रुतितद्भाष्यवार्तिकानि म्लेच्छान्त्यजयोरस्पृश्यत्वे प्रमाणम् ।

(१६८, १६९, १७०, १७१) उ०—प्राचीनपक्षः ।

---

चतुर्थभागस्य—

# भूमिका ।

—❀—

भागवतधर्मदीक्षया जातिपरिवर्तनं न सम्भवति, किन्तु भाव-परिवर्तनं भवतीति,

अतो जातेर्निकृष्टायाः सर्वस्या वा विनाशनात् ।
साजात्यं विष्णुभक्तानामिति मन्दमिदं वचः ॥
वैष्णवत्वेन मान्यत्वं समानं मुनिसम्मतम् ।
जात्यादिध्वंसतः साम्यं मुक्तिकाले भविष्यति ॥

इति कवितार्किकसिंहश्रीवेङ्कटनाथवेदान्तदेशिकवचनेन स्पष्ट-मेवावगम्यते । नात्र प्रायेण बहूनां विप्रतिपत्तिः, यत् भगवद्भजने भागवतमन्त्रग्रहणे वा सर्वेषामधिकार इति । चैतन्यसिद्धान्तेऽपि श्रीरूपगोस्वामिचरणैः,

दुर्जातिरेव सवनायोग्यत्वे कारणं मतम् ।
दुर्जात्यारम्भकं पापं यत् स्यात् प्रारब्धमेव तत् ॥

इति "श्वादोऽपि सद्यः सवनाय कल्पते" इत्येतच्छ्लोकव्या-ख्यानप्रसङ्गेनायमेव पक्षो व्यवस्थापित इति ( १५१, १५२ ) प्रबन्धकारैर्व्यवस्थापितम् ।

( ४३ ) नोयाखालीसंस्कृतविद्यालयपण्डिताः, (५१) श्रीदुर्गासुन्दर भट्टा-चार्याः (५२) श्रीसीतानाथ विद्याभूषणाः, (५८) पूर्वस्थलीब्राह्मण-महासम्मेलनोपसमितिपण्डिताः (८८) श्रीरामलालतर्कतीर्थाश्च परं मन्यन्ते, न म्लेच्छानामपि भागवतदीक्षायामधिकार इति ।

( १२१ ) प्रबन्धकाराः ( ११६ ) प्रबन्धकाराश्च जातिपरिवर्तनमपि भागवतधर्मदीक्षया भवतीति मन्यन्ते ।

(८०) चट्टग्रामधर्ममण्डलीपण्डितसभा तु चैतन्योक्तवैष्णवधर्मेण जातिपङ्क्तिनियमादिकं न सम्भवतीति मन्यते ।

(६५) श्रीदेवुलवाडचतुष्पाठी पण्डितास्तु यदि भागवतदीक्षा चैतन्योक्तधर्म उच्यते, तदा न जात्युत्कर्षः, किन्तु जातिनाश एवेति वदन्ति ।

सर्वथा तु बहवो मतभेदाश्चैतन्यसम्प्रदायानुसारेणापि प्रकृते विषये वर्तन्त इति ज्ञायते ।

(१५३) घण्डिकोट सुब्रह्मण्यशास्त्रिणस्तु –

कलौ ब्राह्मणता वीर्यात् तपश्चर्यादिना न हि ।
शुद्धं त्वशुद्धतामेत्य शोधनाच्छुध्यते पुनः ॥
यथा भस्मादिसंसर्गादशुद्धं तैजसं शुचि ।
शुनं न शुद्धिमाप्नोति गङ्गाम्भःप्लावनादपि ।

इति कौशिकसंहितावचनानुसारेण जातिपरिवृत्तिरस्मिन्नेव जन्मनि कथमपि न भवतीति प्रतिपादयन्ति ।

भागवतधर्मदीक्षायां सर्वासां जातीनां समानोऽधिकार इत्येकं मतम् । अपरं तु द्विजानां वैदिकदीक्षायां, शूद्राणां तान्त्रिकदीक्षायां, प्रतिलोमान्त्यजादीनां लौकिकभाषाबद्धतत्तद्देवताबोधकनाममात्रोच्चारणेऽधिकार इति ।

तत्र प्रथममतावलम्बिनो मान्यपण्डितश्रीमदनमोहनमालवीयादयः । द्वितीयमतावलम्बिनस्तु घण्डिकोटसुब्रह्मण्यशास्त्रिणः, महामहोपाध्याय रायडुतातसुब्रायशास्त्रिणोऽन्ये च बहवो विजयनगरपण्डिताश्च । एतैर्हि—

शुचिव्रततमाः शूद्रा धार्मिका द्विजसेवकाः ।
स्त्रियः पतिव्रताश्चान्ये प्रतिलोमानुलोमजाः ॥
लोकाश्चण्डालपर्यन्तं सर्वेऽप्यत्राधिकारिणः ।
मन्त्रोऽयमुपदेष्टव्यो ब्राह्मणाद्यनुरूपतः ॥

श्रुतिर्ब्रह्माह षड्वर्णं स्मृतिर्वर्णद्वयात्मकम् ।
षड्वर्णं ब्राह्मणादीनां त्रयाणां, यद्द्विवर्णकम् ॥
तदन्येषां देशिकेन वक्तव्यं तारकं परम् ॥

इत्यगस्त्यसंहितावचनानि स्वमतोपष्टम्भनार्थमुपक्षिप्तानि ।

(७४) श्रीकालीचन्द्रस्मृतितीर्थास्तु—

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा शुचयोऽमलाः ।
तेषां मन्त्राः प्रदेया वै न तु सङ्कीर्णधर्मिणाम् ॥
भाषाख्या लौकिका मन्त्राः प्रपत्त्यर्थविभावनाः ।
सर्वेभ्यः प्रतिलोमेभ्यो देयाः कामं द्विजातिभिः ॥

इति वचनेन लौकिकभाषाबद्धमन्त्रेष्वेव प्रतिलोमानामधिकार इति वदन्ति ।

सोमसुन्दरशास्त्रिणस्तु ओङ्कारसहितपञ्चाक्षरादौ शूद्राणां नाधिकारः, ओङ्काराराहित्येनैव पञ्चाक्षरत्वसिद्धिः, अयं चार्थः,

महापातकदावाग्निः सोऽयं मन्त्रः षडक्षरः ।
प्रणवेन विना मन्त्रः सोऽयं पञ्चाक्षरो मतः ॥

इति शुद्धिसर्वस्वसमुद्धृतब्रह्मोत्तरखण्डवाक्येनावगम्यत इति वदन्ति ।

अस्मिन् प्रसङ्गे श्रीकालीचन्द्रस्मृतितीर्थसमुद्धृतं नारदपाञ्चरात्रगतं—

मन्त्रं नियतमन्त्राणां यो हीनाय प्रयच्छति ।
स वै हीनगुरुर्निन्द्यस्तेन सार्धं पतत्यधः ॥

इति वचनं, (७८) श्रीरामगोपालस्मृतिरत्नमहोदयसमुद्धृतं वर्ज्यशिष्यवर्गनिरूपणपरं—

कलिदोषसमूहाङ्गं वेदक्रियाविवर्जितम् ।
आश्रमाचारहीनं चाशुद्धान्तःकरणोद्यतम् ॥

इति आश्रमाचारहीनचतुर्वर्णेतरस्य वर्ज्यमध्ये परिगणकं वचनमपि विचारकैः श्रीमद्भिः सदयं समालोच्येतेति विश्वसिमः ।

इतः परन्तु विदितवेदितव्याः श्रीमन्तः पण्डितप्रवरा एव प्रमाणमिति ।

कार्तिक कृष्ण ३ बुधवासरे
सं० १९८५

विधेयतमः
अनन्तकृष्णशास्त्री
सम्पादकः ।



॥ श्रीविश्वनाथः शरणम् ॥

अखिलभारतवर्षीय—

# ब्राह्मणमहासम्मेलने-

## समालोचनीयप्रश्नावलीनामुत्तराणि ।

———***———

(१०) दशमः प्रश्नः—भागवतधर्मदीक्षा जात्युत्कर्षप्रापिका न वा ?

(११) प्र०—यवनादिजातिः कर्मकृता, उत जन्मसिद्धा ?

(१२) प्र०—भागवतधर्मदीक्षायां जातिविशेषः प्रतिबन्धको वा न वा ?

(१, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९) उ०—भागवतधर्मदीक्षया ब्राह्मणत्वादिजात्यन्तरप्राप्तिर्न भवति, यवनादिजातिर्जन्मसिद्धैव, सर्वेषां जातिसामान्यानां भक्तावधिकार इति जयपुरसूर्यनारायणशास्त्रिणो मन्यन्ते । इदमेव मतं श्रीगणेशदत्तनैयायिकानां पालघाटवैदिकसमाजादितिरुवादिविद्यालयपण्डितानाम्, मायूरशिवरामकृष्णशास्त्रिणाम्, विजयनगरपण्डितानां च । इयान् विशेषः—यत् जात्यन्तरधर्मेषु जात्यन्तरस्य नाधिकारः । मो० सु० सुब्रह्मण्यादयोऽपीदमेव मन्यन्ते । तिरुपतिपण्डितास्तु सर्वत्र समाना अपि भागवतधर्मदीक्षया जात्युत्कर्षप्राप्तिरपि भवतीति केषांचन मतमित्यधिकं मन्यन्ते । मल्लादिरामकृष्णशास्त्रिप्रभृतयोऽपि समाना एव । अवैदिकदीक्षायामेव सर्वसाधारणोऽधिकारः, न तु वैदिकोंकारादिदीक्षायामित्यपि ते वदन्ति । इदमेव डोखावाडीयश्रीसीतारामशास्त्रिणां वेङ्कटरामशास्त्रिणामपि मतम् । वाणीशझा महोदयास्तु भागवतधर्मदीक्षया न सर्वोत्कर्षः, किन्तु जात्युत्कर्ष इति वदन्ति, अयमेतेषामाशय इति प्रतिभाति, यत् स्वजातौ तस्योत्कर्षो भव-

ति, न तूक्तद्धजात्यन्तरप्राप्तिरपि तेन विवक्षितेति अन्यत्समानम् । केषांचन कर्मतोऽपि हिन्दूनां यवनत्वं, केषांचन तु जातित इति तु विशेषः । अन्यैस्तूत्तरमत्र न दत्तम् । नोवाखलीसंस्कृतविद्यालयपण्डितास्तु यवनानां भागवतदीक्षास्वपि नाधिकार इति वदन्ति ।

(५१, ५२) उ०—भागवतधर्मदीक्षायां जातिविशेषः प्रतिवन्धकः प्रतिलोमजानां नाधिकारः । तथा च नारदपाञ्चरात्रे,

वैदिकास्तान्त्रिकाश्चैव द्वये मुख्या द्विजन्मनाम् ।
शूद्रानुलोमजातीनां मन्त्राः स्युस्तान्त्रिकाः परम् ॥
भाषाख्या लौकिका मन्त्राः प्रपत्यर्थविभावनाः ।
सर्वेभ्यः प्रतिलोमेभ्यो देयाः कामं द्विजातिभिः ॥
मन्त्रं नियतमन्त्राणां यो हीनाय प्रयच्छति ।
स वै हीनगुरुर्निन्द्यस्तेन सार्धं पतत्यधः ॥

हीनाय अत्रैवर्णिकाय वैदिकं, प्रतिलोमजाय तान्त्रिकं प्रयच्छन् पततीत्यर्थः । भाषामन्त्रप्रदाने न दीक्षानियमः ।

किरातहूणान्ध्रपुलिन्दपुल्कसा
आभीरकङ्का यवनाः खशादयः ।
येऽन्ये च पापा यदुपाश्रयाश्रयाः
शुद्ध्यन्ति तस्मै प्रभविष्णवे नमः ॥

इत्यनेन यवनादीनां भागवतधर्मेष्वधिकारित्वमिति केचित् । तन्न, अर्थापरिज्ञानात् । तथाहि अस्यार्थः, भक्तिगन्धेनापि केवलं युक्तश्चेत्, पापात्मानो विगीता अपि कृतार्था भवन्तीत्याह "किरात" इत्यादि । किरातादयो ये जातित एव पापा अन्ये च ये कर्मत एव पापाः ते शुद्ध्यन्ति, यदुपाश्रयाश्रया गुरुत्वेन आश्रया येषां ते तथाभूताः सन्तः सद्गुरुचरणाश्रयमात्रेणैव जातिकर्मभ्यां सकाशात्पापिनः शुद्ध्यन्ति ते प्रारब्धाप्रारब्धपापनाश-

कत्वं भक्तेर्व्याश्रुतम् । तथाहि, किरातादीनामशुद्धौ दुर्जातिरेव कारणं, तच्च प्रारब्धाधीनमेव, शुद्ध्यन्यथानुपपत्त्या दुर्जातित्वस्य नाशानुपपत्त्या च प्रारब्धनाशोऽवगम्यते, तथापि ते तज्जातित्वेन यदाख्यायन्ते, तद्व्यवहारत एव, न तु परमार्थत इति ज्ञेयम्।

अर्च्ये विष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिः ।

इति तेषु जातिबुद्धेर्निषेधात् । एतेन भक्तिमतः सर्वोत्कृष्टत्वं ज्ञापितम् । जात्यन्तरप्राप्तौ तु योनिरपि कारणम् । अत एव भगवद्गीतायां,

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥

इत्यनेन सर्वेषां भक्तावधिकार उक्तः ।

यन्नामधेयश्रवणानुकीर्तनात्
यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ।
श्वादोऽपि सद्यः सवनाय कल्पते
कुतः पुनस्ते भगवन्न वीक्षणात् ॥

इत्यनेन चण्डालादीनां यज्ञाधिकारोऽप्यस्तीति केचित् । तन्न, अर्थापरिज्ञानात् । तथाहि, "अनेन विष्णुभक्तानां श्वपचादीनां श्रेष्ठत्वं कीर्तितम्" इति श्रीधरस्वामी । "प्रोक्तश्वपचादयः परस्मिन् जन्मनि उत्कृष्टयोनिं प्राप्नुवन्ति ततस्ते सोमयागाधिकारिणो भविष्यन्ति ततो मोक्षमाप्स्यन्ति" इति क्रमसन्दर्भटीकाकारमतम् "तत्क्षण एव सोमयागाय कल्पते योग्यो भवति सोमयागकर्ता ब्राह्मण इव पूज्यो भवति, एतेन दुर्जात्यारम्भकप्रारब्धनाशो व्यञ्जितः । यदुक्तं श्रीरूपगोस्वामिचरणैः,

दुर्जातिरेव सवनायोग्यत्वे कारणं मतम् ।
दुर्जात्यारम्भकं पापं यत्स्यात्प्रारब्धमेव तत् ॥

इति विश्वनाथटीकाकारमतम् ।

अहो बत श्वपचोऽतो गरीयान्
यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुः सस्नुरार्या
ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥

अत्र श्रीधरस्वामिकृतटीकायामुक्तम्, ये श्वपचादयो हरि-नाम कीर्तयन्ति ते जन्मान्तरे होमांश्चक्रुः, किं तु ब्राह्मणत्वलाभा-भावात् सर्वैरपूज्याः। विश्वनाथटीकाकारमतम्—अत्र नाम-मन्त्रमात्रमुपदेष्टुं योग्यतां धत्ते। ननु तर्हि स श्वपचो यज्ञादिकं करोतीत्यत्राह। 'तेपुः' इति भूतनिर्देशात् 'गृणन्ति' इति वर्तमाननि-र्देशात् गृह्यमाणा एव तपोयज्ञादयः सर्वे कृता एव भवन्ति न तु क्रियमाणाः, नापि करिष्यमाणा इत्यर्थः। तांस्ते कथं कुर्युरित्यत एव भक्तानां कर्मस्वनधिकारोऽपि ज्ञेयः। पद्मपुराणान्तर्गतसृष्टि-खण्डीयपञ्चचत्वारिंशाध्याये सम्यग् विवृतमेतत्।

(५५) उ०—

त्रिभुवनविभवहेतवेऽप्यकुण्ठः
स्मृतिरजितात्मसुरादिभिर्विमृग्यात्।
न चलति भगवत्पदारविन्दात्
लवनिमिषार्धमपि स वैष्णवाग्र्यः॥

इति भागवतवचनात् सदाचारसम्पन्ना विष्णुभक्ताश्चाण्डाला-दयोऽपि स्वजातिमध्ये उत्कर्षं लभेरन्ः न तु द्विजत्वलाभे ब्राह्मणत्वलाभे वा समर्थाः स्युः। एतद्विरोधि हरिभक्तिविलासे स्मृतिवचनम्,

यथा काञ्चनतां धत्ते कांस्यं रसविधानतः।
तथा दीक्षाविधानेन द्विजत्वं जायते नृणाम्॥ इति॥

अत्रोच्यते।

पिव निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान्।

पित्रैवमुक्तः पिबति न फलं तावदेव हि ॥

इतिवदत्रापि स्तुत्यर्थवाद एव । तथाहि, वत्स यदि ब्राह्मणत्वमिच्छसि तदा भागवतधर्मदीक्षया दीक्षितो भव, इति गुरुणा तावदुक्तः शिष्यो ब्राह्मणत्वलालसया दीक्षितः स्यात्, न तु ब्राह्मणत्वलाभज्ञापकं तद्वचनं, तथा सति अग्रिमवचनविरोधापत्तेः । यथा हरिभक्तिविलासे,

गुरोर्लब्धस्य मन्त्रस्य प्रसादेन यथाविधि ।
पञ्चांगोपासनं सिद्ध्यै पुरश्चैतद्विधीयते ॥
होमकर्मण्यशक्तानां विप्राणां द्विगुणो जपः ।
इतरेषां तु वर्णानां त्रिगुणादि विधीयते ॥

अत्र पुरश्चरणकर्मणि ब्राह्मणादिवर्णभेदेन जपभेद इति स्पष्टं प्रतीयते । दीक्षया सर्वेषां वर्णानां यद् विप्रत्वं, तत्र यज्ञोपवीतधारणादिवर्णोचितकार्योपयोगि, अतोऽसदुक्तं सार्थ्यः । यवनादिजातिस्तु कर्मकृतैव । तत्र भागवतदीक्षायाः प्रयोजनं नास्ति ।

(५६) उ०—"चण्डालोपि द्विजश्रेष्ठः" इत्यादिवचनाद्भागवतधर्मदीक्षा जात्युत्कर्षप्रापिका । यवनादिजातिः कर्मकृता । भागवतधर्मदीक्षायां जातिविशेषादरो नास्ति ।

(५८) उ०—भागवतधर्मदीक्षायां जातिविशेषः प्रतिबन्धक एव ।

(६०) उ०—यवनादिजातिर्जन्मसिद्धा, तथा च मात्स्ये,

यदोस्तु जाता यदवस्तुर्वसोर्यवनाः स्तुताः ।
द्रुह्योस्तु तनया भोजा अनोस्तु म्लेच्छजातयः ॥

यवनादिजातीनां सर्वधर्मानधिकारित्वमेव,

सगरस्तां प्रतिज्ञां च गुरोर्वाक्यं निशम्य च ।
धर्मं जघान तेषां वै वेषान्यत्वं चकार ह ॥
अर्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत् ।
यवनानां शिरः सर्वं काम्बोजानां तथैव च ॥

पारदा मुक्तकेशाश्च पल्हवाः श्मश्रुधारिणः ।
निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना ॥

इति वचनम् ।

(६१) उ०—दीक्षितेष्वपि जातिभेदस्य शास्त्रसिद्धत्वात् दीक्षा न जात्युत्कर्षप्रापिका ।

(६२) उ०—इदानीन्तनयवना जन्मसिद्धा एव ।

(६३) उ०—

दीक्षा भागवती या सा व्यक्त्युत्कर्षप्रदायिनी ।
जातिस्तु जन्मतः सिद्धा मन्यते शास्त्रविन्मतम् ॥

(६४) उ०—भागवतधर्मदीक्षायां यवनमन्तरेण सर्वेषां तुल्याधिकारः ।

(६९) उ०—भागवतधर्मदीक्षा शक्त्युत्कर्षप्रापिका, न त्वैहिकजात्युत्कर्षप्रापिका । भागवतदीक्षायां जातिविशेषः प्रतिबन्धको नास्ति, किं तु दीक्षादातुः प्रतिबन्धकोस्ति । दीक्षादातुस्तादृशशक्त्यभावात् ।

(७०) उ०—भागवतधर्मदीक्षैव सर्वजात्युत्कर्षप्रापिका ।

यन्नामधेयश्रवणानुकीर्तनात्
यत्प्रह्वणात् यत्स्मरणादपि क्वचित् ।
श्वादोपि सद्यः सवनाय कल्पते
कुतः पुनस्ते भगवन्निदर्शनात् ॥
अहो बत श्वपचोऽतो गरीयान्
यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुः सस्नुरार्याः
ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥

(७१) उ०—भागवतधर्मदीक्षा न जात्युत्कर्षप्रापिका, 'किरातहूणान्ध्रपुलिन्दपुल्कसा" इत्यादि "यन्नामधेयस्मरण" इत्यादिवचनं न जात्युत्कर्षबोधकं, तत्र प्रथमवचनेन दुर्जातित्वप्रापकपा

पमाशस्यैव बोधितत्वात् । द्वितीयवचनेनापि न जात्युत्कर्षो बोध्यते, भागवत एव

यदा स्वनियमेनोक्तं द्विजत्वं प्राप्य पूरुषः ।
यथा यजेत मां भक्त्या श्रद्धयैतन्निबोध मे ॥

इत्यादिना स्वनिगमेन वेदेनोक्तं द्विजत्वं उपनयने प्राप्य श्रद्धया भक्त्या च यजनमिति श्रीधरस्वामिव्याख्यानेन च द्विजत्वं विना च यजनादावन्येषामनधिकस्य स्पष्टरूपेणोक्तत्वात् । एवं च "सवनाय कल्पते" इत्यादि स्तुतिपरमित्येव ज्यायः। यवनादिजातयस्तु जन्मसिद्धाः, न तु कर्मकृताः ।

मेदश्च राजवनिता तथा वेनेन संगता ।
यं सूते यवनं पुत्रं तुरुष्कः स प्रकीर्तितः ॥

इत्यादिवचनात् । भाषामन्त्रदीक्षायां चण्डालपर्यन्ताधिकारः

लोकाश्चाण्डालपर्यन्ताः सर्वेऽप्यत्राधिकारिणः

इति अगस्त्यसंहितावचनात् ।

(७४) उ०—परमभगवद्भक्तानां प्रह्लादादीनामपि पुराणादौ जात्युत्कर्षो न श्रूयते, किं पुनरिदानीन्तनानां मनुष्याणाम् । "श्वादोपि सद्य" इत्यादिभागवतवचनं तु ब्राह्मणद्वारा वृषोत्सर्गादिशूद्रसाधारणयज्ञपरम् । जन्मसिद्धा अपि म्लेच्छदस्युजातयः सन्ति । यथा ब्रह्मवैवर्ते,

क्षत्रवीर्येण वैश्यायां ऋतोः प्रथमवासरे ।
जातः पुत्रो महादस्युः बलवांश्च धनुर्धरः ॥
क्षत्रवीर्येण शूद्रायां ऋतुदोषेण पापतः ।
बलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातयः ॥
अविद्धकर्णाः क्रूराश्च निर्भया रणदुर्जयाः ॥
शौचाचारविहीनाश्च दुर्धर्षा धर्मवर्जिताः ॥

सूतसंहितायामपि,

ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः ।
अस्यामनेन चौर्येण म्लेच्छो विप्रः प्रजायते ॥
मातङ्गाज्जायते सूतः सूताद्दस्युः प्रजायते ।
मेदश्च राजवनिता तथा वेनेन संगता ॥
सा सूते यवनं पुत्रं तुरुष्कः स प्रकीर्तितः ।
तस्माद्वरिष्ठश्चाण्डालो दयावान् सोऽतिनिष्ठुरः ॥

भागवतधर्मदीक्षायां म्लेच्छादिजातयः प्रतिबन्धिका एव । तथा च मेरुतन्त्रे,

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा शुचयोऽमलाः ।
तेषां मन्त्राः प्रदेया वै न तु सङ्कीर्णधर्मिणाम् ॥

नारदपाञ्चरात्रे—

भाषाख्या लौकिका मन्त्राः प्रपत्यर्थविभावनाः ।
सर्वेभ्यः प्रतिलोमेभ्यो देयाः कामं द्विजातिभिः ।

अत्र तट्टीका, "भाषाख्या इति लौकिकशब्दार्थाः. भाषारूपा इत्यर्थः । प्रतिलोमजानां वैदिकादिमन्त्रसमानार्थाः लौकिका इति व्यवस्था द्रष्टव्येति । प्रपत्त्यर्थविभावनाः, प्रपत्तिरूपमर्थं विभावयन्तीति प्रपत्त्यर्थविभावनाः प्रपत्तिप्रकाशका इत्यर्थः । द्विजातिभिरिति । भाषारूपमन्त्रदानमपि द्विजातिभिरेव कर्तव्यमिति भावः । प्रतिलोमजादीनां मातृभाषया वैदिकादिमन्त्राणां व्याख्या तु न मन्त्रः, सा च धर्मोपदेशरूपा, तत्र न दीक्षानियमः सम्भवति । मन्त्रदानमपि प्रतिलोमजानां निषिद्धम् । यथा तत्रैव,

मन्त्रं नियतमन्त्राणां यो हीनाय प्रयच्छति ।
स वै हीनगुरुर्निन्द्यस्तेन सार्धं पतत्यधः ॥

द्विजातीनामेव मन्त्रदानाधिकारः । तत्र प्रमाणं नारदपाञ्चरात्रे—

स्वयं वा भक्तिसम्पन्नो ज्ञानवैराग्यभूषितः ।
स्वकर्मनियतो नित्यमर्हत्याचार्यतां द्विजः ॥

तन्त्रसारधृतवृहद्गौतमीये—

हरिभक्तियुतोऽक्रूरः सदाचारी जितेन्द्रियः ।
विप्र एव मुनिश्रेष्ठ वर्णानां गुरुरुच्यते ॥

इत्यादि । दीक्षायां स्पर्शस्यावश्यकतामाह नारदपाञ्चरात्रे—

करेण स्पर्शयन्गात्रं मन्त्रविद्भावयेद् दृशा ।
एषा वै सर्ववर्णानां दीक्षेत्याह मुनिः स्वयम् ॥

तन्त्रसारेऽपि,

ततस्तच्छिरसि स्वस्य हस्तं दत्वा शतं जपेत् ।
अष्टोत्तरं ततो मन्त्रं दद्यादुदकपूर्वकम् ॥

(७८) उ०—भागवतधर्मदीक्षा स्वजात्युत्कर्षप्रापिका । तथाहि—

ब्रह्ममन्त्रोपासका ये गृहस्था ब्राह्मणादयः ।
स्वस्ववर्णोत्तमास्ते तु पूज्यमाना विशेषतः ॥

इति महानिर्वाणतन्त्रे तृतीयोल्लासे लिखितम् । भागवतधर्मदीक्षायामस्त्येव जातिविशेषः प्रतिबन्धकः, तत्र प्रमाणं रुद्रयामले पूर्वखण्डे पञ्चदशपटले वर्ज्यशिष्यप्रस्तावे,

कामुकं कुटिलं लोकनिन्दितं सत्यवर्जितम् ।
अविनीतमसमर्थं प्रजाहीनं रिपुप्रियम् ॥
सदा पापक्रियायुक्तं विद्याशून्यं जडात्मकम् ।
कलिदोषसमूहाङ्गं वेदक्रियाविवर्जितम् ॥
आश्रमाचारहीनं चाशुद्धान्तःकरणोद्यतम् ॥

इति । आश्रमाचारहीनपदेन ब्राह्मणादिचतुर्वर्णेतरो ग्राह्यः । एतादृक् शिष्यकरणनिषेधेनान्त्यजनास्तिकादीनां भागवतधर्मदीक्षायामनधिकारः स्पष्टः ।

(८०) उ०—भागवतधर्मपदेन चैतन्योक्तवैष्णवधर्म उच्यते चेत्, तस्य दीक्षा न जात्युत्कर्षप्रापिका, अपि तु जात्युत्कर्षनाशिकैव, तत्र वर्णाश्रमोचितव्यवस्थाया निर्वासनात् । ब्राह्मणादीनां सर्वेषामेक-

त्र पानभोजनादिदर्शनाच्च। भागवतधर्मपदेन यदि भगवद्गीतोक्तपातञ्जलयोगधर्म उच्यते, तस्य दीक्षा जात्युत्कर्षप्रापिका भवति, "जात्यन्तरपरिणामः प्रकृत्यापूरात्" इति पातञ्जलसूत्रात्।

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।

इति भगवद्वचनात्। योगधर्मे च ब्राह्मणक्षत्रिययोः प्रधानोऽधिकारः। कदाचिच्छूद्रादीनामपि यच्छ्रूयते, स तु गौणः तथा चोक्त भगवद्गीतायाम्,

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।

इत्यादि।

(८७) उ०—भागवतधर्मदीक्षायां यवनादिजातिविशेषः प्रतिबन्धकः, तस्य गोमांसखादकत्वेन शास्त्रोक्तसर्वाचारहीनत्वात्, तत्र निहिता दीक्षा न फलवती भवेत्। तथाहि,

नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत्।
न व्यापारशतेनापि शुकवत्पाठ्यते बकः॥

(८८) उ०—भागवतधर्मदीक्षायां ब्राह्मणादिचतुर्वर्णानां दीक्षाप्रदाने यवनादिम्लेच्छजातिः प्रतिबन्धिका। भक्त्यानुरागादिप्राबल्यात् स्वयं यवनादिः भागवतधर्मपरिग्रहं कुर्यात्, तत्र न प्रतिबन्धिका इति सम्भाव्यते, यतो यवनादिजातीयस्यापि कस्यचित्,

स तरति निजपुण्यैस्तत्र किं ते महत्त्वं।
यदि न गतिविहीनं तारयेः पापिनं माम॥

इत्यादिगङ्गास्तवः श्रूयते, तेन च तस्य मुक्तिरासीदिति प्रसिद्धिरस्ति।

(८९) उ०—भागवतधर्मदीक्षायां जातिविशेषः प्रतिबन्धको नास्ति, श्रीकबीरहरिदासादीनां तत्र प्रवेशदर्शनात्।

(६३) उ०—भागवतधर्मदीक्षायां मन्त्रविशेषे जातिविशेषः प्रतिबन्धको भवति।

स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः।
शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिम्॥

(६४) उ०—न केवलं भागवतधर्मदीक्षया, कयाचिदपि दीक्षया जात्युत्कर्षो न सम्भवति। न हि कस्यां चिदपि जातौ सहस्रक्रिययापि जात्यन्तरोत्पत्तिः कैरपि कदाचिद्दृश्यते। जातिर्हि द्रव्यस्य उत्पत्तेः प्रभृति आविनाशाद्द्रव्यं न जहाति, न सहस्रमपि त्रिपुणतमा घटं पटं, पटं घटं वा कर्तुमर्हन्तीति। हीनकर्मणा हि तत्तुल्यतामेवापद्यते, न तु तत्त्वम्।

तृणादपि सुनीचेन तरोरपि सहिष्णुना।
अमानिना मानदेन कीर्तनीयः सदा हरिः॥

इत्यादिवचनोक्तगुणसद्भावे सर्वेषामेव भागवतधर्मदीक्षायामधिकारः, न तु तत्र जातिविशेषः प्रतिबन्धकः।

(६५) उ०—यदि भागवतदीक्षा चैतन्योक्तधर्म उच्यते, तदा स न जात्युत्कर्षप्रापिका, किं तु जातिनाशिकैव, तन्मते वर्णाश्रमोचितव्यवस्थाया निर्वासनात्, तथा च चैतन्यभागवते,

ज्ञानकाण्ड कर्मकाण्ड सकलि विषये भाण्ड।
अमृत वलिया जे वा खाय।
नाना योनि भ्रमण करे।
कदर्य भक्षण करे।
तार जन्म अधःपाते याय। इत्यादि।

भागवतधर्मदीक्षायां यवनादिजातिविशेषः प्रतिबन्धकः, तस्य गोमांसखादकत्वेन सर्वाचारविहीनत्वात्। अत्रानुशासनं यथा, "पञ्चैतानि महापातकानि कृत्वा ब्राह्मणः साद्धन तु सम्भाष्यो नानुग्राह्योऽभिशस्तः सर्वकर्मविवर्जितः पतिततमो भवति"। अत्र

यवनस्य का कथा इति ।

(६८) उ०—म्लेच्छजातिः जन्मसिद्धा । तथा चोक्तम्,

ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः ।
अस्यामनेन चौर्येण म्लेच्छो विप्रः प्रजायते ॥

इति सूतसंहितायाः शिवमाहात्म्यखण्डे द्वादशाध्याये वचनम् ।

दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा ।
समाश्रयेदादिदेवं श्रद्धया शरणं हि यः ॥

इति स्कन्दपुराणीयवचनेन सर्वेषामेवाधिकारो बोध्यते ।

(१०१) उ०—प्रामाणिकनीतिशास्त्रानुसारेण भागवतधर्मदीक्षया जात्युत्कर्षो भवत्येव । तथापि सामाजिकव्यवहारेषु तत्तत्समाजानुमतिलाभपर्यन्तं पूर्वप्रचलितस्वस्वसदाचारपरित्यागोऽनुचितः । यवना व्रात्यक्षत्रिया एव, अतस्तेषां पूर्वतनजातिप्रवेशो भवितुमर्हति । भागवतधर्मदीक्षायां सर्वेषामेवाधिकारः ।

(१०७) उ०—भागवतधर्मदीक्षया जातिपरिवृत्तिर्न सम्भवति । सर्वा अपि जातयो जन्मसिद्धा एव । "तृणादपि सुनीचेन" इत्यादिवचनोक्तभक्तिसद्भावे सर्वेषामेव भागवतधर्मदीक्षायामधिकारः ।

(१०८) उ०—भागवतधर्मदीक्षा जात्युत्कर्षप्रापिका न भवति । यवनादिजातिर्जन्मसिद्धा कर्मकृता च । यवनादिजातिविशेषो भागवतधर्मदीक्षायां प्रतिबन्धक एव ।

(१०९) उ०—भागवतधर्मदीक्षा स्वजात्युत्कर्षप्रापिका, यवनादिजातिर्जन्मकृता, कर्मणा तु तत्सादृश्यप्राप्तिर्भवति । भागवतधर्मदीक्षायां चण्डालादिजातिः प्रतिबन्धिकैव ।

(११०) उ०—भागवतदीक्षा न जात्युत्कर्षप्रापिका । यवनादिजातिर्जन्मसिद्धैव । जातिसामान्यं जन्मकृतम् ।

(११३) उ०—भागवतधर्मदीक्षया न जात्युत्कर्षप्राप्तिः । यवनादिजातिः कर्मकृतैव ।

(११५) उ०—भागवतधर्मदीक्षा जात्युत्कर्षप्रापिका न भवति। यवनादिजातिः कर्मणा उत्पन्ना जन्मनाऽनुवर्तते। भागवतधर्मदीक्षायां जातिविशेषो न प्रतिबन्धकः।

(११७) उ०—उत्कृष्टाः खलु ब्राह्मणाः। "विप्राणां ज्ञानतो ज्यैष्ठ्य"मिति वचनेन तेषामुत्कर्षो ज्ञानादेव जायते। "ईश्वरात् ज्ञानमन्विच्छेत्" इति वचनेन तच्च ज्ञानं ईश्वरानुग्रहेणैव भवति। अतो भागवतधर्मदीक्षाविना जात्युत्कृष्टत्वप्रापणे हेतुत्वं न कस्याप्यन्यस्येति निश्चितम्। पुरा किल भारतीया बहवो दुष्टभूपतयश्चक्रवर्तिना सगरेण पराजिता जीवग्राहं गृहीताश्च, वसिष्ठवचनेन तान् मुण्डितशीर्षान् अर्द्धमुण्डितशिरस्कान् श्मश्रुलाञ्छितमुखांश्चेति वैरूप्येण विकल्पयित्वा प्रत्यन्तदेशं प्रापिता इति सगरोपाख्यानेन ज्ञायते। तस्माद्यवनादिजातिः कर्मकृतैव, न जन्मकृता इति भागवतधर्मदीक्षायां सर्वेषामप्यधिकारः।

(११९, १२०) उ०—प्राचीनपक्ष एव।

(१२१) उ०—उभयतपक्षार्थया जातिपरिवृत्तिः सम्भवति। यवनादिजातिर्जन्मकृता कर्मकृता च। मिस् मिलरशुद्धिकरणेन यवनादीनामपि भागवतधर्मदीक्षायामधिकारो वर्तत इति सम्भाव्यते।

(१२२, १२३, १२४, १२५, १२६, १२७) उ०—प्राचीनपक्षः।

(१२८) यवनजातीयेन कालयवनेन शाल्वस्य पाद्यार्घ्यादिभिः पूजनं कृतमिति इतिहासतः श्रूयते हरिवंशे। तथैव तेन सह हस्तान्दोलनरूपोऽनार्योचितव्यवहारस्तेन कृत इत्यपि तत्रैवोक्तम्। किंच भारते लाक्षागृहप्रबन्धकारकः पुरोचनो यवन एवासीदिति श्रूयते। अभिज्ञानशाकुन्तलेऽपि "चापहस्ता यवनी" इत्यादिना राज्ञो धनुर्धारित्वं यवन्या वर्णितम्। त्रिगर्ताधिपतेः सुशर्मणः सैनिका म्लेच्छा आसन्नित्यपि भारते व्यक्तम्। एतैः प्रमाणैः यवनजातयः पूर्वं स्पृश्या एवासन्निति ज्ञायते। इदानीं तु मतान्तरपरि-

ग्रहेण आर्यपरिपन्थित्वेन च तेषामस्पृश्यत्वं योग्यमेव सम्पन्नं, तथापि तदीयकलाकौशलादिकृत्येषु तेषां स्पृश्यत्वमपि योग्यमेव। गोमांसभक्षणं तु भारतकालात्प्रभृत्येवासीदिति ज्ञायते।

(१२६) उ०—भगवद्भक्तियोगस्य स्मार्तधर्माचरणं विनाऽसम्भवात् तदनुष्ठाने तत्कर्तृत्वरूपं हिन्दुत्वमपि अहिन्दूनामयत्नसिद्धमेव। एवंविधमहिन्दूनां हिन्दूकरणं च भविष्यपुराणे स्पष्टमेव स्मर्यते। तथाहि—

आर्यधर्मकरा म्लेच्छा बभूवुः सर्वतोमुखाः।

तथा,

मत्पुत्राश्च स्मृता म्लेच्छा आर्यधर्मत्वमागताः॥
............................मिश्रदेशे मुनिर्गतः।

तथा,

सर्वान् म्लेच्छान्मोहयित्वा कृत्वाथ तान् द्विजन्मनः॥
संख्यादशसहस्रं च नरवृन्दद्विजन्मनाम्।
द्विसहस्रं स्मृता वैश्याः शेषाः शूद्रसुताः स्मृताः॥
तैः सार्धमार्यदेशे स सरस्वत्याः प्रसादतः।
अवसद्वै मुनिश्रेष्ठो मुनिकार्यरतः सदा॥

अत एव,

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥

इत्यादि मानवीयमपि सङ्गच्छते।

(१३६) उ०—जातिविशेषः प्रतिबन्धक एव।

(१३७) उ०—सर्वेषामधिकारः।

(१४०) उ०—ये पुनरित्थमभिप्रयन्ति, तद्यथा—

न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः।
सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने॥

इत्यादीनि प्रशंसामात्रपराणि वचनान्यापाततो दृष्ट्वा भगवद्भक्त्या ब्राह्मणत्वं लभ्यत इति तन्न युक्तम् । ब्राह्मणवच्छूद्रत्वच्च पूज्यत्वापूज्यत्वयोरेवोक्तवचनतात्पर्यात् । अयमेव चार्थः सर्वतन्त्रस्वतन्त्रैः श्रीमद्वेङ्कटनाथगुरुभिः,

अतो जातेर्निकृष्टायाः सर्वस्या वा विनाशनात् ।
साजात्यं विष्णुभक्तानामिति मन्दमिदं वचः ॥
वैष्णवत्वेन मान्यत्वं समानं मुनिसम्मतम् ।
जात्यादिध्वंसतः साम्यं मुक्तिकाले भविष्यति ॥ इति ।

तथा चोक्तवाक्ये शूद्रशब्दस्य शोचितार इत्यर्थो विप्रपदस्य च विशेषेण भगवत्प्रज्ञातार इत्यर्थो विवक्षित इति न कोपि दोषः ।

(१४२, १४३, १४४) उ०—प्राचीनपक्षः ।

(१४५) उ०—भागवतधर्म्मदीक्षा न जात्युत्कर्षप्रापिका, शरीरनिष्ठाया जातेर्यावच्छरीरस्थित्यनुवृत्तेः, एकस्मिन् शरीरे जातिद्वयाभ्युगमे सङ्करप्रसङ्गात् । तपस्विनोऽपि मतङ्गस्य मरणं विना जात्युत्कर्षासम्भव इतीन्द्रेण ज्ञापितं महाभारतोक्तमत्र स्मर्त्तव्यम् । दासीपुत्रस्य नारदस्य भागवतधर्मप्रभावेण जन्मान्तरे ब्रह्मपुत्रत्वप्राप्तिः श्रीमद्भागवतोक्ता च द्रष्टव्या ।

यवनादिजातिषु द्वैविध्यं दृश्यते, केचन प्राक्तनाः क्षत्रिया बलादेव ब्राह्मणसम्पर्कं त्याजिता निःसारिताश्च देशात्, परस्ताच्च शनैः क्रियालोपाद् वृषलत्वं गताः, कर्ममूलत्वेऽपि जन्मान्तरीयकर्मवत् पूर्वपुरुषकर्मात्र मूलमिति सा जातिर्न कर्मकृता, किन्तु जन्मकृतैव । ये च नन्दिनीसृष्टास्तेषां सङ्करविशेषाणाञ्च मूलत एव जन्मकृता जातिः ।

भागवतधर्मदीक्षायां जातिविशेषो न प्रतिबन्धकः । "किरातहूणान्ध्रपुलिन्दपुल्कसाः, आभीरकङ्का यवनाः खशादयः । येऽन्येपिपापा यदुपाश्रयाश्रया शुध्यन्ति, इत्यादि भागवतोक्तेः ।

(१४६) उ०—यवनादिजातिः पित्रादिपरम्परया यवनानां जन्मसिद्धैव, यवनसंसर्गिणां तु वत्सरचतुष्टयमध्ये न यवनत्वम्, तदनन्तरं तु यवनसाम्यमेव। तैरपि स विशेषः परिपाल्यत एव।

इयान् विशेषः—यद्वैदिकतान्त्रिकमन्त्रेषु द्विजादीनाम्, प्राप्तसंकराणां तु लौकिकभाषानिबद्धतदर्थकशब्दमात्रोपदेशेऽधिकारो यथासमयं नियमरक्षणेन। भागवतधर्मदीक्षायां तु सर्वाधिकारस्तथा च तावन्मात्रेण न मोहम्मदत्वमित्यादिव्यवस्था न सम्भवदुक्तिका, तथापि तस्य जातिपरिवृत्तिर्भवतीति निष्कर्षः।

(१४७) उ०—श्रीसोमसुन्दरशास्त्रिणाम्।

सनातनधर्मप्रदीपकनामा प्रबन्धो महनीयश्रीमालवीयमहोदयसंपादितो मन्यामहे सर्वेषां दृष्टिपथं गतः स्यादिति। अत्र हि प्रबन्धे संगृहीता विषया इम एव।

(१) वेदमहिमा, तद्विभागेतिहासपुराणानामावश्यकता, तत्र पुराणादीनां स्त्रीशूद्रसाधरण्येन किं बहुनाऽन्त्यजसाधारण्येनाध्ययनेऽधिकारः, तत्र प्रमाणसंग्रहस्तत्तत्पुराणेतिहासतश्च। अनेन च प्रसङ्गेन "श्रावयेच्चतुरो वर्णान्" इत्यस्य क्रमविशेषबोधन एव तात्पर्यं, न तु श्रवणातिरिक्तपठनादिनिषेधनेऽपीत्यादिविवेचनमपि विस्तृतमुपलभ्यते। न केवलमियदेव, किन्तु कमलाकर भट्टादीनां पुराणश्रवण एवाधिकारः, न तु पठन इति सिद्धान्तो भ्रान्तिमूलक इति तस्य न समादरणीयत्वम्।

तथा—

शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।

इति शूद्रसाधर्म्यादन्त्यजपर्यन्तं पुराणपठनादावधिकारो वर्तत इत्यपि विवेचितम्।

( २ ) अन्त्यजपर्यन्तमोंकारसहितपञ्चाक्षरीमन्त्रादावधिकारो वर्तते, पञ्चाक्षरादौ सर्वाधिकारो हि स्कन्दपुराणशिवमहापुराणादितोऽव-

गम्यते। यद्यप्योंकारेण साकं षडक्षर एवायं मन्त्रः, न पञ्चाक्षरः। तथापि—

महापातकदावाग्निः सोऽयं मन्त्रः षडक्षरः।
तस्मात् सर्वप्रदो मन्त्रः सोऽयं पञ्चाक्षरः स्मृतः।

इति ब्राह्मोत्तरवचनेन

षडक्षररूपस्यैव निरूढ्या पञ्चाक्षरत्वव्यपदेश इति गम्यते।

स्त्रीभिः शूद्रैश्च सङ्कीर्णैर्धार्यते मुक्तिकाङ्क्षिभिः।

इति वाक्यशेषात् षडक्षरजप एव सर्वसाधारणोऽधिकारः। सति चैवं फलोपसंहारावसरे समाम्नातो मानवाः, जन्तुः, नरः, यः, सः, पुरुषः, इति निर्देशोप्युपपद्यते। पञ्चाक्षरमन्त्रोऽयमष्टाक्षरादीनामप्युपलक्षणम्। अष्टाक्षरादिमन्त्रो ह्योंकारस्यादित्वेनैव भवति नान्यथा, तत्र च—

"एतत् प्रोक्तं द्विजातीनां स्त्रीशूद्रेषु च यत् शृणु।
द्वादशाष्टाक्षरौ मन्त्रौ तेषां प्रोक्तौ महात्मनाम्।
हितौ तौ च द्विजातीनां मन्त्रश्रेष्ठौ नराधिप॥"

इत्यादिविष्णुधर्मवचनादितः स्पष्टं स्त्रीशूद्राणामधिकारोऽवगम्यते। यदि ह्योंकारराहित्येन मन्त्रजप एवाधिकारः स्त्रीणां स्यात्, तर्हि कथमत्राष्टाक्षरपदम्, सप्ताक्षरपदं खलु तत्रापेक्षितं स्यादिति सर्व एव विजानन्ति। तथा च पूर्वोक्तन्यायेनान्त्यजपर्यन्तमोंकारसहितमन्त्रजपाधिकार इति सिद्ध्यति।

यत्तु नृसिंहतापनीये रामतापनीये च "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति, सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात् स्त्रीशूद्रः स मृतोऽधोगच्छति" इत्याम्नातम्, तदिदं वैदिकविधिनोच्चरितस्योंकारस्य विषय एव, न तु स्मार्तमन्त्रस्येति प्रदीपककारा मन्यन्ते।

( ३ ) युगभेदेन धर्मपरिवर्तने धर्मज्ञानामधिकारः।

( ४ ) ईश्वरस्वीकारे युक्तिप्रमाणाद्युपन्यास इत्यादयः ।

अत्रेश्वरस्वरूपविषये, सनातनधर्ममूलस्वरूपादिविषये श्रुतिस्मृतीतिहासपुराणादिमहिमादिविषये, युगभेदेन धर्मपरिवर्तन महात्मनामधिकारविषयाणि वा तानि प्रमाणानि तत्र तत्र प्रकीर्णान्येकीकृत्य संगृह्य च प्रकाशनेन सत्यं श्रीमहनीयमालवीयमहोदया उत्तमर्णा इति वस्तुस्थितिकथनमिदम् ।

अन्त्यजपर्यन्तमोंकारजपेऽप्यधिकार इति सिद्धान्तस्तेषां न केवलं कमलाकरभट्टादिसिद्धान्तविरुद्धः, किन्तु सत्सम्प्रदायस्य न केवलं व्याख्यानादिना, किन्तु स्वयमनुष्ठानानुष्ठापनपद्धत्यापि प्रवर्त्यमानस्यश्री १००८वल्लभाचार्यादिसिद्धान्तस्यापि विरुद्ध इति विशदमिदं सप्रकाशाणुभाष्यदर्शिनाम् । एतान्यत्र प्रकाशगतानि वाक्यानि, "वेदः प्रभाव एवाग्रे" "स सर्ववेदोपनिषद्वेदबीजं सनातनम्" इत्यादिवाक्यैः प्रणवस्य विशेषतो वेदत्वनिश्चयात्, औपनिषदानां नारायणाष्टाक्षरादीनां मन्त्राणां नारायणकवचादौ प्रत्यभिज्ञानाच्च । न च देवतादिवाचकपदवत् प्रत्यभिज्ञाया अप्रयोजकत्वमिति शङ्क्यम्, नाममन्त्रस्तु शूद्रस्येति, "स्वाहाकारनमस्कारौ मन्त्रौ शूद्रे विधीयते । ताभ्यां शूद्रः पाकयज्ञैर्यजेत व्रतवान् स्वयम्" । इत्यानुशासनिकपर्वादौ तदनुज्ञादर्शनेन तेषां तदभावेनैव दृष्टान्तस्यात्र वक्तुमशक्यत्वात् । अनेन हीदं स्पष्टमेव गम्यते यत्, नारायणाष्टाक्षरादीनां नमःशब्देनैव जपः स्त्रीशूद्राणां नोंकारेणापि । ओंकारो हि यत्र कुत्रापि प्रयुज्यमानो वेद एव, न तस्य कुत्रापि स्मार्तत्वमिति खल्वतोऽवगम्यते । तथा च सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति" इत्याद्युपनिषदोऽपि न स्मार्तोंकारविषयत्वकल्पनोपपद्यते । अष्टाक्षरत्वप्रसिद्धिस्तु द्विजाभिप्रायेणैव, न शूद्राद्यभिप्रायेण । अष्टाक्षरोपदेशो हि यत्र यत्र वचनेषूपक्षिप्तः, सर्वत्र तत्र द्विजानामप्युल्लेखो दृश्यते, न द्विजेतरमा-

त्रोल्लेखः, तत्र च प्रकल्प्य चापवादविषयमुत्सर्गोऽभिनिविशते इति न्यायात् द्विजेतरविषये प्रणवांशत्यागेनेति पूरणेनैव निर्वाहो नान्यथेति कस्य वेदं परोक्षम् ? नेदमस्माकमनवसरं सूचनम्-यत् वासुदेवाभिधामस्तोत्रे सर्वेषामधिकारः शूद्रादिसाधारण्येनेति ब्रह्मपुराणतोऽवगम्यते इत्युपक्षेपोयं न प्रकृतोपयुक्तः। यतोऽत्र स्तोत्रानुसंधान एव सर्वेषामधिकारो बोध्यते, न नारायणाष्टाक्षरादिमन्त्रजपे। अत्र ग्रन्थकारैर्वासुदेवाभिधानस्तोत्रपदस्यैव ओं नमो भगवते वासुदेवायेति मन्त्रपरतया विवरणं यत् कृतम्, तदिदं चिन्त्यमूलमिति प्रतिभाति। तथा च ब्रह्मपुराणवचनानां संगृहीतानां नात्रोपयोगः।

श्रीमद्भागवतगतनारायणकवचं हि त्वाष्ट्रेणेन्द्रायोपदिष्टं सत्यमों नमो नारायणायेतिमन्त्रगतोंकारादीनां हृदयादिविन्यासोपयोगं गमयति, परन्तु नास्योंकारघटितस्य शूद्रादिसाधारण्येऽप्यत्र प्रकरणे संगृहीतं किमपि वचनमुपलभ्यते। प्रत्युत, फलकथनावसरे कौशिकादिद्विजानामेव शब्दतो ग्रहणात् द्विजेतराणां नाधिकार इति गम्यते। महेन्द्रस्तु न द्विजेतरः, देवानामपि वर्णत्वपक्षे, पक्षान्तरे तु देवद्विजेतरविषयत्वं नास्य कवचस्येत्येव युक्तम्, न सर्वसाधारण्यम्।

एतेनाष्टमस्कन्धगताऽदितिपयोव्रतकथापि व्याख्याता, अत्र हि-"गन्धधूपादिभिश्चार्चेद्द्वादशाक्षरविद्यया" इत्यादिना धर्मातिदेश एव क्रियते "नमस्तुभ्य"मित्यादिमन्त्रपठने, न द्वादशाक्षरजपाद्युपदेश इति नास्योंकारसहितमन्त्रपाठे सर्वाधिकारव्यवस्थापकत्वम्।

विष्णुधर्मे तु "एतत्प्रोक्तं द्विजातीनां स्त्रीशूद्रेषु च यच्छृणु।
द्वादशाष्टाक्षरौ मन्त्रौ तेषां प्रोक्तौ महात्मनाम्।
हितौ तौ च द्विजातीनां मन्त्रश्रेष्ठौ नराधिप।

इति। सत्यं द्विजेतराणामधिकारोऽष्टाक्षरादौ वर्ण्यते परंतु द्विजानामप्यत्रोल्लेखात् तदभिप्रायेणाष्टाक्षरतायामेव पूर्वोक्तरीत्या तात्पर्यं युक्तम्, न सर्वसाधारण्याभिप्रायेण। न ह्योंकारे वैदिकत्वस्मार्तत्वविभागादिकं सम्भवतीति पूर्वमेवोपवर्णितम्। अन्यथाष्टाक्षरादिमन्त्राणामपि स्मार्तानामौपनिषदमन्त्रेभ्यो भेदकल्पना हि प्रसज्येत। एतेन—तदिदं वैदिकविधिनोच्चारितस्यैवोंकारस्य विषये, न तु स्मार्तमन्त्रस्थस्येति दीपकयोजनमपि—व्याख्यातम्।

ओंकारादिसमायुक्तं नमःकारान्तदीपितम्।
तन्नाम सर्वसत्त्वानां मन्त्र इत्यभिधीयते॥

इति ब्रह्मपुराणवचनमपि सत्त्वपदेन तिर्यग्जातिवर्जनवत् प्रमाणान्तरतोऽनधिकारितया निर्णीतद्विजेतरवर्जनेनापि योजनस्यैव युक्तत्वात् नाष्टाक्षरादीनां सर्वसाधारणाधिकारे निरङ्कुशं प्रमाणम्। न हि वयं कुत्रापि नरादिपदेन मानवादिपदेन वा न फलाम्नानमिति वदामः, किं तु तावन्मात्रेषु शास्त्रान्तरबाधनेनापि सर्वसाधारण्यव्यवस्थापनं नोपपद्यत इति, तथा च नृसिंहपुराणादितः संगृहीतानां सामान्यवचनानां केषामपि नात्र विषये निरङ्कुशा प्रमाणतेति युक्तमुत्पश्यामः।

पञ्चाक्षरविषये तु पञ्चाक्षरविद्यायां सर्वसाधारणोऽधिकार इत्यत्र न वयमनुपपत्तिं कामपि पश्यामः। इदमेवात्रालोचनीयम् यत् षडक्षरस्यैव मन्त्रस्य पञ्चाक्षरत्वम्, उत पञ्चाक्षरमन्त्रस्यैव पञ्चाक्षरत्वमिति। दीपकगृहीताभ्याम्—

"महापातकदावाग्निः सोऽयं मन्त्रः षडक्षरः।
तस्मात् सर्वप्रदो मन्त्रः सोऽयं पञ्चाक्षरः स्मृतः॥
"वेदे शिवागमे चायमुभयत्र षडक्षरः।
मन्त्रः स्थितः सदा पुण्यो लोके पञ्चाक्षरः स्मृतः।
सर्वमन्त्राधिकश्चायमोंकाराद्यः षडक्षरः॥"

इति ब्रह्मोत्तरखण्डशिवपुराणवचनाभ्यां षडक्षरस्यैव मन्त्रस्य पञ्चाक्षरत्वप्रसिद्धिरिति सत्यं विशदं प्रतीयते; तथापीदमत्राति-विचित्रम् यत् "महापातकदावाग्निः सोऽयं मन्त्रः षडक्षरः" इत्यस्यानन्तरं "प्रणवेन विना मन्त्रः सोऽयं पञ्चाक्षरो मतः" इति पादोऽप्यधिको ब्रह्मोत्तरखण्डे समुपलभ्यमानः केनापि निमित्तेन महनीयप्रकृतीनां दीपककाराणां न दृष्टिपथं गतः। इदमपि नात्रानवसरं सूचनम्—यत्—

वेदे शिवागमे चायमुभयत्र षडक्षरः।
मन्त्रः स्थितः सदा मुख्यो लोके पञ्चाक्षरः स्मृतः॥
सर्वमन्त्राधिकश्चायमोंकाराद्यः षडक्षरः।
सर्वेषां शिवभक्तानामशेषार्थप्रसाधकः॥

इति शिवपुराणतः प्रदीपककारधृतेषु वचनेषु—

मन्त्रः स्थितः सदा मुख्यो लोके पञ्चाक्षरः स्मृतः।
सर्वमन्त्राधिकश्चायमोंकाराद्यः षडक्षरः॥

इति श्लोको न शिवपुराणे दृश्यते, यस्य हि महिम्ना षडक्षर-स्यैव लोके पञ्चाक्षरत्वप्रसिद्धिरिति प्रदीपककाराः साधयन्ति। तथा चेदमेवात्र समुचितं प्रतिभाति—यत् न षडक्षरस्यैव पञ्चा-क्षरत्वं, किन्तु पञ्चाक्षरस्यैव; तथाच तत्र तत्र पञ्चाक्षरविद्यायाम-न्त्यजादिसाधारणोऽधिकारो दृश्यमानः कथं वा प्रदीपककारम-तानुगुण इति त एव नाम समालोचयन्तु। शिवमहापुराणे तस्मिन्नेवाध्याये दीपककारसंगृहीतेष्वेव वचनेषु—

तेनाधीतं श्रुतं तेन कृतं सर्वमनुष्ठितम्।
यस्यों नमः शिवायेति मन्त्राभ्यासः स्थिरीकृतः॥

इति श्लोकस्यानन्तरं,

नमस्कारादिसंयुक्तं शिवायेत्यक्षरद्वयम्।
जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम्॥

इति नमः शिवायेति मन्त्रमात्रं प्रक्रम्य—

अन्त्यजो वाऽधमो वापि मूर्खोऽपि पण्डितोऽपि वा ।
पञ्चाक्षरजपनिष्ठो मुच्यते पापपञ्जरात् ॥

इति स्पष्टमन्त्यजादिसाधारण्येन नमः शिवायेत्यत्रैवाधिकारः प्रतिपादित उपलभ्यते ।

षडक्षरेण वा देवि तथा पञ्चाक्षरेण वा ॥

इति वचनं तु यथासिद्धाधिकारव्यवस्थाऽविरोधेनैव योजनमर्हति । इदमत्र सप्रश्रयमनुयुज्यते—यत् प्रदीपककारास्सर्वत्र पञ्चाक्षरादिसम्बन्धेन प्रकीर्णानां श्लोकानां संग्रहावसरे कथं वा—

मम पञ्चाक्षरे मन्त्रे तस्माच्छ्रेष्ठतरो हि सः ।

इत्यस्यानन्तरं

तस्मादनेन मन्त्रेण मनोवाक्कायभेदतः ।

इति श्लोकतः पूर्वं चतुस्त्रिंशच्छ्लोकान् न समगृह्णन्निति । इमान्यत्र तैरसंगृहीतानि कानिचन वचनानि—

पञ्चाक्षरप्रभावेण लोकवेदमहर्षयः ।
तिष्ठन्ति शाश्वता धर्मा देवाः सर्वमिदं जगत् ॥ २१ ॥
...................................

इत्येवं प्रार्थितस्तेन पञ्चवक्त्रधरो ह्यहम् ।
पञ्चाक्षराणि क्रमशः प्रोक्तवान् पद्मयोनये ।
स पञ्चवदनैस्तानि गृह्णँल्लोकपितामहः ॥
...................................

अस्याः परमविद्यायाः स्वरूपमधुनोच्यते ।
आदौ नमः प्रयोक्तव्यं शिवाय तु ततः परम् ॥
सैषा पञ्चाक्षरी विद्या सर्वश्रुतिशिरोगता ।
नकारः शिर उच्येत मकारस्तु शिखोच्यते ।
शिकारः कवचं तद्वत् वकारो नेत्रमुच्यते ।

थकारोऽस्त्रं नमः स्वाहा वषड् हुं वौषडित्यपि ॥ इति ।

एतैर्हि वचनैर्मध्यगतैः स्पष्टमिदं विशदीभवति—यत् पञ्चाक्षरविद्यायां नोंकारस्य प्रवेशलेशोऽपि । मन्त्रसामान्ये ओंकारसाहित्यमधिकारिविशेष इति नियमेनैव षडक्षरत्वादिव्यपदेशस्तत्र तत्रेति कथं वा पञ्चाक्षरविद्यायां शूद्राद्यधिकारश्रवणमात्रमोंकारसहितपञ्चाक्षरविद्यायां तदधिकारस्थापनाय । अथान्ववसरमिदमपि सूच्यते—शिवपुराणे पञ्चाक्षरविद्याङ्गतया—

तत्राद्यो मातृकान्यासः, ब्रह्मन्यासस्ततः परः ।
तृतीयः प्रणवन्यासः, हंसन्यासस्तदुत्तरः ॥
पञ्चमः कथ्यते सद्भिर्न्यासः पञ्चाक्षरावधिः ।

इति पञ्च न्यासानुपक्रम्य—

पश्चात्प्रणवविद्धीमान् प्रणवन्यासमाचरेत् ।

इति प्रणवन्यासे प्रणवविदामेवाधिकारो नान्येषामिति विशदीकरणादोंकारसहितपञ्चाक्षरविद्यायां सर्वाधिकार इति स्पष्टमवगम्यते । एतेन तत्र तत्रोंकारन्यासविधानमपि व्याख्यातम् । अधिकं त्ववसरान्तरे विवेचयिष्यते ।

(१४८, १४९, १५१, १५२) उ०—प्राचीनपक्षः ।

(१५३) उ०—कौशिकसंहितायाम्—

कलौ ब्राह्मणता वीर्यात्तपश्चर्यादिना न हि ।
शुद्धं त्वशुद्धतामेत्य शोधनाच्छुध्यते पुनः ॥
यच्च स्वभावतोऽशुद्धं तन्न शुध्यति शोधनात् ।
यथा भस्मादिसंसर्गादशुद्धं तैजसं शुचि ॥
गुदं न शुद्धिमाप्नोति गङ्गाम्भःप्लावनादपि । इति ।

त्रिविधा भागवतदीक्षा, वैदिकी तान्त्रिकी लौकिकी च । तत्र

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।

इति भागवतवचनात् "सावित्री स्वर्गी यज्ञः ... यदि जानी-

यात् स्त्री शूद्रः स मृतोऽधो गच्छती"ति नृसिंहतापनीयवचनाच्च शूद्राणां वैदिक्यामनधिकारः। किं तु अगस्त्यसंहितायाम्,

शुचिव्रततमाः शूद्रा धार्मिका द्विजसेवकाः।
स्त्रियः पतिव्रताश्चान्ये प्रतिलोमानुलोमजाः॥
लोकाश्चण्डालपर्यंतं सर्वेप्यत्राधिकारिणः।
मन्त्रोऽयमुपदेष्टव्यो ब्राह्मणाद्यनुरूपतः॥
श्रुतिर्ब्रह्माह षड्वर्णं स्मृतिर्वर्णद्वयात्मकम्।
षड्वर्णं ब्राह्मणादीनां त्रयाणां, यद्द्विवर्णकम्।
तदन्येषां देशिकेन वक्तव्यं तारकं परम्।

इत्युक्तत्वाच्छूद्रादिसर्वजातीयानां द्विवर्णकरामनामोपदेशात्मकलौकिकदीक्षायामधिकारः। क्वचिच्छूद्राणां तान्त्रिक्यामप्यधिकारोऽस्तीत्युक्तम्। यथा ब्रह्मोत्तरखण्डे,

चातुर्वर्ण्यस्य वक्ष्यामि दीक्षामद्य यशस्विनि।

इत्युपक्रम्य,

शूद्रस्यापि प्रवक्ष्यामि मद्भक्तस्य वरानने।

इत्युपक्रम्य शूद्राणां काचित्तान्त्रिकी दीक्षा प्रतिपादिता।

(१५४, १५५, १५७, १५८, १५९, १६०, १६१, १६२, १६३, १६४, १६६, १६९, १७०, १७१) उ०—प्राचीनपक्षः।

———

पञ्चमभागस्य—

# भूमिका

—❋❋—

अथ त्रयोदशचतुर्दशपञ्चदशप्रश्नानामुत्तराणि समालोचनार्थं श्रीमतां पुरत उपह्रियन्ते।

जानन्त्येव भवन्तः सर्वेऽपि प्रश्नानां स्वरूपम्, यत् उपक्रम एवास्मिन् पुस्तके सङ्गृहीतम्।

अत्रैतावन्तो मतभेदा वर्तन्ते—यत् देवलस्मृतिर्न प्रमाणम्, शूलपाण्यादिनिबन्धादृतव्यवस्थयैव तत्प्रामाण्यम्, मन्वादिस्मृत्येकवाक्यतयैव तत्प्रामाण्यमिति च।

तत्र प्रथममते द्वे मते दृश्येते—यत् स्मृत्यन्तरविरुद्धेंऽशेऽप्रामाण्यमित्येकं मतम्, सर्वथाऽप्रामाण्यमित्यपरं मतम्।

तत्र प्रथमप्रथममतस्य द्वितीयमतस्य च न फलतो विशेषः, यतो निबन्धकारैरपि तदविरोधेनैव व्यवस्था दत्ता। प्रथमद्वितीयमते तु सर्वथाऽप्रामाण्यरूपे, विंशतिसंवत्सरं यावच्छुद्धिरिति नियमनं न योग्यमित्येकः पक्षः। अपरस्तु स्मृत्यन्तरानुसारेणैव व्यवस्था समादरणीयेति।

अप्रामाण्यवादे युक्तिस्तु—निबन्धग्रन्थेषु बहूनां वचनानामनुपलभ्यमानत्वमेव। प्रायश्चित्तविवेकमयूखादिनिबन्धेषु तु बहूनां मुद्रापितदेवलस्मृतिगतवचनानामुपलम्भान्नाप्रामाण्यशङ्कावसरः। न हि सर्वाणि वचनानि तत्तत्स्मृतिगतानि सर्वैर्निबन्धकारैरुद्ध्रियन्ते इति नियमः। निबन्धकारैश्चिन्त्यमूलानीति यानि परमुपन्यस्तानि, तानि विहाय सर्वेषामुपलभ्यमानस्मृतिवचनानां प्रामाण्यमेव युक्तमिति

मुद्रापितदेवलस्मृतिप्रामाण्याङ्गीकारोऽपि युक्त एवेति परे मन्यन्ते।

तत्प्रामाण्यस्वीकर्तारः केचन वत्सरचतुष्टयानन्तरं न प्रायश्चित्तीयतेति शूलपाण्याद्यनुसारेण, परे तु "संवत्सरैश्चतुर्भिस्तु तद्भावमधिगच्छति" इति देवलवचनस्यानुपनीताष्टवर्षबालविषयत्वात्तस्य च पादप्रायश्चित्तविधानात् पूर्णप्रायश्चित्ताधिकारिणामन्येषां वत्सरातिक्रमे न प्रायश्चित्तीयतेति श्रीस्मार्तभट्टाचार्यसिद्धान्तमनुसृत्य वदन्ति।

अन्ये तु प्रथमसंवत्सरमध्ये लघुसंसर्ग एव व्यवहार्यता, वत्सरचतुष्टयमध्ये तु स्वधर्माधिकारमात्रम्, न व्यवहार्यत्वमिति मन्यन्ते।

एतन्मते—"अथ पतिताः समवसाय धर्मांश्चरेयुरितरेतरयाजका इतरेतराध्यापका मिथो विवहमानाश्च" इति बोधायनसूत्रे पतितपदमकृतप्रायश्चित्तानां पतितानां स्वधर्माधिकारस्यैवासम्भवात् कृतप्रायश्चित्तपरमेव।

इतरे तु विंशतिवत्सरपर्यन्तं प्रायश्चित्तीयता व्यवहार्यता चेति वदन्ति।

सर्वमिदं समालोच्य यथोचितं श्रीमन्तः पण्डितप्रवरा व्यवस्थापयिष्यन्तीति सर्वतन्त्रस्वतन्त्रेषु नाधिकमत्रोपक्षिप्यते।

कार्तिककृष्ण ५ शुक्रवासरे
सम्वत् १९८५



विधेयतमः
अनन्तकृष्णशास्त्री
सम्पादकः।

* श्रीविश्वनाथः शरणम् *

अखिलभारतवर्षीय-

# ब्राह्मणमहासम्मेलने

## समालोचनीयप्रश्नावलीनामुत्तराणि ।

——*****——

( १३ ) प्रश्नः—देवलस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यं किमङ्गीकरणीयमुत न ?

( १४ ) प्र०—कियदवधि म्लेच्छसंसर्गेण प्रायश्चित्तीयता ?

(१५) प्र०—संवत्सरपर्यन्तं म्लेच्छसंसर्गिणां तदधिककालं यावत् म्लेच्छसंसर्गिणां च प्रायश्चित्तविषये व्यवहार्यताविषये च किमैकरूप्यमुत वैरूप्यम् ।

(१, २, ३, ४, ५, ६, ७, ८, ९, १०, ११,१२,१३,१४,१५,१६,१७,१८,१९)

उ०—देवलस्मृतेर्मन्वाद्येकवाक्यतास्थल एव प्रामाण्यम् नान्यत्र, तथाचैकवर्षपर्यन्तं प्रायश्चित्तीयतायां न विप्रतिपत्तिः । संवत्सरपर्यन्तं म्लेच्छसंसर्गे प्रायश्चित्तेन व्यवहार्यता, तदधिकसंसर्गिणां तु न ।

श्रीगणेशदत्तनैयायिकास्तु विंशतिवत्सरमध्ये म्लेच्छसंसर्गिणां प्रायश्चित्तीयतेति वदन्ति, परन्तु स संसर्गः सहवासमात्रमुत गुरुतरसंसर्गोऽपीति न विवेचयन्ति ।

पालघाटवैदिकसमाजतिरुवादिविद्यालयपण्डिता अपि श्रीसूर्यनारायणशास्त्रिणां मतमेवानुवर्तन्ते ।

मायूरशिवरामकृष्णशास्त्रिणोऽपि चतुर्वत्सरानन्तरं न प्रायश्चित्तीयतेत्येतावन्मात्रं वदन्ति, ततो न्यूनकालेऽपि संवत्सर-

पर्यन्तं लघुतरसंसर्गे प्रायश्चित्तीयता व्यवहार्यता च, तदनन्तरं तु प्रायश्चित्तीयत्वेऽपि न व्यवहार्यता।

विजयनगरपण्डिता अपि वर्षचतुष्टयपर्यन्तं प्रायश्चित्तीयता, व्यवहार्यतादिविषये तु मतभेदात् देशविशेषात् व्यवस्था, देवलस्मृतिर्मुद्रापिता न प्रमाणमिति वदन्ति। शूलपाण्युद्धृतवचनानां तु नाप्रामाण्यमिति वदन्ति। इदमेव ।तरुपतिपण्डितानां श्रीरामकृष्णशास्त्रिप्रभृतीनामपि मतम्।

शेखावाटीश्रीसीतारामशास्त्रिणस्तु यथाशास्त्रं संसर्गभेदादिना व्यवस्थेति वदन्ति।

देवलस्मृतेर्निबन्धानुसारेण प्रामाण्यमस्त्येव, संवत्सरपर्यन्तं म्लेच्छसंसर्गे न प्रायश्चित्तीयतेति मैथिलनिबन्धानुसारिणां मतम्। तेन्नालिवेङ्कटरामशास्त्रिणामपि इदमेव मतम्।

(२०) उ०—नोत्तरं लिखितम्।

(२१) उ०—वत्सरचतुष्टयावाध म्लेच्छसंसर्गिणां प्रायश्चित्तीयता, न तदुपरि।

(२२,२३) उ०—न किमपि लिखितम्।

(२४) उ०—"संवत्सरेण पतति पतितेन सहाचरन्" इति बहुस्मृतिसम्मतत्वात् किञ्चिदूनसंवत्सरपर्यन्तं प्रायश्चित्तीयता, वर्षचतुष्टयं यावत् म्लेच्छसंसर्गिणामपि प्रायश्चित्तीयतेति मतान्तरम्। विंशतिसंवत्सरं प्रायश्चित्तीयतेति देवलवचनमप्रमाणम्।

(२५) उ०—वत्सरमध्ये पतितानां प्रायश्चित्तेन स्वजातिसम्बन्धः, तदनन्तरं वर्षचतुष्टयं यावत् पृथक्संस्था, तदनन्तरं तु न प्रायश्चित्तीयतापीति।

(२६) उ०—बलात् मतान्तरप्रविष्टानां संवत्सरमध्ये संसर्गतारतम्यादि विचार्य प्रायश्चित्तादिना शुद्धिः कर्तव्या, संसर्गभेदेन व्यवहार्यतायां वैरूप्यमप्यस्ति।

(२७) उ०—संवत्सरचतुष्टयावधि देवलस्मृत्यनुसारेण प्रायश्चित्तीयता।

(२८) उ०—देवलस्मृतिरुपलभ्यमाना न प्रमाणम्। परं तु विनापि विधिं प्रायश्चित्तीयता सर्वेषां म्लेच्छानां शुद्धिश्च योग्या।

(२९) उ०—पश्चात्तप्तानां तु म्लेच्छसंसर्गपरित्यागे प्रायश्चित्तीयता, अन्यथा तु न।

(३०) उ०—मुद्रितदेवलस्मृतिरप्रमाणमिति संदेहो भवति, वर्षत्रयार्वागेवापस्तम्ववचनात्प्रायश्चित्तीयता।

(३१) उ०—एकवत्सरमध्ये स्वजातिप्रवेशः, तदनन्तरं तु वत्सरचतुष्टयमध्ये पृथक्संस्था।

(३२) उ०—नोत्तरं दत्तम्।

(३३) उ०—संवत्सरचतुष्टयमध्ये प्रायश्चित्तीयता, तदनन्तरन्तु तद्भावात् न प्रायश्चित्तीयता।

(३४) उ०—देवलस्मृतिः प्रमाणम्। संसर्गाभ्यासतारतम्यात् प्रायश्चित्तं वर्तत एव।

(३५) उ०—देवलस्मृतिरप्रमाणम्। सर्वदा प्रायश्चित्तीयता।

(३६) उ०—न किमपि लिखितम्।

(३७) उ०—संवत्सरचतुष्टयमध्ये प्रायश्चित्तीयता, तदनन्तरं तु तद्भावात् न प्रायश्चित्तीयता।

(३८) उ०—संवत्सरमध्ये प्रायश्चित्तीयता, तदधिककालसंसर्गे प्रायश्चित्ताधिक्यमेव। परं तु तेन स्वधर्माधिकारमात्रम्। व्यवहार्यताविषयेऽपि वैरूप्यं युक्तमेव।

(३९) उ०—न किमप्युक्तम्।

(४०) उ०—सर्वेषां प्रायश्चित्तीयता भवति; म्लेच्छानां हिन्दुसमाजे प्रवेशश्च, परं तु क्षत्रियेषु गणनीयाः पृथक्संस्था च तेषां कल्पनीया।

(४१) उ०—एकाब्दम्लेच्छसंसर्गेणैव प्रायश्चित्तीयता, न तदनन्तरम्।

(४२) उ०—संवत्सरपर्यन्तं म्लेच्छसंसर्गिणां व्यवहार्यता, संवत्सरचतुष्टये तु कृतप्रायश्चित्तानामप्यव्यवहार्यत्वम् ।

(४३) उ०—यावच्चतुर्विंशतिवर्षप्रायश्चित्तं म्लेच्छसंसर्गिणां प्रायश्चित्तीयता, संसर्गभेदादिना प्रायश्चित्तादिवैरूप्यमस्त्यैव ।

(४४) उ०—यावत् संवत्सरं प्रायश्चित्तीयता, न तु तदनन्तरम् ।

(४५) उ०—यवनसंसर्गेण यवनजातीयत्वमपि भवति ।

(४५) उ०—नोत्तरं लिखितम् ।

(४६, ४७, ४८) उ०—देवलस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यमङ्गीकार्यमेव ।

(४६) उ०—

संवत्सरैश्चतुर्भिश्च तद्भावमधिगच्छति ।
ह्रासो न विद्यते तस्य प्रायश्चित्तैर्दुरात्मनः ॥

इति वचनानुसारेण चतुर्वर्षपर्यन्तं प्रायश्चित्तीयता वर्तते ।

(५०) उ०—देवलस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यं नाङ्गीकरणीयम् ।

(५१, ५२, ५३) उ०—देवलस्मृतेः शूलपाण्यनुसारेण प्रामाण्यमङ्गीकरणीयम् । यत्र तु वचनान्तरेण सह विरोधस्तत्र तदेकवाक्यतया प्रामाण्यम् । शास्त्रीयव्यवस्थानुसारेण प्रायश्चित्तं वर्तत एव । संसर्गस्य लघुगुरुभेदेन वैरूप्यमप्यस्त्येव ।

(५४) उ०—विचारपूतं स्मृत्यादिप्रामाण्यमवश्यं सर्वैरङ्गीकरणीयम् ।

(५५, ५६, ५७) उ०—सर्वापेक्षया मनुस्मृतेर्बलवत्त्वात् तदेकवाक्यतया देवलस्मृतेः प्रामाण्यमङ्गीकरणीयम् ।

(५८) उ०—संवत्सरपर्यन्तं तदधिककालपर्यन्तं वा म्लेच्छसंसर्गिणां कृतप्रायश्चित्तानामपि न व्यवहार्यता ।

(५६) उ०—मनुस्मृत्येकवाक्यतया प्रामाण्यम् ।

(६०) उ०—एतावता उद्ग्रन्थमल्लस्य देवलवचनं गलहस्त इति ।

( ६१, ६२ ) उ०—मनुस्मृत्येकवाक्यतया प्रामाण्यम् ।

( ६३ ) उ०—

स्मार्तभट्टाचार्यवर्यगुरवः शूलपाणयः ।
देवलादिस्मृतिर्ग्राह्या तत्प्रदर्शितवर्त्मना ॥

( ६४ ) उ० यत्र यत्र स्मृतीनां विरोधस्तत्र स्वतर्केण निश्चेतव्यमित्यस्मदीयं मतम् । वत्सरमध्ये म्लेच्छसंसर्गिभिः प्रायश्चित्तं यथोक्तं करणीयं, तदूर्ध्वं व्यवस्थितप्रायश्चित्तस्य द्विगुणं विधेयम् ।

संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः ।

इति विधानात् । शास्त्रावधारितजात्यन्तरसमतापक्षेऽपि यथोक्तं प्रायश्चित्तं कृतवतां नरकोत्पादिका शक्तिः क्षीयते, व्यवहारनिरोधिका शक्तिरव्याहतैव, किं त्विदानीं सुदूरलण्डनप्रवासिनां बसरावास्तव्यानां च व्यवहार्यता सर्ववादिसम्मता, यतः केचन केषांचन कृतविद्यानां घनिष्ठकुटुम्बाद्यवगाहिस्वजनाः, केचन केषांचिद्धनवतां पुत्रपौत्रादिरूपानुरक्तभाविहितैषिणः, फलतः म्लेच्छराजानां सम्पत्क्रीतानां महदाश्रितानां च सदसद्विचारो मार्जनीयः ।

( ६७, ६८ ) उ०—देवलस्मृतेः प्रामाण्यं रक्षणीयम् ।

( ७० ) उ०—देवलस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यं नाङ्गीकरणीयम् । सा हि स्मृतिः प्रायश्चित्तलाघवात् अनुपनीताष्टवर्षाभ्यन्तरबालविषया ।

( ७४ ) उ० मनुवचनैकवाक्यतया देवलस्मृतेः प्रामाण्यम् । किं च रघुनन्दनव्यवस्थयैव देवलस्मृतेः प्रामाण्यमङ्गीकरणीयम् । म्लेच्छसंसर्गिणस्तृतीयसंसर्गिपर्यन्तं प्रायश्चित्तं करणीयम् । प्रायश्चित्ताश्रवणाच्चतुर्थसंसर्गिणः प्रायश्चित्तं नास्ति । तथा च प्रायश्चित्तविवेके व्यासः,

ये तदन्नाशिनो विप्राः कृच्छ्रं तेषां विधीयते ।

तद्भोजिनोऽर्धकृच्छ्रं तु तदन्नादस्य पादतः।

तथा आपस्तम्बः,

भुक्तं यैस्तत्र पक्वान्नं कृच्छ्रं तेषां विनिर्दिशेत्।
तेषामपि च यैर्भुक्तमर्धं तेषां विधीयते॥
तेषामपि च यैर्भुक्तं तेषां पादो विधीयते।

अतः—

यो येन पतितेनैषां संसर्गं याति मानवः।
स तस्यैव व्रतं कुर्यात् तत्संसर्गविशुद्धये॥

इति मनुवचनं संसर्गित्रितयपरं, प्रायश्चित्तमपि एतेष्वेव, अन्यत्र प्रायश्चित्ताश्रवणात्। लघुतरसंसर्गे म्लेच्छस्पर्शे तु द्वितीयादिसंसर्गिणि पापोत्पत्तौ प्रमाणं नास्ति, अतः प्रथमस्यैव प्रायश्चित्तं, वचनात्। तदाह वृद्धशातातपः,

अशुचिं संस्पृशेद्यस्तु एक एव स दुष्यति।
तत्स्पृष्टोऽन्यो न दुष्येत्तु सर्वद्रव्येष्वयं विधिः॥ इति।

मिताक्षरायां तु पञ्चमसंसर्गिणोऽपि प्रायश्चित्तमुक्तम्। यथा "न च संसर्गिसंसर्गिणः पातित्याभावेन कथं प्रायश्चित्तमिति वाच्यम्।

एनस्विभिरनिर्णिक्तैर्नार्थं कंचित्समाचरेत्।

इति सामान्येन एनस्विमात्रसंसर्गप्रतिषेधेन महापातकिसंसर्गिसंसर्गस्यापि प्रतिषिद्धत्वात् पातित्याभावेपि युक्तमेव प्रायश्चित्तं, तच्च पादहीनम्।

यो येन संवसेद्वर्षं सोपि तत्समतामियात्।
पादहीनं चरेत्सोऽपि तस्य तस्य व्रतं द्विजः॥

इति व्यासोक्तं द्रष्टव्यम्। एवं चतुर्थपञ्चमयोरपि कामतः संसर्गिणोरर्धहीनं त्रिपादोनं च द्रष्टव्यमिति।

(७९) उ०—देवलस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण आलापनध-

नग्रहणेतरत्र प्रामाण्यमङ्गीकरणीयम् । तदुभयत्र तु सर्वदेशीयानामाचारः ।

(९०) उ०—याजनं योनिसम्बन्धः स्वाध्यायः सहभोजनम् ।
कृत्वा सद्यः पतन्त्येते पतितेन न संशयः ॥

इति देवलस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यमङ्गीकरणीयम् ।

एकोपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।
स एव परमो धर्मो नाज्ञानामयुतायुतैः ॥

इति वचनात् चण्डालम्लेच्छयोः साम्यमेव । कामतः चतुर्विंशतिवारभोजनसंसर्गे एतैः सह जाते सति चतुर्विंशतिवार्षिकव्रतेन शुद्धिर्व्यवहार्यता च, तत्स्त्रीणां कामतः सकृत् गमनेपि तथैव ।

( ९१ ) उ०—बहुवारं म्लेच्छसंसर्गात्तत्तज्जात्तिप्राप्तावपि प्रायश्चित्तार्हता वर्त्तत एव, किंतु न व्यवहार्यता ।

( ९८ ) उ०—शूलपाण्यादिव्यवस्थया देवलस्मृतेः स्वमतपोषकता । अन्यथा तु न ।

( ९९ ) उ०—यत्तु

म्लेच्छैः सहोषितो यस्तु पञ्चप्रभृतिविंशतिः ।
वर्षाणि शुद्धिरेषोक्ता तस्य चान्द्रायणद्वयम् ॥
ऊर्द्ध्वं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः ।
संवत्सरैश्चतुर्भिस्तु तद्भावं सोऽधिगच्छति ॥

इत्यादि देवलवचनं, तत् लघुतरलघुतमादिसंसर्गे यथायोग्यं बोद्धव्यम् ।

(१००) उ०—अस्मद्देशे शूलपाणिप्रभृतीनां व्यवस्था प्रचलिता । देवलस्मृतिस्तु संग्रहकृता यत्र यत्र धृता प्रमाणीकृता च तत्र तत्रैव व्यवहार्या, अतो न सर्वत्र प्रामाण्यमङ्गीकरणीयम् ।

(१०१) उ०—देवलस्मृतिः प्रमाणमेव । अज्ञानतो म्लेच्छसंसग समाजकल्याणार्थितया राजकोपेन चिकित्साविधानेन आपत्काले च म्लेच्छसंसर्गे किमपि प्रायश्चित्तमत्यावश्यकम् । कामतोऽपि म्लेच्छैः संस्पृष्टानां सत्यनुतापे पुनः स्वसमाजे प्रवेशार्थं किमपि प्रायश्चित्तमवश्यं कल्पनीयम्, तत्र च पातकगौरवलाघवविचारो योग्यः ।

(१०७) उ०—देवलस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यमङ्गीकरणीयं, म्लेच्छैः सह संसर्गतारतम्येन प्रायश्चित्ततारतम्यमङ्गीकरणीयं, न तत्र कश्चिदवधिरस्ति ।

(१०८) उ०—देवलस्मृतेः प्रामाण्यमङ्गीकरणीयम् । तृतीयसंसर्गपर्यन्तं दोषजनकत्वे वैरूप्यमस्ति ।

(१०९) उ०—बहुस्मृतिविरोधेन देवलस्मृतेरप्रामाण्यम्, यथा,

गृहीतो यो बलान्म्लेच्छैः पञ्च षट् सप्त वा समाः ।
दशादि विंशति यावत् तस्य शुद्धिर्विधीयते ॥

अस्य देवलवचनस्य "चण्डालान्त्यस्त्रियो गत्वा" इत्यादिवचनविरोधादप्रामाण्यम् । म्लेच्छैर्बलात्कारेण गृहीतोपि स्वान्नं तदीयद्रव्येण वा तण्डुलादीन् क्रीत्वाऽन्नं भक्षयति । देवलवचनोक्तं प्रायश्चित्तं विधीयत इति भावः । स्मृत्युक्तावधिपर्यन्तं म्लेच्छसंसर्गे प्रायश्चित्तं भवति ।

(११३) उ०—संवत्सरपर्यन्तं म्लेच्छसंसर्गे प्रायश्चित्तयोग्यता ।

संवत्सरपर्यन्तं संसर्गापेक्षया तदधिककालम्लेच्छसंसर्गे प्रायश्चित्ततारतम्यमस्त्येव, परं कृतेपि प्रायश्चित्ते व्यवहार्यता न भवति ।

(११५) उ०—देवलस्मृतिविषये शूलपाणिव्यवस्थाऽङ्गीकरणीया ।

एकवर्षपर्यन्तं म्लेच्छसंसर्गेण प्रायश्चित्तीयता । म्लेच्छसंसर्गविषये प्रायश्चित्तीयत्वव्यवहार्यत्वयोर्वैरूप्यमस्त्येव ।

(११६) उ०—देवलस्मृतिः प्रमाणमेव।

(११७) उ०—देवलस्मृतेर्न केवलं शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यं किं, तु "संस्काराद्ब्राह्मणो भवेत्" इत्यादिवेदोपबृंहितवचनप्राचुर्येणापि प्रामाण्यमङ्गीकरणीयमेव। म्लेच्छसंसर्गप्रायश्चित्तस्य म्लेच्छसंसर्गव्यतिरिक्तस्थलकालकर्तव्यत्वविधानादिदानीं तादृशस्थलकालयोरभावाच्च तद्विचारस्य वैयर्थ्यापादनेन तद्विषयकं प्रश्नद्वयं निरस्तमिति सविनयं विज्ञाप्यते। यदि प्रायश्चित्तं करणीयमेवेत्याग्रहः, तदापि—

यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके।
प्राशनं पञ्चगव्यस्य दहत्यग्निरिवेन्धनम्॥

इत्येतन्मन्त्रं मनसि कृत्वा त्रिवारं पंचगव्यसेवनेन सर्वे पापाः प्रणश्यन्ति, सर्वप्रायश्चित्तफलमपि लभ्यते इत्येव ममाशयः।

(११९, १२०) उ०—प्राचीनपक्ष एव।

(१२१) उ०—केषुचिदंशेषु प्रमाणं केषुचिच्च न। सति पश्चात्तापे अवधिनियमनं न योग्यम्। तथापि स्थिरः कश्चिदवधिस्तु अपेक्षित एव। संसर्गलाघवगौरवविचारोऽपि योग्यः।

(१२२) उ०—देवलस्मृतिर्न प्रमाणम्। म्लेच्छसंसर्गप्रायश्चित्तेऽवधिनियमनं न योग्यम्।

(१२४) अहिन्दूनां हिन्दुत्वं सम्भवति न तु द्विजत्वादि।

(१२५, १२६, १२७, १२८, १३६, १३७, १३८, १४३, १४४) उ०—प्रामाण्यमस्त्येव।

(१४५) उ०—देवलस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यं, तद्विरुद्धानाञ्च स्मृत्यन्तरानुकूल्येन प्रामाण्यं भवितुमर्हति। प्रामाण्याङ्गीकारेऽपि देशाचारभेदाद् व्यवस्था।

"येषु स्थानेषु यच्छौचं धर्म्माचारश्च यादृशः।
तत्र तं नावमन्येत धर्म्मस्तत्रैव तादृश" इति मरीचिवचनात्।

येन म्लेच्छसंसर्गः कृतः, स मरणपूर्वकालपर्यन्तं प्रायश्चित्ताधिकारी। मरणोत्तरं तत्पापक्षयार्थं तदीयगुर्वादिभिरपि प्रायश्चित्तं कर्तुं शक्यत इति स्मार्तभट्टाचार्यादिमतम्। परन्तु सद्यो ज्ञानकृतगुरुतरसंसर्गेण चिरकालाभ्यस्तसंसर्गेण वा म्लेच्छभावं प्राप्तस्य कृतेऽपि प्रायश्चित्ते व्यवहार्यत्वं नास्तीति तत्सिद्धान्तः। संसत्सरपर्यन्तम्लेच्छसंसर्ग इत्यादिकालविशेषनिर्देशयुक्तप्रश्नदर्शनात् त्रयोदशप्रश्ने देवलस्मृतेरुल्लेखाच्चानुमीयते देवलवचनमत्र पृच्छ्यते। तदुल्लेखपूर्वकं प्राचीननिबन्धसम्मतसिद्धान्तः प्रदर्श्यते। तथाहि प्रायश्चित्तविवेके देवलः—"दासीकृतो बलान्म्लेच्छैश्चाण्डालाद्यैश्च दस्युभिः। अशुभं कारितं कर्म्म गवादेः प्राणहिंसनम्। उच्छिष्टमार्जनञ्चैव तथा तस्यैव भोजनम्। खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम्। तत्स्त्रीणाञ्च तथा सङ्गस्ताभिश्च सह भोजनम्। मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम्। चान्द्रायणन्त्वाहिताग्नेः पराकस्त्वथवा भवेत्। चान्द्रायणं पराकं वा चरेत् संवत्सरं द्विजः। संवत्सरोषितः शूद्रो मासार्द्धं यावकं पिबेत्। मासं विप्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति॥ ऊर्द्ध्वं संवत्सरात् कल्प्यं प्रायश्चित्तं द्विजोत्तमैः। संवत्सरैश्चतुर्भिश्च तद्भावं सोऽधिगच्छति। ह्रासो न विद्यते तस्य प्रायश्चित्तैर्दुरात्मनः।" तदिह म्लेच्छैश्चाण्डालाद्यैर्दस्युभिर्यदाऽनाहिताग्निद्विजातिरुच्छिष्टमार्जनोच्छिष्टभक्षणखरोष्ट्रविड्वराहमांसभक्षणम्लेच्छस्त्रीसङ्गतदीयस्त्रीसहभोजनादि कुत्सितं कर्म्म बलात् मासैकं कारितः, तदा तेन प्राजापत्यं, साग्निना तु चान्द्रायणं कार्यम्, क्षत्रियवैश्याभ्यां पराकव्रतम्, अनग्निना तु ब्राह्मणेन वत्सरैकदास्यकरणे चान्द्रायणं कार्यम्, इतराभ्यां पराकः। शूद्रेण तु मासैकदास्ये कृच्छ्रपादव्रतम्।

वत्सरैकदास्ये मासार्द्धं यावकपानं, वत्सराद्दूर्ध्वं वत्सर-चतुष्टयं यावत्तावद् भागहारेण प्रायश्चित्तमूहनीयम्। तदूर्ध्वं तत्समत्वेन पतितत्वात् प्रायश्चित्ताभावान्मरणमिति शूलपाणिमहामहोपाध्यायाः। यत्र समत्वाभिधानं तत्र मरणवैकल्पिकचतुर्विंशतिवार्षिकव्रते कृतेऽपि अव्यवहार्यत्वमिति अनुपातप्रकरणे तत्सिद्धान्तः। अत्र तत्स्त्रीणां सङ्गः सहवासो, न तु मैथुनम्, तत्र चाण्डालतुल्यत्वाभिधानादिति तद् व्याख्याता गोविन्दानन्दः। अत्रैव स्मृतिभट्टाचार्याः, तत् प्रायश्चित्तलाघवात् अनुपनीताष्टवर्षबालविषयम्। अत्र जातमात्रस्याहिताग्नित्वसम्भवः। तथा च जावालः,–"जाते कुमारेऽरणिं मथित्वा तस्मिन्नायुष्यहोमान् जुहोति" इत्याद्यनन्तरं "स शालाग्नि" रित्यादि। तथा च अष्टवर्षाभ्यन्तर-वर्त्ती बालको यदि म्लेच्छचाण्डालैर्बलात् उच्छिष्टमार्जना-दिरूपकुत्सितं कर्म्म कारितः स्यात् तदैव देवलोक्तं शूल-पाणिव्याख्यातञ्च प्रायश्चित्तं वत्सरैकस्थले वेदितव्यम्, तदू-र्द्धवयस्कस्य तु प्रायश्चित्ताधिक्यम्, पूर्णवयस्कस्य बलात्ता-दृशकर्म्मकरणे ज्ञानकृतान्न्यूनमज्ञानकृताच्चाधिकं तत्तुल्यं वा प्रायश्चित्तम्, अष्टाचत्वारिंशद्वाराभ्यस्ततदन्नभोजनेन पातित्य-मिति स्मार्तसम्मतसिद्धान्तः। तदयं निष्कर्षः, संवत्सरपर्यन्तं म्लेच्छसंसर्गिणां अष्टवर्षानधिकवयस्कानां प्रायश्चित्तलाघवम्, वर्षचतुष्टयगते तु कृतप्रायश्चित्तानामपि तेषामव्यवहार्यत्वम्। वसन्तरानन्तरं भागहारेण प्रायश्चित्तवृद्धिरुपरि दर्शितैव।

(१४६) मुद्रापितदेवलस्मृतेर्बहूनि वचनानि शूलपाणिमयूखकारादि-भिः स्वनिबन्धे समुद्धृतानीति तत्प्रामाण्यमवश्यमूरीकरणी-यम्। सति चैवं वत्सरचतुष्टयपर्यन्तं प्रायश्चित्तीयता ततोऽव-गम्यते इति स्पष्टमेव सर्वेषाम्।

यत्तु—

> म्लेच्छैस्सहोषितो यस्तु पञ्चप्रभृतिविंशतिः ।
> वर्षाणि शुद्धिरेषोक्ता तस्य चान्द्रायणद्वयम् ॥

इति, तदिदं सहवासरूपलघुतरसंसर्गमात्रपरम्, न तु तदन्नभक्षणादिपरम् । अत एव शूलपाणिना—"संवत्सरचतुष्टयानन्तरं प्रातश्चित्ताभावान्मरण" मिति स्वजातिधर्माधिकारः सर्वथा वार्यत इति । इदं तु बलात्कारापादितम्लेच्छसंसर्गादिपरम्, न तु कामतस्तत्संसर्गादिपरम् । कामतस्तु संवत्सरद्वयमध्य एव प्रायश्चित्तानर्हता । स्मार्तभट्टाचार्यास्तु "संवत्सरैश्चतुर्भिस्तु" इति अष्टवर्षन्यूनबालपरमिति वदन्तः प्रवृद्धानां संवत्सरमध्य एव स्वजातिधर्मानधिकार इति विवेचयन्ति । सर्वथा तु संवत्सरानन्तरं स्मार्तभट्टाचार्यसिद्धान्तरीत्या न प्रायश्चित्तीयता । मतान्तरदृष्ट्या तु संवत्सरचतुष्टयमध्ये । तत्राप्ययं विशेषोऽनुसन्धेयः—यत् संवत्सरपर्यन्तं म्लेच्छसंसर्गे स्वजातिप्रवेशः, तस्यापि लघुसंसर्गत्व एवेयं व्यवस्था । भोजनादौ यावच्चतुर्विंशतिवार्षिकप्रायश्चित्तं प्रायश्चित्तीयता, तदनन्तरं तु न । द्वादशवार्षिकप्रायश्चित्तमात्रेण तु व्यवहार्यता भवति । तदधिके तु स्वधर्माधिकारमात्रम् । एतानेव पतितानधिकृत्य "अथ पतिताः समवसाय धर्मांश्चरेयुरितरेतरयाजका" इति बौधायनसूत्रं प्रवृत्तमिति नन्दपण्डितेनाप्युक्तं स्वीयविष्णुस्मृतिव्याख्यायाम् । यद्यपि "पतिताः समवसाय" इति वाक्यं पतितोत्पन्नपरमिति नन्दपण्डितेनोक्तम्, तथापि तैरेव त्यक्तपतितपरत्वस्यैव वर्णनात् वत्सराधिकम्लेच्छसंसर्गिणामपि तदुपलक्षणमेवतैरेव सूचितमिति निष्कर्षः ।

---

॥ श्रीविश्वनाथः शरणम् ॥

## षष्ठो भागः ।

अखिलभारतवर्षीय-

# ब्राह्मणमहासम्मेलने

## समालोचनीयप्रश्नालीनामुत्तराणि ।



(१६) षोडशः प्रश्नः—व्रात्यसंस्कारः कियत्परम्परापर्यन्तं शास्त्रसिद्धः ।

(१, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९ ) उ०—अनेकपरम्परातिक्रमेऽपि व्रात्यसंस्कारयोग्यतेति जयपुरसूर्यनारायणशास्त्रिणां मतम् । शेखावाटासीतारामशास्त्रिणामपीदमेव मतम् ।

परम्परात्रयानतिक्रम एव व्रात्यसंस्कार इति भगवान्शास्त्रिणः, तेन्नालिवेंकटरामशास्त्रिणः, पालघाटवैदिकसमाजतिरुवादिपण्डिताः, श्रीरामकृष्णशास्त्रिप्रभृतयो विजयनगरपण्डितास्तिरुपतिपण्डिताश्च वदन्ति ।

मायूरशिवरामकृष्णशास्त्रिणस्तु कस्यामपि परम्परायां न व्रात्यसंस्कारयोग्यतेति वदन्ति ।

वाणीशझामहोदयाः त्रिपुरुषमेव व्रात्यसंस्कारयोग्यता, क्वचित्तु दशपुरुषपर्यन्तमपि व्रात्यसंस्कारो दृश्यत इति वदन्ति ।

( २०, २१, २२ ) उ०—पुरुषत्रयावधि शास्त्रसम्मतः ।

( २४ ) उ०—द्वादशपुरुषावधि व्रात्यसंस्कारयोग्यता ।

( २५ ) उ०—पुरुषचतुष्टयानुपनीतत्व एव व्रात्यसंस्कारः, वीरमित्रोदये तथोक्तेः ।

( २६ ) उ०—व्रात्यपरम्पराजातानां न व्रात्यसंस्कारः।

( २७ ) उ०—त्रिपुरुषं व्रात्यसंकारयोग्यता।

( २८ ) उ०—परम्परानियमो वर्तते, अघाहवर्धनमपि कर्तव्यम्।

( २९ ) उ०—परम्पराग्रहणेन न व्रात्यसंस्कारः।

( ३० ) उ०—पुरुषत्रयपर्यन्तमेव व्रात्यसंस्कारः।

( ३१, ३३, ३४, ३५, ३६, ३७, ३८, ३९, ४० ) उ०—त्रिपुरुषमेवानुपनीतानां व्रात्यसंस्कारः।

( ४१ ) उ०—परम्पराचतुष्टयातिक्रमे न व्रात्यसंस्कारयोग्यता।

( ४२ ) उ०—त्रिपुरुषं व्रात्यसंस्कारयोग्यता, परम्पराऽविगणनेऽपि व्रात्यसंस्कारयोग्यतेति केषांचन मतम्।

( ४३ ) उ०—त्रिपुरुषमनुपनीतानामपरिणीतासवर्णकन्यकानां परिपाल्यमानजननादिनिमित्तद्विजाद्याशौचानां व्रात्यसंस्कारयोग्यता। "त्रिपुरुषं मातृतः पितृतश्चाशुद्धा" इति त्याज्यप्रकरणीयविष्णुसूत्रात्, "यस्य प्रपितामहादी" त्यापस्तम्बवचनाच्च। "शनकैस्तु क्रियालोपात्" इत्यत्र शनकैः पदमपि प्रपितामहपर्यन्तार्थकम्।

( ४५ ) उ०—त्रिपुरुषम्, त्रिपुरुषाधिकस्य व्रात्यस्य न संस्कारः, "त्रिपुरुषं पतितसावित्रीकाणामपत्ये नोपनयनं नाध्यापनं च" इति पारस्करगृह्यसूत्रात्।

( ४६, ४७ ) उ०—व्रात्यसंस्कारः त्रिपुरुषपर्यन्तं शास्त्रसिद्धः अग्रे तूपनयनं भवति, नाध्यापनम्।

( ४८ ) उ०—बहुपरम्परायामपि व्रात्यसंस्कारः शास्त्रसिद्धः।

( ४९, ५० ) उ०—त्रिपुरुषपर्यन्तं व्रात्यसंस्कारः शास्त्रसिद्धः, न चतुर्थे।

( ५१, ५२, ५३, ५४, ५५, ५६, ) चतुर्थपुरुषपर्यन्तं व्रात्यसंस्कारः शास्त्रसिद्धः, अतः परं निषिद्धः, "त्रिपुरुषं पतितसावित्रीकाणामधिकारो नाध्यापनं च तेषाम्" इति पारस्करगृह्यसूत्रात्, आपस्तम्बादिसूत्राच्च।

(५७, ५८ ) उ०—"व्रात्यात्तु जायते विप्रात्पापात्मा" इतिमन्वादिवचन-

पर्यालोचनया उपनयनोत्तरकालात्परं संस्कारक्रमप्राप्तविवाह-संस्कारात्प्राक् व्रात्यसंस्कारः कार्यः। अग्रेपि त्रिपुरुषपतितसावित्रीकाणामेव व्रात्यसंस्कारो भवितुमर्हति, पारस्करसूत्रात्।

(६०,६१) उ०—व्रात्यसंस्कारः पुरुषत्रयपर्यन्तं शास्त्रसिद्धः, आपस्तम्बसूत्रात्। केचित्तु सप्तमपुरुषपर्यन्तमिति वदन्ति।

आसप्तमाच्च पुरुषात्सावित्री पतिता यदि।
चान्द्रायणसहस्रेण न ते शुद्धिमवाप्नुयुः॥

इति वचनात्।

(६५) उ०—सम्प्रति स्थविरदशायां बहुपुरुषात्परमपि व्रात्यसंस्कारं विधाय क्षत्रियवैश्यभिन्नवर्णैः अज्ञातकुलाचारैरुपवीतग्रहणं विधीयते पण्डितरत्नैरिति।

(७१) व्रात्यसंस्कारस्त्रिपुरुषपर्यन्तं भवति, तदनन्तरं कृतेपि गुरुतरप्रायश्चित्ते न योग्यता। तथा च पारस्करगृह्यसूत्रे द्वितीयकाण्डे ५ कण्डिकायां ४२ सूत्रं, "त्रिपुरुषं पतितसावित्रीकाणां अपत्ये संस्कारो नाध्यापनं च", ४३ सूत्रं, "नैनमुपनयेयुर्नाध्यापयेयु"रिति। अस्य हरिहरभाष्यम् "पतितास्खलिता अधिकाराभावान्निवृत्ता सावित्री गायत्री येभ्यस्ते पतितसावित्रीका भवन्ति सम्पद्यन्ते तेषां त्रीन् पुरुषान्यावत् ये पतितसावित्रीकाः पितृपुत्रपौत्राः तेषामपत्ये पुत्रे संस्कारः उपनयनं भवति न पुनश्चतुर्थादीनाम्। एवं आपस्तम्बसूत्रे हरदत्तस्वामिना व्याख्यातं, "प्रपितामहादेरिति। प्रपितामहः पितामहः पिता स्वयं चानुपनीतः तत्रैव प्रायश्चित्तीयता संस्कारश्च। एतदधिकपुरुषेषु अनुपनीतेषु न तथा"।

(७६) उ०—त्रिपुरुषं व्रात्यसंस्कारो भवति, पारस्करसूत्रात्। यत्तु—

आसप्तमात्तु पुरुषान्नोपनीतद्विजन्मनाम्।
प्रायश्चित्तशतेनाऽपि निष्कृतिर्नैव जायते॥

इति वृहन्मनुना सप्तमपुरुषं यावत् व्रात्यसंस्कारः करणीय

इत्युक्तं, तत् जडत्वमूकत्वादिनाऽनुपनीतविषयम्, तत्रैव तस्य व्यवस्थापितत्वादिति। जडत्वमूकत्वादिनाऽनुपनीतानां अपतितत्वं पितृधनाधिकारित्वं च दायभागे उक्तं यथा "उपनयनानर्हस्यानुपनीतत्वे शूद्रवदपतितत्वात्, तेनैतेषां यथासम्भवमौरसक्षेत्रजाः क्लीबत्वादिशून्याः स्वपित्रनुसारेण भागहारिणः। अत्रोपनयनानर्हपदेन उपनयनयोग्यानामेव पातित्यमभिहितम् न तु उपनयनानधिकारिणां जडादीनाम्" इति।

(८०) उ०—त्रिपुरुषावधिव्रात्यदोषस्थले द्वादशवार्षिकं कर्तव्यं, तदधिकपुरुषावधि व्रात्यदोषस्थले प्रायश्चित्तव्यवस्था शास्त्रे न लिखिता। यदि चान्यत्र दृष्ट्या व्यवस्था कल्प्यते तदा यवनादीनामपि भूतपूर्वक्षत्रियत्वात् चतुर्विंशतिवार्षिकादिव्रतानुष्ठानेन शुद्धतया संस्कारापत्तिः व्यवहारापत्तिश्च दुर्निवारा स्यादिति।

(८१) उ०—"शनकैस्तु क्रियालोपा"दिति मनुवचनस्य मेधातिथिभाष्ये उक्तम् "अथ वा शास्त्रार्थसंशये प्रायश्चित्तेनापि एषां परिषद्गमनाभाव इति पुनस्तत्रैवोक्तम्। ननु महाभारतादौ क्षत्रिया वर्तन्ते। तथा अद्यत्वेऽपि एते क्षत्रिया एवेति कस्यचिद्भ्रान्तिः स्यादत एवोक्तं "एते वृषला एवेति"।

(८६) उ३—मनुसंहिताया,

> शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायत।
> अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमात्युगात्॥
> शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।
> क्षत्रियाज्जातमेवं तु विद्याद्वैश्यं तथैव च॥

याज्ञवल्क्यसंहितायां,

> जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेपि वा।

एतेन सप्तमे जन्मनि पञ्चमे जन्मनि याज्ञवल्क्योक्त'वा'शब्देन तृतीये जन्मनि च ब्राह्मणत्वलाभविषये व्रात्यसंस्कारः शास्त्र-

सिद्धः। संस्काराभावे न ब्राह्मणत्वं लभेत, तथा चोक्तं मनुना,

नैतैरपूतैर्विधिवत् आपद्यपि च कर्हिचित्।

ब्राह्मान्यौनांश्च सम्बन्धानाचरेद् ब्राह्मणः सह ॥

एतद्वचनोक्ता एषा व्यवस्था कलीतरपरा। कलौ चतुर्वर्णानां परस्पराव्यवहाराभावात् ॥

(९७) उ०—व्रात्यसंस्कारः स्वपितामहपर्यन्तं शास्त्रसिद्धः। स्वपितृपितामहयोरेकतरस्योपनयने अन्यतरस्योपनयनाभावेऽपि स्वस्य उपनयनं स्यात्। अनयोरुभयोरुपनयनाभावे स्वस्यापि नोपनयनं स्यात्।

पिता पितामहौ यस्य नोपनीतौ द्विजन्मनः।

कृतकृत्योप्यसौ सद्भिर्नोपनेयः कदाचन ॥

इत्यादिवचनात्।

(१००) उ०—व्रात्यसंकारः सप्तमपुरुषपर्यन्तम् "आसप्तमात्तु पुरुषा" दित्यादिवचनात्।

(१०७) उ०—संस्कृतमातापितृजातस्यैव व्रात्यस्य संस्कार्यता।

(१०८) उ०—त्रिपुरुषपर्यन्तं शास्त्रसिद्धः।

(११५) उ०—त्रिपुरुषपर्यन्तं व्रात्यसंस्कारः शास्त्रसिद्धः। आपस्तम्बमते चतुर्थे संस्कारमात्रं गार्हस्थ्योपदेशश्च। पञ्चमस्य व्रात्यसंस्कारः। षष्ठादारभ्य प्रकृतिवत्।:

(११६, १२०, १२१) उ०—प्राचीनपक्षः।

(१२३) उ०—अनेकपुरुषपरम्परापर्यन्तं व्रात्ययसंस्कार।

(१२४, १२५, १२६, १२७, १२८, १३४, १३६, १३७, १३८, १४३, १४४) उ०—प्राचीनपक्षः।

(१४५) उ०—त्रिपुरुषपर्यन्वं व्रात्यसंस्कारः शास्त्रसिद्धः। केचित्तु तदधिकपुरुषक्रमेण व्रात्यतां प्राप्तानामपि संस्कारं मन्यन्ते। किन्तु यावन्तः पुरुषा व्रात्यास्तावतां संख्याज्ञानमावश्यकम्, प्रतिपुरुषं

एकैकगोदानरूपप्रायश्चित्तस्य तैर्विधानात्। शूद्रेण यौनसम्बन्धं कृतवत्सु द्विजेषु कस्यापि व्रात्यसंस्कारो नास्ति। अत्र प्रमाणमापस्तम्बादिवचनं प्रसिद्धम्। मनुश्च व्रात्यानां वंशे जात्यन्तरप्राप्तिमाह—"व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः" इत्यादि। "शनकैस्तु क्रियालोपा" दिति वचने 'शनकैः' इत्युक्त्या त्रिपुरुषव्रात्यत्वं सूचितम्। अपि च "व्यभिचारेण वर्णानां अवेद्यावेदनेन च। स्वकर्मणां च त्यागेन जायन्ते वर्णसंकराः"। अत्र अकृतमासाशौचादिरूपशूद्राचाराणां द्विजातिवंश्यत्वेन निर्विप्रतिपत्तिकं पूर्वतः प्रसिद्धानाम् अगणितपुरुषपरम्परया सत्यपि व्रात्यत्वे यथाविधि प्रायश्चित्तानन्तरं संस्कारो भवितुमर्हतीति केचन मन्यन्ते।

(१४६) उ०—"यस्य प्रपितामहादि नानुस्मर्यते" इति प्रपितामहपर्यन्तमनुपनयन एव व्रात्यसंस्कारविधानात् त्रिपुरुषं पतितसावित्रीकाणामेव व्रात्यसंस्कारयोग्यत्वम्। अत एव विष्णुस्मृतौ "अथ त्याज्या" इत्युपक्रम्य "व्रात्याः त्रिपुरुषं मातृतः पितृतश्चाशुद्धा" इति त्रिपुरुषं पतितसावित्रीकाणां त्याज्यत्वमुपवर्णितमुपपद्यते। तत्र पण्डितप्रवरा एव प्रमाणमिति निष्कर्षः।

( १४८, १४६, १५१, १५२, १५३, १५५, १५७ ) उ०—त्रिपुरुषपर्यन्तम्।

(१५८) उ०—सप्तमपुरुषपर्यन्तं शास्त्रसिद्धः। यथा स्मृतिसागरे वृहन्मनुः—

आ सप्तमाच्च पुरुषान्नोपनीतो द्विजो यदि।
प्रायश्चित्तशतेनापि निष्कृतिर्न विधीयते।

(१५६, १६०, १६१ ) उ०—प्राचीनपक्षः।

(१६४) उ०—म० म० स्वर्गीय. पं० राममिश्रशास्त्रिकृतव्रात्यसंस्कारमीमांसानुसारतः।

(१६६, १६६, १७०, १७१ ) उ०—प्राचीनपक्षः।

❋ श्रीविश्वनाथः शरणम् ❋

अखिलभारतवर्षीय-

# ब्राह्मणमहासम्मेलने

सम्मालोचनीयप्रश्नावलीनामुत्तराणि ।



(१७) सप्तदशः प्रश्नः—जातिसामान्यमैहिककर्मकृतमव्यवस्थितमुत जन्मकृतं व्यवस्थितं च ?

(१, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९, २०, २१, २२, २३, २४, २५, २६, २७, २८, २९, ३०, ३१, ३२, ३३, ३४, ३५, ३६, ३७, ३८, ३९, ४०, ४१, ४२, ४३, ४४, ४५, ४६, ४७, ४८, ४९, ५०,) उ०—जातिसामान्यं जन्मकृतमिति सर्वसम्मतोऽयं विषयः ।

(५५) उ०—जातिसामान्यं कर्मकृतं,

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।

इति भगवद्गीतोक्तेः ।

(९७) जन्मकृतैव, विश्वामित्रादिदृष्टान्तेन जातिपरिवृत्तिवादस्तु न योग्यः । तद्वादिनो हि एवं वाच्याः, यत्खलु भवन्तो विश्वामित्रवत् पूर्वं सहस्रवत्सरं पुनर्बहुसहस्रवत्सरान् पुनरपि बहुसहस्रवत्सरान् व्याप्य कठोरं तपस्तप्यन्तु, अपि च—

'पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर ।
एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा ॥

इति रामायणोक्तरीत्या त्रिशङ्कुमिव कमपि स्वशरीरेण स्वर्गं नयन्तु, अपि च—

सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान्पुनः ।
नक्षत्रवंशमपरमसृजत्क्रोधमूर्छितः ॥

इति रामायणोक्तानपरान्सप्तर्षीन् अपरं नक्षत्रवंशं च सृजन्तु, तदनन्तरं च ब्रह्मणो वरेण शूद्राद्वैश्यत्वं वैश्यात्क्षत्रियत्वं क्षत्रियाद्ब्राह्मणत्वं च इत्येवं रूपेण ब्राह्मणत्वं लभन्तां, ततश्च योगिनामलौकिकसामर्थ्यादलौकिकं लौकिके नाङ्गमिति न्यायात् अलौकिकसामर्थ्यदृष्टान्तो लौकिके न सम्भवतीत्यास्तां विस्तरः ।

(९८) उ०—ब्राह्मणादिवर्णजातिर्जन्मकृता व्यवस्थिता च, शूद्राणां म्लेच्छादीनां च जातिर्जन्मना ऐहिककर्मणा च द्विधैव सम्भवति, अव्यवस्थिता च ।

(९९) उ०—आत्मबोधोपनिषत्,

"ब्राह्मण्यं कुलगोत्रे च नामसौन्दर्यजातयः ।
स्थूलदेहगता एते" इति ।

(१०३) जन्मसिद्धमेव । कर्मणा जन्मान्तरे जन्यते । तत्र प्रमाणं हरिवंशे,

सप्त व्याधा दशार्णेषु मृगाः कालाञ्जने गिरौ ।
तेपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ॥

(१०७, १०८) उ०—जन्मकृतं व्यवस्थितम् ।

(१०९) उ०—जातिसामान्यं कर्मकृतं व्यवस्थितं च ।

अपि च ब्राह्मणत्वादिजातयः तपसा दीक्षया योगबलेन वा इह जन्मनि इतरैर्न लभ्यन्ते एव । तत्र महाभारतवचनं प्रमाणं, यथा अनुशासनपर्वणि ४ अध्याये,

न ब्राह्मण्यं क्षत्रियाद्यैस्तपःकोट्यापि लभ्यते ।
विश्वामित्रस्य तत्प्राप्तिर्मात्रा ब्रह्मौदनाशनात् ॥

(११३) जातिसामान्यं जन्मकृतं व्यवस्थितं च ।

(११४) ब्राह्मणत्वादिजातिर्जन्मकृता व्यवस्थिता च ।

(११६) जातिसामान्यं जन्मकृतं व्यवस्थितं च ।

(११७) उ०—जातिसामान्यं ऐहिककर्मकृतं अव्यवस्थितं च इत्येव शास्त्राणां तत्त्वम् । तथाहि, जात्या ब्राह्मणत्वे प्रमाणवचनानि । चातुर्वर्ण्यं ब्रह्मणो मुखबाहूरुपादजन्यमित्येकम्, तैत्तिरीयब्राह्मणे "ऋग्भ्यो जातं वैश्यं वर्णमाहुः । यजुर्वेदं क्षत्रियस्याहुर्योनिम् । सामवेदो ब्राह्मणानां प्रसूतिः ।" इति द्वितीयम् । शतपथब्राह्मणे "भूरिति वै प्रजापतिर्ब्रह्माजनयत् भुव इति क्षत्रं स्वुव इति विशः" इति तृतीयम् । अस्मिन् प्रमाणद्वये शूद्राणां प्रसक्तिर्नास्त्येव । ऋक्संहितायां विराट्पुरुषवर्णने "मुखं किमस्य कौ बाहू" इत्यादिप्रश्नस्योत्तरत्वेन "ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत" इत्युक्तम् । तत्र ब्राह्मणादयो वैराजस्य मुखादिस्थानीयाः, न तु मुखादिभ्यो जाता इति ज्ञायते ।

ब्राह्मण्यां ब्राह्मणेनैव चोत्पन्नो ब्राह्मणः स्मृतः ।

इति हारीतः ।

ब्राह्मण्यां ब्राह्मणाज्जातः संस्काराद्ब्राह्मणो भवेत् ।

इति देवलः ।

एतेषां श्रुतिस्मृतिवचनानां अन्योन्यमनैक्यदर्शनात् एतानि सर्वाणि ब्रह्मस्तुतिपराण्येवेति निश्चिनुमः । अपि च "न चैतद्विद्मो ब्राह्मणाः स्मोऽब्राह्मणा वा" इति श्रुत्या जन्मना जातिकल्पनं निरस्तम् । अथ वृत्त्या जातिकल्पने प्रमाणवचनानि—

विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥

इति मनुः ।

न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव च ।
न शूद्रो न च वै म्लेच्छो भेदिता गुणकर्मभिः ॥

इति शुक्रनीतिः ।

तपो दमो दया दानं सत्यं धर्मः श्रुतं घृणा ।
विद्या विज्ञानमास्तिक्यं एतद्ब्राह्मणलक्षणम् ॥

इति शातातपः ।

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः । इति ।
शान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम् ।
तमेव ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः ॥

इति धर्मतत्त्वम् ।

न जातिः पूज्यते राजन् गुणाः कल्याणदायकाः ।
चण्डालमपि सद्वृत्तं तं देवा ब्राह्मणं विदुः ॥

इति गौतमसंहिता,

ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु ।
दाम्भिको दुष्कृतप्रायः शूद्रेण सदृशो भवेत् ॥
यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः ।
तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः ॥
शूद्रे चैव भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत्सर्व तं शूद्रमिति निर्दिशेत् ।

इति भारते वनपर्वणि,

शूद्रेपि दृश्यते वृत्तं ब्राह्मणे न तु दृश्यते ।
शूद्रोपि ब्राह्मणो ज्ञेयो ब्राह्मणः शूद्र एव सः ॥

इति ।

न विशेषोस्ति वर्णानां सर्वं ब्रह्ममयं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥

इति शान्तिपर्वणि ।

भक्तिरष्टविधा ह्येषा यस्मिन्म्लेच्छेपि वर्तते ॥
स विप्रेन्द्रो मुनिः श्रीमान् स यतिः स च पण्डितः ॥

इति विष्णुधर्मः ।

चित्रकर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधिपूर्वकैः ॥

इत्यंगिराः ।

न ह्यस्य विद्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।
वृत्त्या शूद्रसमस्तावत् यावद्वेदे न जायते ॥

इति वसिष्ठः । "धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ" इत्यापस्तम्बः । इत्यादिप्रमाणकोटिभिः कर्मणैव ब्राह्मणत्वसिद्धिः न तु जन्मनेति व्यवस्थितम् । कालान्तरप्रवर्तितधर्मव्यवस्थापकस्य मीमांसाशास्त्रस्य परिवर्तितधर्मव्यवस्थापने प्रसक्त्यभावात् वेदवादमात्रपरत्वाच्च तत्सरणिर्नाङ्गीकृतेति क्षन्तव्यम् ।

( ११९, १२०, १२१, १२२, १२३, १२४, १२५, १२६, १२७, १२८ )
उ०—प्राचीनपक्षः ।

(१२९) उ०—जातेर्जन्मकृतत्ववादिभिरपि अनापदि कर्मणां व्यत्यये अपकृष्टजातिप्राप्तिर्भवतीति स्वीक्रियत एव ।

यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।
तदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ।

इत्यादिभागवतवचनेन—

तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ।
उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः ॥

इत्यादिमनुवचनोपरि "सजातिजानन्तरजाः तपःप्रभावेण विश्वामित्रवत्, बीजप्रभावेण ऋष्यशृङ्गादिवत् कृतत्रेतादौ मनुष्यमध्ये जात्युत्कर्षं गच्छन्ति" इति कुल्लूकभट्टव्याख्यानेन मनु-

वचनस्थ "इह" पदस्य एतज्जन्मनीत्यर्थकतया जन्मान्तरकल्पनाया असम्भवेन—

यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् ।
सर्वं तत्तपसा साध्यं तपो हि दुरतिक्रमम् ॥

इत्यादिमनुवचनपर्यालोचनेन—

व्यत्यते कर्मणां शास्यं पूर्ववच्चाधरोत्तरम् ।

इत्यादियाज्ञवल्क्यवचनपर्यालोचनेन चावगम्यते ।

ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।
वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ॥

इत्यादिना च मनुनैव तपःशब्दार्थोऽपि विवृतः । एवं च

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।

इत्यादि मनुवचनमपि आञ्जस्येनैव संगच्छते ।

(१३१) उ०—श्रुतिः ।

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥

आपस्तम्बः—

चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां पूर्वः पूर्वो जन्मतः श्रेयान् ।

याज्ञवल्क्यापस्तम्बौ—

ब्राह्मण्यां ब्राह्मणेनैव ह्युत्पन्नो ब्राह्मणः स्मृतः ।
सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ॥

सवर्णापूर्वशास्त्रविहितायां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिः सम्बन्धः । इत्यादि ।

( १३६, १३७, १४१, १४३, १४४ ) उ०—प्राचीनपक्ष एव ।

(१४५) उ०—जातिसामान्यं जन्मकृतं व्यवस्थितञ्च । "ब्राह्मणोऽस्य मुखमासी" दित्यादि श्रुतिः, "लोकानां तु विवृद्ध्यर्थम्," इत्या-

दिस्मृतिः जातकर्मादिसंस्कारसमये जातकस्य तपस्यादिक्रिर्मणोऽसम्पत्तावपि जातिभेदनियन्त्रितव्यवस्थानुसरणमत्र प्रमाणम्। "जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते। विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव चे" ति पैठीनसिना, "स वै शूद्रो न वै शूद्रो ब्राह्मणो न च ब्राह्मणः" इत्यादि महाभारतवचनेन जातिब्राह्मणादेः प्रतिपादनात्। जन्मना ब्राह्मणस्य गुणवशान्मुख्यब्राह्मण्यम्, जन्मना हीनस्य सत्यपि गुणे जात्या ब्राह्मण्यं नास्ति। एवं जात्यन्तरेषु ज्ञेयम्, इति संक्षेपः।

(१४६, १४८, १४९, १५२, १५४, १५५, १५७, १५९, १६०, १६१, १६२, १६२, १६३, १६४, १६६, १६९, १७०, १७१) उ०—जातिसामान्यं जन्मकृतमेव, न तु कर्मकृतम्।

इति।

# शुद्धिपत्रम् ।



१ सारल्याय प्रायशः सन्धिर्नादृतः ।
२ वेंक, संकी इत्यादौ बवादि स्थाने च ङ्क, वबवोर्यथायोग्यं योजना कर्तव्या ।

## भूमिका ।

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | २४ | तव | तमव |
| ५ | ६ | पूर्व | पूर्वं |
| ,, | २३ | तृतीम | तृतीय |
| ६ | ८ | ताल | तावल |
| ,, | २२ | नियमन | नियमनं |

## प्रश्नोत्तराणि ।

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १० | वानू | वात् |
| २ | १ | साथम् | सार्थम् |
| ,, | १७ | स्त्रोणां | स्त्रीणां |
| ,, | २६ | पुपंष | पुष्पं |
| ३ | ७ | तैनि | तैर्नि |
| ,, | २४ | सर्वं | सर्वे |
| ४ | २४ | विवादे | विवाहे |
| ५ | २२ | यनाम् | यानाम् |
| ६ | १ | वर्यन्तं | पर्यन्तं |

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | ६ | वादस्य | वाहस्य |
| ७ | ६ | पनप्र | नप |
| ११ | ६ | पूर्वं | अनन्तरं |
| ,, | १० | अनन्तरं | पूर्वं |
| ,, | १५ | श्रयो | श्रनयो |
| ८ | ११ | दशी | दश |
| १० | २१ | तरें | तरं |
| ११ | २२ | भत्वयेव | भवत्येव |
| ,, | ६ | तुर्विंश | तुर्विंश |
| ,, | १८ | तरे | तरं |
| १२ | ११ | मातापितृभातॄणां | मातापिताभ्रातॄणां |
| ११ | १६ | कवृ | कत्वम् । वृ |
| ११ | २६ | च्छ्रिक | च्छिक |
| १३ | १५ | त्वःए | त्वए |
| १४ | १६ | स्यन्तौ | स्यन्त्यौ |
| १५ | ७ | विघ्नं | विधं |
| १६ | ६ | विवहः | विवाहः |
| ,, | १० | ल्यनं | ल्पनं |
| ,, | २० | वति | वर्ति |
| १७ | १ | त्पयम् | त्पयं |
| ,, | १२ | प्रदानक्षमः | प्रदानं क्षमम् |
| १८ | ५ | स्यमु | स्यामु |
| १९ | २३ | पडि | पण्डि |
| २१ | ११ | वति | वत |
| २२ | ६ | लिख | लेख |

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २३ | दि्नां | दि्ना |
| २३ | १ | णक्ष | क्षण |
| ,, | २६ | म्मव | म्भव |
| २४ | २४ | नाममङ्ग | नामङ्ग |
| २५ | १६ | पुंसो | पुंसयो |
| ,, | २४ | काले | कालं |
| २३ | १ | चयं | चर्यं |
| ,, | ,, | पुंसो | पुंसयो |
| ,, | ११ | वष | वर्षं |
| ,, | ,, | साल | सलि |
| २७ | ६ | ना | नाम् |
| ,, | १६ | र्यम् | र्यंम् |
| ,, | १७ | तक्र | तर्क |
| ,, | १८ | पुसः | पुंसः |
| ,, | २२ | त्रागा | त्रगा |
| ,, | २४ | न्तमि | न्तत्वमि |
| २८ | ४ | स्त्रो | स्त्री |
| ,, | ६ | क्रमःत् | क्रमात् |
| ,, | २१ | विवाद | विवाह |
| २६ | ८ | स्त्रांनु | स्त्रानु |
| ,, | १६ | पय | पर्य |
| ३२ | १७ | वतो | वती |
| ,, | २३ | त्यक्त | त्यक्तु |
| ३३ | २ | व्यव | व्यव |
| ,, | ३ | गन्तु | गन्तु |

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २५ | नतरं | नन्तरं |
| ३५ | ८ | वृप | वर्ष |
| ३६ | ३ | मअवै | मवै |
| ,, | १२ | उपगमन | उपहसन |
| ,, | १७ | तद्या | तब्या |
| ३८ | २६ | षला | षली |
| ३९ | १ | न्वत्र | न्यत्र |
| ४२ | ६ | कर्तु | कर्तुं |
| ४२ | ३ | वजनं | वचनं |
| ४३ | १६ | पितृभ्रात्राद | पिताभ्रात्रादि |
| ४४ | १८ | शलेख | शालेख |
| ४५ | २६ | ध्याव | ध्यविहै |
| ४६ | २४ | ष्टैव्य | ष्ठैर्व्य |
| ४७ | १७ | नरक्रा | नरका |
| ५२ | २६ | तावतां | तावता |
| ५२ | १८ | विप्रत्ति | विप्रति |
| ,, | २४ | प्रतिज्ञाना | परिज्ञाना |
| ५३ | १७ | शेषणा | शेषाणा |
| ५५ | ७ | कतुं | कर्तुं |
| ,, | १४ | धमस्य | धर्मस्य |
| ,, | २० | पारव | परिव |
| ५६ | ११ | एवाधिकार | एवाधिकारः |
| ५७ | १ | धभ | धर्म |
| ,, | ४ | कापि | कोपि |
| ,, | ८ | स्त्रवि | स्त्रावि |

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५६ | १५ | ठाधप | ठाधिप |
| ६० | ११ | शूदादि | शूद्रादी |
| ६३ | १६ | णामू | णाम् |
| ६४ | १६ | विस्तारा | विस्तरा |
| ,, | २३ | तासम | तासाव |
| ६६ | ११ | वार्वि | वावि |
| ,, | ,, | स्त्रीपुंवि | स्त्रीपुंस |
| ,, | १६ | तर्या | पर्या |
| ६७ | ३ | पदा | पदां |
| ६६ | २० | प्रहण | ग्रहण |
| ७० | ४ | घिधा | विधा |
| ,, | ७ | प्रवा | प्रव्र |
| ,, | ८ | कियते | क्रियते |
| ७२ | २५ | धाद | धादि |
| ७४ | ५ | बसिष्ठ | वसिष्ठ |
| ,, | १७ | नन्तरे | नन्तरं |
| ,, | २२ | पतौ | पत्यौ |
| ६५ | १७ | भतुंकम् | भर्तृकम् |
| ,, | २४ | मद्गला | मङ्गला |
| ७६ | १४ | प्रवसरण | प्रसनमरण |
| ,, | १६ | शुद्ध | शुद्धि |
| ,, | २७ | विवेक्रः | विवेकः |
| ७७ | १६ | दारिद्रं | दरिद्रं |
| ७८ | ६ | दाह्वताः | दाह्वताः |
| ,, | १२ | पत्थु | पत्यु |

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १३ | सर्वत्र द्वितीया | |
| ,, | १८ | गृहीयात् | गृह्णीयात् |
| ,, | २० | विश | विंश |
| ,, | २३ | येग्द्रि | येन्द्रि |
| ७६ | ७ | यान्ये | यन्त्ये |
| ,, | २५ | मण | मणं |
| ८० | १ | ताभ | ताभि |
| ,, | १० | यर्थासः | येथासः |
| ,, | १२ | साङ्गष्ठं | साङ्गुष्ठं |
| ,, | १८ | कावि | काऽवि |
| ८१ | ७ | निषेधी | निषेधो |
| ८१ | १३ | विावदे | विविदे |
| ,, | २२ | धावुक्तं | धाबुक्तं |
| ८३ | २२ | निष्कि | निष्क |
| ,, | २५ | न्तग्र | न्तरग्र |
| ८५ | ८ | तास्यं | तस्यं |
| ,, | १४ | आप | अपि |
| ,, | १५ | धेम | धेन |
| ८७ | १ | श्पपा | श्वपा |
| ८८ | ५ | दिनभ | दिना भ |
| ,, | १२ | काद | कादि |
| ८६ | ४ | माध | मधि |
| ,, | ५ | अरत्य | अन्त्य |
| ,, | १५ | याग्य | योग्य |
| ६० | १ | पञ्च | पाञ्च |

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ” | ६ | यिष्णु | विष्णु |
| ९१ | ८ | पार | पारि |
| ९२ | ११ | श्रम | श्रर्म |
| ९३ | ३ | विशये | विषये |
| ” | २५ | भसा | सभा |
| ९४ | १ | सर्व | सर्वं |
| ” | ४ | बृद्द | बृह |
| ९५ | ६ | हनि | हानि |
| ” | १४ | चक्रान | चक्रानि |
| ” | २२ | प्रभूतीबामषि | प्रभृतीनामपि |
| ” | २६ | हट्ठ | हट्ट |
| ९६ | १६ | षाभ | षाम |
| ” | २३ | पल्क्यः | वल्क्यः |
| ९७ | २५ | ते नव | तेनैव |
| ९८ | १ | ऽन्त्यैः | ऽन्यैः |
| ” | २३ | सरांस | सरांसि |
| ” | २६ | ष्ट्रन्या | ष्टान्य |
| १०० | १८ | देहो | देहा |
| ” | २१ | सूतो | सूतं |
| १०१ | २ | दिरु | दिभिरु |
| १०२ | १ | कोऽपि | केऽपि |
| ” | २३ | वश्वं | वश्यं |
| १०३ | १५ | त्तर्य | त्पर्य |
| ” | २५ | कूत | कूप |
| १०४ | १७ | विशष | विशेष |

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २१ | वल्यक | वल्क्य |
| १०५ | २६ | जाना | जानां |
| १०६ | ६ | दोशो | दोषो |
| ,, | १२ | चञ्डा | चण्डा |
| १०७ | ५ | मस्त्य | मन्त्य |
| १०८ | १ | क्षालेन | क्षालनं |
| ,, | ,, | करस्य | कांस्य |
| १०९ | ४ | परी | पुरी |
| ११० | १ | मक्षौररोन | मनक्षौररो |
| ,, | २ | चााद् | चादि |
| ११२ | १२ | क्षाया | क्षया |
| ११३ | १७ | वजिते | वर्जिते |
| ,, | २१ | पर्यण्य | पर्यस्य |
| ,, | २२ | धर्ममेव | र्ध्मेव |
| ११४ | २ | पराह्ल | पराह्ल |
| ,, | २६ | निणय | निर्णय |
| ११५ | १२ | स्यैत्र | स्यैव |
| ११६ | १ | पुष्का | पुष्क |
| ,, | ६ | चाण्ड | चाण्ड |
| ,, | १४ | स्मार्ते | स्मार्त |
| ११७ | १ | चप | चयप |
| ११७ | ४ | चााद् | चादि |
| ,, | ,, | स्पर्शादो | स्पर्शादो |
| ,, | १५ | रात्रेणा | रात्रेण |
| ,, | २२ | प्रवैश | प्रवेश |

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२० | ८ | मगव | भगव |
| १२४ | ३ | धम | धर्म |
| ,, | १४ | अवैद | अवैदि |
| ,, | १६ | तेषां | तेषा |
| १२५ | २५ | थेषा तेतथां | येषां ते तथा |
| १२७ | ५ | हार | हरि |
| ,, | १८ | ग्र्थः | ग्रथः |
| १२८ | १३ | दिज | दिजा |
| १३० | १ | नांशस्य | नाशस्यै |
| ,, | ७ | कस्य | कारस्य |
| १३१ | ६ | निष्ठरः | निष्ठुरः |
| १३३ | १ | धम | धर्म |
| ,, | ६ | चोक्त | चोक्तं |
| १३४ | ५ | दाक्ष | दीक्ष |
| ,, | १० | तुल्म | तुल्य |
| ,, | २५ | साद्धिन | साद्धिनं |
| १३५ | १६ | दर्म | धर्म |
| १३८ | २६ | श्रया | श्रयाः |
| १३९ | १४ | साधर | साधार |
| १४१ | ३ | वर्तन | वर्तने |
| १४२ | २ | नैन | नैव |
| ,, | ४ | धाम | धान |
| १४४ | २५ | द्वयम् | त्रयम् |
| १४५ | १६ | सर्च | सर्व |
| १४८ | १ | चतुदश | चतुर्दश |

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४३ | ४ | स्त्यैव | स्त्येव |
| १५६ | ३ | भोनम् | भोजनम् |
| ,, | ६ | डात्म | डाल |
| ,, | १० | विंश | विंश |
| ,, | ११ | शुद्धिव्य | शुद्धिर्व्य |
| ,, | १३ | ज्जात्ति | ज्जाति |
| ,, | २० | त्त | त्तं |
| ,, | २१ | विग | धिग |
| १५७ | १ | संसग | संसर्ग |
| ,, | ३ | किमाप | किमपि |
| ,, | ८ | याश्चि | यश्चि |
| १५८ | ५ | नाद | नादि |
| ,, | १६ | पत्र | एव |
| १५६ | ६ | संसत् | संवत् |
| ,, | १८ | त्तमेः | त्तमैः |
| ,, | १६ | हासो | ह्रासो |
| १६० | १६ | र्द्धंव | र्ध्वंव |
| ,, | २२ | सन्तरा | त्वरा |
| १६२ | ८ | कूषए | कृष्ण |
| ,, | १० | रम्यरा | रम्परा |
| १६४ | १८ | ताय | तायाम् |
| ,, | १६ | यत | यते |
| १६६ | ६ | हर्य | हपर्य |
| ,, | १३ | संका | संस्का |
| ,, | २१ | त्ययसंस्कार | त्यसंस्कारः |
| १६६ | ३ | पींन् | पींन् |

| पृष्ठ संख्या | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६६ | ४ | श्याक्ष | श्यात्क्ष |
| ,, | १६ | व्याधा | व्याधा |
| १७० | १ | व्यास्थि | व्यवस्थि |
| १७१ | ५ | क्रोंधं | क्रोधं |
| ,, | १७ | सर्प वृत्तं | सर्ववृत्तं |
| १७२ | १ | वतते | वर्तते |
| ,, | ४ | रुमी | रुन्मी |
| १७३ | ६ | व्यत्यते | व्यत्यये |
| ,, | ,, | शाम्यं | साम्यं |
| ,, | ७ | चल्कव | वल्कयव |
| ,, | १५ | पद्भ्या | पद्भ्यां |
| ,, | १७ | क्षत्रिय | क्षत्रिय |





श्रीमच्छुद्धाद्वैतसम्प्रदायाचार्य षष्ठपीठाधीश्वर श्रीमद्गोस्वामि

मुरलीधरलालजी महाराजाः ( काशी )

❀ श्रीविश्वेश्वरः शरणम् ❀

अखिलभारतवर्षीय—

# ब्राह्मणमहासम्मेलनस्य

# निर्णयाः ।

कार्तिक कृष्ण ११ गुरौ सम्वत् १९८५ ।

# अखिलभारतवर्षीयब्राह्मणमहासम्मेलने

## विचारसभायां मध्यस्थानां निर्णयाः ।

### प्रथमो विषयः ।

१ अष्टमवयसः पूर्वमेवोत्कृष्टवरलाभे विवाहो नासिद्धः, परन्तु समाजहितदृष्ट्या समाजेन तत्तत्समाजविषये यदि विवाहोऽष्टमवयसः पूर्वं न कर्तव्य इति नियम्यते, तर्हि शास्त्राविरोधादनुमोदनमर्हति, इति महासम्मेलनविचारसभायां सर्वानुमतः प्रस्तावोऽस्माभिरप्यनुमन्यते ।

२ विवाहो ह्यष्टवर्षायाः कन्यायाश्च प्रशस्यते । सर्वेषामेव दानानामेकजन्मानुगं फलम् । हाटकगृहगौरीणां सप्तजन्मानुगं फलम् । अष्टवर्षा भवेद्गौरी—इत्यादिप्रमाणानुसारेण अष्टमवर्षे कन्यादानस्य विशिष्टफलाम्नानात् स्त्रीणां विवाहस्य उपनयनस्थानापन्नत्वेन उपनयने ब्राह्मणानां अष्टमवर्षस्यैव मुख्यकालत्वस्मरणाच्च । ब्राह्मणकन्यानां दशमवयसः पूर्वं विवाहो न कर्त्तव्य इति नियमनं नास्माकमभिमतं, अत ऊर्ध्वं रजस्वलेति वचनेन सर्ववर्णेषु दशमवयसोऽनन्तरं विवाहस्य मुख्यकालत्वनिषेधात् । क्षत्रियादीनां दमशवयसः पूर्वं उपनयनकालाभावेन समाजहितदृष्ट्या विवाहनियमनं तत्तत्समाजेन क्रियमाणं न विरुद्धमिति अस्माभिर्मन्यते । शूद्रविषयेऽपीयमेव व्यवस्था ।

३ उत्तरविधिविषये कुत्रचन द्वादशे वृषली स्मृतेति वचनेन द्वादशवयस्यैव वृषलीत्वबोधनेऽपि रजोदर्शनस्यैव वृषलीत्वप्रयोजकत्वात्

दशमवयसोऽनन्तरं ऋतुदर्शनात्पूर्वं मुख्यकालोल्लङ्घनप्रयुक्तप्रायश्चित्तानुष्ठानपूर्वकं आपदि विवाहः कार्यः।

४ रजोदर्शनानन्तरमपि अविवाहितानां ब्राह्मणस्त्रीणां कृतप्रायश्चित्तानामपि अव्यवहार्यतेति श्रीराजेश्वरशास्त्रिप्रभृतीनां मतं, तत्र वर्षत्रयमध्ये कृतप्रायश्चित्तानामप्यव्यवहार्यतेत्येकं मतं श्रीमल्लादिरामकृष्णशास्त्रिप्रभृतीनां, राजेश्वरशास्त्रिप्रभृतीनां तु वर्षत्रयमध्ये पित्रा दित्सितापि या विवाहं नेच्छति तस्याः कृतप्रायश्चित्ताया अपि अव्यवहार्यत्वं, पितृदोषेणाविवाहितायास्तु पापमात्रं न वृषलीत्वं, वर्षत्रयानन्तरमप्यविवाहितायास्तु न वृषलीत्वस्य प्रायश्चित्तेन निवृत्तिरिति मतम्। वङ्गीयास्तु पितृदोषेणाविवाहितायाः साधारणं पापं, साहसेनाविवाहितायास्तु वृषलीत्वं यद्यपि भवति, तथापि कृतप्रायश्चित्ताया व्यवहार्यत्वं, परित्यागविधिस्तु सर्वथा विवाहविमुखकन्यापर इति वदन्ति। महामहोपाध्यायानां तातसुब्रायशास्त्रिणां विन्ध्येश्वरीप्रसादशास्त्रिणामपि इदमेव सम्मतम्। प्रायश्चित्ते गुरुलघुव्यवस्थाऽपि सुब्रायशास्त्रिभिरङ्गीक्रियते। क्षत्रियविषये तु स्वयंवरस्याभ्यनुज्ञानात् कृतप्रायश्चित्तानां ऋतुदर्शनप्रयुक्तवृषलीत्वस्य निवृत्त्या व्यवहार्यत्वमिति सर्वसम्मतः पक्षः।

उपदर्शितान् पक्षान् सम्यगालोच्य अस्माभिरित्थं निर्णीयते—धर्मशास्त्रेषु ऋतुमतीविवाहः सर्वात्मना निन्दितः, क्वचित् महत्यामापदि प्रायश्चित्तविधिपूर्वकं तादृश्या अपि विवाहोऽभ्यनुज्ञायते, एवमपि इदमेव व्याजीकृत्य मुख्यकल्पानुष्ठानसमर्थैरपि अयं पक्षो नावलम्बीयः, अस्य पक्षस्यात्यन्तिकापद्विषयत्वात्, आपदि अल्पत्वमहत्त्वनिर्णयस्तु तत्तत्समाजेनैव करणीयः। व्यवहार्यत्वविषये तत्तत्कुलाचारः प्रमाणम्। ऋतुदर्शनानन्तरं सर्वथा साहसेन विवाहविमुखकन्यायास्तु परित्याग एव।

५ अवान्तरश्रेणीषु विवाहविषये विवाहे कुलपरीक्षणस्यावश्यकत्वात् सह्याद्रिखण्डादौ स्कान्दान्तर्गते अवान्तरजातिरक्षणस्यावश्यकत्वप्रतिपादनात् सह्याद्रिखण्डाप्रामाण्यवादस्यायुक्तत्वान्नागरखण्डे बलीवर्दसमानोऽपि नागर एव ग्रहीतव्य इति व्यवस्थापन्नाच्च गत्यन्तराभावस्य समाजानुमतत्वे सन्निकृष्टतमसमानाचारशीलावान्तरश्रेणीपरिग्रहस्य कर्त्तव्यत्वेऽपि सत्यां गतौ तत्तच्छ्रेणीसम्बन्धनियमपरित्यागः गत्यन्तराभावेऽपि विप्रकृष्टश्रेण्यन्तरपरिग्रहश्च शास्त्राचारोभयाननुमत एवेति मन्यते।

४।११।२८,

विरूपाक्षशास्त्री, श्रीचण्डीदासन्यायतर्कतीर्थः,

डि० श्रीनिवासाचारु, नवद्वीपवासी।

श्रीशशिनाथ झा, देवशिखामणि रामानुजाचार्यः,

पूर्वोत्तरमीमांसाभूषणः।

आदितः पञ्चसु प्रश्नेषु मह्यं विचाराय दत्तेषु प्रथमचतुर्थौ विना यथानिर्णयमभिमताः। प्रथमे तु अष्टमवर्षमारभ्य ऋतुसम्भावनातः पूर्वं कन्याविवाहो युक्तः, चतुर्थप्रश्ने तु वृषल्याः प्रायश्चित्तानन्तरं व्यवहार्य्यता अस्त्येव।

द० पं० नन्दकिशोरः।

[त्रयोदशप्रश्नविषये मध्यस्थानामभिप्रायः।]

१. आनन्दाश्रममुद्रिता देवलस्मृतिः सम्पूर्णा त्रुटिता वेति सन्दिग्धत्वाच्छूलपाणिनिबन्धव्यवस्थया प्रामाण्यं स्वीक्रियते।

चतुर्दशप्रश्नविषये मध्यस्थानां आशयः ।

२ अष्टाचत्वारिंशद्वारं अकामत एकामत्रभोजनादिरूपगुरुतरसंसर्गे कृतेऽपि प्रायश्चित्तो न व्यवहार्यता, कामतस्तु उक्तविषये चतुर्विंशतिवाराभ्यासे तथात्वम् । एकपङ्क्त्युपविष्टभोजनादिरूपलघुभोजनसंसर्गाद्कामतः वत्सरेण, कामतस्तु वत्सरार्धेन अव्यवहार्यता इति भोजनादौ व्यवस्था । तत्स्त्रीगमने तु अकामतः वारद्वयाभ्यासेन, कामतस्तु सकृदेव कृते अव्यवहार्यता । बलात्कारितम्लेच्छदास्यादिस्थले तु शूलपाण्युद्धृतदेवलवचनानां व्यवस्था स्मार्तभट्टाचार्यैरनुपनीताष्टवर्षानधिकवयस्कबालकविषयतया कृता । तत्रापि संवत्सरचतुष्टयानंतरं म्लेच्छसंसर्गे अव्यवहार्यतैव पूर्णा । इदमपि 'तत्स्त्रीणां च तथा सङ्ग' इत्यत्र सङ्गपदेन संलापादिलघुसंसर्ग एव विवक्षितः इत्यभ्युपगम्य । तत्स्त्रीगमने तु 'सवर्णान्यांगतादुष्टैः संसर्गः शोधितैरपि' इति कलिवर्ज्यप्रकरणानुसारेण ततः पूर्वमपि अव्यवहार्यतैव । अथ वा 'संवत्सरेण पतती' त्यनुसारेण बलात्कारितस्थले मयूखादिनिबन्धकारसंमताकामकृतप्रायश्चित्तयोजनेन संवत्सरपर्यन्तं बलात् म्लेच्छदास्ये कारिते द्वादशाब्दं प्रायश्चित्तं, व्यवहार्यता च पूर्णा । संवत्सरद्वयातिक्रमे तु चतुर्विंशतिवार्षिकं प्रायश्चित्तम्, अथ पतिताः समवसाय धर्मांश्चरेयु'रित्यादिबौधायनसूत्रस्य नन्दपण्डिताद्युक्तव्यवस्थानुसारेण पृथक्संस्थया स्वधर्मानुष्ठानाधिकारश्च । वत्सरचतुष्टयातिक्रमे तु 'संवत्सरैश्चतुर्भिश्च तद्भावं सोऽधिगच्छति । ह्रासो न विद्यते तस्य प्रायश्चित्तैर्दुरात्मनः ॥' इति देवलवचनानुसारेण न प्रायश्चित्तं, नतरां व्यवहार्यता, नतमां च पृथक्संस्थयाऽपि स्वधर्माधिकारिता । भागवतादिधर्मानुष्ठानं तु अनुमन्यत एव । 'चतुर्थे नास्ति निष्कृति' रिति वचनमत्र व्यवस्थायामुपोद्बलकम् । यत्तु विंशतिवत्सरम्लेच्छसंसर्गानंतरं चान्द्रायणद्वयं प्रायश्चित्तमुक्तम्, तत्तु 'म्लेच्छैः सहोषित' इत्युपक्रमात् केवलसहवास-

परम् । यत्तु स्त्रीणां विषये देवलेन गर्भोत्पत्त्यनंतरमपि प्रायश्चित्तेन व्यवहार्यत्वमुक्तम्, तत्तु बलाद्दासीकृतनारीरेव उपक्रम्य हेमाद्युद्धृतमार्कण्डेयवचने गर्भे स्त्रीणां परित्यागस्यैवोक्तत्वात् वैकल्पिकम् । विकल्पे च 'बलात्कारादिदुष्टस्त्रीसंग्रहो विधिनोदितः' इति कलिवर्ज्यप्रकरणे पाठात् देवलोक्ता गर्भोत्पत्त्यनंतरमपि स्त्रीणां व्यवहार्यता कलिभिन्नविषय एव इति सिद्धान्तः ।

पञ्चदशप्रश्नविषये मध्यस्थानां अभिप्रायः ।

३ वैरूप्यमेव ।

शास्त्री हाथीभाई हरिशङ्करात्मजः । महामहोपाध्यायः ।
श्रीदुर्गाचरणसांख्यवेदान्ततीर्थः । महामहोपाध्यायः ।
मैथिल मार्कण्डेय मिश्रः ।

भट्ट रमानाथ देवर्षिः शुद्धाद्वैतभूषणः ।
नागेशशास्त्री धारवाड, तर्कविद्वान्, विद्यालङ्कारश्च ।

अधोनिर्दिष्टानां विषयाणां विमर्शे साधकबाधकानि वचनानि युक्तयश्च सावधानतयाऽऽलोचिताः, अनुकूलप्रतिकूलवक्तॄणां चाशयोऽपि सम्यगवधारितः । ततः परं सर्वेषां ऐकमत्येन यत् सिद्धान्तितं तदधस्तान्निवेश्य ततः स्वसंमतिविषये नामानि निर्दिष्टानि ।

श्रीकालीकिशोरदेवशर्म स्मृतिरत्नः ।
श्रीआशुतोषदेवशर्मा स्मृतिरत्नोपाधिकः ।
श्रीकमलकृष्णस्मृतितीर्थः ।
बालशास्त्री हरिशास्त्री भट्टः ।

रंगाचार्य बालकृष्णाचार्य रड्डी ।

मल्लादि श्रीरामकृष्णशास्त्री महाग्निचित् ।

चण्डालविषये विचारे तु ते अस्पृश्या देवालयादिषु अप्रवेश्या इति स्मृतिवचनैर्निश्चीयते । तथा ते म्लेच्छयवनाद्यपेक्षया निकृष्टा इति प्रमाणैरेव नास्माभिरङ्गीक्रियते ।

अत्रार्थे संमतयः ।

बालशास्त्री हरिशास्त्री भट्ट इंदुरकर

सम्मतिरत्र द्वारभंगास्थ श्रीमद्रमेश्वरलताविद्यालया-

ध्यापकस्य श्रीमुक्तिनाथ मिश्रस्य ।

रड्डीत्युपाव्हो रंगाचार्यः ।

श्रीआशुतोषदेवशर्मा स्मृतिरत्नः ।

श्रीकमलकृष्णस्मृतितीर्थः भट्टपल्लीनिवासी ।

चाण्डालानां ग्रामान्तर्निवासः देवालयप्रवेशः स्पर्शश्च शास्त्रेण निषिध्यते । म्लेच्छा यद्यपि गुणतो धर्मतश्च चण्डालतो निकृष्टाः, तथापि महाभाष्ये अनिरवसितशूद्रेषु परिगणनात् आगमेषु चण्डालापेक्षया देवालयप्राकारेषु सन्निकृष्टकक्ष्याप्रवेशाभ्यनुज्ञानाच्च चण्डालापेक्षया तेषां किञ्चित्तारतम्यं वर्तत इत ममाशयः ।

मल्लादिश्रीरामकृष्णशास्त्री महाग्निचित्

अमरावतीपत्तनम् ।

गुंटूर जिला ।

मद्रास् प्रसिडेन्सी ।

अधुनातनेषु यवनेषु के वा चाण्डालादिषु उत्पन्नाः के वा शुद्ध-यवना इति न ज्ञातुं शक्यते, यदि तदीयस्सङ्करो ज्ञायेत, तदा पूर्वजात्यनुरूपैव व्यवस्था अङ्गीकरणीया ।

पण्डितप्रवरः

मल्लादिश्रीरामकृष्णशास्त्री

अमरावती

गुंटूर जिला ।

१ सावित्रीभ्रष्टानां चतुर्थपुरुषपर्यन्तमेव व्रात्यस्तोमेन शुद्धिः, नाग्रपुरुषाणाम् ।

१ विधवाविवाहस्तु सर्वथा धर्मशास्त्रविरुद्धः ।

१ म्लेच्छचाण्डालादीनां कूपे अल्पजलाशयादिषु जलग्रहणादिषु नाधिकारोऽस्ति।

१ श्रुतिस्मृत्यनुसारिभिः न कैरपि स्वयं धर्मपरिवर्तनं कर्तुं शक्यते ।

बालशास्त्री हरिशास्त्री भट्ट इंदुरकर

रंगाचार्यः रड्डीत्युपाह्वः ।

सम्मतिरत्र श्रीमुक्तिनाथमिश्रस्य ।

मल्लादिश्रीरामकृष्णशास्त्री महाग्निचित् ।

अमरावती पत्तनम्

गुंटूर जिला

मद्रास प्रेसीडेन्सी ।

१० दशमः प्रश्नः-भागवतधर्मदीक्षा जात्युत्कर्षप्रापिका न वा इति ।
अस्योत्तरम् ।

भागवतधर्मदीक्षया जात्युत्कर्षों न भवति, अपि तु भावोत्कर्षः।

११ यवनादिजातिः कर्मकृतो उत जन्मसिद्धा ।
अस्योत्तरम् ।
जन्मसिद्धैव यवनादिजातिः ।

१२ भागवतधर्मदीक्षायां जातिविशेषः प्रतिवन्धको वा न वा ।
अस्योत्तरम् ।

कुत्रचिद्दीक्षायां प्रतिबन्धिका जातिः कुत्रचिन्न । तथाहि—
मन्त्रमहोदधौ चतुर्विंशतरङ्गे-त्र्यर्णमेकाक्षरोऽनुष्टुप् त्रिविधो नरकेसरी ॥ इत्यादिना कांश्चिदेव मन्त्रान् परिगणय्य 'वर्णत्रयाय दातव्या एते शूद्राय नो बुधैः' इत्यादिना तत्तद्वर्णविशेषे अधिकारानधिकारौ प्रदर्श्य-छिन्नमस्ता च मातंगी त्रिपुरा कालिका शिवः । लघुश्यामा कालरात्रिर्गोपालो जानकीपतिः । उग्रतारा भैरवश्च देया वर्णचतुष्टये । मृगीदृशां विशेषेण मन्त्रा एते सुसिद्धिदाः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा नार्योऽधिकारिण इति स्त्रीशूद्रयोरपि केषुचिन्मन्त्रेषु अधिकारः प्रदर्शितः ।

स्त्रीशूद्रयोः शिवमन्त्ररामामन्त्रविषये तु विशेषः—सूतसंहितायां नमोंतेन शिवेनैव स्त्रीणां पूजा विधीयते । विरक्तानां च शूद्राणां एवं पूजा प्रकीर्त्तिता । इति । तद्व्याख्याने माधवीये वसिष्ठः—ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । सदों नमः शिवायेति शिवमंत्रं समाश्रयेत् । पंचाक्षरः सप्रणवो द्विजराज्ञोर्विधीयते । विट्शूद्रजन्मनां वापि स्त्रीणां निर्वीज एव हि । सवीजः सस्वरः साम्यो विप्रक्षत्रिययोर्द्वयोः । नेतरेषामितीशानः स्वयमेवाह शंङ्करः । दुर्वृत्तो वृत्तिहीनो वा पतितोऽथान्त्यजोऽपि वा । जपेत्पंञ्चाक्षरीं विद्यां जपेनैवाप्नुया-

च्छिवम् । इत्यादीनि वचनानि । राममन्त्रविषये तु शूद्रकमलाकरे'अगस्त्यसंहितायां-श्रुतिर्ब्रह्माह षड्वर्णं स्मृतिर्वर्णद्वयात्मकम् । षड्वर्णं ब्राह्मणादीनां त्रयाणां यद्द्विवर्णकम् । तदन्येषां देशिकेन वक्तव्यं तारकं परम् । शुचिव्रततमाः शूद्रा धार्मिका द्विजसेवकाः । स्त्रियः पतिव्रताश्चान्ये प्रतिलोमानुलोमजाः । लोकाश्चण्डालपर्यन्तं सर्वेऽप्यत्राधिकारिणः । अत्र रामेतिमंन्त्रे ।' इत्यादिग्रन्थपर्यालोचनया शूद्रादीनां प्रणवरहितेष्वेव मंन्त्रेषु नारायणाष्टाक्षरादिषु केषुचित् अधिकारः ।

१ विरूपाक्षशास्त्री, २ तातसुब्बरायशास्त्री,

३ देवकीनन्दन शास्त्री दर्शनालंकारः, ४ श्रीनीलाम्बर झा तर्कतीर्थः,

॥ श्रीविश्वेश्वरः शरणम् ॥

# अखिलभारतवर्षीयब्राह्मणमहासम्मेलने उपस्थितानां सर्वेषां धर्माचार्याणां निर्णयाः



अति हि नाम प्रमोदतेऽन्तरङ्गमस्माकं निष्प्रत्यूहं प्रचलितां अखिलभारतवर्षीयब्राह्मणमहासम्मेलनविचारसभां निरीक्षितवताम्। विरलः खल्वेवंविधस्तत्तत्तंत्रनदीष्णानां विदुषां एकत्र समागमः, विरलतरा च प्राच्यां मर्यादामाश्रित्य क्रियमाणा धार्मिकी चर्चा, विशेषतश्च सौहार्दंन। सर्वथा तु भगवतः परेशितुः कृपया सानन्दं निर्वर्तिता विचारसभा। एतत्पुनर्महान्तमानन्दमुपजनयत्यस्माकं यदत्र धर्मपीठगुरूणामेकत्रावत्रावस्थानं संपन्नम्। मन्यामहे सोऽयं नव्य एव प्रसङ्ग इति। अतः परं परिचाल्यमाना तु महासम्मेलनपरिषदपि सर्वैः सप्रणयं निरुह्येत, प्रकटीक्रियेत च वास्तवं धर्मतत्त्वं, संपाद्येत च ततः सर्वेषां निरवधिकं श्रेय इत्याशीर्भिरभिनन्दयन्तः स्वं निर्णयमधस्तात्प्रदर्शयामः।

## निर्णयाः—

१, ३, स्त्रीणां विवाहे गर्भतोऽष्टमवर्षो मुख्यः कालः, नवमदशमौ मध्यमौ, तदूर्ध्वं यावदृतुदर्शनं गौणः कालः, ऋतुदर्शनोर्ध्वं तु सर्वथा निन्द्यः।

२ अष्टमवर्षात्प्रभृति यावदृतुदर्शनं परिस्थित्यनुसारेणाऽपि विवाहनिषेधनियमनं सर्वथाऽयोग्यम्।

४ वृषलीत्वबोधकवचनानां धर्मकार्यानर्हत्वे तात्पर्यम्।

५ अवान्तरश्रेणीषु परस्परं विवाहो निन्द्यः।

६ धर्मज्ञा मन्वादयः, तेऽपि स्वातन्त्र्येण किमपि धर्मपरिवर्तनं कर्तुं न प्रभवन्ति।

७ त्रैवर्णिकविधवाविवाहः, दम्पत्योर्विवाहमोक्षश्च सर्वथा निषिद्धः ।*

८ म्लेच्छचाण्डालादीनामस्पृश्यत्वं जातितः, तद्भावापन्नानां च कर्मतः ।

९ धार्मिकदृष्ट्या इदानीन्तनम्लेच्छानां चाण्डालानां चास्पृश्यत्वं देवालयसभादिप्रवेशानर्हत्वं तद्भाण्डसंस्पृष्टकूपोदकग्रहणस्यायोग्यत्वञ्च सर्वथा शास्त्रेणानुशिष्यते, तत्तु रक्षणीयमेव ।

१० मन्त्रग्रहणादिरूपभागवतधर्मदीक्षा एतस्मिन् जन्मनि उत्कृष्ट-जातिप्रापिका न भवति ।

११ यवनादिजातिर्जन्मसिद्धैव ।

१२ प्रणवरहितेषु केषुचिन्नाममन्त्रेषु जातिविशेषो न प्रतिबन्धकः (सर्वे धर्माचार्याः) । विशिष्टविधिविषयान्मन्त्रान्मुक्त्वा अन्यत्रप्रतिबन्धक एव ( तेङ्गलेसम्प्रदायिनः श्रीवैष्णवाः ) ।

१३ शूलपाण्याद्युक्तव्यवस्थानुसारेण देवलस्मृतेः प्रामाण्ये च किञ्चि-द्बाधकम् ।

१४ बलाद्दासीकृतस्य म्लेच्छादिसंसर्गे त्रिवर्षपर्यन्तं मन्वाद्युक्तव्यव-स्थाऽविरोधेन प्रायश्चित्तेन शुद्धिः सर्वनिबन्धकाराविरुद्धा । कामतो म्ले-च्छस्त्रीगमने सकृत्कृतेऽपि पातित्यम् । एकामत्रभोजनरूपगुरुतरसंसर्गे कामतश्चतुर्विंशतिवाराभ्यस्तेऽपि पातित्यमेव । एकपंक्त्युपविष्टभोज-नादौ तु कामतः कृते संवत्सरेण पतति ।

१५ पूर्वोक्तस्थलेषु निर्दिष्टतत्तदवध्युत्तरं तु कृतेऽपि प्रायश्चित्तेऽव्यव-हार्यतैव । तथा विदेश ( विलायत ) प्रत्यागतेष्वपि ।

१६ व्रात्यसंस्कारस्त्रिपुरुषपर्यन्तं प्रशस्तः ।

१७ चातुर्वर्ण्यं जन्मसिद्धमेव, न तु तज्जन्मीयकर्मकृतम् ।

॥ इति ॥

---

* सर्वथा निषिद्ध इत्यनेन शूद्रेष्वपि विधवाविवाहस्य निन्द्यत्वं बोधितमिति सम्मेलन एवोद्घोषितमपि ।

सर्वेषां धर्माचार्याणां एतद्विषयाणि महानुशासनपत्राणि परस्तात्प्रकाशयिष्यन्ते ।

श्रीविश्वनाथो विजयतेतराम् ॥

अखिलभारतवर्षीयब्राह्मणमहासम्मेलनाङ्गभूतविचारसभायां—

स्वस्ति श्रीमत्समस्तसुरवृन्दपूजितपादारविन्दशिवप्रतिबिंबवर्य-श्रीमत्परमहंसपरिव्राजकाचार्य-पदवाक्यप्रमाणपारावारपारीणयमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठतपश्चक्रवर्त्यनाद्यविच्छिन्नगुरु-परंपराप्राप्तषड्दर्शन-संस्थापनाचार्य-व्याख्यानसिंहासनाधीश्वर-सकलनिगमागमसारहृदयसांख्यत्रयप्रतिपादकसकलनास्तिकमतोच्छेदपूर्वकसकल-धर्मसंस्थापनैकधुरीण-वैदिकमार्गप्रवर्तकसर्वतंत्रस्वतन्त्र-श्रीमहाराजधानीऋष्यश्रृङ्गपुरवराधीश-श्रीमद्राजाधिराजगुरुमण्डलाचार्य-श्रीमच्छङ्कराचार्यान्वयसञ्जाताभिनव-पञ्चगङ्गातीरवासकमलानिकेतनकरवीरसिंहासनाधीश्वरश्रीसच्चिदानन्दविद्याशंकरभारती-करकमलकिंजल्कोद्भव-श्रीमदभिनवसच्चिदानन्दविद्यानरसिंहभारतीस्वामिचरणानां—

# प्रास्ताविकमभिभाषणम् ।

यस्याऽऽहुरागमविदः परिपूर्णशक्ते—<br>रंशे कियत्यपि निविष्टममं प्रपञ्चम् ।<br>तस्मै तमालरुचिभासुरकन्धराय<br>नारायणीसहचराय नमः शिवाय ॥ १ ॥

अहो महानयमस्माकमानन्दहेतुः, यदद्य भगवतो जगदीश्वरस्य श्रीविश्वनाथस्य राजधान्यामस्यां वाराणस्यां राज, महाराज, विद्वद्वर, पौरजानपद, श्रेष्ठि, धनिक, भौरिकप्रभृतिभिः साम्प्रतं सर्वत्र विवादविषयान् धार्मिकान् विषयान्निर्णेतुमखिलभारतवर्षीया ब्राह्मणमहासभा सोत्साहं निर्वर्त्यत इति । नूनमेष कालः कलितकोलाहलः कलिः । अत्र हि

वैदेशिकवैदुष्यविमोहितान्तरङ्गाः प्रायेण भारतवर्षीयाः स्वं सनातनधर्मकल्पद्रुमं पङ्कावमर्दमवमृद्नन्तो नाऽवबुध्यन्ते आत्मनोऽवनतिगर्तें पतनम्।

विरलान्येव किलेदानीं संदृश्यन्तेऽग्निहोत्रादीनि कर्माणि। संध्यापि ननु क्वापि कोणे विलीनेव तिष्ठति, दूरे पुनः श्रौतकर्मणां कथापि। नामान्यपि न श्रूयन्ते शमदमादीनाम्। क्व जपः? क्व तपः! सर्वत्र वैदेशिकाचारानुकरणमेव परमपुरुषार्थः संवृत्तः। सर्वोऽपि सर्वथा परिजिहासति नियन्त्रणामात्रफलकं मन्यमानो धर्मम्। आश्रयते हेतुवादान्। विनिन्दति वेदशास्त्राणि। कुत्सयति वैदिकानाचारान्। नाद्रियते गुरून्। जुगुप्सते शिखासूत्रयोरपि धारणात्। सर्वथा गलहस्तयति गौरवमार्यावर्तस्य।

आसीत्कोऽपि तथाविधः समयो भारतवर्षस्य, यत्र चत्वारोऽपि वर्णाः प्राणेभ्योऽपि गरीयांसं धर्मं मन्यमानास्तत्परिपालनायैव समग्रमायुर्हापयन्तः परां किल काष्ठां समुन्नतेरध्यगच्छन्। तेऽपि ननु प्रत्यपीपदन् दुरूहतमानि तत्त्वरत्नानि। व्यवारिषुः परगम्भीरां भगवतीमकृत्रिमां वाचम्। आचेरुः परमपावनानि शुभोदर्काणि कर्माणि। चेरुर्विमानैः। आनैषुः स्वर्गङ्गामपि धरणीतलम्। चुलकयाञ्चक्रुर्गम्भीरमप्यम्भोधिम्। व्याहार्षुर्दिवौकसामपि समाजेन। साक्षाच्चक्रुस्तास्ता इष्टदेवताः। व्यज्ञासिषुस्त्रैकालिकं वस्तुजातम्। आसादयंश्च दिगन्तविसृत्वरं निर्मलतमं यशःपटलम्। अन्ते च समपीपदन् निखिलपुरुषार्थमूर्द्धन्यं निश्रेयसम्। अत एव आदर्शभावमुपदेशकपदवीं चाऽध्यगमन् अखण्डस्य भूमण्डलस्य भारते लब्धजन्मानो ब्राह्मणाः।

यथाऽऽह मनुः—

'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः'॥ इति॥

अयि भोः, विमृश्यतां युष्माभिः, कुतो नु नाम एतावान् पराक्रमः प्राचाम्! तेऽपि खल्विदानीन्तना इव मातृगर्भसंभूता एव। तेषामप्य-

स्माकमिव एकादशैवेन्द्रियाणि । न वयं निपुणमपि निरीक्षमाणाः बहिः कमपि विशेषं तेषु निर्वर्णयामः । तत्केन वाऽत्र निदानेन भाव्यम् ? यद्येतत् सूक्ष्मं विमर्शपदवीमारोप्येत, तदा इदमेवोत्तरं समधिगम्येत यत्-धर्मानुष्ठानसापेक्षैव बभूव तेषां सिद्धिरिति । कां हि नाम योग्यतां न प्रसुवीत आस्माकोऽयं सनातनो धर्मः ? अत एव प्राऽऽह भगवती श्रुतिः-'धर्मे सर्वं प्रतिष्ठितम्' इति ।

एष पुनर्वैदिको धर्मः—समयपरिपाकात् सांप्रतं सर्वैर्जनैर्बहुधा यथाभिलाषमुत्प्रेक्ष्यमाणः कीदृशीं वा दयनीयां दशामनुभवतीति नैतद्विवरीतुमावश्यकम् । ईदृशेऽपि विषमतमे समये यदत्रत्या धर्मधूर्वहा भूपालाः, पंडितोत्तंसाश्च धर्मयाथात्म्यमवबुभुत्सवः सभामिमामध्यवीविशन्, यच्च तत्र कलिमलकलिलस्यास्य धरित्रीवलयस्य समुद्दिधीर्षया कैलासतः कृतावतारेषु समुद्धृतभूभारेषु कृपापारावारेषु परमशिवश्रीमदाद्यभगवत्पादाचार्यवर्येषु परमं कार्तज्ञ्यमावहन्तः तदीयपीठदेवतया प्रयुक्ता आशिषः समभिलष्यन्तः अस्मानिह उपस्थातुं व्यजिज्ञपन् । यश्चाऽयमत्रदिष्ट्या आशीःप्रदानस्य सुयोगः, सोयं समुदितः सर्वोगुणगणः अतिहि नाम धिनोत्यन्तरङ्गमस्माकम् ।

अवश्यमेवंविधाः समितयः भूकैलासायमानेऽस्मिन् काशीक्षेत्रे पुनः पुनरधिवेशनीयाः । एतद्धि अविमुक्तक्षेत्रं प्रणयमंदिरं भगवतो निखिलजगन्नायकस्य चन्द्रमौलेः, क्रीडागारमिदं भक्तपोषणधृतव्रताया भगवत्या अन्नपूर्णाम्बायाः, पतिकुलमेतद्भगवत्याः पापत्रयतापत्रयनिबर्हणगृहीतदीक्षायास्त्रिपथगामिन्याः, आवासोऽयं सर्वदेवानाम्, आकरोयं विविधविद्यानाम्, आश्रयोऽयं ब्रह्मनिष्ठानाम्, निधिरयं पंडितरत्नानाम्, तिलकमिदं भूदेव्याः, मेरुरयं क्षेत्रमणीनाम्, मातृकुलमिदं श्रोत्रियाणाम्, आधारोऽयं कर्मयोगस्य, अंतःपुरमिदमुपासनादेव्याः, विहारभूरियं ज्ञाननिष्ठायाः, अतएव मन्यामहे समुल्लसत्यत्र मूर्तिमती ज्ञानवापी । सर्वथा समुचितमिदं स्थानमेवं विधानां धार्मिकविचाराणाम् ।

धर्मः पुनरवश्यं विचार्यो भवति, ज्ञातव्यतया अनुष्ठातव्यतया च, न पुनः कदापि परिवर्तनीयतया, अलौकिकोह्यसौ धर्मो भवति। नाऽयं प्रमाणान्तरगोचरतामवगाहते । न खलु चिरं विमृशन्नपि सूक्ष्ममतिरपि तर्ककुशलोऽपि स्वर्गयागयोः साध्यसाधनभावं प्रतिपद्यते कश्चित् । सहि भगवता आम्नायेनैव प्रतिपत्तव्यः । श्रुतिर्हि परमं प्रमाणम् । तदविरोधिनी स्मृतिः, तदविरोधी च शिष्टाचारः प्रामाण्यमधिगच्छति । न पुनः कस्याश्चिद्व्यक्तेः स्वोत्प्रेक्षा प्रमाणभावमापद्यते । प्रतिपुरुषं किल सा भिद्यते । प्राच्यैःस्मृतिप्रणेतृभिरपि ऋषिभिः न किमपि धर्मतत्वं स्वोत्प्रेक्षया प्रतिष्ठापितम् । अपि तु दीर्घतरेण तपसा भगवन्तं जगदीश्वरमाराध्य स्वतःसिद्धश्रुतिवचनानामेव तात्पर्यं तत्तद-धिकारिभेदेन उद्घघाट्यतेस्म । किंभूयसा ? भगवान् परमेश्वरोऽपि गत-कल्पीयं वेदमनुस्मरन् तदीयां मर्यादां प्रचारयति परिपालयति च ।

यत्पुनर्युगांतरीयधर्माः कलियुगे वर्ज्यतया व्यपदिश्यन्त इत्येतावतैव धर्मस्य परिवर्तनं सांप्रदायिकमिति केषांचिद्धर्ममुग्धानामाकूतम् । सोपि व्यामोह एव । न कदाचिदपि प्राञ्चो महर्षयः धर्मं वा तद्बोधकं शास्त्रं वा पर्यवर्तयन् ? किंतु समानबलत्वेन विकल्पबोधकानां श्रुति-वचसां युगभेदेन देशभेदेन अधिकारिभेदेन च व्यवस्थितत्वं प्रादर्शयन् । नैतत्परिवर्तनं अपि तु व्यवस्थापनम् । तदपि ननु अपरोक्षीकृतमोक्षतत्वैः परोद्दिधीर्षामात्रकृतपराग्व्यवहारैः भ्रमप्रमादादिदोषविधुरैः श्रुतिदेवी-हृदयवेदिभिः मनुयाज्ञवल्क्यभृतिभिर्महर्षिभिरेव कार्यम् , नैव पुनर्मितं-पचमतिभीरागद्वेषविषूचिकाविलिप्तहृदयैः प्राकृतैः । तस्मान्न जातु धर्मस्य वा शास्त्राणां वा परिवर्तनं न्याय्यं श्रेयस्करं वा । अतएव भगवान् कृष्णद्वैपायनः महाभारतान्ते उद्घुष्यति–'धर्मो नित्यः सुख-दुःखेत्वनित्ये' इति । ईश्वरोऽपि—

'श्रुतिस्मृती ममवाज्ञे ते उल्लङ्घ्य प्रवर्तते ।
आज्ञाभङ्गो मम द्रोह' इत्याचष्टे ।

यद्यन्वमंस्यत परिवर्तनं धर्मस्य तदा—

'न जातु कामान्न भयान्नलोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः' इति, 'आज्ञाभङ्गो ममद्रोह इति वा नाभ्यधारयत् वेदव्यासो वा भगवान् वा। परिस्थित्यनुरोधेन परिवर्तनीयत्वापातेन धर्मत्यागस्य आज्ञाभङ्गस्य वा निषेध्यत्वं नैव सामंजस्यमश्नुवीत। तस्मान्नाण्वपि संशयितव्यं यत् 'रूपांतरमापादयितुं शक्यते धर्म' इति। तर्हि किमर्थोऽयमेतावान् सभाधिवेशनप्रयासः इति नूनमाशंकेरन् भूयांसः। नैतच्चोद्यमवतरति—सांप्रतं हि सर्वत्रैव संस्कारकंमन्यैः कामकारमात्रप्रवृत्तैः कैश्चिदुत्प्रेक्ष्यमाणान् शास्त्रवचसामपार्थान् दूरीकृत्य समालोचयितुमावश्यकोऽयमारंभः।

अन्यथा धार्मिकोपि कर्तव्याकर्तव्यमजानन् किंचिदेव प्रतिपद्यमानः पुरुषार्थात् प्रतिहन्येत,अनिष्टं च प्राप्नुयात्। अतः श्रुतिस्मृतिसदाचाराननुरुध्य प्राचीनपरंपरया धर्माचरणस्य विशुद्धतमत्वदृढीकरणमेव मन्यामहे सांप्रतं विचारपदव्यपदेश्यमिति।

अनया च सभया स्फोर्यतां सनातनधर्मस्य गौरवम्, जोघुष्यतां श्रुतिस्मृतिशिष्टाचाराणां प्रामाण्यम्। स्थाप्यतां प्राचीनाचारस्य विशुद्धतमत्वम्। आधीयतां भारतीयानां मनसि दृढतमा आस्तिक्यबुद्धिः। प्रचार्यतां सर्वत्र वर्णाश्रमधर्मानुष्ठानम्। एतत्प्रवर्तकाः गोब्राह्मणपरिपालनैकधुरीणाः श्रीकाशीमंडलाधीशश्रीमद्भंगांधीशप्रभृतयो महाराजाः तत्तद्देशतः समागता अत्रत्याश्च सर्वे वैदिकश्रेष्ठाः पंडितोत्तंसाः,अन्ये च पौरा जानपदाश्च,किं बहुना सर्वेपि भारतीयाः शिष्यनिवहाः परमादरपुरःसरं स्वं स्वं धर्ममनुतिष्ठन्तः भगवति परमेश्वरे निरतिशयां भक्तिमावहन्तः सपरिग्रहाः इह पुरुषायुषं सुखं नंदन्तः पारमेश्वरपदप्राप्त्यधिकारमासादयन्त्विति अनवरतं सादरं श्रीशारदाचंद्रमौलीश्वरदिव्यचरणारविंदयोः प्रार्थयामहे।

इति शिवम्।

---

* श्रीहरिः *

'श्रीवेदव्यासविष्णुस्वामिसंप्रदायसमुद्धारसंभृतश्रीपुरुषोत्तमवदनावतारसर्वा-
म्नायसंचारवैष्णवाम्नायप्राचुर्यप्रचारश्रीबिल्वमङ्गलाचार्यसाम्प्रदायिका-
र्पितसाम्राज्यासनाऽखण्डभूमण्डलाचार्यवर्यजगद्गुरुमहाप्रभुश्रीम-
दाचार्य' इतिविद्यानगरनरपतिश्रीकृष्णदेवसमर्पितबिरुदावली-
विराजमानश्रीश्रीजगद्गुरु १०८ श्रीमद्वल्लभाचार्यचरण-
प्रधानपीठस्थगोस्वामितिलकात्मजविद्यासुधाकरश्री
१०५ श्रीमद्गोस्वामि चि० श्रीदामोदर-
लालजीमहोदयानां वाराणसेय-
ब्राह्मणमहासम्मेलने

# भाषणम्

नमो भगवते तस्मै कृष्णायाऽद्भुतकर्मणे ।
रूपनामविभेदेन जगत् क्रीडति यो यतः ॥

नमो नमस्तेऽस्त्वृषभाय सात्वतां
विदूरकाष्ठाय मुहुः कुयोगिनाम् ।
निरस्तसाम्यातिशयेन राधसा
स्वधामनि ब्रह्मणि रंस्यते नमः ॥

अयि श्रीमन्तः सनातनधर्मसदाचरणसमाचरणप्रवणमनसः सद्गुणगणविस्तारा: सभास्तारा: !



श्रीमच्छुद्धाद्वैतसम्प्रदायाचार्य तिलकायित श्रीनाथद्वाराधिपति श्रीमद्गोस्वामितिलकात्मज
श्री १०८ दामोदरलालजी महाराजाः ।

सुविदितमिदं श्रीमतां यज्जगत्प्रणयनाभ्युदयविलयविधायिना भगवता मनसाऽप्याकलयितुमशक्यमिदमशेषभुवनभवनं लीलयैवाविर्भावितम्, स्वनिःश्वसितभूताः सकलधर्मप्रदर्शनादर्शाः स्वात्मरूपाः स्वैकप्रमाणा अपौरुषेय्यः सर्वाः श्रुतयस्तदुपबृंहका ब्रह्मसूत्रपुराणादयो नानागमाश्च प्रादुर्भावयाञ्चक्रिर इति । येषामनुभावेन सनातनमर्यादां निःशेषयितुं सवेगमापतन्तो रक्षोनिर्विशेषाः केचन सद्यस्तरामुच्चास्यन्ते । एवमपि कृते स्वस्य परोक्षतया बलवद्भिराक्रमिते स्वनिर्मिते परमप्रमितेऽभिमते "परित्राणाय साधूनाम्" इति स्ववचः सत्यापयितुं प्रदर्शयितुं चानन्ताद्भुतमहिमानं तेनैव भगवता कलितनिजजनविस्ताराः स्वावताराः प्रदर्शयाञ्चक्रिरे । येषां च निरुपमान्यनन्यशक्यानि निखिलजगज्जेगीयमानानि तानि तानि लीलायितान्यद्यापि प्रथन्ते । पुनरपि दुःसमयाभ्युदयतस्तमेव स्वस्वरूपभूतं धर्मस्वरूपमन्यथयितुं प्रयतमानेषु केषुचन दुर्जनयातुधानेषु स्वस्वरूपाणि तत्तदाचार्यरूपैराविष्कृत्य निःशेषितमखिलमन्धतमसम्, विकासितानि सकलानि दिग्वधूवदनानि, सुदूरमुत्क्षिप्तानि मृदितानि दग्धानि निःशेषितानि च निगमागमकण्टकानि । भगवत्स्वरूपभूतैस्तैस्तैः श्रीमदाचार्यैः सद्विद्यया जन्मना च वंशोऽधिवसुधातलमविच्छिन्नः प्रकटितोऽद्यापि यथावत् स्वविधित्सितमापादयन् गोपायति तमेव महासेतुम् ।

अथ कतिपयेषु गणनामात्रेषु गणरात्रेषु, तमस्विन्यां देवयोनिविशेषा इव, भूयोऽपि भीषयन्तो भगवज्जनानतितरां बाधमानाः केचन विप्लावयन्ति महामर्यादाः । दुर्दैवमेवैतादृशमाधुनिकानां जनानां यद्दूरीकृता अपि सन्निकृष्यन्ते महान्तोऽन्तरायाः । हन्त तेषां बलीयस्त्वम्, येन ते शान्तिकपौष्टिककर्मभिर्न शाम्यन्ति, प्रत्युत सन्निदधते रूपसहस्रैः । सहजसमवदातमपि पश्यन्ति केचिदन्यथारूपं शङ्खम्, मरुमरीचिकास्वपि प्रतिपादयन्ति जलतरङ्गोल्लासम्, सर्वथा विभ्राजमानेषु सद्भिराचर्यमाणेषु निगमाचारेषु स्वप्रतिभासमुन्मेषेण मनसि समुद्भूतैर्यत्किञ्चित्कैः

शारदनिशाकरसमुल्लसदमलज्योत्स्नायामकालजलदानिव दोषानुद्भावयन्तः स्वं विख्यापयन्तः किमप्युद्धतं परिक्रामयन्ति । हन्त ! मिथः कृतकलेः कलेः सर्वमुज्जृम्भितमेतत्—येन ते "येन यातः पिताऽस्माकम्...
..." इत्यादि जानन्तोऽपि दुर्विधिना, निधिना महापदाम्, तथा विदधति दुष्कृतचेष्टितानि चेष्टितानि, यैरपचीयन्ते सनातनाः सदाचाराः, विभिद्यन्ते पुरातनाः सेतवः, निश्छिद्यन्ते सरसानि सदाश्रयभूतानि महोपवनानीव सतामाचरणानि । मिथो निगमागमेषु तथा विवाद उद्भाव्यते, येन भवन्ति निःशेषिताः सुकृतसम्पदः सामान्यतः सर्वेषामेव, विभिद्यन्ते स्वयूथ्यानामपि मनांसि, अपरा इव क्रियन्ते मुग्धमनसामन्तःकरणभूतयः । प्रकृत्यैव कराले कालेऽस्मिन् धर्मतः पराङ्मुखी प्रायः प्रवृत्तिः; सा च बलवती क्रियते मेधाविभिः स्वोपज्ञनानाकुतर्कसम्पर्केण । "अयन्तु युगधर्मो हि वर्त्तते कस्य दूषणम्" इति नयमवितुमिव दूरतो भवति दयालुरपि जगतामधिपतिः, न शृण्वन्ति प्रभविष्णवोऽपि दीनानामाक्रन्दितानि, साधनान्यपि देशकालादिपरिवर्त्तनतो न किमपि साधयितुं शक्नुवन्ति । विविधमतानि प्रजानां रात्रिन्दिवमाकर्णयतो भारतसम्राट्प्रतिनिधेरपि वास्तविकवस्तु निर्णेतुं मन्यामहे नाऽञ्जसाऽध्यवस्यति धीः । यदि नियामकस्याऽस्य किञ्चिदन्यदेव भासेत, तर्हि पराहतमेव सर्वमभीप्सितं स्यात् भारतवर्षीयधार्मिकाणाम् ।

एवं स्थिते किमत्र विधीयतामिति सुचिन्तितेऽपि, मनसः समाधिषु बध्यमानेष्वपि, कायिकवाचिकव्यापारेषु प्रवर्त्तितेष्वपि परस्सहस्रेषु, न किमपि फलं भवति दृशोः पुरतः । अपि तु महाप्रासादं चिकीर्षतामुपरि धारासम्पाता इव महान्तोऽन्तरायाः शिरसि निष्पतन्त्यस्माकम् । संप्रति हृदयतो विवसति स्म प्रायः सर्वेषामधर्मतो ग्लानिः, परिवृत्तानि विशुद्धानि मनांसि, विपर्यस्तान्याचरणानि । एवमेव प्रवर्त्तमाने चक्रेऽस्मिन्नचिरादेव सर्वमपि नामशेषमिव स्यात्सद्धर्मविस्फूर्जितम् ।

तदत्र "संघे शक्तिः कलौ युगे" इति न्यायेन सम्भूय समुत्थानं साम्प्रतं साम्प्रतम् । विशेषतोऽस्यां श्रीवाराणस्यां सदाचरणपरायणैर्महाविद्वद्भिरग्रतो भूत्वा परिमाणातीतैः परिश्रमैः परतरैश्च प्रमाणैस्तथा संप्रति संसाध्यते यथा सुचिरमबाध्यमानो नूनं भवमहोदधौ निमज्जतो जनान् परे पारे प्रापयेत्; स्वयमवसाययितुमक्षमाणाम्, अपगतचक्षुषां चक्षुर्ज्योतिर्लाभ इव अपरिश्राम्यतामपि मिततरमतीनां शास्त्रतलगतमपि वस्तु प्रत्यक्षयेत्, दुरामयविप्लुतमनसामासन्नसमवसानानामपि जीवातुरिव स्यात् । निर्णये हि यानि व्यक्तार्थानि वचनानि न तानि बाध्यन्ते तर्कादिभिः, अव्यक्तार्थानि साधारणवचांस्यपि स्वप्रतिभाप्रकटनमात्रं परिहाय शास्त्रपद्धत्यैव संगमनीयानि । इदमेवास्मदभीष्टम् । इयदवधि समवधाय पर्यालोच्यमाने न शास्त्रविरोधि किमपीहादृश्यतेति मदीया मतिः । इतः परमभिमतसाधनं तु केवलं भगवत्कार्यमेव । उक्तं च केनचिदन्यापदेशेन—

एतावत्सरसि सरोरुहस्य कृत्यं
भित्त्वाम्भः पयसि विनिर्गमो बहिर्यत् ।
आमोदो मधुकर इन्दिरानिवास-
स्तत् सर्वं दिनकरकृत्यमामनन्ति ॥

साम्प्रतिको व्यतिकरस्तु मर्षणीय एव । युक्तं चैतत् । उक्तं हि महाकविना श्रीभारविणा—

स्पृहणीयगुणैर्महात्माभिश्चरिते वर्त्मनि यच्छतां मनः ।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः ॥ इति ।

अनुमिनुमो यदञ्जसैव सकलसंपत्प्रत्यक्षकरः प्रशस्ततमः कालः, तपर्तुपरिपूर्त्तिपरिक्लिष्टानुज्जीवयितुमभिनवप्रावृषिकपयोधरोदय इव, दुरा-

धिव्याधिविलये सुखसंपत्तिरिव, जडतान्धतापगमे विज्ञानमयचक्षुरुन्मीलनमिव, दारिद्र्यदशापगमे निधिलाभ इव नियतं समुदेष्यति ।

महासभयाऽनया सुबहुसंख्यावतः संख्यावत एकीकृत्य महापरिश्रमैर्बहुना धनव्ययेन च विधीयमानमेतादृशं सुमहत् कार्यमग्रतः फलतः सुसंपन्नं भूयादिति चराचरगुरुं परमदयालुं श्रीगोवर्धनदेवं प्रार्थयामहे ।

इति शम् ।

---

॥ श्रीमते रामानुजाय नमः ॥

अखिलभारतवर्षीयब्राह्मणमहासम्मेलनाङ्गभूतविचारसभायां—
श्रीमद्वेदमार्गप्रतिष्ठापनाचार्यैः, उभयवेदान्तप्रवर्तकाचार्यैः, शान्तिशमद-
माद्यनन्तकल्याणगुणगणभूषितैः, श्रीमत्परमहंसपरिव्राजकाचार्यैः,
श्रीसंयमिसार्वभौमशासनाधिगतश्रीयदुगिरियतिराजसंपत्कुमार-
सर्वविधकैङ्कर्यधुरंधरैः, श्रीभगवद्रामानुजसिद्धान्तनिर्धारण-
सार्वभौमैः, श्रीभगवद्रामानुजाचार्यनिरवधिकपरमानुग्रह-
समधिगतश्रीयदुगिरियतिराजमठपरिव्रढिमालंकर्मीणैः,
श्रीमद्यतीन्द्रप्रवणसत्संप्रदायनिष्ठागरिष्ठैः, श्रीयदु-
गिरियतिराजसंपत्कुमाररामानुजसंयमिसार्वभौ-
मैर्नारायणस्मरणपूर्वकं समनुगृहीतं—

# प्रास्ताविकमभिभाषणम् ।

प्रकृतिपुरुषकालव्यक्तमुक्ता यदिच्छां
अनुविदधति नित्यं नित्यसिद्धैरनेकैः ॥
स्वपरिचरणभोगैः श्रीमति प्रीयमाणे
भवतु मम परस्मिन् पूरुषे भक्तिभूमा ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदस्थो भगवान् मङ्गलायतनं हरिः ॥
तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥

# दैवी वाक् ब्राह्मणश्च ।

"एकाक्षरां द्विपदां षट्पदां च वाचं देवा उपजीवन्ति विश्वे ।
वाचं गन्धर्वाः पशवो मनुष्याः वाचीमा विश्वा भुवनान्यर्पिता ॥
सा नो हवं जुषतामिन्द्रपत्नी" ॥

"अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः ।
श्वःश्वः पापीयदिवसाः पृथिवी गतयौवना" ॥ (भगवतो व्यासस्य)

अपि नाम स कालः पुनरस्मानुपसीदेत् । यस्मिन्नः पूर्वे पुरुषाः दैवीं वाचमुपचिन्वन्तः उभयतो लोकानामविप्लुतवृत्तय आसन् ।

हन्त हन्त तेऽपि गताः, सापि गता, सोऽपि गतो गह्वरम् । अपि नाम निरन्वयो विनाशः सर्वेषाम् ? शान्तं पापं शान्तं पापम् । अब्रह्मण्यमब्रह्मण्यम् । ननु जीवाम एव वयं तेषामृषीणां वंशे लब्धजन्मानः अमुकशाखाध्यायिनोऽमुकचरणा अमुकप्रवरा इत्यादि ।

सापि जीवति वाक् । यया प्रकृतिप्रत्ययशुद्ध्या आत्ययिकेषु आभ्युदयिकेषु च संस्क्रियामहे । सोऽपि जीवत्येव कालः । यो नः पूर्वपुरुषान् स्मारयन् त्रिभिः क्रमैरतीतागामिवर्तमानैरावर्तयति जगदिदम् ।

एवमिमे सन्मूलाः सदायतनाः सत्प्रतिष्ठा अप्यक्षेत्रज्ञा इव उपर्युपरि सञ्चरन्तोऽपि न बिन्दामस्तमर्थम् । न कुलाभिमता वृत्तिः । अतः सर्वाप्यहितापायबहुला गतिः । न स्वधर्मे समीक्षा । कुतः सा पराशराद्युपसत्तिः ।

यद्यपि—"अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदश्शतम्" ॥

इत्याशिषा वर्धिता उत्तरोत्तरं जीवामः । अपि चोपतिष्ठामहे भगवन्तं कर्मसाक्षिणं सूर्यम् "पश्येम शरदश्शतं, जीवेम शरदश्शतं, नन्दाम शरदश्शतं, मोदाम शरदश्शतं, भवाम शरदश्शतं, शृणवाम शरदश्शतं, प्रब्रवाम शरदश्शतं, अजीताः स्याम शरदश्शत"मिति । तथापि दूरदर्शिनोऽन्य एव कूटस्था ऋषयः । अन्यैव सा श्रुतिसुभगा सरस्वती । अपर एव सुकृताविर्भावः कालः । विचित्र एव साम्प्रतिकः परिवर्तः ।

यतो व्यलीकदर्शिनी नो दृष्टिः। रुशती च सा वाक्। प्रवृद्धकलिरयं कालः। विशेषतश्च विधर्मणि वैदेशिके वर्णतः परं विशदे कृत्यतः कालकूटे छद्मप्रहारिणि अस्मद्भाग्यविपर्ययदुर्दैवदत्तबले साम्प्रतं प्रभविष्णौ विप्लवे सर्वतः समास्कन्दति, वज्रादिवाभिहन्यमानं दीर्यत इव सहस्रधा हृदयम्। अमूर्तत्त्वाच्छक्लशो नैव भवति। क्वथदिव सर्वाङ्गीणं रुधिरं सहस्रवेधं जनयति ज्वरं गात्रे स्मृताद्दारुणतमात्ततस्ततश्चाविद्धकर्णानामवस्कन्दात्। कतिकृत्वो न रुरुधुः अपविद्धां भारतीमिमाम्। कति वा न देहुवृन्दशः, प्रबन्धानां कोशान्। किमन्यत् चक्षुरेव पाटितं भारतस्य। येनैवमन्धाः सन्धारयामो विडम्बनाहतं जीवितम्।

अपि स्मर्यते स वटविटपी? यः सितासितयोः सरितोः सम्भेदस्य साक्षी। अपि नामावशिष्यते तद्बुध्नवासिताया मृत्स्नायाः कणिकापि। अथ किं प्रत्यभिज्ञायते अधिष्ठानवेदिका सोमनाथस्य।

किमन्यत्। स नाम भगवान्विश्वेश्वरोऽपि स्थाणुतां तत्याजेमां नगरीमधितिष्ठन्नपि वाराणसीम्। या किल अभूतलस्पर्शितया प्रतितिष्ठति दशाङ्गुलमुपर्यंव।

इदमन्यदन्यच्च वैशसं मिषत्येव ब्रह्मक्षत्रप्ररोहे संवृत्तम्। वन्ध्येयं वसुधा नैव सूते तान् भटान्। ये संवर्मयन्ति स्वानि तेजांसि चापाय शापाय च।

तदेवं विहस्ते भारते चश्चानिर्विशेषवृत्तौ वीरपुरुषसङ्घाते का नाम स्वरवर्णविशुद्धिर्मुखे समुन्मीलति? किं नामोन्मूर्च्छति भुजे तदूर्जितं तेजः? ऊरुस्तम्भगृहीता पादपरिवृत्तिदुस्थितिरिति न पर्यनुयोगः कश्चित्।

अपि नामोदेष्यति भारतीमिमामुद्धरन् महावीरः कश्चित्। यथा रामो जामदग्न्यः। अपि वा समुत्पत्स्यते पुनरप्यैदंयुगीनो मयूरवर्मा। यो ब्रह्मकुलावमाननामसहमानः समित्कुशाज्यपरिपूतेन पाणिना समुद्बबर्ह शस्त्रं शर्मपदं च परित्यज्य वर्मपदमधत्त।

कियती गुणनिका दधीचेः कशेरुकायां वज्रं वज्रमिति। तदेतत्सहस्रधारं वज्रं या ब्राह्मणस्य मुखे संस्कारपूता वाणी।

ब्राह्मणब्रुव इत्यपि न पर्याप्तार्थः शब्दः, समाख्याने तस्य योऽग्रजन्मा दैवीं वाचं न धारयति। अगृहीता विपरीतं वा गृहीता सा वर्णोत्कर्षं कथमिव मुखे विदधातु।

साम्प्रतिका ब्राह्मणकुलीना दुर्वर्णोपसङ्ग्रह एव आदरमावध्नन्ति। अन्ततः अवर्णपरिग्रहादपि न लज्जन्ते। क्व नाम पश्येमाध्ययनध्वनिमुखरितमुखानि ब्राह्मणकुलानि। कदा वा वीक्षिषीमहि अनवरताग्निहोत्रधूमलेखासम्पातशारानग्रहारान्। सर्वतो राक्षस्यो वाचः श्रूयन्ते। विकृतानि रूपाणि दृश्यन्ते। सनातनधर्मह्रदयेर्माणि कर्माणि निर्मीयन्ते।

एवं नितान्तचिन्तासन्तानदन्तुरितनिखिलान्तरङ्गे एतस्मिन्व्यतीपाते कथमप्यतिवाह्य तां कालरात्रिमुन्मीलितालोकं मित्रमण्डलमभ्युज्जिहानमुद्वीक्षितुं यावदुच्चैः शिरो ध्रियते तावदयं कुतोऽप्यवक्षिप्तः शुष्काशनिः सहस्रदारं ददारेदं भारतं वर्षम्। अथ च कुतोऽपि सम्मूर्च्छितया पाश्चात्यया वात्यया समुत्थित आशुशुक्षणिः कक्षदाहं ददाह च। अप्रतीकारदारुणोऽयं संवर्तगर्तसम्पातः।

यद्यपि प्रथमं अविद्धकर्णसाम्पराये तथा निकृत्तमपि शल्कशः बहिरेव विकारनिकारं प्रापितम्, तथापि अन्तस्संरभमाणमेव स्वे महिम्नि प्रतिष्ठितया श्रद्धया न व्ययुज्यत मण्डलं भारतम्।

साम्प्रतिकस्तु परिमरः क्षततक्षं तक्षत् अर्बुद इवानुद्भिन्नमुखः अन्तरेव तुदन् रुचिमेव स्वधर्मे निर्माष्टि।

कति नाम न त्याजिताः स्वं स्वं नैश्रेयसमपि धर्मं, अन्ततो वेषभाषामपि औदरिका भारतवृकाः। कति कति बलान्न हृतानि आमिषप्रलोभनैराक्रीतानि वा विद्यास्थानानां पुस्तकानि। कियन्तो वार्थाः अपहृता अपविद्धाः पीता उन्मूलिताश्च।

तानीमानि सर्वाणि अस्मद्भाग्यविपर्ययेणेव मूर्तिमता पाश्चात्येन वातिक्रग्रहेण सोमकेनेवापहृत्य क्वाप्यन्तरीपे निवेश्यन्ते। सा खलु प्राची दिक्, या सर्वाणि तेजांस्याविर्भावयन्ती अन्यासामपि दिशां

नामरूपसम्पदमुद्योत्य यावदात्मस्थितिप्रकाशाय प्रभवति।

सापि च प्रतीची दिक्, या प्राच्या लब्धस्वरूपा तत उदितान्येव तेजांसि तिरोदधाना निरस्तनामरूपं विश्वमेवान्धे तमसि निमज्जयति।

हृतावशिष्टानामपि कोशानां विद्यानां वा अन्येयं कापि कृत्या कण्ठत्रोटं त्रोटयति। एकतो मुद्रणा। अन्यतो भृतकाध्यापनचोदना चेति।

अमूभ्यामुभाभ्यां ग्रस्तानि वाङ्मयानि अचेतितमालामालं प्रसारितानि कन्दुकोपघातं हन्यमानानि कां कां नावहेलनामारोप्यन्ते।

आद्यया गले गृहीताः कोशास्त्रिचतुरपाणिपरिवर्तनमात्रादेव विशीर्णाः गन्धर्वनगरधर्मसधर्माणः न केवलमजकनाशं नश्यन्ति प्रत्युत मातृकामपि कर्कट्यइव निर्मूलयन्ति। अन्त्यया च ग्रस्ता जनाः श्वनिर्विशेषवृत्तयः परपरिष्कारसंव्ययितायुषः तृणालब्धरुचयः नास्मै न वा परस्मै लोकाय सम्पद्यन्ते।

उत्तरतो भूर्जत्वगादिषु दक्षिणतस्तालपत्रादिषु समुल्लिखिताः प्रबन्धानां कोशाः पद्मानामिव सहस्रेणापि कराणामविरतं परिमृज्यमानाः सूर्याभिमुख्यमुज्जृम्भयन्त्येव सहस्रमपि समाः सहैव स्वपोषकैः।

क्व गतं स्वतः पुरुषार्थभूतं सर्वतोमुखं तद्विद्याध्ययनम्। कुत्र वा विलीनं कृपाप्रसन्नहृदयैर्निष्पुण्यपुण्यं शिष्याणां तदध्यापनम्। कुतःशिक्षितमेतदर्धजरतीयं भृतकाध्यापनम्। कथमयमभिमतो भारतीयानां धर्मपरिमोषः, निरयपरिपोषो निश्रेयसालोकप्रदोषो वेषः। का नाम सा उत्कूलवीचिः निन्द्येषु रुचिः। किमिति नावेद्यन्ते सन्ततेर्गुरवः। कस्मै निरस्यते निरनुक्रोशं धेनुरिव कपिला कुलक्रमागता त्रयी। कस्मादयमवतीर्णः शतशाखप्ररोहः सकुल्येषु द्रोहः। धिग्धिक् श्रमो नाम ग्रहो दैवीं वाचं जग्रास। स्वस्ति कलये भारतधर्मैककलये गृहीतग्रहाय!

तदेयमुपर्युपर्युद्गच्छन्त्यां तारतारायामश्रान्तान्तःक्षोभनिर्वान्तास्फालनावघूर्यमाणायां सुदूरनिगूहितरत्नस्येव जलनिधेः तिरोहितप्रज्ञाचक्षुषोऽस्य भारतस्य वेलायां कूलपातं पतिते नःश्रयमयधर्ममर्मणि।

"वर्णक्षोभकरापविद्धहृदयव्यावर्धितेर्ष्यानल-
ज्वालोद्वल्गनपूर्वरङ्गपिशुनैर्दुर्वर्णधूमोद्गमैः ।
लोकः सम्प्रति लुप्यते श्रुतिवचः प्रासावलोकोऽञ्जसा
धिग्विष्टथैव समास्तृणाति जगतीं नीरन्ध्रमन्धं तमः" ॥

रक्षत कोशानामपि कोशं हृदयं यस्मिन् सङ्क्रान्तासु चतुर्दशस्वपि विद्यासु परश्शतं कोशाः सम्पत्तुमुलं भवन्ति ।

कामं ह्रियन्तां विक्रीयन्तां वा कोशाः विद्यानां सम्पदां च । ननु कोशवन्तो धनवन्तश्चाग्रजजन्मानो हि प्रज्ञानेन । सत्येकस्मिन्विद्यासम्पन्ने हृदये कति कोशाः कृतीनां धनानां वा । नन्विदमेव नः समाश्वासन-स्थानम् । सत्यपि तिष्यसम्भवे महति कालुष्ये यन्नैकान्तो दुर्गता भार-तीयं मही । सन्त्येवेतस्ततो गुल्मान्तरिता महौषधय इव ज्योतिष्मत्यो दैवीं वाचमाचारयन्तः पंक्तिपावनाः स्वालोकमात्रसम्पादितनिरामया विद्यानिष्णातधियः दूरदर्शिनः कृतिनः प्रत्युत विरलविरलाः अनर्थि-सम्पाततिरोहिताः अपांसुलमन्तरङ्गमध्यासते । विस्रभत तावच्च वयं श्रुत्या विरहिता भवामः । यावद्भगवती मन्दाकिनी पावयति भारतीमिमां विश्वम्भराम् । इदंपुनरश्रौष्म यथा—

"इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ।
तथा हि विपरीता ते बुद्धिराचारवर्जिता" इति ।

तदिदमेव नः सन्ततेरविच्छेदाय, यत्तदाचार्यकमनुरुन्धानाः प्रियं धनमाहृत्य तस्मै प्रजातन्तुं मा व्यतिच्छिन्दमहि । तच्च धनं तेनोपदिष्टा विद्या दर्पण इव प्रतिबिम्बिता । सा हि प्रियता, या शतगुणोत्तरता शिष्यप्रज्ञायाः । सा हि प्रजा, यथा तस्य वयम् , एवमस्माकमन्ये । स खलु तन्तुः यः पूर्वोत्तरमविरहयन् अनुबन्धः स खल्वविच्छेदः य उत्त-रोत्तरमुपसंक्रान्तिविद्यायाः इति । निर्गलितमिदमावेद्यते ।

"उत्तिष्ठत मा स्वप्त अग्निमिच्छध्वं भारताः ।
राज्ञः सोमस्य तृप्तासः सूर्येण सयुजोषसः" ॥

आरभ्य चतुश्चत्वारिंशद्वयःपर्यन्तं विवाहो योग्यः, न तु स्त्रीणां ततः पूर्वं पुंसां तत उत्तरं च स योग्यः। रजोऽनन्तरं विवाहस्तु नापत्कल्पोऽपि, तस्या ऊढायाः शूद्रातुल्यत्वेन तत्पुत्रस्य न दायाद्यधिकारितापीति बोधनमेव वृषलीत्ववचनेनावगम्यते।

(१६) उ०—श्रीमल्लय्याशास्त्रिणाम्।

विवाहस्य दानसप्तपदीसमावेशनादिरूपस्य दाने द्वितीयादिवयसोऽपि योग्यता, समावेशनादौ तु ऋत्वनन्तरमपि स योग्य इति। आपस्तम्बादिमते तु ऋत्वनन्तरमेव विवाहः समावेशनाङ्गविशिष्टः। गृह्यासंग्रहमते तु ऋतोः प्राक् वत्सरात् प्रागेव विवाहो युक्त इति मतम्। पुंविषये तु किमपि नोक्तम्।

(२०) उ०—परलाकमडिवैदिकसमाजस्य।

उत्कलनिबन्धकालसाराद्यनुसारेण स्त्रीणां जन्मावधि एकादशवयःपर्यन्तं विवाहयोग्यतावगम्यते। परन्तु शास्त्रपरिस्थित्युभयपर्यालोचने नवमवत्सरमारभ्यर्तुकालपर्यन्तं विवाहनियमनं योग्यम्। रजोनन्तरविवाहोऽपि स्त्रीणां योग्य एव, परंतु निबन्धाचाराद्यनुसारेण ब्राह्मणेतरविषयत्वमेव तस्य, ब्राह्मणानां त्वापत्कल्प एव।

(२१)—शामलकोटार्यमतसंघप्रतिनिधि श्रीसूर्यनारायणशास्त्रिणाम्।

स्त्रीणां सप्तमवय आरभ्य विवाहकालो रजोदर्शनतः पूर्वम्। पुरुषाणां सप्तदशवय आरभ्य पञ्चाशद्वयःपर्यन्तं विवाहयोग्यता, न तु ततः पूर्वमुत्तरं वा। रजस्वलाविवाहस्तु कलौ गान्धर्वादिविवाहकालस्य निषिद्धत्वादापत्कल्प एव।

(२२) उ०—शोलवन्दानयज्ञदीक्षितानाम्।

अष्टमवयस आरभ्य द्वादशवयःपर्यन्तं स्त्रीणां विवाहकालः। तदनन्तरं तु विवाहो रजोदर्शनानन्तरमापत्कल्पः।

(२३) उ०—हैद्राबादसनातनधर्मसंस्थापण्डितानाम्।

"द्वितीयमायुषो भागं कृतदारो गृहे वसेत्" इति वचनात् पञ्चविं-

शतिवर्षमारभ्य पुंसां विवाहकालः, ततः पूर्वं विवाहकरणं तु दशवर्षादयोग्यमेव । स्त्रीणां तु रजोदर्शनानन्तरमापत्कल्प एव विवाहः ।

(२४) उ०—काम्पिल्लसुब्रह्मण्यशास्त्रिणाम् ।

ब्राह्मणकन्यानामष्टमवयस आरभ्य दशमवयःपर्यन्तं मुख्य-कल्पः, तदनन्तरं प्रथमर्तुदर्शनपर्यन्तं गौणः तदनन्तरमा-पत्कल्पो निन्द्य इति यावत् । क्षत्रियकन्यानां तु रजो-दर्शनपर्यन्तं मुख्यः कल्पः, तदनन्तरमृतुत्रयपर्यन्तं गौणः, तत आपत्कल्पः स्वयंवरः । पुंसां तु षोडशवयसः पूर्वं पञ्चाशद्वत्स-रानन्तरं च विवाहो योग्यः, तन्मध्येऽपि न नियमः, विवाहस्य पुरु-षेषु काम्यत्वम् । रजस्वलाया आपत्कल्पतयोढाया न धर्मकार्ये-ऽधिकारः ।

(२५) उ०—मधुरारामसुब्रह्मण्यशास्त्रिणाम् ।

बाल्यमारभ्य विवाहस्य शास्त्रसम्मतत्वेऽपि अष्टमवयसः पूर्वं स्त्रीणां विवाहश्च योग्यः। ब्राह्मणानां द्वादशवयसोऽनन्तरमृतोः प्रा-गपि विवाह आपत्कल्प एव । रजोनन्तरं तु विवाहिताया न धर्मो-पयोगितेति वदन्ति ।

(२६) उ०—सीयालिसुब्रह्मण्यशास्त्रिणाम् ।

स्त्रीणामष्टमवयः, पुंसामेकोनविंशतिमारभ्य च विवाहनियमनं योग्यम् । रजोनन्तरं विवाहकरणं साहसकार्यमेव, नात्रापत्क-ल्पत्वमपि ।

(२७) उ०—पीठापुरस्थलक्ष्मीनारायणशास्त्रिणाम् ।

पुंसां षोडशवय आरभ्य स्त्रीणामष्टमवय आरभ्यर्तुदर्शनपर्यन्तं च विवाहो योग्यः, अष्टमवयसः पूर्वं रजोनन्तरं च स्त्रीणां विवाहो न योग्यः । तत्रापि रजोऽनन्तरं स्त्रीणां विवाहो नापत्कल्पोऽप्यभ्य-नुज्ञायते ब्राह्मणविषये शास्त्रेषु ।

(२८) उ०—श्रीरमापतिमिश्रशर्म राजपतिमिश्र भिकुदेव जोशीप्रभृतीनाम् ।

स्त्रीणां रजोदर्शनतः प्राक् पुंसां गोदानानन्तरं यथासौकर्यं विवाहसमयः, नात्र नियमनं परिस्थित्यनुसारेण सम्भवति, परिस्थतीनामनैकरूप्यात्, रजोनन्तरविवाहस्तु न मुख्यो न वा गौणो न वापत्कल्पः । तद्विवाहे तु सन्ततीनामप्राशस्त्यं भवति ।

(२९) उ०—नेपालस्थार्यालवीरेन्द्रकेसरिशर्मणाम् ।

अष्टवयस आरभ्य स्त्रीणां पुंसां षोडशवयस आरभ्य विवाहो योग्यः, ऋतोः प्राक् । ऋत्वनन्तरं त्वापत्कल्पतया प्रायश्चित्तपूर्वकं विवाहोऽभ्यनुज्ञायते ।

(३०) उ०—श्रीवेणीमाधवशास्त्रिणाम् (धारवाड ।)

सप्तमाद्वयसो विवाहोपक्रमनियमनं स्त्रीणां, दशवर्षानन्तरं तु न योग्यम् । पुंसां षोडशवर्षादारभ्य पञ्चाशद्वयःपर्यन्तम् । परिस्थित्यनुसारेणाप्यनृतुमत्या एव षोडशवयःपर्यन्तमपि विवाहनियमो योग्यः । रजोनन्तरविवाहः सर्वथा निन्द्यः । तदनन्तरमूढा तु न धर्माधिकारिणी ।

(३१) उ०—नागपुरब्राह्मणसभापडितानां म० म० पं० सदाशिवशास्त्रि म०म०पं० केशवशास्त्रि प्रभृतीनाम् ।

स्त्रीणामष्टमवय आरभ्यर्तुकालपर्यन्तं विवाहो योग्यः । पुंसां विवाहकालावधिस्तु न कुत्रापि शास्त्रे दृश्यते । तथापि शिष्टाचारमनुसृत्याऽष्टादशवय आरभ्य पञ्चाशत्तमवयःपर्यन्तम् । ऋत्वनन्तरविवाहस्तु आपत्कल्प एव । ऋतोः प्राक् द्वादशवयसि कृतश्चेदपि सर्वेषां सम्मतो भवेदिति ।

(३२) उ०—श्रीगणेशलाल सारस्वतानां (आगरा) ।

स्त्रीणां विवाहस्य केवलं प्रजोत्पत्त्यर्थत्वात् ऋत्वनन्तरमेव सम्भवाद् गर्भधारणशक्तिवैकल्यपरिहारार्थमृतोः प्रागेव विवाहः, एवं श्मश्रूद्गमानन्तरमेव पुंसां च विवाहो युक्तः। ऋत्वनन्तरं वृषलीत्ववचन-

वत् "काममामरणा"दित्यपि रुच्या न। ऋतुमतीविवाहोऽपि वर्ण-त्रयपर्यन्तं योग्य इति वदन्ति ।

(३३) उ०—श्रीकृष्णकुमारशास्त्रिणाम् (आरा)।

स्त्रीणां शास्त्रदृष्ट्याऽष्टवयस आरभ्य शास्त्रपरिस्थित्युभयदृष्ट्या दशमवयस आरभ्य द्वादशमध्ये विवाहनियमनम्, पुंसां षोडश-वय आरभ्यैकपञ्चाशत्तमवयःपर्यन्तं विवाहनियमनं योग्यम् । रजो-नन्तरविवाहस्तु आपत्कल्पः। अन्यथा प्रायश्चित्तीयतेति वदन्ति ।

(३४) उ०—अनिर्दिष्टनाम्नां प्रबन्धकाराणाम् ।

पुंसां शास्त्रतः विंशतिवत्सरमारभ्याष्टाचत्वारिंशद्वयःपर्यन्तं, स्त्रीणां तु अष्टवर्षत आरभ्य ऋतुदर्शनपर्यन्तं विवाहकालः। ऋ-तुमत्या विवाहो गौणः, विना प्रायश्चित्तं रजोवतीनां न व्यवहार्य-त्वमिति वदन्ति ।

(३५) उ०—शारदाप्रसादमिश्राणां (कलकत्ताशाकद्वीपीयब्राह्मणसभा)।

स्त्रीणामष्टमवयसः पूर्वं विवाहो न योग्यः, पुंसां तु यज्ञोपवीता-दूर्ध्वं प्रायश्चित्तास्मरणाद्यावत्सामर्थ्यं विवाह इति शास्त्रार्थः । परिस्थित्यनुसारेण तु पुंसां षोडशवत्सरमारभ्य विवाहव्यवस्था युक्ता । शिष्टसमाजानुमत्या परावधिनिर्णयोऽपि न दोषाय ।

(३६) उ०—कृष्णरायपुरस्थ श्रीवेंकटरामशास्त्रिणाम् ।

अस्ति बाल्यमारभ्यापि, "द्विवर्षात् प्राग्विवाहश्चेत् कन्याया म-रणं यदि । खननं नैव कर्तव्यं मन्त्रसंस्कारमाचरेत्" इत्यादिवचनात् स्त्रीणां रजोदर्शनपर्यन्तं योग्यः, तदनन्तरं तु न योग्यः, पुंसां "पञ्चा-शद्वत्सरादूर्ध्वं न कुर्यात् पाणिपीडनम्" इति निषेधात् विवाहे प्रायश्चित्तीयतेति वदन्ति ।

(३७) उ०—ब्रह्मप्रान्तीयब्राह्मणमहासभापण्डितानाम् ।

शास्त्रतोऽष्टमवयसः आरभ्य परिस्थित्यनुसारेण दशमवयस आर-भ्य स्त्रीणां रजोदर्शनपर्यन्तं पुंसां तु १६ वय आरभ्य पञ्चाशद्वयः-

पर्यन्तं विवाहव्यवस्था युक्ता, रजोदर्शनानन्तरं च प्रायश्चित्ताद्याधिक्यात् आपत्कल्पतयैव तदभ्यनुज्ञानसंभवः।

(३८) उ०—श्रीराघवशास्त्रिणाम्। (चिदम्बरम्)।

स्त्रीणां षष्ठवय आरभ्य द्वादशवयःपर्यन्तमापत्कल्पतयाऽनाथानां रजोऽनन्तरमपि विवाहव्यवस्था न दोषाय। पुंसां तु षोडशवयस आरभ्य पञ्चाशद्वयःपर्यन्तं विवाहो न दोषाय। तदनन्तरं तु स दोषायैवेति वदन्ति।

(३९) उ०—तेन्नालिराममूर्तिशास्त्रिणाम्।

ब्राह्मणस्त्रीणामष्टमवयसोऽनन्तरमृतुपर्यन्तं विवाहकालः, ऋत्वनन्तरं तु न सम्भवत्येव धर्माधिकारादिकं विवाहे। क्षत्रियादीनां तु गान्धर्वविवाहाभ्यनुज्ञानात् ऋत्वनन्तरं वर्षत्रयमध्ये विवाहो गौण इति मन्यन्ते।

(४०) उ०—जयपुर श्रीसीतारामशास्त्रिप्रभृतीनाम्।

स्त्रीणां दशमवय आरभ्य पुंसां षोडशवय आरभ्य विवाहव्यवस्था शास्त्रपरिस्थित्युभयानुसारेण भवति। रजोनन्तरं तु विवाहो दोषायैव।

(४१,४२,) उ०—श्रीपट्टाभिरामशास्त्रिणाम् अभिनवसरस्वतीसम्पादकानाम् रामशास्त्रिणां च।

अष्टमवयस आरभ्य द्वादशवयःपर्यन्तं स्त्रीणां षोडशवत्सरमारभ्य विवाहकालसंकोच एव कर्तव्यः, न तु तदुपचयः। रजोनन्तरं तु विवाहो न संभवत्येव धर्माधिकारप्रयोजकः।

(४३) उ०—नोवाखालीसंस्कृतविद्यालयपण्डितानाम्।

अष्टमवयस आरभ्य ऋतुकालपर्यन्तमेव शास्त्रपरिस्थित्युभयानुसारेण नियमनं विवाहकालस्य स्त्रीणां, पुंसां समावर्तनानन्तरं शूद्रेतराणां, शूद्राणां तु षोडशवयस आरभ्य विवाहकालनियमनं

योग्यम् । कन्याया अलाभे एव पुंसां नोद्वाहो युक्तः । वृषलीत्व-बोधकानां वचनानां रजोदर्शनात्पूर्वं विवाहावश्यंभावार्थत्वम् ।

(४४) उ०—मेदिनोपुर जलासुवादिब्राह्मणपण्डितानाम् ।

'कन्यकानामष्टमवयस आरभ्य शास्त्रानुसारेण, परिस्थित्यनुसारेण दशमवयसः प्राक् द्वादशवयःपर्यन्तं, पुंसामुपनयनानन्तरमेव शास्त्रतः, परिस्थित्यनुसारेण चतुर्विंशतिवयस आरभ्य विवाहकाल-नियमनं योग्यम् । रजोयोगे तु विवाहो गौण आपत्कल्पो वा ।

(४५) उ०—श्रीरमानाथविद्यालङ्काराणाम् ।

अष्टमादिवय आरभ्य रजोदर्शनतः पूर्वं विवाहो योग्यः, रजो-दर्शनानन्तरं तु षोडशवत्सरमध्ये आपत्कल्पतया विवाहः स्त्रीणा-मभ्यनुज्ञायते । बाल्यविवाहप्रथारक्षणमेव योग्यं, न तु तत्परि-त्याजनम् ।

(४६) उ०—श्रीसुरेन्द्रनाथतर्करत्नभट्टाचार्याणाम् ।

राजमार्तण्डे—

सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।

इत्यादिवचनात् सप्तवर्षानन्तरं दशवर्षपर्यन्तं कन्याया विवाह-कालो मुख्यः । ततः परं नग्निकाया विवाहकालो गौणः । वृषलीत्व-बोधकवचनानामप्राशस्त्यपरत्वं, परिस्थित्यनुसारेण सप्तवर्षानन्तरं द्वादशवर्षात्प्राक् कन्याया एकविंशतिवर्षानन्तरं त्रिंशद्वर्षपर्यन्तं पुरुषस्य विवाहः सङ्गतः ।

(४७) उ०—खुलना जिलांतर्गतकतिपयग्रामनिवासिपण्डितानाम् ।

सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।

इत्यादिवचनम् । स्मार्तभट्टाचार्यैः द्विवर्षायाः शूद्रपत्न्याः पञ्चवर्षीय-शूद्रेणापि विवाहः स्वीकृतः ।

अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् ।
मृत्युं समधिगच्छेत्तु मासं तस्यापि बांधवाः ॥

इति शङ्खवचनं च ।

चत्वारिंशद्वत्सराणां साष्टानां च परे यदि ।
स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः ।
अष्टचत्वारिंशदब्दं वयो यावन्न पूर्यते ।
पुत्रभार्याविहीनस्य नास्ति यज्ञेऽधिकारिता ॥

इति भविष्यपुराणम् ।

एतद्वचनानुसारेण वर्तमानपरिस्थित्यनुसारेण नियमनमुपयुज्यते । ऋतुदर्शने वृषलीत्वबोधकवचनानि अनापदि पित्रादीनां तद्वोढुश्च प्रत्यवायमवगमयन्ति ।

(४८) उ०—श्रीयुक्तललितकुमारसाङ्ख्यवेदतीर्थमहाशयानाम् ।

रजःप्रवृत्तेः प्रागेव कन्याया विवाहः कार्यः, अनूढायाः रजोदर्शने मातापितृभ्रातॄणां दोषस्मरणात् अनूढायाः कन्याया रजोदर्शने वृषलीत्वेन भ्रूणहत्याश्रवणेन च सर्वथा अव्यवहार्यत्वं गम्यते । परिस्थित्यनुसारेण दशमवर्षीयायाः विवाहो योग्यः । तथापि सप्तसंवत्सरादूर्ध्वमेव विवाहः शास्त्रीयः कन्यानां, पुरुषाणां एकविंशतिमारभ्य त्रिंशत्पर्यन्तं विवाहः शास्त्रसम्मतः ।

(४९) उ०—श्रीनारायणविद्यारत्न श्रीविश्वनाथतर्कभूषणमहोदययोः ।

वर्तमानपरिस्थित्यनुसारेण ऋतुप्रवृत्तिसमयात्पूर्वपर्यन्तं स्त्रीणां विवाहनियमनं योग्यम् । रजःप्रवृत्यनन्तरं विवाहस्याऽऽपत्कालिकवृषलीत्वबोधकवचनानां प्रायश्चित्तार्हत्वे निन्द्यत्वे च तात्पर्यम् ।

(५०) उ०—मैमनसिंहधर्मसभापण्डितानाम् ।

शास्त्रीयनियमपरिवर्तनं न युक्तम् ।

(५१) उ०—श्रीदुर्गासुन्दरभट्टाचार्याणाम् ।

सामाजिकपारिवारिकपारिपार्श्विकव्यवहारेण विवाहात्परमेव अस्मद्देशीयस्त्रीणामवगुण्ठनं दृश्यते, ततः पूर्वं तदभावात् याद्दच्छिकगमनादितश्च मनोविकारकपुरुषसंलापादिसंसर्गविभावना

प्रायश एव सम्भवितुमर्हति । उपयुक्तशिक्षासंयमाभ्यासप्रयोगे अभिभावका अनेके एवासमर्थाः । विवाहात्पूर्वं रजोदर्शने आत्यन्तिकनिन्दाश्रुतेश्च रजोदर्शनपूर्वकालपर्यन्तं विवाहसमयनिरूपणं कर्तव्यम् । अतएव धृताधोवसनाया गौर्याः प्राप्तौ विवाहकर्त्री यतनीयमित्युक्तमुद्वाहचन्द्रालोके ।

(५२) उ०—श्रीसोतानाथविद्याभूषणानाम् ।

वर्तमानपरिस्थितेः शास्त्राननुमोदितत्वात्तदनुसारेण यत्किञ्चिदपि नियमनं शास्त्रैकशरणानामनभिप्रेतमेव सर्वदा भावि ।

(५३) उ०—श्रीकुमुदचन्द्रकाव्यव्याकरणतीर्थानाम् ।

तदेव ।

(५४) उ०—श्रीनाथचन्द्रकाव्यतीर्थद्वारकानाथवेदान्ततीर्थयोः ।

स्त्रीणां मासत्रयाधिकषड्वर्षात् दशमवर्षपर्यन्तं विवाहकालो मुख्यः, पुंसामुपनयनानन्तरं अष्टचत्वारिंशद्वर्षपर्यन्तम् । रजःप्रवृत्यनन्तरं विवाहस्यापत्कलपत्वमेव । वृषलीत्वबोधकवचनानां व्यवहारायोग्यत्व एव तात्पर्यम् ।

(५५) उ०—श्रीविनोदविकासदेवन्यायतीर्थानाम् ।

पूर्ववदेव । परिस्थित्यनुसारेण शास्त्रानुसारेण च रजोदर्शनात्पूर्वं षोडशवर्षपर्यन्तं नियमनं योग्यं, रजःप्रवृत्यनन्तरं विवाहस्य अत्यापत्कलपत्वम् ।

(५६) उ०—श्रीरामपदस्मृतितीर्थानाम् ।

परिस्थित्यनुसारेण द्वादशवर्षादारभ्य षोडशवर्षपर्यन्तं स्त्रीणां, पुंसां च विंशतिवर्षावधि त्रिंशद्वर्षपर्यन्तं विवाहकालः शास्त्रसम्मतः । विशेषकारणवशात् पुंसां विवाहः अष्टचत्वारिंशद्वर्षपर्यन्तं शास्त्रसम्मतः । ऋतुदर्शनात् प्राक् कन्यादानमत्यन्तमावश्यकम् ।

(५७) उ०—श्रीभूतनाथवेदान्तशास्त्रिणाम् ।

पुंसां सप्तदशवर्षादारभ्य अष्टचत्वारिंशद्वर्षपर्यन्तं विवाहकालः

शास्त्रसम्मतः। स्त्रीणां च प्राग्रजोदर्शनात्। रजसि प्रवृत्ते योषितां बहुदोषसम्भावनाऽस्ति। सरजस्कतया तस्याश्चित्तविक्षेपः, तदार्त्तववैफल्यम्, पित्रोः सहोदरस्य च भ्रूणहत्यादिपापं, तस्याः कन्यायाश्च वृषलीत्वादि पातित्यं, तद्भर्तुः वृषलीपतित्वदोषश्च।

रजःप्रवृत्ते नारीणां रिरंसा जायते भृशम्।

इत्यादिवचनान्यत्र प्रमाणानि। अन्या च महती शारीरिकी हानिः, या पुनरनूढा असंस्कृता पितुर्निलये रजो दृष्ट्वा स्वभावरिरंसुतया स्वप्ने मैथुनमाचरेत्, तां प्रकृत्योक्तमायुर्वेदे—

ऋतुस्नाता तु या नारी स्वप्ने मैथुनमाचरेत्।
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि॥
मासि मासि प्रवर्धेत स गर्भो गर्भलक्षणः।
कललं जायते तस्मात् वर्जितः पैतृकैर्गुणैः॥

केशस्नाय्वस्थिशिराधमनीदन्तनखरेतःशून्यं कललं जायत इत्यर्थः। अन्यच्च भावप्रकाशे—

यदा नार्यावुपेयातां वृषस्यन्तौ कथञ्चन।
मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते॥

अनस्थिः अल्पकोमलास्थिरित्यर्थ इति टीका। परं सुशासितायामपि कन्यायां न प्रसह्य प्रकृतिमवरोद्धुं शक्नोति कश्चित्। यद्येवमनिष्टं जायेत, तर्हि का गतिरस्माकं धर्मैकजीवितानामार्याणामिति चिन्त्यम्। अत एव मनुनाप्युक्तम्—

कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः। इति। परिस्थित्यनुसारेणापि इयमेव व्यवस्था।

रजोदर्शनात्प्राक्कन्या देया इत्यनेन भारतवासिनामार्याणां नैकविधः काल उक्तः, देशभेदेन प्रकृतिस्वास्थ्यादिभेदेन चात्र कालभेदस्य अवश्यम्भावित्वात्। अत एव सुष्ठूक्तं मेधातिथिना

'अष्टवर्षात् ( आरभ्य ) ऋतोः प्राक्' इति । रजःप्रवृत्त्यनन्तरं विवाहस्य न मुख्यत्वं, किं तु हेयत्वं हानिकरत्वं च। हानिरपि दैहिकी सामाजिकी च । वृषलीत्वबोधकवचनानां व्रात्यवत्पातित्यसूचकत्वम् । पाश्चात्याः कथयन्ति सङ्करप्रजा बलवत्यो भवन्ति इति, तदर्थं ते सङ्करोत्पादनाय यतन्ते। येन केनाप्युपायेन अर्थजनबलवृद्धिरवश्यं करणीयेति तद्देशीयानां सिद्धान्तः। नास्माभिरेवंविधं अनुचितं बलमभिलष्यते।

(५८) उ०—पूर्णस्थलीब्राह्मणमहासम्मेलनोपसमितिपण्डितानाम्।

अन्यत्सर्वं पूर्ववदेव। परन्तु–

नैनः किंचिदवाप्नोति न च यं साधिगच्छति ।

इत्यनेन ऋतुमत्याः कन्याया वोढुश्च दोषाभावो दर्शितः, तथापि पुरुषान्तरोपभुक्तत्वसंशयाल्लोकविद्विष्ट एव ।

(५९) उ०—श्रीसुरेन्द्रलालस्मृतितीर्थानाम् ।

स्त्रीणां दशमे वर्षे पुंसां चतुर्विंशतिवर्षे शूद्रस्य षोडशवर्षे विवाहनियमनं योग्यम्। ऋतमतीविवाहो लोकविद्विष्ट एव ।

(६०) उ०—श्रीचिन्तामणिस्मृतितीर्थानाम्।

स्त्रीणां शूद्राणां च चूडाकालद्विवर्षानन्तरं द्विजानां समावर्तनसंस्कारानन्तरं आजीवनमेव विवाहः शास्त्रसम्मतः। न च—

सप्तसंवत्सरादूर्ध्वं विवाहः शास्त्रसम्मतः।

कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः॥

इति वचनात्सप्तवर्षाभ्यंतरे न विवाहो भवितुमर्हतीति वाच्यम्। तत्र 'शस्यते' 'धर्मगर्हित' इत्याभ्यां निन्दितत्वस्यैव प्रतिपादनात् । अत एवोक्तं शुद्धितत्वे—'यत्र द्विवर्षीयायाः शूद्रपत्न्या मरणे स्वमशौचं तत्र तद्वोढुः पञ्चमाब्दीयस्य मरणे द्वादशाहाशौचवैषम्यापत्ते'रिति । न च तथापि—

साष्टचत्वारिंशदब्दं वयो यावन्न पूर्यते ।
पुत्रभार्यावियुक्तस्य नास्ति यज्ञेऽधिकारिता ॥

इति वचनात् अष्टचत्वारिंशद्वर्षानन्तरं विवाहस्याशास्त्रीयत्वमिति वाच्यम् । तत्र यज्ञकर्मानधिकारप्रतिपादनमुखेन तन्मध्ये विवाहावश्यकताया एव प्रतिपादितत्वात् । न च पुत्रोत्पादनायोग्यदशायां कथं विवाहः, तदानीमपि—

नैकमपि विना कुर्यात् विधानं भार्यया द्विजः ।

इत्यादिवचनावगतवैधकर्मानुष्ठानोपयोगात् । वर्तमानपरिस्थित्यनुसारेण विवाहस्य पूर्वोक्तं शास्त्रीयकालमुल्लङ्घ्य अन्यथा कालकल्पनं शास्त्रविदां सर्वथा असम्मतमेव ।

(६१) उ०—श्रीअन्नदानाथभट्टाचार्याणाम् ।

सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटकगृहगौरीणां सप्तजन्मानुगं फलम् ॥

इति स्मृतिः गौर्या दानं विशेषतः प्रशंसति ।

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ।

इति संवर्तवचने दशवर्षाधिकवयस्कायाः निन्दाश्रवणात् सप्तमवर्षादूर्ध्वं दशवर्षपर्यन्तं विवाहो युक्तः । विश्वसारतन्त्रोक्तद्वादशाब्दादारभ्य विंशतिवर्षपर्यन्तं यत्सुकुमारीत्वविधानं तत्कौलानां कुमारीपूजने ज्ञेयम् । द्विजातिपुरुषाणां तु समावर्तनानन्तरमेव विवाहकालः । सर्वधर्मग्रासी वर्तमानकालस्तु प्राचीनकालवर्तिस्त्रीरपेक्ष्य वर्तमानस्त्रीणामल्पे वयसि रजोयोगमुत्पादयति । तथा च वृषलीकन्याया विवाहे रजोदोषश्रवणात्सम्प्रति कालव्यवहारस्थित्या विवाहकालस्य सङ्कोच एव प्राप्तः । रजोनन्तरविवाहस्य गौणत्वापत्कल्पत्वसंदेहेऽस्माभिः पृच्छयते, प्रमादकृतरजःप्रवृत्त्यनन्तरं विवाहस्य गौणत्वजिज्ञासा, आहोस्वित् इच्छाकृतरजःप्रवृत्त्यनन्तरम् । प्रथमे कल्पे, विवाहः आपत्कल्प एव, द्वितीये

गौणत्वम् । वृषलीत्वबोधकवचनानां वृषलीविवाहनिषेधे तात्पर्यम् ।

(६२) उ०—श्रीदयालतर्कतीर्थानाम् ।

सर्वमपि पूर्ववत् । वृषलीत्वबोधकवचनानां तद्वोढुः दृढतर-पापभागित्वे तात्पर्यम् ।

(६३) उ०—फरीदपुर विद्वत्समिति सम्पादकानाम् ।

स्त्रीणां द्वादशवर्षतश्च मुनिभिः पुंसां चतुर्विंशके
उद्वाहो विहितस्तु वेदविहितो लोकस्थितिं कांक्षिभिः ।
एषा पद्धतिरेव सम्प्रति पुनर्योग्या भृशं भारते
नान्या स्याद्गतिरत्र विज्ञविदुषां नूनं मता सर्वतः ॥
कालोऽयं त्वतिदुस्तरः कलिरहो यस्य प्रभुत्वं स्फुटं
यस्मादद्य हि धर्मसम्मतगतिर्नो सम्मता सर्वतः ।
येषां शास्त्रमतेन कृत्यकरणे ह्यास्था परा धर्मतः
तेषां स्मार्तविधानतोऽष्टप्रभृतौ कन्याप्रदानक्षमः ॥
गौरीदानविधेर्विरोधनिपुणैः प्रोक्तं व्यवस्थाप्यते
ये वा सम्प्रति चञ्चलास्तु चपलाः संस्कारमाकांक्षिणः ।
तेषां मोहविमोचनात्तु सुतरां पुष्पोद्गमात् पूर्वतः
कन्याया दशवर्षतो गणनतो द्वित्र्युत्तराद्वा पुनः ॥
विवाहात्पूर्वतः स्त्रीणां रजश्चेत्परिदृश्यते ।
आपत्कल्पत्वमेवात्र भविता कस्यचिन्मते ॥
वयं तु न हि लुप्ताः स्मस्तत्रापि साम्प्रतं पुनः ।
यतः कौलीन्यमेवाद्य नामशेषत्वमृच्छति ॥
तस्मात्साङ्कर्यदोषेण समाजो जर्जरायते ।
कालेऽप्यनूढकन्यानां जातं चेदृतुदर्शनम् ॥
तादृग्भार्योद्वाहकारिपत्युर्नरकगामिता ।
सर्वथा वर्जनीयोऽसौ समाजहितकामिभिः ॥

३

(६४) उ०—श्रीहृषीकेशवेदान्ततीर्थानाम्।

पूर्ववदेव।

(६५) उ०—श्रीहरकुमार स्मृतितीर्थ तर्कपञ्चाननकविरत्नानाम्।

रजो दर्शनात् पूर्वं कन्यायाः विवाहः। रण्डाश्रमित्वात्पूर्वं पुरुषस्य विवाहः शास्त्रसिद्धः। रजःप्रवृत्त्यनन्तरं विवाहस्य मुख्यत्वम्। वृषलीत्वबोधकं तु शास्त्रं किञ्चिन्न्यूनतां बोधयति।

(६६) उ०—तर्कतीर्थ श्रीभवरञ्जनशर्मणाम्।

स्त्रीणां जन्मकालमारभ्य मासत्रयाधिकषड्वर्षानन्तरमाजीवनं विवाहकालः। पुंसामपि विंशतिवर्षानन्तरमाजीवनम्। सम्भवति चेदष्टचत्वारिंशद्वर्षाभ्यन्तरे।

(६७) उ०—श्रीहरिदाससिद्धान्तवागीशभट्टाचार्याणाम्।

पूर्ववदेव।

(६८) उ०—महेन्द्रकुमारस्मृतिभूषणभट्टाचार्याणाम्।

शास्त्रोदितनियमपरिवर्तनं न युक्तं, वृषलीत्वबोधकवचनान्यर्थवादः।

(६९) उ०—श्रीरामदेवशर्मणाम्।

पूर्ववदेव।

(७०) उ०—भिषक्पुराणतीर्थोपाधिकश्रीगदाधरमङ्गलानाम्।

पूर्ववदेव।

(७१) उ०—सतीनाथस्मृतितीर्थानाम्।

पूर्ववदेव।

(७२) उ०—श्रीसुरेशचन्द्रकर्मविद्यानिधीनाम्।

पूर्ववदेव।

(७३) उ०—सुरेन्द्रनाथदेवशर्मणाम्।

षोडशवर्षाया विवाहबोधकं महाभारतवचनं युगान्तरविषयं

शैत्यप्रधानदेशविशेषपरं वा। श्रूयते च पुनः ऋग्वेदे कुष्ठरोगाक्रान्तायाः कस्याश्चित् कन्याया आरोग्यलाभानन्तरं चत्वारिंशद्वर्षमतीत्य ततः परं तस्या विवाहः, तेनैव किं चत्वारिंशद्वर्षे सर्वासां स्त्रीणां विवाहकालः कल्प्येत। तेन ऋतुदर्शनात् प्राक् स्त्रीणां विवाहो योग्यः, पुंसां तु पूर्ववदेव।

एतैस्तु प्राचीनमतपोषकाणि पूर्वोक्तानि निखिलान्यपि प्रमाणानि महता परिश्रमेणान्विष्यान्विष्य लिखितानि।

(७४) उ०—श्रीकालीचन्द्रस्मृतितीर्थानाम्।

वर्तमानपरिस्थित्यनुसारेणापि वयोनियमनं न योग्यम्। रूपगुणार्थवैषम्येन नियमपरिपालनासम्भवात् महानर्थसम्भवाच्च। अन्यत्सर्वं पूर्ववदेव।

(७५) उ०—श्रीआनन्दकुमारतर्कवागीशानाम्।

पूर्ववदेव।

(७६) उ०—श्रीप्राणानन्दकविभूषणसिद्धान्तरत्नसरस्वतीनाम्।

पूर्ववदेव।

(७७) उ०—श्रीसूर्यकुमारतर्कसरस्वतीनाम्।

पूर्ववदेव।

(७८) उ०—श्रीरामगोपालस्मृतिरत्नानाम्।

पूर्ववदेव।

(७९) उ०—श्रीमोदनाथविचाररत्नानां कूचविहारराजसभापण्डितानाम्।

यत्तु—

वर्षं पंचदशं यावत्कन्यादानं न दुष्यति।
देशाचारात् कुलाचाराद्नान्यदीयं विधर्मतः॥

इति विवाहभास्करधृतकुलाचारलिखितस्मृतिवचनं तद्रजस्काविषयमेव। न च प्रागृतोः कन्याया न दानमिति मनुभाष्यकारमेधातिथिव्याख्यानात् ऋतुदर्शनानन्तरं कन्याया विवाह इति

वाच्यम्। तस्यायमर्थः, यथा आद्यऋतोरन्यत्र कन्याया दानं तथा ऋतुदर्शनात्प्रागेव कन्याया दानमित्यर्थः। नन्वस्तु तावद्ब्राह्मणपक्ष एव अरजस्काया विवाहविधिः।

यस्तु तामुद्वहेत् कन्यां ब्राह्मणो मदमोहितः।
असम्भाष्यो ह्यपाङ्क्तेयस्स ज्ञेयो वृषलीपतिः॥

इति वाक्यात्, न पुनः क्षत्रियादाविति चेन्न।

अविवाहिता तु या कन्या पुष्पयुक्ता भवेद्यदि।
चान्द्रायणव्रतं कुर्यात् सर्ववर्णेष्वयं विधिः॥

इति रिपुञ्जयवचनात् ब्राह्मणादिसर्ववर्णानामेव प्रायश्चित्तश्रवणात्। पुंसस्तु कन्यापेक्षया त्रिगुणकालेन सार्धद्विगुणकालेन सपादैकगुणेन च अष्टचत्वारिंशद्वर्षपर्यन्तं विवाहो निरूपितः। तत्र क्रमेण प्रमाणानि-

वर्षैरेकगुणां भार्यां त्रिगुणः स्वयमुद्वहेत्।

इति कल्पतरूद्धृतविष्णुपुराणवचनम्।

त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।

इति मनुवचनम्।

पुमान्विंशतिवर्षश्चेत् पूर्णषोडशवर्षया।
स्त्रिया संगच्छते गर्भाशये शुद्धे रजस्यपि॥

इति भुजबलभीमवचनम्।

अष्टचत्वारिंशदब्दं वयो यावन्न पूर्यते।
भार्यापुत्रविहीनस्य नास्ति यज्ञेऽधिकारिता॥ इति।
पञ्चाशोर्ध्वं वनं व्रजेत्। इति वचनं च।

(८०) उ०—श्रीचट्टलग्रामधर्ममण्डलीपण्डितसभायाः।

पूर्ववदेव।

(८१) उ०—प्राचीनकामरूपपण्डितसभायाः।

पूर्ववदेव।

(८२) उ०—श्रीजगदीशचन्द्रदेवशर्मणाम् ।

पूर्ववदेव ।

(८३) उ०—चट्टग्रामान्तर्गतकेलीशहरस्थपण्डितसमितेः ।

अनाश्रमी न तिष्ठेत्तु क्षणमात्रमपि द्विजः ।

आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते त्वसौ ।

इति दक्षवाक्ये क्षणमात्रोपादानात् प्रायश्चित्तश्रवणाच्च पुंसां समावर्तनोत्तरकालो मुख्यः प्रतीयते ।

(८४) उ०—श्रीनवीनचन्द्रन्यायपञ्चाननानां श्रीरामन्यायरत्नानां च ।

वृषलीत्वबोधकवचनानां द्विजातेर्विवाहनिषेधबोधकतया ज्ञानतोऽज्ञानतो वा विवाहे कृते वृषलीत्वमापन्नायाः कन्यायाः तत्पत्युरपि तदुत्पन्नसन्ततेरपि पातित्यमित्येव तात्पर्यम् ।

(८५) उ०—श्रीमहेन्द्रचन्द्रकाव्यतीर्थसांख्यार्णवानाम् ।

पूर्ववदेव ।

(८६) उ०—श्रीसूर्यनारायणस्मृतिभूषणभट्टाचार्याणाम् ।

रजःप्रवृत्त्यनन्तरं वृषलीत्वबोधकवचनेषु ब्राह्मणमात्रपरिदर्शनात् उपलक्षणत्वग्राहकप्रमाणान्तरादर्शनाच्च ब्राह्मणवरस्यैतादृशकन्यापरिणयात्तादृशो दोषः ।

(८७) उ०—श्रीगोपालचन्द्रस्मृतिव्याकरणतर्कतीर्थभागवतिस्मृतिन्यायवेदान्तरत्नानाम् ।

स्त्रीणामपुष्पितानां गौणमुख्यभेदेन अष्टमवर्षात् षोडशवर्षपर्यन्तं विवाहकालः शास्त्रसम्मतः । तथा च स्मृतिसारः—सप्तमाद्वत्सरादित्यादि अन्यथा धर्मगर्हित इत्यन्तम् ।

अङ्गिराः—अष्टवर्षा भवेद्गौरी अत ऊर्द्ध्वं रजस्वला—इत्यन्तम् । रजस्वलेति अन्तरस्थरजोयुक्ता भवतीत्यर्थः । गौणकालमाह—कुलाचारे स्मृतिः ।

वर्षपञ्चदशं यावत् कन्यादानं न दुष्यति ।
देशाचारात्कुलाचारान्नान्यदीयं विधर्मतः ॥

महाभारते,

त्रिंशदब्दः षोडशवर्षां भार्यां विन्देत नग्निकाम् ।
अतोऽप्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत् ॥

इति विवाहभास्करे लिखनात् । अत एव एकवर्षा भवेत्सन्ध्ये-त्याद्यभिधाय—

क्षेत्रज्ञा पञ्चदशभिः षोडशे चाम्बिका स्मृता ।
एवं क्रमेण सम्पूज्या यावत्पुष्पं न जायते ॥

इति तन्त्रसारधृतयामलीयेनापि एवंविधायाः पूज्यत्वमुक्तम् । यत्तु

प्राप्ते तु द्वादशे वर्षे यदा कन्या न दीयते ।

इत्यादिवचनान्तरं, तत्प्रकटरजस्काविषयमिति तत्रैवोक्तम् । पुंसां तु समावर्तनकालादारभ्य त्रिंशद्वर्षपर्यन्तं मुख्यकालः, ततः पञ्चाशद्वर्षपर्यन्तं गौणकालः प्रतीयते । 'वनं पञ्चाशतो व्रजेत्' इति श्रुतेः । रजःप्रवृत्त्यनन्तरं 'यस्तु तां वरयेत्कन्याम्' इत्यादिकाश्यपीये तादृशकन्याया धर्म्यविवाहे ब्राह्मणस्य दोषश्रवणात् असवर्णीयावत् वैदिकविवाहानुष्ठानादिकं विना संगृहीतारूपगौणकल्पत्वमेव विवाहस्य भवितुमर्हति । इतरत्रैवर्णिकानां तु तादृशकन्याविवाहे न दोषः । एतदेव शम्भुनाथेन भास्करग्रन्थेऽभिहितं यथा—"तेन एवंविधया शकुन्तलया दुष्यन्तविवाहोऽपि श्रूयते । मनुनापि,

गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥

इत्यादिना तादृशविवाहस्य क्षत्रियादेर्नाधर्महेतुत्वमुक्तम् । वृषलीत्वमपि ब्राह्मण्या एव, ब्राह्मणप्रतियोगिकविवाहे ब्राह्मण्या एव प्रागुपस्थितत्वा"दिति । 'अक्षता च क्षता चैव' इति याज्ञवल्क्यीयमपि क्षत्रियादिविषयमिति । किं च वरकन्ययोः संस्कारविशेषो हि वि-

वाह इति भास्करकृतविवाहलक्षणमपि अत्र न सङ्गच्छते, कन्यात्वाभावादिति। वृषलीत्वबोधकवचनानां तु 'न गृहम्' इत्यादिवाक्ये 'सर्वान्पुरुषार्थान्समश्नुते' इत्यत्र सर्वशब्दस्य यावत्वावच्छिन्ने शक्तत्वात् 'सपत्नीको धर्ममाचरेत्' इति श्रवणाच्च ब्राह्मणस्य ब्राह्मादित्रयविवाहे यथा धर्मार्थकाममोक्षपुरुषार्थचतुष्टयं स्यात् तथा तया सह न स्यादित्यत्र तात्पर्यम्।

(८८) उ०—श्रीरामलालतर्कतीर्थानाम्।

पूर्ववदेव।

(८९) उ०—श्रीराखालानन्दठक्कुरशास्त्रिणाम्।

रजःप्रवृत्तौ वृषलीत्वबोधकानां वचनानां अव्यवहार्यत्वे तात्पर्यं द्रष्टव्यम्। तत्संसर्गिणामपि तथाविधानदर्शनात्।

(९०) उ०—श्रीबंकिमविहारिकाव्यतीर्थानाम्।

पूर्ववदेव।

(९१) उ०—श्रीशारदाचरणस्मृतितीर्थानाम्।

स्त्रीणां सप्तसंवत्सरादूर्ध्वं द्वादशवत्सरपर्यन्तं प्रशस्तो विवाहः। अतः परमप्रशस्तो न तु पर्युदस्तः। पुंसां तु ब्राह्मणस्योपनयनात्परं, एवं क्षत्रियवैश्ययोरपि, शूद्रस्य चतुर्विंशतिवर्षात्परं, सर्वेषां अष्टचत्वारिंशद्वर्षपर्यन्तम्। अतः पूर्वापरयोर्न पर्युदासः, किंतु न प्रशस्तः। वर्तमानसमये स्तनोद्गमसमये एव प्रशस्तो विवाहकालः। अगत्या तु तदधिककालेऽपि स्त्रीणां विवाहः। पुंसां तु समाजरीत्यनुसारेण।

(९२) उ०—श्रीवासुदेवचौधरी व्याकरणतीर्थतर्कतीर्थन्यायरत्नानाम्।

वर्तमानसमयेऽपि शास्त्रनिर्दिष्टनियम एव माननीयः। यद्यपि कालप्रभावेण लोकोऽसद्वृत्तिमाचरति, तथापि असद्वृत्त्याचरणविधायकं किमपि नियमनं न सम्भवति। वृषलीत्वबो-

धकवचनैरिदं ज्ञायते यद्रजःप्रवृत्त्यनन्तरं स्त्रीणां विवाहदानं पापजनकं गृहस्थस्य सर्वतोभावेनामङ्गलकरं तदिति ।

(९३) उ०—श्रीत्रैलोक्यनाथस्मृतिभूषणानाम् ।

पूर्ववदेव ।

(९४) उ०—श्रीभुवानन्दन्यायरत्नानाम् ।

शतानन्दः—

गर्भादष्टमवर्षे तु दशमे द्वादशेऽपि वा ।
कन्यापरिणयः शस्त इति वात्स्यादिसम्मतम् ॥

गर्भादिति सर्वत्रान्वयः । अत एव जन्मावधि सप्तमे वर्षे गौरीत्वमाह कश्यपः—

सप्तवर्षा भवेद्गौरी दशवर्षा तु कन्यका ॥ इति ।

कन्याविवाहकाल एव वरविवाहस्य मुख्यः कालः । कन्याधिकवयसः कन्याधिकप्रमाणस्य च वरस्य विवाहकालो गौणः । 'अनाश्रमी न तिष्ठेत्' इत्यादिवचनात् ।

(९५) उ०—श्रीदेवुलवाडचतुष्पाठीपण्डितानाम् ।

वृषलीवत् तस्यास्तद्वोढुश्च दैवादिकृत्येषु अनधिकारित्वसूचनाय वृषलीति संज्ञा ।

(९६) उ०—चटगांव एनाथबाजार संस्कृतविद्यालयपण्डितानाम् ।

पूर्ववदेव ।

(९७) उ०—श्रीदिनाजपुरधर्मसभापण्डितानाम् ।

वर्तमानपरिस्थित्यनुसारेण शास्त्रानुसारेण च रजोदर्शनात्पूर्वमेव विवाहकालनियमनं स्त्रियो योग्यम् । यतः स्त्रीणां रजःप्रवृत्त्यनन्तरमपि विवाहाभावे—

दीर्घं वा युवती कन्या निवसेत् पितृवेश्मनि ।
विना तु भर्तृसंसर्गं भ्रष्टात्वं साधिगच्छति ॥

इति नीतिशास्त्रेण भ्रष्टात्वं स्यात् , ततः स्वच्छन्दचारिणीनां

स्त्रीणां त्यागः शास्त्रे विहितः, न तु कदापि ग्रहणं सम्भवति। पुंसामपि कलौ दीर्घकालब्रह्मचर्याभावेऽपि विवाहे असमाप्तजिगीषस्य स्त्रीचिन्तनेन अध्ययनप्रतिवन्धकताशंकया, किं च चतुर्विंशतिवर्षात्पूर्वं सर्वेषामङ्गप्रत्यङ्गानामदाढर्यात् तत्पूर्वमेव रामानुरक्तौ तदानीं तत्र जातानां तनयानां दौर्बल्यमल्पायुष्ट्वं च स्यादिति चतुर्विंशतिवर्षमारभ्यैव विवाहकालनियमनम्। रजःप्रवृत्त्यनन्तरं विवाहस्य न मुख्यत्वं न वा गौणत्वं न वाऽऽपत्कल्पत्वं, परं तु,

यस्तु तामुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः।
असम्भाष्यो ह्यपाङ्क्तेयः स ज्ञेयो वृषलीपतिः॥

इति निन्दार्थकवाक्येन निषिद्धत्वमेवावगम्यते, ततश्च शास्त्रान्तरे रजःप्रवृत्त्यनन्तरं दानप्राशस्त्यविधायकं वचनं यदि समूलं प्रमितं स्यात् तदा तत्कलीतरपरत्वेन व्याख्येयम्। न च दृष्टरजस्काया निन्दनं कलीतरपरं, प्राशस्त्यं तु कलिपरं, इति वैपरीत्यं कुतो न स्यादिति वाच्यम्। यतो हेतुरित्यधिकृत्य--

स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि।

इत्यादिभागवतीयकलिवर्णनश्लोकैः कलौ जनानां शिश्नोदरपरायणत्वावगमात्, अविशेषेण स्त्रीपुंसोरुभयोरेव दीर्घकालीनब्रह्मचर्यनिषेधात्, 'स्वैरिण्यश्च स्त्रियः सदा' इत्यनेन कलौ स्त्रीणां स्वैरिणीत्वख्यापनेन रजःप्रवृत्त्यनन्तरमपि विवाहे व्यभिचारिणीत्वादिशंका दुर्निवारा, ततश्च कलौ रजःप्रवृत्त्यनन्तरं विवाहस्य निषिद्धत्वमेव न्याय्यम्। ननु यदि कलौ शिश्नोदरपरायणत्वमेव दीर्घकाले ब्रह्मचर्याभावे हेतुरिति उपन्यस्यते, तर्हि पुंसां कथं चतुर्विंशतिवर्षात्पूर्वं विवाहो निषिध्यत इति चेन्न, कलौ शिश्नोदरपरायणत्वात् दीर्घकालीनं शास्त्रोक्तब्रह्म-

चर्यं स्त्रीपुंसोरुभयोरेवाशक्यम्, ततश्च चतुर्विंशतिवर्षमारभ्य यो विवाहकालोऽभिहितः, स तत्पूर्वमङ्गप्रत्यङ्गानामदार्ढ्यात् तत्परं च दार्ढ्यात् सन्तानानां दीर्घायुष्ट्वाय, न तु तत्पूर्वं सर्वथैव विवाहाभावो ज्ञाप्यते। न चैवं स्त्रीणामपि चतुर्विंशतिवर्षात्पूर्वं सर्वाङ्गानामदार्ढ्यात् चतुर्विंशतिवर्षमारभ्यैव विवाहकालोऽस्त्विति वाच्यम्। बीजदार्ढ्यादेव सन्तानस्य दृढत्वात्, तत्र क्षेत्रदार्ढ्यस्यानुपयोगित्वात्। दृष्टा हि लोके उर्वरायां भूमौ सलिलसंसिक्तायां कोमलायां न तु दृढायां परिपुष्टदृढबीजवपने बलवतां वृक्षाणामुत्पत्तिः। तत्र यथा एतद् बीजमेभिर्दिनैः परिपुष्टं भवतीति कालनियमोऽस्ति, न तथा एतत्क्षेत्रमेभिर्दिनैः परिपुष्टं भवतीति कालनियमोऽस्ति। यदा यदैव सलिलसंसिक्तं कर्षितं च स्यात्, तदा तदैव तत्कालीनपुष्टबीजवपने पुष्टवृक्षाणामुत्पत्तिस्तद्वदत्रापि। यदा यदैव उर्वरा नारी ऋतुमती स्यात्, तदा तदैव परिपुष्टरेतसा परिपुष्टसन्तानानामुत्पत्तिः, नात्र स्त्रीणां वयःकृतं किंचिदप्युपयोगित्वमस्ति। अथैवं कलौ विधवास्त्रीणां दीर्घकालीनब्रह्मचर्यरक्षणं कथमुपपद्येतेति चेत्। सत्यम्। सम्भोगाशैव रतिप्रवृत्तौ हेतुः। विधवास्त्रीणां तु इह जन्मनि सम्भोगाशाविरहेण रतिप्रवृत्त्यभावात्, 'निराशः सुखी पिङ्गलावत्' इति सांख्यदर्शनोक्तदृष्टान्तेन सुखेनैव ब्रह्मचर्यरक्षणं सम्भवति। प्राप्तयौवनानां कुमारीणां तु समवयस्कायाः कस्याश्चिद्विवाहे कदा वयं वयस्यावत् स्वामिसङ्गता भविष्याम इत्याकांक्षायाः प्राबल्याद् ब्रह्मचर्यरक्षणं प्रायश एव सुदूरपराहतमिति दिक्।

(९८) उ०—श्रीतारानाथन्यायतर्कतीर्थ-श्रीतारकेश्वरस्मृतितीर्थयोः।
पूर्ववदेव।

(९९) उ०—श्रीपूर्ववंगीयसुवर्णग्रामान्तर्गतकृष्णपुरासनातनधर्ममण्डलप्रतिनिधीनाम्।

यमः—

अग्रे माहिषिकं दृष्ट्वा मध्येच वृषलीपतिम् ।
अन्ते वार्धुषिकं दृष्ट्वा निराशाः पितरो गताः ॥

मनुः—

अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ।

(१००) उ०—श्रीरजनीनाथस्मृतितीर्थानाम् ।

पूर्ववदेव ।

(१०१) उ०—मैमनसिंहहिन्दूसभासभापतीनाम् ।

ऋतुमतीविवाहः शास्त्रविरुद्धः । इतिहासतस्तु ज्ञायते सीता-सावित्रीदमयन्तीनां ऋतुकालात्परत्र विवाहो जातः । पुंसां तु षोडशवर्षात्पूर्वं विवाहस्तु कथमपि न योग्यः, चतुर्विंशतिवत्स-रादूर्ध्वं तु प्रशस्तः । परिस्थित्यनुसारेण विविच्यमाने चतुर्दश-वर्षात्प्राक् कुमार्या विवाहः कथमपि न योग्यः । पुंसां च अष्टा-दशवत्सरात्पूर्वं विवाहो न योग्यः । वृषलीत्वबोधकवचनानां त-त्पूर्वतनविवाहप्राशस्त्ये तात्पर्यम् ।

(१०२) उ०—श्रीरामकिंकरतर्करत्नभट्टाचार्याणाम् ।

कन्यायाः पञ्चमवर्षात्परं दशमवर्षपर्यन्तं पुंसः पञ्चदशवर्षाद् अष्टचत्वारिंशद्वर्षपर्यन्तं विवाहः शास्त्रसम्मतः । वर्तमानसमयानु-सारेण अष्टमवर्षात्परं रजःप्रकाशकालपूर्वपर्यन्तं कन्यायाः, पुंस-स्तु पञ्चदशवर्षात्परं त्रिंशत्तमवर्षपर्यन्तं योग्यः ।

'पित्रागारे कुचकुसुमयोः सम्भवो वा यदि स्यात् ।'

इत्यादिद्विरागमनकर्तव्यताबोधकवचनबलात् द्विरागमनस्य र-जःप्रकाशात्पूर्वं यथाऽवसरः स्यात् तावत्पर्यन्तमिति प्रतिभाति ।

(१०३) उ०—श्रीतारिणीचरणतर्कचूडामणीनाम् ।

वृषलीत्वबोधकवचनानां पातित्यबोधकत्वम् ।

(१०४) उ०—श्रीदयालकृष्णतर्कतीर्थानाम्।

पूर्ववदेव ।

(१०५) उ०—श्रीआशुतोषस्मृतिरत्नानाम् ।

स्त्रीशूद्रयोर्विवाहपूर्वावधिकालस्य शास्त्रतः सुस्पष्टमनुपलभ्यमानतया चूडाकरणानन्तरं तत्कालः कल्पनीयः ।

येषां च न कृताः पित्रा संस्कारविधयः क्रमात् ।

इत्यादिनारदवचने संस्काराणां क्रमकर्तव्यताभिधानात् ।

आवृत्ततीर्थगमने प्रतिघाते च कर्मणि ।

कालात्यये च कन्यायाः कालदोषो न विद्यते ॥

अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।

दशमे कन्यका प्रोक्ता अत ऊर्ध्वं रजस्वला ॥

तस्मात्संवत्सरे प्राप्ते दशमे कन्यका बुधैः ।

प्रदातव्या प्रयत्नेन न दोषः कालदोषतः ॥

इत्यङ्गिरोवचनेऽष्टमवर्षाद्युपादानं प्रशंसार्थम् । यत्तु शूद्रस्य षोडशवर्षोपरि विवाहकालो बहुशो दर्शितः शुद्धितत्त्वे रघुनन्दनेन, तदपि न्यायवर्तिशूद्राणां विवाहप्रशस्तकालपरतया बोद्धव्यम् । न तु तत्पूर्वकालव्यवच्छेदार्थम्, रघुनन्दनेनैव पञ्चमाब्दीयशूद्रस्य द्विवर्षीयाः कन्यायाश्च विवाहस्याङ्गीकृतत्वात् । पुरुषस्य तु भार्यात्वसम्पादकज्ञानरूपविवाहकर्तृत्वेन पञ्चमाब्दादर्वाक् तादृशज्ञानानुदयात् शूद्रस्याप्यपूर्णपञ्चमाब्दस्य न विवाहव्यवहारः । शास्त्रसम्मतविवाहकालः प्रागवधारितः, वर्तमानपरिस्थित्यनुसारेण तत्र नियमान्तरकल्पनं नानुमन्यामहे । वस्तुतस्तु शास्त्रोक्तश्रुतशीलवते वराय प्रदत्तायां कन्यायां दोषलेशस्याप्यसम्भवात् राज्ञां सामाजिकानां च बलमवलम्ब्य शास्त्रयुक्त्यनुमोदिताष्टमादिवर्षीयकन्यादाननिवारणापेक्षया दस्यूनामिव स्वच्छन्दचारिणां "ऋतौ भार्यामुपेयात्" इत्यादिशास्त्रातिक्रामिणां

लोकातिवर्तिनां च दुर्वृत्तानां कुमार्यामवैधाचरणनिवर्तने राजकीयादिबलावलम्बनमेव युक्ततरमिति मन्यते ।

(१०६) उ०—श्रीहरेन्द्रचन्द्रसिद्धान्तवागीशानाम् ।

सर्वत्र चिरन्तनसदाचारपरिरक्षणमेव योग्यम् ।

(१०७) उ०—श्रीदिवाकरमिश्रवेदान्तपञ्चाननानाम् ।

जन्मावधिमासद्वयाधिकषड्वर्षानन्तरं जन्मावध्येकादशवर्षपर्यन्तं स्त्रीणां विवाहकालो मुख्यः । त्रिगुणितकन्याविवाहकाल एव वरविवाहस्य मुख्यकालः शास्त्रानुगुणः, व्यवहारानुसारेण स्त्रीणां रजोदर्शनात्प्रागेव विवाहकालो गौणः । कन्यालाभ एव कन्याधिकवयसः कन्याधिकप्रमाणस्य च वरस्य विवाहकालो गौणः । रजःप्रवृत्त्यनन्तरं कन्याविवाहस्य आपत्कल्पत्वम् । अत्र गुणवत्पात्रालाभरूपा आपत् । वृषलीत्वबोधकानां वचनानां वोढुर्निन्द्यत्वे तात्पर्यम् ।

(१०८) उ०—श्रीगुरुचरणस्मृतिरत्नानाम् ।

सप्तसंवत्सरादूर्ध्वं द्वादशवर्षात्पूर्वं स्त्रीणां विवाहकालः । द्विजातीनां पुंसां ब्रह्मचर्यात्परं सप्ततिवर्षपर्यन्तं विवाहकालः, शूद्रादीनां षोडशवर्षात्परम् । सर्वदा विवाहकालस्य शास्त्रानुसारेणैव नियमनं योग्यम् । रजःप्रवृत्त्युत्तरं विवाहस्य जघन्यत्वम् । वृषलीत्वबोधकवचनानां नग्निकावस्थायामवश्यदाने तात्पर्यम् ।

(१०९) उ०—श्री पं० रविनाथशर्मणाम् ।

रोमकाले तु सम्प्राप्ते सोमो भुञ्जीत कन्यकाम् ।
रजःकाले तु गन्धर्वा अग्निर्भुङ्क्ते कुचागमे ॥
तस्माद्व्यञ्जनोपेतामरजामपयोधराम् ।
अभुक्तां चैव सोमाद्यैर्दद्याद्दुहितरं सदा ॥
गौरीं ददद्विष्णुलोकं ब्रह्मलोकं तु रोहिणीम् ।
कन्यां ददत् स्वर्गलोकं रौरवं च रजस्वलाम् ॥

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ।।

इत्यादिभिरंगिरोवचनैःपञ्चमवर्षमारभ्य दशवर्षपर्यन्तं कन्याविवाहः प्रशस्त इति ज्ञायते । स्त्रीणां विवाहस्योपनयनस्थानीयत्वेन उपनयने पंचमाब्दादधिकारस्य सर्वसम्मतत्वात् । स्मृत्यन्तरे तु

जन्मतो गर्भाधानाद्वा पंचमाब्दात्परं शुभम् ।
कुमारीवरणं दानं मेखलाबन्धनं तथा ॥

इति स्पष्टमेवोक्तम् । वस्तुतस्तु--

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ।।
सोमोददद्गन्धर्वाय गन्धर्वोऽददग्नये ।
रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम् ।

इति श्रुत्या

पूर्वं स्त्रियः स्युर्भुक्ताश्च सोमगन्धर्ववह्निभिः ।

इत्यादिस्मृत्या च जन्मोत्तरं सार्धवर्षसप्तकं वर्षषट्कं वा यावत् सोमादिभिर्भुज्यमानतया नान्यभोग्या भवितुमर्हति । अत एव

षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।
सोमो भुंक्ते ततस्तद्वत् गन्धर्वश्च तथाऽनलः ।।

इति ज्योतिर्निबन्धग्रन्थः संगच्छते । तर्हि अंगिरोवचनस्य का गतिरिति चेत्, प्रत्यक्षश्रुतिविरोधेऽप्रामाण्यमेव । रजोदर्शनात्पूर्वं विवाहः प्रशस्ततर इति वा तस्य तात्पर्यम् । द्वादशवर्षं यावत् वर्तमानपरिस्थित्यनुसारेण विवाहो योग्य इति वक्तुं साम्प्रतम् । तदयं निष्कर्षः, पञ्चमाब्दमारभ्य दशवर्षं यावत्, षष्ठवर्षमारभ्य वा दशाब्दं यावत्, सप्तमवर्षमारभ्य दशाब्दं वा, अष्टमवर्षमारभ्य दशवर्षपर्यन्तं वा, कन्यादानं मतभेदेन साम्प्रतम् । एकादशवर्षमारभ्य द्वादशवर्षपर्यन्तं यावत्कन्यादानं

मध्यमम् । त्रयोदशमारभ्य षोडशहायनं यावत् सर्वथा रजोयोगसम्भवात् निन्द्यम् ।

वन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥
तस्याः पतिर्यो वृषलस्तदन्नमतिनिन्दितम् ।
वृषलान्नं प्रगृह्णन्ति वृषलास्ते प्रकीर्तिताः ॥

इत्यादिवचनाद् वृषलीपतेरन्नस्य निन्द्यत्वात् सर्वथा तस्या विवाहो निन्द्य इति तद्वचनम् ।

(११०) उ०—श्रीउमामहेश्वरशास्त्रिणाम् ।

स्त्रीविवाहकालविषये श्रुतिर्वीरमित्रोदये,
पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥

इति । स्मृतिषु च गर्भाष्टमादिदशवर्षान्तकाले विवाहो विधीयते सार्ववर्णिकीनां स्त्रीणाम् । कुत्रचित्तु जन्मप्रभृति आसप्तमवर्षं, एकादशवर्षप्रभृति आरजोदर्शनं कालो विहितः, कुत्रचन रजोदर्शनानन्तरमपि यावद्वर्षचतुष्टयं कालो विहितः, कुत्रचन रजोदर्शनानन्तरं प्रायश्चित्तं विधाय विवाहःउक्तः । कुत्रचित्तु रजोदर्शनानन्तरं परित्यागं विधाय विवाहाभाव उक्तः । एवं पञ्चधा विप्रतिपत्तिः । तत्र एवं व्यवस्था, सार्ववर्णिकीनामेव कन्यानां गर्भाष्टमादिदशमपर्यन्तो मुख्यो विवाहकालः । जन्मप्रभृति सप्तमान्तः एकादशवर्षप्रभृतिरजोदर्शनपूर्वभावी च कालो गौणः सार्ववर्णिकीनाम् । रजोदर्शनोत्तरं व त्रयावधिकः प्रायश्चित्तपूर्वकः पित्रादिकर्तृकविवाहकालः । चतुर्थवार्षिकस्वयम्वरकालश्च क्षत्रियादीनामापत्कल्पः, न तु ब्राह्मणीनाम् । दृष्टरजस्कानां ब्राह्मणीनां तु परित्यागो विवाहाभावश्च, न तु कयाचिदपि दिशा प्रायश्चित्तादिपूर्वको विवाहः । यावद्गात्रभावप्रयुक्तस्वयम्वरोऽपि

राजानुमतिपूर्वको रजोदर्शनपूर्वभावी ब्राह्मणीनामापत्कल्पः प्रायश्चित्तपूर्वकः। अदृष्टरजस्कानां क्षत्रियादीनां तु प्रायश्चित्तरहितः स इति। समावर्तनकालोत्तरं पुंसां विवाहकालः। समावर्तनकालश्च शास्त्रतो ज्ञेयः। इदानीं च वेदाध्ययनस्य प्रायशो लुप्तत्वात् म्लेच्छभाषाशिक्षणस्यैव तत्स्थानापन्नतया ब्रह्मचर्यस्य तत्रानावश्यकतया उपनयनोत्तरमेव पुंसां विवाहकालो योग्यः। वर्तमानपरिस्थित्यनुसारेणापि शास्त्रीयकालपरिवर्तनं न युक्तम्।

चण्डाली वर्धकी वेश्या रजःस्था या च कन्यका।
ऊढा च या सगोत्रेण वृषल्यः पञ्च कीर्तिताः॥

इत्यादिविज्ञानेश्वराद्युदाहृतस्मृतिवचनानुरोधेन चाण्डाल्यादिवद्वर्ज्यत्वबोधने एव वृषलीत्वबोधकवचनानां तात्पर्यम्। तथाहि, हेमाद्रौ प्रायश्चित्तकाण्डे "असंस्कृतकन्यारजोदर्शनप्रायश्चित्त"मिति प्रतीकमुपादायोक्तम्, "देवलः,

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता।
सा कन्या वृषली ज्ञेया तद्भर्ता वृषलीपतिः॥

वृषलः शूद्रः। मार्कण्डेयः,

या कन्या पितृवेश्मस्था यदि पुष्पवती भवेत्।
असंस्कृता परित्याज्या न पश्येत्तां कदाचन॥
विवाहे च न योग्या स्यात् लोकद्वयविगर्हिता।
एतां परिणयान्विप्रो न योग्यो हव्यकव्ययोः॥
स तस्यां जनयेत्पुत्रं कानीन इति कथ्यते।
माता पिता च पुत्रश्च त्रयस्ते वृषलाः स्मृताः।
यदा पुष्पवती कन्या तदैव त्यक्तुमर्हति॥
न तत्र दोषस्तस्यास्ति गेहस्था चेत्स दोषभाक्॥" इति।

अत्र तस्यामुत्पन्नस्य कानीनत्वकथनेन पितृदायाद्यनधिकारित्वमपि सूच्यते, कानीनस्य अक्रमोढासुतत्वेन,

उभौ चानर्हतां भागं जारजातककामजौ ।

इत्यनेन जारजातत्वकामजत्वाभ्यां दायाभावस्य व्यवहार-काण्डे स्पष्टत्वात् ।

(१११) उ०--एम्० वी० शङ्करनारायणशास्त्रिणाम् ।

स्त्रीणां गर्भाष्टमाद्द्वादशं मुख्यः कालो विवाहस्य, ततः परं ऋतोः प्राग्गौणः कालः । पुंसां विवाहकालो विंशादापञ्चाशत्, ततः परं न शास्त्रसम्मतः । गर्भपञ्चमोपनयने तु सप्तदशादारभ्यापि शास्त्रीयः । वर्तमानपरिस्थित्यनुसारेण शास्त्रानुसारेण च ऋतु-कालपर्यन्तं स्त्रीणां विवाहकालः कथंचिदभ्युपगन्तुं शक्यः । वृष-लीत्वबोधकवचनानां तात्पर्यं बृहस्पतिराविश्चकार । बृहस्पतिः,

पितुर्गेहे तु या नारी रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा नारी वृषली स्मृता ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥
यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
स भैक्षभुक् जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥
वृषलीगमनं चैव मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं मृतः श्वा चैव जायते ॥ इति ।

बौधायनः—

दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

(११२) उ०--मल्लादिदक्षिणामूर्तिशास्त्रिणाम् पुष्पगिरिशङ्कराचार्यमठ-प्रतिनिधीनाम् ।

स्त्रीणां द्विवर्षादारभ्य यावद्दशवर्षपर्यन्तं विवाहस्य मुख्यः कालः । पुंसां तु समावर्तनानन्तरं मुख्यः काल इति शास्त्र-व्यवस्था । वर्तमानपरिस्थितिः न शास्त्रविरुद्धा, अतः परिव-

र्तनस्य नैवावसरोऽस्ति। परिवर्तनस्यावश्यकर्तव्यत्वेऽपि दशवर्षा-भ्यन्तर एव विवाहः कार्य इति नियमः कर्तव्यः। एवमपि आधुनिकसंस्कारकाणामप्रियमेव सम्पत्स्यते। रजोनन्तरविवाहस्य आपत्कल्पत्वमेव। वृषलीत्वबोधकवचनानां कन्यापतिप्रभृतीनामसंव्यवहार्यत्वबोधकत्वम्।

(११३) उ०--श्री अमृत उर्फ बापू सदाशिव गणकशिरोमणिधर्मोपदेशकानाम्।

जन्मतो गर्भतो वा पञ्चमप्रभृति अष्टमवर्षपर्यन्तं कन्याविवाहे उचितः कालः। षड्वर्षोत्तरं वर्षद्वयं प्रशस्तः। नवमदशमयोर्मध्यमः। एकादशवर्षे अधमः। द्वादशाब्दे प्रायश्चित्तार्हः। पुंसस्तु षोडशवर्षादारभ्य योग्यः। वर्तमानपरिस्थित्यनुसारेण द्वादशवर्षात्प्रागेव कन्याविवाहः प्रशस्तः। रजोदर्शनानन्तरविवाहो गौण एव। परन्तु वधूवरयोः जातकमेलनं यदि रजोदर्शनात्प्राक् न भवति, तदानीं तु मुख्य एव। वृषलीत्वबोधकवचनैः पत्युः स्त्रीत्वप्राप्तिः, स्त्रियाश्च पुरुषत्वप्राप्तिर्बोध्यते।

(११४) उ०--श्रीचिरुकुलपेद्दवेंकटरमणशास्त्रिणाम्।

अष्टमवर्षप्रभृति दशमवर्षपर्यन्तं स्त्रीणां विवाहकालो मुख्यः। एकादशद्वादशवर्षीयायास्तु ऋतोः प्राक् विवाहकालो गौणः। षोडशवर्षात्प्रभृति चत्वारिंशत्पर्यन्तं पुंसां विवाहकालो मुख्यः। एवं च परिस्थित्यनुसारेण स्त्रीणां अष्टमवर्षात्प्रभृति, पुंसां च षोडशवर्षात्प्रभृति विवाहनियमनं योग्यम्। रजस्वलाविवाहः शास्त्रदृष्ट्या ब्राह्मणानां न मुख्यः, न गौणः, न वा आपत्कल्पः। ब्राह्मणकन्या रजस्वलात्वात्प्रागेव विवाह्या, न पश्चादित्येव वृषलीत्वबोधकवचनानां तात्पर्यम्।

(११५) उ०--बडोदाराजकीयपण्डितानाम्।

स्त्रीणां विवाहोऽष्टमवर्षादारभ्य रजोदर्शनात्प्राक्। पुंसां च

विंशतिवर्षादूर्ध्वं यौवनपर्यन्तं शास्त्रसम्मतः। नियमनस्यावधि-रप्ययमेव। रजोनन्तरं विवाहस्यापत्कल्पत्वम्। वृषलीत्वबोधक-वचनानां प्रायश्चित्तप्रसङ्गनिवारणे तात्पर्यम्।

(११६) उ०--कुम्भकोणस्थराजकीयसंस्कृतकलाशालापण्डितानाम्।

न किमपि लिखितम्।

(११७) उ०—सी० एल० वेंकटप्पशास्त्रिणाम्।

अनुरूपवरलाभकालः स्त्रीणां विवाहकाल इति शास्त्रसिद्धान्तः। पुंसामपि षोडशादूर्ध्वं अष्टाचत्वारिंशद्वर्षपर्यन्तमिति बहुधा प्रति-पादितेऽपि विद्याग्रहणात्परं विवाहकालः समुचित इति भाति।

वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम्।
विवाहा न कलौ धर्म्या न शिष्यगुरुसंस्थितिः।

इत्यादिवचनानुसारेण—

प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थं च मानवाः।

इतिमनुवचनानुसारेण च

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।
त्रिंशदब्दः षोडशाब्दां भार्यां विन्देत नग्निकाम्।
रोमकाले तु सम्प्राप्ते सोमो भुङ्क्ते च कन्यकाम्।
स्तनौ दृष्ट्वा तु गन्धर्वो रजो दृष्ट्वा हुताशनः॥
देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः।

इत्यादिवचनैः, 'सोमः प्रथमो विविदे' 'गृभ्णामि ते सुप्रजास्त्वाय' 'अपश्यं त्वा मनसा' 'आरोहोरुं' इत्यादिमन्त्रलिङ्गबलात्, विवाहे समावेशनस्य प्रधानांगत्वाच्च रजोदर्शनादूर्ध्वं स्त्रीणां विवाह-कालस्य मुख्यकालत्वाभ्युपगमे न कापि क्षतिरिति प्रतिभाति। एवंरीत्या रजोनन्तरविवाहस्य मुख्यत्वमेव। उदितसूर्यार्घ्यनिन्दा अनुदितसूर्यार्घ्यश्लाघामेव करोतीतिन्यायानुसारेण वृषलीत्वबो-धकवचनं रजोदर्शनात्पूर्वकालीनदानस्य श्लाघामेव करोति।

न चेदेवं, गार्गीमैत्रेयीप्रभृतिब्रह्मवादिनीनामपि वृषलीत्वप्राप्त्या महाननर्थः स्यात्। दानविवाहयोश्च अन्योन्यसम्बन्धो नास्त्येव।

(११८) उ०--श्रीनरहरि-व्यङ्कटेश शास्त्रि अष्टाधिकारिणाम् अवैतनिकप्रचारकाणाम्।

ऋक्संहिताभाष्ये सायणाचार्यैः कामोत्पत्तेः पूर्वम् सोमः, अल्पकामोत्पत्तौ गन्धर्वः, पूर्णकामोत्पत्तौ अग्निश्च भुङ्क्ते, अनन्तरं च मनुष्यः इति पारस्करगृह्यसूत्रे च प्रतिपादितत्वात् पूर्णकामोत्पत्तिकालात्' द्वादशवर्षादूर्ध्वमेव कन्याया विवाहो योग्यः। तथा पारस्करगृह्यसूत्रे 'अजातलोम्नीं विपुंसीं च नोपहसेत् (का०२क०१८सू०९) इत्यत्र हरिहरगदाधरौ--"समयेपि न जातानि लोमानि यस्याः सा अजातलोम्नी, कूर्चादिविकारेण पुरुषाकारां स्त्रियं नोपहसेत्, उपगमनशब्देन अभिगमनमुच्यते" इत्युक्तवन्तौ। तथा आश्वालायनगृह्यसूत्रेऽपि "त्रिरात्रमक्षारालवणाशिनौ स्यातामधः शयीयाताम् (अ० १ खं० ८)" इत्यत्र "अक्षारालवणाशिनौ ब्रह्मचारिणौ अलंकुर्वाणौ अधःशायिनौ स्याताम्, अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रं सम्वत्सरं वा एकऋषिर्जायते" इति तद्व्याख्यातृभिः सूत्रोक्तनियमपरिपालनानन्तरमेव पतिगोत्रप्राप्तिः कन्याया भवतीति स्पष्टमेव प्रतिपादितम्। अतः परिस्थित्यनुसारेण स्त्रीणां विवाहस्य द्वादशवर्षमारभ्य पञ्चदशवर्षपर्यन्तं मुख्यकालनियमनं योग्यं, तदितरकालेषु तु सर्वथाऽयोग्यम्। पुंसां च एकविंशतिवर्षादारभ्य त्रिंशद्वर्षपर्यन्तं विवाहनियमनं योग्यम्, तदुपरितनवयस्कैस्तु विवाहेच्छुभिर्विधवाविवाहः कार्यः। ऋतुदर्शनोत्तरं विवाहो मुख्य एव, "सम्वत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः" इतिपारस्करसूत्रोपरि जयरामहरिहराभ्यां "सम्वत्सरादिपक्षाशक्तौ त्रिरात्रपक्षाश्रयोऽपि, चतुर्थीकर्मानन्तरं

पञ्चम्यादिरात्रावभिगमनम् । चतुर्थीकर्मणः प्राक् तस्याः भार्यात्वमेव नोत्पन्नं, विवाहैकदेशत्वाच्चतुर्थीकर्मण" इत्युक्तत्वात् । एवं च पञ्चदशवर्षानन्तरं षोडशवर्ष एव कन्याविवाहस्य गौणः कालः । उभयकालातिक्रमे आपत्कल्पः । वृषलीत्वबोधकवचनानां तु उपनयनस्थानापन्नविवाहोत्तरं अवश्यकर्तव्यब्राह्मणोचितसन्ध्यावन्दनादिव्रतलोपनिमित्तप्रत्यवायबोधने तात्पर्यम् । प्रायश्चित्तेन च तादृशप्रत्यवायपरिहरणमगत्या करणीयम् ।

(११९) उ०—श्रीमधुसूदनस्मृतिरत्नानाम् ।

प्राचीनपक्षवदेव ।

(१२०) उ०—श्रीदामोदरमिश्राणाम् ।

पूर्ववदेव ।

(१२१) उ०—श्रीकेशव बलवन्त जोशी महोदयानाम् ।

पुंसां २१ तः ३० वर्षपर्यन्तम् । स्त्रीणां च १३ तः २० पर्यन्तं विवाहनियमनं योग्यम, वैद्यकशास्त्रानुसारात् । ऋत्वनन्तरविवाहः आपद्धर्म एव, निन्द्यश्च । वृषलीत्वबोधकवचनानां ऋतुमत्या असंस्कृतायाः शङ्कितव्यभिचारत्वबोधने तात्पर्यम् ।

(१२२) उ०—श्रीसीताराम विठ्ठल टिकेकर महोदयानाम् ।

प्राचीनपक्षः ।

(१२३) उ०—श्रीधुण्डिराज पुरुषोत्तम बिवलकर महोदयानाम् ।
(१२४) उ०—श्रीमहाराज नथूराम शर्मणाम् ।
(१२५) उ०—श्री पं०जगदीशझाशर्मणाम् ।
(१२६) उ०—रमेश्वरलताविद्यालयपण्डितानाम् ।

प्राचीनपक्षः ।

(१२७) उ०—श्रीजीवनदत्तशर्मब्रह्मचारिमहोदयानाम् ।

ननु चिकित्साशास्त्रे अष्टाङ्गहृदये प्रथमाध्याये,



पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता ।

शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥
वीर्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥

इत्युक्ततया पूर्वोक्तधर्मशास्त्राणां विरोध इति चेन्न । तस्य गर्भाधानपरत्वेन विवाहपरत्वाभावात् ।

(१२८) उ०—श्रीलक्ष्मण बळवन्त चितळे शास्त्रि महोदयानाम् ।

प्राचीनपक्ष एव ।

(१२९) उ०—श्रीकेशव लक्ष्मण दफ्तरी महोदयानाम् ।

ऋतुमतीविवाहोपि योग्य एव । तत्र दोषस्तु दशाविशेषे वसिष्ठेनोक्तः,

यावन्ति कन्यामृतवः स्पृशन्ति
तुल्यैः सकामामभियाच्यमानाम् ।
भ्रूणानि तावन्ति हतानि ताभ्यां
मातापितृभ्यामिति धर्मवादः ॥

तथा च कन्येच्छाधीनौ विवाहाविवाहाविति फलितम् । पुंसां तु शास्त्रोक्तविवाहकालः प्राशस्त्यार्थ एवेति सर्वमवदातम् ।

(१३०) उ०—श्रीरामचन्द्रशास्त्रिवेदान्तविशारदव्याकरणकाव्यशिरोमणीनाम् ।

ब्राह्मणस्य ऋतुमतीविवाहः सङ्गत एव ।

अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ।

इति वचनं तु न हि कश्चिदभिवाञ्छेत्संवर्ध्य कन्यकां गुणहीनाय प्रदातुं शारिकामिव बिडालायेति हेतोः ऋतोः प्राक् विवाहस्य स्तावकमेव । अत एवाभिज्ञानशाकुन्तले शकुन्तलाया विवाहात् प्राक् रजस्वलात्ववर्णनमपि सङ्गतम् । तथा च ऋतोः प्राक्कालस्य मुख्यत्वेऽपि गुणवद्वरलाभानुरोधेन रजस्वलाविवाहोपि न्याय्य एव । वृषलीत्वबोधकवचनानां तु

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥
इत्यादिना तुल्ययोगक्षेमत्वमेव ।

(१३१) उ०—कुम्भकोणस्थ पण्डित श्रीसुन्दरशास्त्रिणाम् ।
(१३२) उ०—कुम्भकोणस्थश्रीशेषशास्त्र्यय्यङ्गार्यमहोदयानाम् ।
न किमपि लिखितम् ।

(१३३) उ०—श्रीभागवतुलवेङ्कटरामावधानिनाम् ।
(१३४) उ०—श्रीहीरालालशास्त्रिणाम् ।
प्राचीनपक्षः ।

(१३५) उ०—श्रीकाञ्चीकामकोटिपीठेशजगद्गुरुशङ्कराचार्यमठास्थान-
पण्डित श्रीपञ्चापगेशशास्त्रिणाम् ।
अत्र विषये किमपि न लिखितम् ।

(१३६) उ०—विद्याविशारद के० रामशास्त्रिणाम् ।
(१३७) उ०—श्रीललितमोहनस्मृतितीर्थानाम् ।
प्राचीनपक्षः ।

(१३८) उ०—कुम्भकोणस्थ अग्निहोत्रिगोपालदेशिकाचार्याणाम् ।
न किमपि लिखितम् ।

(१३९) उ०—कुम्भकोणस्थाग्निहोत्रिदेशिकताताचार्याणाम् ।
प्राचीनपक्षः ।

(१४०) उ०—कुम्भकोणस्थ के० श्रीनिवासताताचार्याणाम् ।
न किमपि लिखितम् ।

(१४१) उ०—श्रीललितकुमारसाङ्ख्यवेदान्ततीर्थानाम् ।
(१४२) उ०—श्रीभगवतीलालशर्मविद्याभूषणाम् । (जोधपुर,मारवाड)
(१४३) उ०—श्रीहरिरामशास्त्रिणाम् ।
(१४४) उ०—श्रीमोहनजी काशीरामजी शास्त्रिणाम् ।
प्राचीनपक्षः ।

(१४५) उ०—वाराणसीविद्यापरिषद्विदुषाम् ।

स्त्रीणां मध्ये ब्राह्मणीनां विवाहकालोऽष्टमवर्षात्मको मुख्यः प्रशस्ततमः, नवमवर्षात्मकः प्रशस्ततरः, दशमवर्षात्मकः प्रशस्तः । तदूर्द्ध्वं यावद्रजःप्रवृत्तिर्न स्यात् तावत् सामान्यकालः । सामान्यकालमध्ये एकादशादिवर्षात्मक उत्तरोत्तरस्मात् श्रेयान् पूर्वः पूर्वः, श्रेयःपात्रलाभेऽष्टमवर्षात् पूर्वमपि विवाहः सम्भवति । क्षत्रियादीनां स्त्रीणामष्टमनवमवर्षयोर्विवाहः फलविशेषार्थः, ऋतुकालात् पूर्वं सप्तमाद् वर्षादूर्द्ध्वञ्च स्त्रीणां विवाहः सार्ववर्णिकः । क्षत्रियस्त्रीणां गान्धर्वविवाहस्तु गुणवत्पात्रालाभप्रयुक्त ऋतुकालानन्तरमपि भवति शास्त्रार्थाक्षिप्तः । द्विजातिस्त्रीणां विवाहस्योपनयनसंस्कारस्थानपातितया मनुना कीर्त्तनात् । क्षत्रियस्त्रीणामेकादशवर्षात्मककालो वैश्यस्त्रीणाञ्च द्वादशवर्षात्मकः कालो मुख्य इति गम्यते । स च कालो गर्भादेव गणनीयः । "गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विश" इति मनुना तयोरुपनयनमुख्यकालकीर्त्तनात् । किन्तु तत्र रजःप्रवृत्तिसम्भावनायां तत्पूर्वमेव विवाहः । सम्भावना च शरीरावस्थादर्शनाद् भवति । द्विजातीनां पुंसां समावर्त्तनोत्तरम् अष्टचत्वारिंशाब्दवयःपर्यन्तं विवाहसामान्यकालः, त्रिंशद्वर्षपर्यन्तः कालस्तु श्रेयान् , तत्र तत्र पूर्वः पूर्वः प्रशस्तः । शूद्रस्य तु पुंसः षोड़शवर्षात्मकः कालो मुख्यः, तदुत्तरं क्रमादपकृष्टो यावच्छक्तिस्थितिमिति सामान्यकालः । अत्र च प्रमाणम्—"सप्तमाद्वत्सरादूर्द्ध्वं विवाहः सार्ववर्णिक" इति । अत्र च "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशमे कन्यका प्रोक्ता अत ऊर्द्ध्वं रजस्वला ॥ सम्प्राप्ते द्वादशे वर्षे यस्तु कन्यां न यच्छति । मासि मासि रजस्तस्याः पिता पिबति शोणित " इति । ततः षोडशवर्षायां भार्य्यां विन्देत नाग्नकाम्" इति, "वैवाहिको विधिः स्त्रीणां

संस्कारो वैदिकः स्मृतः" इति, "ऋतुत्रयं प्रतीक्ष्यैव कन्या कुर्यात् स्वयम्वरम् ।" इत्यादीनि प्रमाणानि ।

सप्तमवर्षपर्यन्तं स्त्रीणां विवाहो न देय इति नियमनं कर्त्तुं शक्यते । पुंसां तु विवाहवयोनियमनं द्विजातिषु समावर्त्तननियमाधीनं, समावर्त्तनस्यानियमने विवाहवयोनियमने च "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विज" इत्यादिवचनस्य व्याघातः प्रसज्येत । समावर्त्तनसंस्कारस्तु षोडशवर्षादर्वाग् न व्यवस्थापयितव्यः । अतः षोडशवर्षप्रवृत्तेः पूर्वं विवाहो न विधेय इति नियमनं कर्त्तुं शक्यते । अवधिकालस्तु सपुत्रत्वापुत्रत्वशरीरपाटवादिभेदप्रयुक्त इति समाजविवेकाधीनः । इदञ्च नियमनं सामाजिकशक्त्यधीनं, न तु राजशक्त्यधीनं कर्त्तव्यम् ।

रजःप्रवृत्त्यनन्तरं विवाहस्य मुख्यत्वं नास्ति,ब्राह्मणीनां तादृग्विवाहस्यापत्कल्पत्वं, क्षत्रियादिस्त्रीणां गौणत्वम् ।

ऋतुदर्शनात् पूर्वं पात्रालाभे ऋतुमत्या विवाहः सम्भवति, तस्याश्च विवाहः प्रायश्चित्तं विना न कार्य इति प्रतिपादनाय वृषलीत्ववचनम् ।

(१४६) उ०—श्रीकाशीपण्डितसभायाः ।

"यावच्चैलं न गृह्णाति यावत्क्रीडति पांसुभिः ।
यावद्दोषं न गृह्णाति तावद्भवति नग्निका ॥"

इति नग्निकालक्षणस्यातिबाल्यावस्थामारभ्य, "नग्निकानागतार्तवा" इतिकोशानुसारेणर्तुकालपर्यन्तमवगमात् "प्रयच्छेन्नग्निकां कन्यामृतुकालभयात् पिता" इत्यादिवचनेन मैथिलनिबन्धाशौचकौमुद्यादौ वङ्गीयस्मार्तभट्टाचार्यादिनिबन्धेषु च द्विवर्षमारभ्यापि विवाहे आशौचव्यवस्थादिदर्शनेन चातिबाल्यावस्थामारभ्यापि विवाहो न शास्त्रविरुद्धः, "षडब्दमध्ये नोद्वाह्या" इति निर्णयसिन्ध्वाद्युदाहृतं वचनम्,

जन्मतो गर्भाधानाद्वा पञ्चमाब्दात् परं शुभम् ।
कुमारीवरणं दानं मेखलाबन्धनं तथा ॥

इति वचनं तु ततः पूर्वतनस्य विवाहस्य मुख्यत्वनिषेधपरम्, न तु तन्निन्द्यत्वपरम् । तथा चाद्ययावदनुष्ठितानां बाल्यविवाहानां न शास्त्रविरुद्धत्वं, न वा तदुत्पन्नसन्तानानामधर्मप्रजात्वं चेति स्पष्टं प्रतीयते इति स्त्रीणां विषये ऋतुकालपर्यन्तं विवाहकालः । तत्राष्टमवयस आरभ्य फलाम्नानात् ततो दशमवयःपर्यन्तं मुख्यकालत्वम् । ततः पूर्वमनन्तरं चर्तुकालपर्यन्तं गौणकालत्वम्, ततः परं तु वृषलीत्वादिकीर्तनात् निन्द्यत्वमापत्कल्पत्वं वा, तत्रापि वर्षत्रयमध्य एव विवाहेन धर्मप्रजोत्पत्तिः, तदनन्तरं तु वृषलीपतित्वादिना धर्मव्यवहारायोग्यत्वादिकमिति व्यवस्थाऽनुसन्धेया । यत्तु पुनर्विवाहिताया रजोदर्शने वृषलीत्वमुक्तम्, तदिदं क्षत्रियादीनां येषां वृषलीविवाहो निषिद्धः, तेषामपि रजोऽनन्तरविवाहायोग्यतापरम्, तथा च—

यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः ।

इति वचने ब्राह्मणपदं क्षत्रियादेरप्युपलक्षणम् । अत एव—

यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।

इति निन्दावाक्ये द्विजनिर्देश उपपद्यते, सर्वथा तु रजोनन्तरविवाहो द्विजविषय आपत्कल्प एव । केचित्तु क्षत्रियाणां गान्धर्वविवाहस्य स्वयंवरणस्य च संस्काररत्नमालायां दर्शनात् स्वयंवरणस्य च—

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्मात् विन्देत सदृशं पतिम् ॥

इति विधानात् वर्षचतुष्टयपर्यन्तं रजोऽनन्तरमपि स्वयंवरणं,

परं गौणमिति वदन्ति । सर्वथा दानपूर्वकविवाहो द्विजानां रजो-
नन्तरमापत्कल्प एव ।

पुंसां तु केशान्तश्चैव षोडश इति समावर्तनस्य षोडशे वय-
स्यभ्यनुज्ञानात्; तदारभ्यापि विवाहो न दोषाय । परमावधिस्तु–

चत्वारिंशद्वत्सराणां साष्टानां च परे यदि ।
स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः ॥
अष्टचत्वारिंशदब्दं वयो यावन्न पूर्यते ।
पुत्रभार्यावियुक्तस्य नास्ति यज्ञेऽधिकारिता ॥

इति अष्टाचत्वारिंशद्वयसोऽनन्तरं यज्ञानधिकारबोधनात्,

अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः ।

इतिवचनसिद्धानाश्रमित्वदोषाप्रसक्तेश्च न विवाहावश्यकता ।

पञ्चाशद्वत्सरादूर्ध्वं न कुर्यात् पाणिपीडनम् ।

इति निषेधोऽप्यत्रानुसन्धेयः ।

इदानीं तु स्त्रीणां कामोद्रेकादिना रजोदर्शनस्य द्वादशादिव-
यसि प्रायेण नियतं सम्भाव्यमानतया द्वादशवयसः पूर्वमवश्यं
विवाहः कर्तव्यः, तथाऽष्टमवयसोऽनन्तरमेव विवाहः कर्तव्य
इति नियमनं च परिस्थित्यनुगुणं योग्यमेव । अष्टमनवमदशमैका-
दशवयोमध्ये विवाहकालविशेषनियमनं तत्तत्पञ्चायतनसभाधीनं
तत्तत्पितृभ्रात्रादिनिर्णयाधीनं च न दोषाय । साधारणपरिस्थि-
तिस्तु शास्त्रानुसारिणी अष्टमवयसः पूर्वं विवाहनिषेधनियमन-
मात्रे उपयुक्ता; यतो मुख्यकालप्रतीक्षणानन्तरं गौणकल्पानुस-
रणस्यैव मुख्यत्वम्, न तु तदप्रतीक्षणेनेति स्त्रीविषये व्यवस्था ।
पुंविषये तु व्यवस्था पूर्वमेवोपक्षिप्ता ।

॥ श्रीविश्वनाथः शरणम् ॥

# अखिलभारतवर्षीय ब्राह्मणमहासम्मेलने

## समालोचनीयप्रश्नावलीनामुत्तराणि ।



(५) पञ्चमः प्रश्नः--ब्राह्मणादिजातिषु अवान्तरश्रेणीनां परस्परं विवाह-सम्बन्धः शास्त्रसम्मतो न वा ।

(१) *उत्तरम्—अवान्तरश्रेणीनां परस्परविवाहसम्बन्धः शास्त्राविरुद्धः; विवाहादौ ब्राह्मणादिजातेरिवावान्तरश्रेणीनामनुल्लेखात् । परं तु चिरप्रचलिताचारविरुद्धत्वात् न तत्प्रवर्तनं योग्यम् ।

(२) उ०—भिन्नाचारवतां भिन्नशीलानां चावान्तरश्रेणीनां विवाहसम्बन्धो वर्णसङ्करवदनर्थायैव । विवाहे समानशीलत्वमप्येकं निमित्तम् । तथा च नावान्तरश्रेणीनां विवाहसम्बन्धं युक्तं पश्यामः ।

(३) उ०—शास्त्राविरुद्ध एवावान्तरश्रेणीनां परस्परं विवाहसम्बन्धः, तथाप्याचारादिविरोधात् न तत्प्रवर्तनं योग्यम् ।

(४) उ०—न किमपि लिखितम् ।

(५, ६, ७) उ०—देशकुलधर्माणां शास्त्राविरुद्धानां प्रमाणत्वात् देशकुलाद्याचारसंरक्षणान्यथानुपपत्त्या नावान्तरश्रेणीनां विवाहसम्बन्धो योग्यः, आचारसांकर्यादिसंभवात् । एवं च द्वितीयमतेनैकवाक्यता । कुलपरीक्षार्थमपि तस्योपयोगः । सह्याद्रिखण्डादौ

---

* निबन्धकाराणां नामानि प्रथमप्रश्नोत्तरनिबन्धस्थसङ्ख्यानुसारेण ज्ञेयानि । विशेषस्थलेष्वेव निबन्धानां सङ्गृहीतत्वात्तदतिरिक्तांशालेखनं निबन्धकर्तृभिः क्षन्तव्यमिति प्रार्थयामः ।

अवान्तरश्रेणीनां विवाहसम्बन्धो निषिद्धोऽपि । स्मृतिसार-समुच्चयेऽपि निषेधो वर्तते । प्रायश्चित्तानुष्ठानादि तत्रैव विवेचितम् ।

(८) उ०—देशभेदप्रयुक्तावान्तरश्रेणीनां विवाहसम्बन्धो न कार्य इत्युद्वाहयकन्यालक्षणपरिशीलनेनावगम्यते । तथा च प्रथममतेनैक-वाक्यता ।

(९) उ०—न किमपि लिखितम् ।

(१०, ११, १२, १३, १४, १५, १६, १७, १८, १९) उ०—अनिषिद्धोऽप्यवान्तरश्रेणीनां विवाहसम्बन्ध आचारविरोधादप्रमाणम् । प्रथ-ममतेनैकवाक्यता ।

(२०) उ०—आचारभेदात्, अवान्तरश्रेणीनां देवलकादीनां कर्मविशेष-कृतत्वात्,कुण्डगोलकादीनामव्यवहार्याणां संस्थाभेदात्, संस्था-भेदेषु तद्रक्षणेन विवाहसम्बन्ध एव योग्यः, न तु तद्विघटनेन ।

(२१) उ०—स्पष्टं विरोधाभावेऽपि आचारविरोधान्नावान्तरश्रेणीनां विवाहो योग्यः ।

(२२) उ०—तुल्यदेशसमयाचारेष्वेव विवाहसम्बन्धो योग्यः ।

(२३) उ०—न किमप्यत्र लिखितम् ।

(२४) उ०—आचारानुसार्येवार्थो ग्रहीतव्यः ।

(२५) उ०-कुलपरीक्षणोपयोगितयाऽवान्तरश्रेणीरक्षणमत्यावश्यकं विवाहे,

शिखां पुण्ड्रं च सूत्रं च समयाचारमेव च ।
पूर्वैराचरितं कुर्यादन्यथा पतितो भवेत् ॥

इति वचनात् ।

(२६) उ०—

सामयाचारिका धर्मा जातिभेदकुलोद्भवाः ।
ग्रामाचाराः परिग्राह्या ये च विध्यविरोधिनः ॥

इतिदेवलवचनादिसिद्धतत्तदवान्तराचाराविरोधाच्चावान्तरश्रेणीरक्षणमत्यावश्यकम् ।

(२७) उ०—

कन्यादानं पितुः श्राद्धं सोमपानं तथैव च ।
स्वबन्धुष्वेव कुर्वीत नान्यथा, पतितो भवेत् ॥
यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ।
नित्यं स व्यवहार्यः स्यात् वेदाच्चैतत्प्रदर्श्यते ॥

इत्यादिनिर्णयसिन्धूद्धृतवचनैर्देशाचारादिरक्षणस्यावश्यकत्वात् विवाहे तत्तदवान्तरानादिसिद्धभेदपरिपालनमावश्यकम् ।

(२८) उ०—न किमपि लिखितम् ।

(२९) उ०—आचारभेदाद्देशभेदादिना न विवाहः सम्भवति तत्तदवान्तरश्रेणीपरित्यागेन ।

(३०) उ०—यत्र कूटस्थेषु पातित्यादिकं, ता विहायावान्तरश्रेणीसम्बन्धो न दोषाय । हेमाद्रौ प्रायश्चित्ताध्यायेऽवान्तरश्रेणीषु विवाहाकरणस्याहंकारमूलकत्वप्रतिपादनात् ।

(३१) उ०—"यथा कन्या तथा हवि"रिति वचनेन परस्परमार्त्विज्यश्राद्धभोजनादिकं यत्रावान्तरश्रेण्यां, तत्रैव विवाहो योग्यो नान्यत्र, समानदेशीयानामपि भिन्नकुलाचारादीनां न विवाहसम्बन्धो योग्यः ।

(३२) उ०—शास्त्रतो यद्यपि न निषेधः स्पष्टः, तथाप्याचारविरोधादप्रामाणिकः ।

(३३) उ०—आचारव्यवहारादिभेदान्नावान्तरश्रेणीनां विवाहसम्बन्धः शास्त्रसम्मतः ।

(३४) उ०—आचाराभावान्न, भवति, शिष्टैर्व्यवस्थापनं तु यदि योग्यं मन्यते, तर्हि कर्तुं शक्यते ।

(३४) उ०—आचारादिभेदान्न विवाहसम्बन्धोऽवान्तरश्रेणीषु सम्भवति ।

(३६) उ०—न किमपि लिखितम् ।

( ३७ ) उ०—त्रयस्त्रिंशप्रबन्धकाराणामेवेदं प्रबन्धान्तरम् ।

( ३७ ) उ०—कुलशुद्धिज्ञानार्थमवान्तरश्रेणीनियमो विवाहेऽपेक्षित एव ।

( ३९ ) उ०—गुर्जरत्वाद्यवान्तरजातिर्दत्तकादाविव कन्यादानेऽप्यपेक्षितेति धर्मसिन्धुतोऽवगम्यते, तत्तदवान्तरजातिष्वपि आचारादिभेदान्न विवाहसम्बन्धो युक्त इति ।

(४०) उ०—न किमपि लिखितम् ।

(४१) उ०—शास्त्रानिषिद्ध एव, परं तु आचारविरुद्धः ।

(४२) उ०—अवान्तरश्रेण्यवान्तरश्रेणीपरित्यागोऽपि संभवति ।

(४३) उ०—अवान्तरश्रेणीनियमो न शास्त्रसिद्धः ।

(४४) उ०—अवान्तरश्रेणीनियमपरित्यागो न दोषाय ।

(४५) उ०—कुलाचारविरोधादप्रामाण्यं स्पष्टं, शास्त्रनिषेधो नास्ति ।

(४६) उ०—तदेव ।

(४७) उ०—तदेव ।

(४८) उ०—ब्राह्मणादिषु अवान्तरश्रेणीनां परस्परविवाहसम्बन्धाद्वर्णसंकरो भवेत् ।

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥

इति गीतावचनात् ।

(४९) उ०—अवान्तरश्रेणीषु परस्परं विवाहोऽप्रशस्त एव, 'सदृशानाहरेद्दारान्' इत्यादिवचनात्, सदाचाराभावाच्च ।

(५०) उ०—ब्राह्मणादिष्ववान्तरश्रेणीनां विवाहसम्बन्धो न शास्त्रसम्मतः।

(५१) उ०—अवान्तरश्रेणीषु विवाहो भवितुमर्हति ।

(५२) उ०—अवान्तरश्रेणीनां परस्परं विवाहसम्बन्धो न योग्य इत्यत्र वचनं नोपलभ्यते ।

( ५३, ५४, ५५, ५६, ५७, )उ०—

पूर्ववदेव ।

(५८) उ०—अवान्तरश्रेणीनां विवाहो न विरुद्धः, भोजनवत् ।

(५९) उ०—एवमेव ।

(६०) उ०—एवमेव ।

(६१) उ०—ब्राह्मणजातिषु अवान्तरश्रेणयो यथा, स्कन्दपुराणे—

सारस्वताः कान्यकुब्जा गौडा मैथिलकोत्कलाः ।
पञ्च गौडा इति ख्याता विंध्यस्योत्तरवासिनः ॥

तथा, वैदिकवारेन्द्राभ्यामपि भेदः, कायस्थे उत्तरराढीदक्षिणराढीवंगजवारेन्द्रकायस्थश्रेणयः । तथा च रामानन्दधृतकायस्थकुलदीपिकायां,

अथ बल्लालभूपश्च अम्बष्ठकुलनन्दनः ।
चकारातिप्रयत्नेन कुलशास्त्रनिरूपणम् ॥
आदिशूरानीतान्विप्रान् शूद्रांश्चैव तथाऽपरान् ।
एतेषां संततीः सर्वा आनयत्स निजालये ॥
यत्र यत्र स्थिता विप्रास्तत्र देशे निरूपिताः ।
श्रेणीद्वयं तु निर्णीतं राढीवारेन्द्रसंज्ञकम् ॥
तथैव द्विविधं प्रोक्तं कुलं च तद्द्विजोत्तम ।
शूद्रस्यातश्चतस्रश्च नृपेण श्रेणयः कृताः ॥
उदग्दक्षिणराढौ च वंगवारेंन्द्रकौ तथा ।
इति चतस्रः संज्ञाः स्युस्तत्तद्देशनिवासिनाम् ॥
कुलं चतुर्विधं तेषां श्रेणीश्रेणीविशेषतः ॥ इति ।

एवं च सारस्वतादिपञ्चब्राह्मणानामेकवर्णत्वेन परस्परंविवाहे प्राचीनाचाराभाव एव प्रतिबन्धकः ।

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।

इत्यादिवचनेन सवर्णविवाहस्यैवोपदेशात् । तथा कायस्थानामपि एवमेव ज्ञेयम् । असवर्णब्राह्मणानां तु परस्परान्नपानादिभक्षणाभावात् विवाहो निषिद्ध एव ।

(६२) उ०—पूर्ववदेव ।

(६३) उ०—श्रेणीतोऽवान्तराणां हि ब्राह्मणादिषु जातिषु ।

दोषायाल्पोपि संसर्गः कुतो वोद्वाहसम्मतिः ॥

(७५) उ०—अवान्तरश्रेणीनां परस्परविवाहे न कापि क्षतिः ।

(८०) उ०—कान्यकुब्जीयानां मैथिलानां वैदिकानां वारेन्द्रश्रेणीयानां च परस्परं विवाहो न शास्त्रतो निषिद्धः, किं तु चण्डालादिपुरोहितानां ब्राह्मणानां तदितरेषां च परस्परं विवाहादिसम्बन्धः शास्त्रनिषिद्ध एव ।

(९०) उ०—

ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवेत् ।

तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥

(१०१) उ०—अवान्तरश्रेणीषु विवाहो योग्यः ।

(१०७)उ०—अवान्तरश्रेणीनां परस्परं विवाहः आचारविरुद्धत्वात् त्याज्यः।

(१०८) उ०—अवान्तरश्रेणीषु विवाहः न शास्त्रविरुद्धः ।

(१०९) उ०—

उत्कृष्टायाभिरूपाय वराय सदृशाय च ।

अप्राप्तामपि तां कन्यां तस्मै दद्याद्यथाविधि ॥

इति मनुवचनात्सदृशे कन्या देया । सादृश्यं च तयोर्न ब्राह्मणादिजातित्वेन, अपि त्वाचारवत्त्वेन, तस्य च तासां भक्ष्याभक्ष्येषु मातुलदुहितृपरिणयादिषु च परस्परं भेदात् न तासां पर-

स्परं विवाहः सम्भवति ।

(११०)उ०—येषामाचारभेदो मतभेदो वा नास्ति, तेषामवान्तरश्रेणीस्थानां परस्परं विवाहः न शास्त्रविरुद्धः, किं तु सदाचारविरुद्धः।

(१११) उ०—अवान्तरश्रेणीषु विवाहो न युक्तः, आचारविरोधात् ।

(११२) उ०—ब्राह्मणादिजातिषु अवान्तरश्रेणीनां विवाहः शास्त्रदृष्ट्या दुष्टः, तथाहि, विदितसूत्रगोत्रयोः एकशाखासम्बद्धयोः अनुस्यूतसम्बन्धयोरेव पाणिग्रहः शास्त्रसम्मतः। अस्ति च प्राचीनैः कथ्यमाना एतद्विषयसमर्थनपरा कथा काचित्। कश्चन शिष्टमूर्धन्यः एलेश्वरोपाध्यायः स्वकन्यायै समुचितं वरमन्वेषमाणः औत्तरेभ्यो देशेभ्य आगताय विदितविद्याय ब्राह्मणवेषधारिणे कस्मैचिच्चाण्डालाय अविदिततद्वृत्तान्तः तां दत्वा अनन्तरं तद्वृत्तान्तं ज्ञात्वा तां सह तेन चण्डालेन निष्कासितां कृत्वा कृतप्रायश्चित्तः तदाप्रभृत्येव शिष्टसम्मत्या आन्ध्रदेशवर्तिनां ब्राह्मणानां वेलनाडु तेलगाण्यं इत्यादिशाखाविभागमारचयामास। अद्यापि च शिष्टाः वेलनाडुसम्बन्धिनः तेलगाण्यंशिष्टानां कन्याः न परिणयन्ति, नापि वा तेलगाण्यंशिष्टा वेलनाडुशिष्टकन्या विवाहयन्ति। अपि च सम्प्रदायभेदाच्च नैवावान्तरश्रेणीनां पाणिपीडनं शास्त्रसम्मतम्। तथाहि। सन्दृश्यन्ते किल दाक्षिणात्यानामान्ध्रदेशीयानां च सम्प्रदायभेदा बहवस्तथैव अन्यास्वपि शाखासु। अतः अवान्तरश्रेणीनां विवाहः न शास्त्रसम्मतः।

(११३) उ०—परम्परानुसारेण वेदशाखासूत्रकुलधर्मकुलाचारमन्त्राचारविचारैः सदृशश्रेणीकानामेव परस्परं विवाहो योग्यः, तदुक्तं पराशरयमांगिरोभिः—

कुलमार्गेण चोद्वहेत्-इति ।

(११४) उ०—अवान्तरश्रेणीनां परस्परं विवाहो न शास्त्रसम्मतः, आचारविरुद्धत्वात् ।

(११५) उ०—आर्यावर्तवासिनो बहवो ब्राह्मणाः सम्मिलिताः सुखोपजीवनार्थं देशान्तराणि गत्वा तत्र समुदायीभूय सुखेन कालं नयन्ति स्म। तदानीं देशाद्देशान्तरगमने वाहनादिसौकर्याभावात् तत्तद्देशोचितवेषभाषाचारादीन् कल्पयित्वा न्यवसन्। कालपरिणामेन वंगाः, तैलंगाः, आन्ध्राः, द्राविडाः, कार्नाटाः, महाराष्ट्राः, कोङ्कणाः, माध्वाः, इति पृथक् पृथक् तत्तद्देशनाम्ना प्रसिद्धिं गताः। तस्माद्ब्राह्मणेषु अवान्तरजातिकल्पनमसंगतमेव। तेषां विवाहादिसम्बन्धकरणे को वा शास्त्रप्रतिषेध इति न ज्ञायते।

(११८) उ०—नारायणभट्टः,

स्वशाखी चेद्वरो न स्यात् कस्मै देया तु कन्यका।
स्वशाखोक्तविधानेन दद्यात्तां परशाखिने।

इति धर्मप्रवृत्तौ उक्तवान्।

कुलं शीलं वपुर्विद्या वयो वित्तं सनाथता।
गुणाः सप्त वरे यस्मिंस्तस्मै कन्या प्रदीयते॥

इत्यादिवचनैः शास्त्रविरुद्धत्वावगमेऽपि परिस्थित्यनुसारेण अवान्तरश्रेणीषु परस्परं विवाहो योग्य एव।

(११९,१२०,१२१) उ०—परस्परं विवाहः शास्त्रविरुद्धो नास्ति।

(१२२) उ०—अवान्तरश्रेणीषु विवाहो न योग्यः।

(१२३) उ०—मातुलकन्यापरिणेतृव्यतिरिक्तावान्तरश्रेणीषु परस्परं विवाहसम्बन्धो योग्यः।

(१२४) उ०—द्राविडानां द्राविडेषु गौडानां गौडेषु विवाहो योग्यः, सर्वत्र समानाचारेषु विवाहो योग्य इति तत्त्वम्।

(१२५,१२६,१२७,१२८) उ०—अवान्तरश्रेणीषु विवाहो न योग्यः।

(१२९) उ०—अवान्तरश्रेणीनामुल्लेखस्तु कस्यामपि स्मृतौ नास्त्येव। महार्णवग्रन्थे तु तत्र जातीनां केवलं निवासदेशा एव कथिताः, तावता च किमपि न निश्चितं भवति।

(१३०) उ०--अवान्तरश्रेणीष्वपि परस्परं विवाहो योग्यः।

(१३२) उ०--अवान्तरश्रेणीषु प्रमाणानि तावदुच्यन्ते। तथाहि। "शूद्राणामनिरवसितानां"मिति सूत्रे अवान्तरभेदं प्रकल्पयति पाणिनिस्तदनुगुणां लौकिकीं व्यवस्थां च। पतञ्जलिर्धर्मशास्त्रकाराश्चात्रानुकूलाः। मिताक्षरायां "गोपनापितकुम्भकारकुलमित्रार्धिकनिवेदितात्मानो भोज्यान्नाः" इत्युक्तम्। देवलका नाम अवान्तरो भेदः, तेषां परस्परं भेदाश्च सन्ति। तथा हि आगमप्रामाण्ये अत्रिः--"अवालुका देवलकाः, कल्पदेवलकाः, गणभोगदेवलकाः, भागवतवृत्तिरिति चतुर्थः, एते उपब्राह्मणाः" इति।

(१३३) उ०--अवान्तरश्रेणीषु विवाहो न दोषाय।

(१३६) उ०--अवान्तरश्रेणीषु विवाहो न शास्त्रसम्मतः, आचारविरोधात्।

(१३७,१३८) उ०--अवान्तरश्रेणीषु विवाहसम्बन्धः शास्त्रीयः।

(१४३) उ०--न शास्त्रीयः।

(१४४) रूढ्या निषिद्धः।

(१४५) उ०--अवान्तरश्रेणयो हि द्विरूपाः, शास्त्रमूलाः कल्पिताश्च। कल्पना च प्रायेण रागद्वेषमूला। रागद्वेषौ च क्वचित् शास्त्रानुकूलौ क्वचिदतद्रूपौ च। शास्त्रमूलाः श्रेणयो नागरब्राह्मणेषु दृश्यन्ते। तथा दाक्षिणात्यौदीच्यानां विप्रतिपत्तिभेदस्य बौधायनोक्तस्य दर्शनादनुमीयन्ते सारस्वतादिदशविधा ब्राह्मणश्रेणयश्च। एवं भेदमूलकविवाहाभावः शास्त्रीयभेदाख्यानादनुमितो नागरब्राह्मणविषये कण्ठतश्चोक्तः। कल्पिताश्च श्रेणयो या गौडमण्डले कान्यकुब्जमैथिलराढीयवारेन्द्रश्रेणयः, कायस्थादीनाञ्च काश्चिदवान्तरश्रेणयः, तासामन्योन्यं विवाहाभावः साक्षाच्छास्त्रतो न गम्यते, परमाचारतः प्रचरति। अस्याचारस्य मूलपरिज्ञानात् शास्त्रनिषिद्धाचरणप्रतिरोधाय परित्यागोपि भवितुमर्हति, यदि तत्र श्रेयोऽनुमन्येरन्निति।

(११९) उ० —

"भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत् ।"

इतिमनुवचनप्रसङ्गेन दत्तकदीधितिदत्तकतिलकदत्तकसिद्धान्तमञ्जर्यादौ, निर्णयसिन्ध्वादौ, विवाहसम्बन्धयोग्यजातिविशेषविचारप्रसङ्गेन, सह्याद्रिखण्डे च पञ्चद्राविडपञ्चगौडाद्यवान्तरविभागस्य व्यवस्थापनपूर्वकं पुत्रादिदानप्रतिग्रहयोग्यत्वं तत्तदवान्तरश्रेणीनामेवेति व्यवस्थापनात्, स्कान्दे नागरखण्डे,

चतुर्वेदा अपि त्याज्या अन्यस्थानसमुद्भवाः ।
दैवे कर्मणि पित्र्ये च कन्यादाने विशेषतः ॥

इति स्थानभेदेन तत्तदवान्तरविभागमादायैव विवाहादिगुरुतरसम्बन्धव्यवस्थापनात्,

"अध्वर्यूद्गातृहोतॄणां सन्ति सूत्राण्यनेकशः ।
यत्रास्ते योनिसम्बन्धः सूत्रज्ञातिकुलोचितः ॥
विवाहे सोमश्राद्धे च अग्न्याधाने विशेषतः ।
एतैः स्वजातिभिः कुर्यादन्यथा पतितो भवेत् ॥"

इति बोधायनीयधर्मरहस्ये विवाहादौ सूत्रविशेषजातिविशेषकुलविशेषाणामेव सम्बन्धो योग्यः, न तु ब्राह्मणत्वादिव्यापकजातिमादायेति निरूपणात्,

कन्यादाने तथा श्राद्धे कुलीनो ब्राह्मणस्सदा ।

इति कुलीनत्वस्य विशेषतोऽपेक्षितस्य परीक्षोपयोगितया कुलपञ्चिकादिरक्षणाद्यावश्यकत्वस्य कुमारिलपादादिभिरपि तन्त्रवार्तिकादौ विवेचनात्,

अन्येऽपि नागराः सन्ति वेदवेदाङ्गपारगाः ।
श्राद्धार्हा यज्ञयोग्याश्च कन्यायोग्या विशेषतः ॥
प्रधानत्वेन सर्वेषां नागरैश्चापि कृत्स्नशः ।
तेन ते गौरवं प्राप्ताः स्थानेऽत्रैव विशेषतः ॥

तस्माच्छ्राद्धं प्रकर्तव्यं विप्रैश्चाष्टकुलोद्भवैः ।
अप्राप्तौ चैव तेषां तु कार्यं नागरसम्भवैः ॥

इति गत्यन्तरासम्भव एव नागरेष्वेवावान्तरविभागान्तरेषु विवाहयोग्यत्वोपपादनात्,

एवं ज्ञात्वा प्रयत्नेन श्राद्धे यज्ञे च पार्थिव ।
कन्यादाने विशेषेण योज्याश्चाष्टकुलोद्भवाः ॥

इति विशिष्य कन्यादाने तत्तदवान्तरकुलनियमावश्यकताया ज्ञापनात्, स्मृतिसारसमुच्चयेऽवान्तरविभागान्तरे विवाहकरणे दाक्षिणात्यानां गङ्गास्नानस्यान्येषां श्रीरामेश्वरयात्रायाश्च, अथ वा समाजदण्डस्य प्रायश्चित्तस्य व्यवस्थापनाच्च विवाहेऽवान्तरश्रेणीनियमो बहोः कालादनुवर्तमानोऽवश्यपरिपालनीयः। गत्यन्तराभावादतिव्याप्यावान्तरश्रेणीपरित्यागस्तु,

स्वशाखी चेद् वरो न स्यात् कस्मै देया तु कन्यका ।
स्वगृह्योक्तविधानेन दद्यात्तां परशाखिने ॥

इति वचनात् समाजानुमत्या नायोग्य इति तु वयं पश्यामः । सांप्रतं कथमपि वरालाभाद्यापत्तिनिर्णयस्तु तत्तदवान्तरसमाजाधीन एव, न तु तत्तद्व्यक्त्यधीन इति तु नियमोऽवश्यभावीति मन्यामहे ।

---

प्रथमप्रश्नोत्तरनिबन्धकारनामावलीसङ्ख्यानुरोधेनैवात्रापि निबन्धकाराणां नामानि ज्ञेयानि ।

* श्रीविश्वनाथः शरणम् *

# अखिलभारतवर्षीय ब्राह्मणमहासम्मेलने

## समालोचनीयप्रश्नावलीनामुत्तराणि ।

(६) षष्ठः प्रश्नः—धर्मज्ञाः के वा कीदृशं वा धर्मपरिवर्तनं कर्तुमर्हन्ति ? किं सङ्कोचनाख्यम् ? उत प्रवर्तनाख्यं धर्मपरिवर्तनम् ?

(१, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९) उत्तरम्—धर्मज्ञानां स्वार्थनिरपेक्षाणां श्रुतिस्मृतिपुराणादिपूर्वापरसंदर्भविदां सङ्कोचनाख्यं धर्मपरिवर्तनमेव कर्तुमर्हतेत्यत्र सर्वेषामैकमत्यम् । तिरुपतिविद्यालयपण्डितास्तु प्रायश्चित्तविषये प्रवर्तनाख्यमपि परिवर्तनं शक्तिपर्यालोचनानुसारेण कर्तुं शक्नुवन्तीति वदन्ति । शेखावाटीश्रीसीतारामशास्त्रिणस्तु धर्मस्य वेदमूलत्वात् न कीदृगपि परिवर्तनं धर्मज्ञाः कर्तुमर्हन्तीति वदन्ति । तेनालीवेंकटरामशास्त्रिणस्तु स्मृत्यर्थनिर्णय एवाधिकारो धर्मज्ञानाम्, न तु संकोचने प्रवर्तने वाधिकार इति वदन्ति । मायूरशिवरामकृष्णशास्त्रिणो नेदानींतनानां धर्मज्ञानां संकोचेऽप्यधिकारः, मन्वादीनां त्वासीदिति वदन्ति । मदनमोहनवेदान्तशास्त्रिणोऽपि न परिवर्तनं धर्मस्य युक्तमिति वदन्ति । अन्यैस्तूत्तरं न दत्तम् ।

(२०,२१) उ०—किमपि न लिखितम् ।

(२२) उ०—मन्वादीनामेव परिवर्तनाधिकारोऽतीन्द्रियज्ञानशक्तिमतां नास्मदादीनामिति मन्यते ।

(२३) उ०—न किमपि लिखितम् ।

(२४) उ०—श्रुतिस्मृत्याद्यविरुद्धे धर्मपरिवर्तने धर्मज्ञा अधिकारिणः ।

(२५,२६) उ०—पूर्ववदेव ।

(२७) उ०—धर्मज्ञानां संकोचन एवाधिकारः ।

(२८) उ०--धर्मज्ञानां न परिवर्तनलेशेऽप्यधिकारः, स तु मन्वादीनामेव, इदानीं तु तदर्थनिर्णय एवाधिकारः ।

(२९) उ०-धर्मानुष्ठातारो विज्ञाश्च धर्मज्ञाः संकोचे कालभेदेनावस्थाभेदेन च समर्थाः ।

(३०) उ०—इदमेव मन्यते ।

(३१) उ०—जीवानां धर्मज्ञानां न प्रवर्तनाख्यपरिवर्तनाधिकारः, किन्तु संकोचनाख्यधर्मपरिवर्तन एवाधिकारः ।

(३२) उ०—

त्र्यवरा परिषत् ज्ञेया धर्मसंशयनिर्णये ।

इति मनुवचनात् धर्मनिर्णय एवाधिकारः ।

(३३) उ०—न किमपि लिखितम् ।

(३४) उ०—कालशक्त्यनुसारिवेदशास्त्रार्थनिर्णय एव धर्मज्ञानामधिकारो न नूतनधर्मप्रवर्तने ।

(३५) उ०—संकोचन एवाधिकारः ।

(३६,३७) उ०—न किमपि लिखितम् ।

(३८) उ०—मन्वादीनामेव परिवर्तनाधिकारः, नाधुनातनानाम् ।

(३९,४०) उ०—न किमपि लिखितम् ।

(४१) उ०—अधीतवेदशास्त्रा धर्मज्ञा धर्मनिर्णय एवाधिकारिणो न तु धर्माधर्मव्यवस्थापनायाम्, तत्र मन्वादीनामेवाधिकारात् ।

(४२) उ०—संकोचन एवाधिकारः । तत्रापि नेदानींतनानामधिकारः ।

(४३, ४४, ४५, ४६) उ०—प्रायश्चित्तादिसंकोचन एवाधिकारः ।

(४७) उ०—मन्वादयो मुनय एव धर्मज्ञाः, ते संकोचनं परिवर्तनं च कर्तुमर्हन्ति ।

(४६) उ०—इदानीन्तनानां धर्मपरिवर्तने धर्मसङ्कोचने च नाधिकारः।
न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः।
इत्यादिवचनात्।

(५०) उ०—ऋषिभिस्तत्तुल्यैर्वा विना धर्मपरिवर्तने कोपि न क्षमः।

(५१) उ०—देशकालपात्रानुसारेण कुत्रचित्सङ्कोचनं कुत्रचित्प्रवर्तनं च धर्मज्ञैः कर्तव्यम्।

(५२,५३) उ०—शक्तिहीनैरिदानीन्तनैः सङ्कोचनादिकं कर्तुमशक्यम्।

(५४) उ०—शास्त्रज्ञा यथावदाचरणशीला धर्मज्ञाः शास्त्राविरुद्धं प्रवर्तनाख्यं धर्मपरिवर्तनं कर्तुमर्हन्ति।

(५५) उ०—विष्णुस्मरणरूपं सङ्कोचनाख्यं धर्मपरिवर्तनं कर्तुमर्हन्ति।

(५६) उ०—धृतिक्षमादिमनूक्तधर्माचरणरताः वर्तमानपरिस्थित्यनुसारेण धर्मपरिवर्तनं कर्तुमर्हन्ति।

(५७,५८,५६,६०,६१,६२,६३) उ०—त्रिकालदर्शिन एव धर्मज्ञाः, ये च ऐहिकप्रतिष्ठार्थं कदर्थेन शास्त्रं व्याख्याय स्वधर्मं प्रचारयन्ति ते दण्ड्याः, न तु धर्मज्ञाः।

(६४) उ०—स्वस्वजातिमनतिक्रम्य धर्मपरिवर्तनं युक्तिसहम्।

(६६) उ०—नियमनिषेधविधिविहितधर्मेतरधर्मं वेदार्थाविरोधिना तर्केण वेदधर्मोपदेशानुसन्धायिनस्ते धर्मज्ञाः संकोचयितुमर्हन्ति।

(७७) उ०—मीमांसारीत्या धर्मपरिवर्तनं युक्तम्।

(७६) उ०—श्रुतिस्मृत्युदीरितं धर्ममाचरन्तो येऽन्यानुपदिशन्त ते खलु धर्मज्ञा मन्यन्ते। अत एव के वयं धर्मपरिवर्तनकर्तारः, तादृशज्ञानाभावात्।

(८०) उ०—संकोचनाख्यं धर्मपरिवर्तनं कर्तुमर्हन्ति।

(८३) उ०—वानप्रस्थादानरूपं प्रवर्तनाख्यं धर्मपरिवर्तनं कर्तुमर्हन्ति। अपि च "चण्डालः श्वपचः क्षत्ता" इत्यादि, "रजकश्चर्मकारश्च" इत्यादिजातिभिन्नानां तन्तुवायसूत्रधारप्रभृतिजातिविशेषाणां वर्तमानप-

रिस्थित्यनुसारेण सच्छूद्रान्तर्गतत्वेन जात्युत्कर्षविषये न क्षतिर्भविष्यति। तत्स्पृष्टजलपाने शास्त्रतो विशेषदोषाश्रवणादिति।

(१००) उ०--इदानीं यादृशधर्माचरणं भवति, तदालोचनेन प्रायश एव ब्राह्मणादीनां सन्ध्यादिवर्जनं दृष्टम्, किम्बहुना, आहारादावपि अन्यथाचरणं सर्वथा दृष्टम्, अतोऽस्य सङ्कोचे महाननर्थः सम्भवति, अतः सन्ध्यावन्दनादिकं यथायोग्यं आहारादावपि संयमनं स्वीकर्तुमुचितम्।

(१०१) उ०--इतिहासतत्त्वज्ञाः समाजहितनिर्धारणसमर्था धर्मज्ञाः सर्वविधमपि धर्मपरिवर्तनं कर्तुमर्हन्ति। तच्च परिवर्तनं न परिवर्तनं, किं तु सनातनधर्ममूलतत्त्वानुसारेण वर्तमानावस्थायां तस्य समाजोपकारितासम्पादनमेव।

(१०७) उ०—धर्मस्य सनातनत्वेन संकोचनाख्यं प्रवर्तनाख्यं वा परिवर्तनं न सम्भवति।

(१०८) उ०—मन्वादय एव धर्मज्ञाः।

(१०९) उ०—चत्वारो वेदधर्मज्ञा इत्यादिवचनोक्ता परिषत् यत्किञ्चिदपि धर्मपरिवर्तनं कर्तुमर्हन्ति, नान्यः।

(११०) उ०—मन्वादय एव धर्मज्ञाः, तत्कृतव्यवस्थानुसरणमेवास्माभिः कर्तव्यं, न परिवर्तनादि।

(१११) उ०—मन्वादय एव धर्मज्ञाः, अत एव "धर्मज्ञसमयः प्रमाण"मित्यापस्तम्बसूत्रे "धर्मज्ञा मन्वादय" इति व्याख्यातं हरदत्तेन।

(११२) उ०—स्मृतिकारा मनुपराशरयाज्ञवल्क्यप्रभृतयः श्रीशङ्करप्रमुखा अवतारपुरुषाः धर्मज्ञाः, तेषामपि संकोचनाख्य एव धर्मपरिवर्तनेऽधिकारः।

(११३) उ०—शास्त्रानुसारिधर्मानुष्ठानशक्ताः धर्मज्ञाः; ते धर्मपरिवर्तनं कर्तुमर्हन्ति।

(११५) उ०—त्रैविद्यवृद्धा धर्मज्ञाः । वेदधर्मशास्त्रानुसारेण संकोचनं प्रवर्तनं वा ते कर्तुमर्हन्ति ।

(११७) उ०—परिस्थितिपर्यालोचनेन तत्तत्कालोचितान् धर्मान् ज्ञात्वा प्रवर्तयन्ति ये त एव धर्मज्ञाः । मनुमरीच्यादयो हि धर्मज्ञाः तत्कालीनपरिस्थित्यनुसारेण वर्णाश्रमान्धर्मान् मुख्यत्वेन परिवर्त्य व्यवस्थापितवन्तः । तदुक्तं मुण्डकोपनिषदि, आगमशास्त्रे च,

"मन्त्रेषु कर्माणि कवयो यान्यपश्यन् ।
तानि त्रेतायां बहुधा सन्ततानि" इति ।

अस्मिन् कलियुगे एतत्कालोपयोगितया ये ये धर्मान् परिवर्तयन्ति त एव धर्मज्ञाः । एते संकोचेन विकोचेन वा प्रवर्तनेन वा निवर्तनेन वा सर्वथा धर्मान् परिवर्तयितुमर्हन्ति ।

(१२१) उ०--पूज्यानां धर्मज्ञानां अहिन्दुहिन्दुकरणाख्यधर्मपरिवर्तनेऽधिकारः ।

(१२२) उ०—प्राचीनपक्षः ।

(१२२) उ०—जगद्गुरुपीठाधिपतयो धर्माधिकारिणश्च धर्मपरिवर्तनं कर्तुमर्हन्ति ।

(१२४, १२५, १२६. १२७, १२८ ) उ०—प्राचीनपक्षः ।

(१२९) उ० ऐतिहासिका एव धर्मज्ञाः । इतिहासदृष्ट्या च धर्मपरिवर्तनं सर्वविधमेव योग्यम् । तथा चोक्तं महाभारते राजधर्मानुशासनपर्वणि ,

युधिष्ठिर उवाच—इमे वै मानवाः सर्वे धर्मं प्रति विशंकिताः ।
कोऽयं धर्मः कुतो धर्मस्तन्मे ब्रूहि पितामह ॥
धर्मस्त्वयमिहार्थः किममुत्रार्थोपि वा भवेत् ।
उभयार्थोपि वा धर्मस्तन्मे ब्रूहि पितामह ॥

भीष्म उवाच—लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ।
उभयत्र सुखोदर्क इह चैव परत्र च ॥

इत्यादिवचनैः स्पष्टमेव धर्मस्य दृष्टार्थत्वमवगम्यते ।

(१३६, १३७, १४१) उ०—प्राचीनपक्षः ।

(१४२) उ०—पञ्चायतनसभाधिष्ठातारो धर्मज्ञाः, तेयं कमपि समाजच्युतं समाजप्रविष्टं च कर्तुमर्हन्ति ।

(१४३, १४४) प्राचीनपक्षः ।

(१४५) उ०—साक्षात्कृतधर्म्माणो योगर्द्धिसम्पन्ना धर्म्मपरिवर्त्तनं कर्त्तुमर्हन्ति । अलुब्धा धर्म्मकामाः शास्त्रार्थतत्त्वज्ञा वैदेशिकशिक्षया विकृतमतित्वमप्राप्ताः स्वयमाचारवन्तश्च ब्राह्मणाः साधवस्ते सङ्कोचनाख्यं धर्म्मपरिवर्त्तनं कर्त्तुमर्हन्ति । सङ्कोचनमपि द्विविधं, निवर्त्तनरूपं प्रवर्त्तनरूपञ्च । तत्राद्यं यथा कलिवर्ज्यप्रकरणोक्तं, अन्त्यं यथा शूद्रादीनां क्वचिदुक्तदशाहाशौचादिप्रवर्त्तनरूपं मासाशौचसङ्कोचनम् । प्रवर्त्तनरूपं सङ्कोचनन्तु नेदानीन्तना अर्वाग्दृशः कर्त्तुमर्हन्ति ।

(११९) उ०—स्वार्थनिरपेक्षा धर्मकामा भगवदाम्नायादिपरतन्त्रा धर्मज्ञा मन्वादयो धर्मसंकोचने, परिषत्तु पूर्वापरसंदर्भशक्त्यशक्त्यादिविवेचनेन व्यक्तिविशेषानुष्ठेयप्रायश्चित्तादिव्यवस्थायां चाधिकारिणः । सामान्येन कालविशेषादिपुरस्कारेण कलिवर्ज्यप्रकरणादिकमिव व्यवस्थापयितुं न पण्डितपरिषदपि मन्वादय इव प्रभवतीति तु निष्कर्षः ।

प्रथमादिचतुर्थान्तप्रश्नोत्तर-

# परिशिष्टम् ।

---

(१४९) उ०—अ०नारायणचार्यविदुषाम् ।

प्राचीनपक्षः । मनुः—

वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तस्यां चैव प्रसुतस्य निष्कृतिर्न विधीयते ॥

(१४६) उ०--को० रङ्गाचार्याणाम् ।

प्राचीनपक्षः ।

(१५०) उ०--श्रीचन्द्रनारायणभट्टाचार्याणाम् ।

कन्याशब्दो विवाहितास्वपि प्रयुज्यते ।
कन्यामपि पतिर्भार्यां रक्षेद्यत्नेन मानवः ॥

इति जाबालिवचनात् । अतः कन्यादाने रजोदर्शनात्पूर्व एव कालः ।

(१५१) उ०--वी० रामशास्त्रिणाम् ।

(१५२) उ०—रूपावतारं श्रीशेषशास्त्रिणाम् ।

(१५३) उ०--घंडिकोटसुब्रह्मण्यशास्त्रिणाम् ।

(१५४) उ०--कनुपर्ति मार्कण्डेयशर्मणाम् ।

(१५५) उ०—मल्लादि वेङ्कटविश्वनाथशर्मणाम् ।

(१५६) उ०—श्रीप्रमेशचन्द्रभट्टाचार्य काव्यतीर्थसांख्यविनोदस्मृतिवाचस्पतीनाम् ।

प्राचीनपक्षः ।

(१५७) उ०—श्रीलक्ष्मीकान्तदेवगोस्वामिविद्याविनोदानाम् ।
(१५८) उ०—श्रीरूपेश्वरस्मृतिरत्नानाम् ।
(१५९) उ०—श्रीउपेन्द्रचन्द्रतर्काचार्याणाम् ।
(१६०) उ०—प्रबन्धकाराणां नाम न लिखितम् ।
(१६१) उ०—श्रीमहेन्द्रनाथसांख्यस्मृतिरत्नानाम् ।
(१६२) उ०—श्रीयमुनाप्रसाद शर्मणाम् ।
(१६३) उ०—श्रीलक्ष्मणप्रसादशर्मणाम् ।
(१६४) अखिलभरतवर्षीयमारवाडीब्राह्मणमहासभायाः ।
(१६५) उ०—पं० शिवानन्द ब्रह्मचारिणाम् ।

प्राचीनपक्षः ।

(१६६) उ०—पं० सदाशिवशास्त्रि मुसलगांवकर महोदयानाम् ।

ब्रह्मपुराणे गौतमीमाहात्म्ये,

भानुरुवाच—

चतुर्थाद्वत्सरादूर्ध्वं यावन्न दशमात्ययः ।
तावद्विवाहः कन्यायाः पित्रा कार्यः प्रयत्नतः ॥

इति वचनन्तु शूद्रादिपरम ।

(१६७) उ०—शास्त्रतिलकब्रह्मस्वामिशास्त्रिणाम् ।

अत्र विषये किमपि न लिखितम् ।

(१६८) उ०—श्री० खेन्धरत्रिपाठिनाम् ।

प्राचीनपक्षः ।

(१६९) उ०—श्रीश्यामसुन्दरझामहोदयानाम् ।

ब्रह्मपुराणे,

कृते विवाहे वर्षन्तु वस्तव्यं ब्रह्मचारिणा ।
यद्यष्टवर्षा कन्या स्यात् तथा तत्त्रिगुणः पुमान् ॥
अथ वा द्वादशाहानि त्रिंशद्वर्षेण सर्वदा ।

यदि द्वादशवर्षा स्यात् कन्या रूपगुणान्विता ॥
त्रिंशद्वर्षेण पूर्णेन यदि षोडशवार्षिकी ।
लब्धा तदा तु षड्रात्रं वस्तव्यं संयमेन तु ।
विंशत्यब्दा यदा कन्या वस्तव्यं तत्र वै त्र्यहम् ।
अत ऊर्ध्वमहोरात्रं वस्तव्यमिति सम्मतम् ॥ इति ।

(१७०) उ०-श्रीचन्द्रशेखरब्रह्मसांख्यवेदान्ततीर्थसाहित्योपाध्यायानाम् ।
(१७१) उ०-गोस्वामिकुलकौस्तुभश्री १०८ गोकुलनाथशर्ममहाराज-प्रतिनिधीनां देवर्षि पं० रमानाथशर्मणाम् ।

प्राचीनपक्षः ।

(१७२) उ०—आर्यसोमयाजिनाम् ।

नवीनपक्ष एव ।

(१७३) उ०--कुड्लिगीनिवासिनां बिंक्री रामण्णाशास्त्रिणाम् ।
(१७४) उ०—नन्द्यालग्रामवासिनां वी० रामशास्त्रिणाम् ।
(१७५) उ०—वादिमत्तेभकण्ठीरवसिंहाद्रयप्पलाचार्याणाम् ।

प्राचीनपक्षः ।

(१७६) उ०—विजयनगरनिवासिनां सरिपल्लीसन्नय्याशास्त्रिणाम् ।

परिस्थित्यनुसारिविचारः ।

(१७७) उ०—वेमूरि नृसिंहशास्त्रिणां शतावधानिनाम् ।

प्राचीनपक्षः ।

एतदतिरिक्ता अपि स्वतन्त्रविषयानधिकृत्य प्रेषिताः प्रबन्धा बहवो वर्तन्ते । समयाभावात्स्वतन्त्रविषयत्वाच्च तेषां सङ्ग्रहोऽत्र न कृतः ।

---

# पञ्चमप्रश्नोत्तरपरिशिष्टम् ।

(१५१, १५२, १५३) उ०—प्राचीनपक्षः ।

(१५४) उ०—अवान्तरश्रेणीषु आहारविहारभेदाभावे विवाहो न दोषाय ।

(१५७) उ०--प्राचीनपक्षः ।

(१५९) उ०--अवान्तरश्रेणीषु परस्परं विवाहसम्बन्धो योग्यः ।

(१६०) उ०--ब्राह्मणादिजातिषु स्वापेक्षया नीचश्रेणीजातकन्यायाः स्वेन सह विवाहः शास्त्रसिद्धः । यथाह मनुः "स्त्रीरत्नं दुष्कुलादपि" इति ।

(१६१, १६२) उ०--न कश्चिद्दोषः ।

(१६४) उ०--प्राचीनपक्षः ।

(१६५) उ०--न कश्चिद्दोषः ।

(१६६) उ०--"नमस्तक्षभ्यो रथकारेभ्यश्च वो नम" इत्यादिश्रुतौ बहूनां जातिभेदानां नाम वर्तते, तथा ब्राह्मणेष्वपि जातिभेदप्रतिपादिका याजुषी श्रुतिः आधानविषयिणी लभ्यते । "भृगूणां त्वांगिरसां व्रतपते व्रतेनादधामीति भृग्वंगिरसामादध्यात् । आदित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानाम्" इत्यादिः । तथा विष्णुपुराणे तृतीयेंऽशे तृतीयाध्याये,

वेदवृक्षस्य मैत्रेय शाखाभेदः सहस्रशः ।
न शक्यो विस्तराद्वक्तुं संक्षेपेण शृणुष्व तम् ।

इति। किं च विवाहे आचारस्य प्राधान्यं श्रुतावुक्तं "विवाहश्मशानयोर्ग्रामं प्रविशतात्" इति। वृद्धस्त्रियः पूर्वं पुरुषैरनुष्ठीयमानं सदाचारं स्मरन्ति, तस्मात् विवाहश्मशानयोः सदाचारबोधकं तासामपि वचनं प्रमाणत्वेन स्वीकर्तव्यमिति श्रुत्यर्थः । आचाराश्च तेषां विभिन्नाः । यथा तैलङ्गेषु मातुलसुतापरिणयः,

इतरेषु मातुलसुतापरिणये प्रायश्चित्तम् । वाजसनेयिषु मातुलगोत्रमपि विचिन्त्यते विवाहे । पंचद्राविडान्तर्गता एव गुर्जराः, परं तेषु स्त्रीणां मुक्तकच्छत्वम् । ततश्च सदातनसदाचारस्थितिरक्षणाय पूर्वजक्षुण्णोऽयं पन्थाः बलवदापदं विना न हेयः ।

(१६८, १६९, १७०, १७१) उ०--प्राचीनपक्षः ।

---

## षष्ठप्रश्नपरिशिष्टम् ।

( १४८, १४९, १५२, १५३, १५४, १५५, १५८, १५९, १६०, १६१, १६२, १६३, १६४, १६५, १६६, ) उ०—प्राचीनपक्षः ।

(१६७) उ०--प्राचीनपक्षानुकूलः प्रबन्धः ।

( १६८, १६९, १७०, १७१, ) उ०—प्राचीनपक्षः ।



# शुद्धिपत्रम् ।

## प्रथमादिचतुर्थान्तप्रश्नोत्तरेषु

| अशुद्धं | शुद्धं | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| ष्टचा | ष्ट्या | २ | ८ |
| तैनिदिष्टः | तैर्निर्दिष्टः | ३ | ९ |
| ष्टचा | ष्ट्या | ३ | ९ |
| शिवकृष्ण | शिवरामकृष्ण | ४ | ३ |
| यनाम | यानाम् | ६ | २२ |
| श्नयो | श्न न यो | ७ | १९ |
| पडित | पण्डित | ८ | १६ |
| षाडश | षोडश | २२ | ४ |
| या | यो | २६ | २ |
| वेत्र | वर्षत्र | ३१ | २२ |
| ान्वप्रो | न्विप्रो | ३२ | २० |
| भूषणाम् | भूषणानाम् | ३९ | २३ |
| स्यो | स्यो | ४० | ११ |
| त | तं | ४१ | २९ |
| शोणित | शोणितं | ४० | २९ |
| नाम्नका | नम्निका | ४० | २६ |

## पञ्चमप्रश्नोत्तरेषु

| अशुद्धं | शुद्धं | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| ( ११९ ) | ( १४६ ) | ६ | १३ |

## षष्ठप्रश्नोत्तरेषु

| अशुद्धं | शुद्धं | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| स्वोकर्तुं | स्वीकर्तुं | ४ | ७ |
| मर्हन्ति | मर्हति | ४ | १६ |
| श्रमान्धर्मान् | श्रमधर्मान् | ५ | ९ |
| मन्त्रषु | मन्त्रेषु | ६ | ७ |
| ( ११९ ) | ( १४६ ) | १० | १ |

प्रथम वर्षे } सौर वैशाखः । शकाब्दाः १८५० । { प्रथम संख्या ।

# ब्राह्मणमहासम्मेलनम् ।

## ( मासिकं संस्कृतपत्रम् )

"न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् )

---

सम्पादक सङ्घः—
महामहोपाध्यायः श्रीयुक्तानन्तकृष्णशास्त्री ।
श्रीराजेश्वरशास्त्री द्रविड़ः, श्रीताराचरण भट्टाचार्यः,
श्रीश्रीजीव न्यायतीर्थः एम. ए ।
परिदर्शकौ
श्रीहाराणचन्द्र शास्त्री-श्रीगोपीचन्द्र सांख्यतीर्थश्च ।

---

वाराणस्याम्
विद्याविलास यन्त्रालये मुद्रयित्वा
ब्राह्मणमहासम्मेलन कार्यालयात्
प्रकाशितम् ।

---

अग्रिम वार्षिक मूल्यम्
रूप्यकत्रयम् ।

एतत्संख्याया मूल्यम्
आनक चतुष्टयम् ।

# सूची ।



---

# ब्राह्मणमहासम्मेलन नियमाः ।

१. अस्याः पत्रिकाया अग्रिम वार्षिक मूल्यं रूप्यकत्रयम् ।

२. प्रेषणव्ययो ग्राहकैर्न देयः ।

३. प्रबन्धलेखकेषु यस्य प्रबन्धो यस्यां संख्यायां प्रकाशितो भवेत् तत्संख्याया एकं खण्डं तस्मै विना मूल्यं प्रदीयेत ।

४. प्रबन्धादिकं समालोचनार्थं पुस्तकादिकं च सम्पादक समीपे, मूल्यं च कार्याध्यक्षस्य समीपे प्रेषणीयम् ।

५. पत्रमिदं नियमेन सौर मासस्य अन्तिम सप्ताहाभ्यन्तर एव सर्वत्र प्रेषितं भवेत् । येन खलु ग्राहकेण तत्पत्रं यथाकालं नाधिगम्येत तेन तत्परमासस्य द्वितीयसप्ताहमध्य एव स्वपोष्टआफिस् स्थाने तदन्विष्य तत्फलं वयं विज्ञापनीयाः । नातः परं कस्याप्यभियोगः श्रूयेत ।

ब्राह्मणमहासम्मेलन कार्याध्यक्षः ।

ब्राह्मणमहासम्मेलन कार्यालयः,

१०७ दशाश्वमेध घाट रोड—

वाराणसी नगरम्

# ब्राह्मणमहासम्मेलनम् ।

## मासिकं संस्कृतपत्रम् ।

### प्रथमो वर्षः

शकाब्दाः १८५०



सम्पादक संघः—

महामहोपाध्याय: श्रीयुक्तानन्तकृष्णशास्त्री ।
श्रीहाराणचन्द्र शास्त्री,
श्रीराजेश्वरशास्त्री द्राविडः, श्रीताराचरणभट्टाचार्यः,
श्रीश्रीजीव न्यायतीर्थः एम्० ए० ।



परिदर्शकौ

श्रीश्यामाचरण कविरत्नः
श्रीगोपीचन्द्र सांख्यतीर्थश्च ।



वाराणस्याम्

साङ्गवेदविद्यालय यन्त्रालये मुद्रयित्वा
ब्राह्मणमहासम्मेलन कार्यालयात्
प्रकाशितम् ।

# ब्राह्मणमहासम्मेलनस्य अकारादिक्रमेण निबन्धसूची।

नमो ब्रह्मण्य देवाय ।

# ब्राह्मणमहासम्मेलनम् ।

## मासिकं संस्कृतपत्रम् ।

प्रथम वर्षं ] सौर वैशाखः, शकाब्दाः १८५० [ प्रथमसंख्या

### मङ्गलाचरणम् ।

करालंकृत विश्वश्री प्रेयः शिवमहास्थितम् ।
तत् पुष्करपदं वन्दे पञ्चात्मकमहं महत् ॥ १ ॥

यज्ज्योतिर्जगतामुपर्बुधविधुब्रध्नानवद्योतय-
द्रूपस्पर्श-विहीनमान्तरतमं नक्तन्दिवं दीप्यते ।
अस्मिन् कल्मष-कर्मकृष्णारजनी-सञ्चारघोरे क्षणे
तद्भूयांसि तमांसि निर्जितबहि-स्तेजांसि जेघ्नीयताम् ॥२॥

गङ्गातरङ्गकृतरङ्गवराङ्गसङ्ग-
श्रीचक्रिचक्रजलतोषितचन्द्रमौलिः ।
स्वान्ते स्थितौ मृतिमताममृतैकहेतुः
काशीश्वरश्च कुरुतां कुशलं धरित्र्याः ॥ ३ ॥

श्रीविष्णोः प्रियमूर्त्तिमुत्तमपदावस्थानकीर्तिं स्मृतिं
धाराव्यत्यय-जात-दुस्थितिमतिक्षीणाकृतिं सम्प्रति ।
पुण्यात् पुण्यतनुं समस्तजगतः श्रेयः श्रियामास्पदं
विप्रं गां सुरनिम्नगां च शतशो वन्देऽमृतप्राप्तये ॥ ४ ॥

१ । नवार्थोऽयं श्लोकः । तदिति ब्रह्मवाचकं सर्वत्र विशेष्यम् । महदिति सर्वव्यापकं महिमवच्च इति यथायथं योज्यम् । अपरपदार्थो वर्ण्यते प्रथमं परब्रह्मपक्षः करालं भीषणम् महद्भयं वज्रमुद्यतमिति भीषास्माद् वातः पवते इत्यादेश्च श्रुतेः । कृतविश्वश्रीः कृतविश्वा या श्रीः विभूतिः शक्तिरित्यर्थः तद्रूपं शक्तिशक्तिमतोरभेदात् प्रेयः सर्वतः प्रियम् आत्मरूपत्वात् नवा अरे पत्युः कामाय पतिः प्रियो भवतीति श्रुतेः । शिवं मङ्गलं शांतं शिवमद्वैतमितिश्रुतेः, महः तेजः ज्योतिषां ज्योतिरिति श्रुतेः । पुष्करपदं पुष्करम् आकाशं पदं चिह्नं ज्ञापकं यस्य आकाशवत् सर्वगतश्च नित्य इति श्रुतेः । खं ब्रह्मेति श्रुतेश्च । पञ्चात्मकं सूर्यगणेशशक्तिशिवविष्णुस्वरूपम् । पञ्चात्मा व्याकृतात्मा यः को हिरण्यगर्भः तत्स्वरूपं च । श्रीः सरस्वती तद्रूपं पंचात्मा पंचरेखः कः ककारो यत्र वाचकत्वेन, कं ब्रह्मेति श्रुतेः । श्रीः लक्ष्मीः तद्रूपं च कीर्त्तिः श्री र्वाक् च नारीणामिति गीतोक्तेः । पञ्चात्मकं सूर्य्यचन्द्रादि नानास्थानस्थं काली लक्ष्मीःसरस्वतीचेति भेदात् सरस्वतीलक्ष्म्योः शक्तिमध्ये निवेशात् पंचात्मक मिति पंचदेवतात्मक मित्युक्तार्थकं वा । ततः सूर्यपक्षे-करैः किरणैः अलंकृतं विश्वं येन तत् करालंकृतविश्वं श्रीप्रेयः श्रिया लक्ष्म्याः प्रेयः प्रधानं प्रीतिस्थानं, विष्णुस्मृतौ लक्ष्मीवाक्ये स्ववासस्थाननिर्देशप्रस्तावे प्रथमं सूर्यस्य ग्रहणात् 'वसाम्यथार्केच निशाकरे चे'ति । शिवं मंगलम् लोकेऽस्मिन् मंगलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पिरादित्य आपो राजा तथाष्टम' इति स्मार्तधृतनारदवचनात् । अहस्थितं खर्परे शरि विसर्गलोपात् अह्नि स्थितम् प्रकाशितम्, अह्नो दिनस्य स्थितम् स्थिति र्यस्मादिति वा । पुष्करपदं गगनचारिणं पञ्चात्मकं पंच प्रातःकालः संगवः मध्याह्नः अपराह्णः सायाह्न इत्याख्याः तदात्मा तत्स्वभावः कः सूर्य्यः तदभिन्नं पंचात्मकम् । गणेशपक्षे-करेण अलंकृतं शोभितम् विश्वश्रीः विश्वेषां गणानां श्रीः, धीः,—श्रीशब्दस्य

श्रीवाचकत्वात् । गणाधिपतिर्हि गणानां धियः प्रेयान् प्रवर्त्तकत्वात् । अथवा विश्वश्रीः जगत. सम्पत् तस्याः प्रेयः तत् प्राप्तेर्गणेशकृपाधीन-त्वात्-विनायकः कर्म्मविघ्नसिद्ध्यर्थं विनियोजितः । ...तेनोपसृष्टो लभते न राज्यं राजनन्दनः । ...वणिग् लाभं न चाप्नोति कृषिं चैव कृषीवलः । ...एवं विनायकं पूज्य ग्रहांश्चैव विधानतः । कर्म्मणां फलमाप्नोति श्रियं प्राप्नोत्यनुत्तमाम् । इति याज्ञवल्क्यवचनात् । शिवमहस्थितम्—शिवस्य मह उत्सवः तस्मिन् स्थितं युक्तं शिवो-त्सवभूतं स्थितं स्थितिः प्रादुर्भावो यस्य तदिति वा, पुत्रस्य स्थितिः पितुरुत्सवाय भवतीति सिद्धम् । पुष्करपदं करिशुण्डाग्रचिन्हयुक्तं गजानन मित्यर्थः । पंचात्मकं स्थूलतनुं पंचो विस्तारवान् आत्मा देहो यस्य । शक्तिपक्षे कालीविषयः प्रथमः-करालं दन्तुरं भीषणञ्च 'दन्तुरां' 'घोरां' इति ध्यान-पाठात् । श्रीप्रेयसि श्रीयुक्ते शवरूपत्वेऽपि जीवद्भावसूचनाय श्रीपदोपन्यासः । अथवा श्रीस्वरूपे लीलायामुप-करणभूते श्रीशब्दस्य उपकरणार्थत्वात् । प्रेयसि पत्यौ शिवे महेन उत्सवेन महसा तेजसा वा स्थितं आरूढ़म् । शवरूपमहादेवहृदयोपरि संस्थितामिति तन्त्रोक्तेः । पुष्करपदं कमलसन्निभचरणं पंचात्मकमहं पञ्चात्मनां पंचत्वं प्राप्तानां यानि कानि शीर्षाणि तैर्मह उत्सवो यस्य तैरुत्सवकृद् वा महयतीति महम् । मुण्डमालाविभूषिता मिति तन्त्रोक्तेः । द्वितीयो लक्ष्मीपक्षः-करेण स्वहस्तेन स्वकर-दत्तवरेण वरदां दक्षिणेन तु इत्युक्तेः अलंकृत विश्वा श्रीः लक्ष्मीरेव प्रेयः प्रियतमं शिवमहः कल्याणजनकं महस्तेजः स्थितं स्थिरम् । पुष्करपदं पद्मचिह्नं 'रुक्मपद्मव्यग्रकरा मित्युक्तेः पुष्करपदं पद्मासनस्थम् । पञ्चात्मकं पंचम्यां मह उत्सवो यस्य पंचम्यां श्रियं पूजये दित्युक्तेः न च तत्र श्रीपदं सरस्वतीपरमिति वाच्यं लक्ष्मीर्मेधेति स्तोत्रे लक्ष्म्या अपि सरस्वतीतनुत्वस्य कथनात्, सरस्वतीमहस्यापि लक्ष्मीमहत्व-सिद्धेः । तृतीयः सरस्वतीपक्षो लक्ष्मीपक्षवद् वेदितव्यः, विशेषस्तु

करालंकृतेति अहस्थितमित्यत्र च । अत्र शिवमितिच्छेदः । सरस्वती हि वाग्देवता कराभ्यां ककार रेफाभ्यां कृष्णरामशब्दघटकाभ्यां शाक्तास्तु आधावीजघटकाभ्यां काली तारा नाम घटकाभ्यां वा ताभ्यामिति मन्यन्ते । अलंकृतविश्वा श्रीः सरस्वती भवति, अहस्थितम् अकाराद्व हकारं यावत् स्थितम् अधिष्ठितम् । पंचात्मकं पंच प्राणादिपंचकं तदात्मा कः समीरणो यस्य यत् सम्बन्धी भवात अभिव्यक्तिहेतुत्वेन सम्बन्धित्वम् । पंच स्वराः अ इ उ ऋ लृ वर्णाः आत्मानः आत्मभूता यस्य तदधीनत्वाद्व वर्णान्तराभिव्यक्तेः इन्द्रियादीनां आत्माधीनत्ववदित्यर्थो वा । शिवपक्षे करं कर्त्तृ कर्त्तारमीशमिति श्रुतेः अलंकृतविश्वा श्रीः श्रीः येषां ते तत्त्वज्ञानिनः श्रीर्विभूतिः येषां ते इन्द्रादयो देवाः अलंकृते विश्वश्रियौ येन स नारायणः तेषां तस्य वा प्रेयः, स्थितं स्थिरम् अनपायि शिवमहः शिवस्वरूपं महः तेजः शिवम् अह इति छेदो वा करादि शिवमित्यन्त मेकपदम् अहेति प्रशंसासूचकमव्ययं सा च वन्दनस्य । पुष्करपदं पद्मासीनम् । पंचात्मकं ईशानतत्पुरुषाघोरवामदेव सद्योजातात्मकम् । विष्णु-पक्षे करेण क्रियया ऋदन्ताद्व भावे अप् प्रत्ययेन सिद्धः करशब्दः । अलंकृतविश्वं भूषितविश्वं श्रीप्रेयः श्रियो लक्ष्म्याः प्रियतमं श्रीपतिम् । शिवमहस्थितं शिवोत्सवहेतुं पुष्करपदं जलशायि क्षीरोदार्णवशायि पुष्करं आकाशः तत्रवा पदं यस्य इति वा विष्णुपदमित्याकाशनाम प्रसिद्धम् । पंचात्मकं व्यापकं लक्ष्मीसहितचतुर्व्यूहाभिप्रायेण पंचात्मकमिति वा महत् महदुपाधि । हिरण्यगर्भ पक्षे करे कर्मणि आलः सामर्थ्यं यस्य—रजोमूर्त्तित्वात् क्रियाप्राधान्यं कृतविश्वं श्रियाः सरस्वत्याः प्रेयः शिवमहसा शिवतेजसा स्थितम् अनुत्क्रान्तमर्य्यादं शिवाय मङ्गलाय महसि तेजसि स्थितमिति वा । पंचात्मकं व्याकृतात्मकमिति । पुष्करपदं कमलासनं पुष्करतीर्थाभिव्यक्तरूपं वा । अग्निवायु-पक्षसंगमनेत्वस्यैकादशार्थत्वादिकम-

हनीयम् ।

३ । काशी ईश्वरः शिवश्च कुरुतां द्विवचनरूपम् । काशीश्वर इत्येकपदत्वे कुरुता मित्येकवचनान्तपदम् ।

काशीपक्षे वराङ्गं प्रधानभागः पूर्वा दिक् । चक्रिचक्रजलतोषित-चन्द्रमौलिः चक्रिचक्रजलं चक्रतीर्थं तोषितचन्द्रमौलिः तपः-प्रसादित शिवस्थानम् । ईश्वरपक्षे वराङ्गम् उत्तमाङ्गं चक्रिचक्रं भुजङ्गमण्डलं तज्जाता लता हारो यस्य । उषितचन्द्रो मौलिर्यस्य ।

४ । विप्रपक्षे उत्तमपदं उत्तमस्थानं भगवतो मुखं समाजप्रधान-स्थानं चेति । गोपक्षे श्रेष्ठपदावस्थानं देवाधिष्ठानं सम्मानश्च । गङ्गापक्षे उत्तमपदं विष्णुपदं ब्रह्मलोकः शिवशिरश्च । धारा आचार-परम्परा, जलस्रोतश्च इति यथायथं योज्यम् ।

---

श्री रस्तु ।

# ब्राह्मणमहासम्मेलनम् ।

समाजसंघटनं हि कुटुम्बसंघटनं, कुलसंघटनं, तत्तदवान्तरजातिसंघटनं, ग्रामसंघटनं, जनपदसंघटनं, नगरसंघटनमित्येवं क्रममेव दृढमूलं भवति । तदैव हि संघटनं संघटनम्, यदि तत्तद्धर्मरक्षणमेव मुख्यतेमं लक्ष्यम्; अन्यथा तु द्वाराण्येव बहूनि समुद्घाटयेरन्विघटनानाम् । महाभारते ह्यानुशासनिके पर्वणि स्पष्टमेवास्ति विवेचितमिदं, यत्, धर्मैकलक्ष्यतैव द्वारं स्वराज्यसिद्धेः, तद्विनाशद्वारमेव धर्मपराङ् मुखतेति । धर्मपराङ्मुखता हि केवलमात्मघातनाय एव नात्मरक्षणाय । इदमत्र महाभारतवाक्यं सर्वदा मनसि रक्षणीयम्—

न जातु कामान्न भयान्न लोभात्
धर्मं जह्याज्जीवितस्यापि हेतोः ।

सत्यमर्थशास्त्रमपि सर्वैरपि लक्ष्यीकर्तव्यमात्मसमुन्नतये । विदितमिदं सर्वेषाम्—यत्, अर्थशास्त्रमप्याचार्यचाणक्यादयो न केवलं ग्रन्थरूपेण, किन्तु सफलानुष्ठानतोऽपि प्राचारयन्पूर्वतने काल इति । इयान्विशेषः—यत्, धर्मशास्त्रविरोधे नार्थशास्त्रं चाणक्यादीनाम्, इदानीन्तनानान्तु तद्विपरीतम् । अयं भावः—सत्यं, चाणक्यादयः समासन्नर्थशास्त्रनिष्णाताः पूर्वतने काले, परन्तु, नेदं कदापि तेषामनुष्ठानपद आसीत्, यत्, धर्मशास्त्रस्याप्रधानं स्थानम्, अर्थशास्त्रस्य तु प्रधानं स्थानमिति ।

"अर्थशास्त्राद्धि बलवद्धर्मशास्त्रमिति स्थितिः । अर्थशास्त्रमपि समाजसमुन्नतिनिदानं मन्यमानोऽपि भगवान्याज्ञवल्क्याचार्यः, न केवलमामुष्मिकेषु, किन्त्वैहिकेष्वपि व्यवहारेषु, राजनीतौ, समाजसमुन्नतौ वा धर्मशास्त्रप्राधान्यमेव मुख्यमुपायमवगच्छति । न वयमप्यर्थशास्त्रं विना समाजसमुन्नतिरिति मन्महे । इदमेव वयमपि प्रती-

मः—यत्, न विनार्थशास्त्रं लोकयात्रैव निरुह्यत इति। परन्तु नेदं वयं योग्यं मन्यामहे—यत्, धर्मशास्त्रबाधनेनाप्यर्थशास्त्रप्रवर्तनम्।

प्रत्यक्षमिदं मोहम्मदादिदर्शिनाम्—यत्, न केवलं ते राजनियतिक्षेत्रे, सामाजिकसभासु, व्यवस्थापकसभासु च स्वीयधर्मबाधनेनाप्यर्थशास्त्रप्रवर्तनेन न व्यवहरन्ति; किन्तु, विपरीतमेव स्वीयधर्मश्रद्धाऽविघातेन। इदमेवात्र दुःखनिदानम्—यत्केवलं भारतीयाः स्वीयधर्मकथास्तदा तदा बहुविधा व्यवस्थापकसभादिषु परिवर्तनार्थमुपक्षिपन्ति।

धर्मशास्त्राणि हि व्यक्तिविशेषमेवाधिकुर्वन्ति, न समाजविशेषम्। न हि तत्र सभाकार्यनिर्वाहकसमितिविशेषसम्पादितानि सामाजिकानीव कार्याणि भगवदाराधनमातापितृभक्त्यादीनि धार्मिकाणि कार्याणि समादधते फललेशमप्युदासीनेषु व्यवस्यन्तरेषु। इदमेवात्र विवक्षितम्—यत्, सामाजिकानि कार्याणि दृष्टफलानि कथंचन परिवर्तनमर्हन्ति सामाजिकपरिस्थितिविशेषेण, न तु धार्मिकाणि कार्याणि। धर्मेषु शास्त्रमेकमेव मूलम्, श्रद्धा केवलं जीवितमिति नायं भारतीयानामेव राद्धान्तः, किन्तु विधर्मीयाणामपि। स्वधर्मेष्वन्धपरम्पराबुद्ध्या धर्मान्तरं प्रविष्टाः सर्व एव तत्रापि तामेव पश्यन्तो घटकुट्यमेव जाग्रति। सत्यमसूयापात्राणि मुहम्मदादयः, ये खलु उपस्थितायामपि विपदि कथंचन "स्वधर्मे निधनं श्रेयःपरधर्मो भयावहः" इति नीतिमेव समाद्रियन्ते। धार्मिकाणि हि कार्याणि प्रायेण जन्मान्तरोपभोग्यान्येव, न तदानीमेवोपभोग्यानीति धर्माधर्मपरिवर्त्तनं केवलं शब्दमात्रपरिवर्तनक्षमं, न फलपरिवर्तनक्षममिति, श्रद्धालवः सर्वेऽपि विना शास्त्रीयं गमकं धर्मपरिवर्तनेन, परिवर्तितधर्मानुष्ठापनेन वा मन्यामहे फलावसरे प्रतारिता एव भविष्यन्तीति। श्रुतिस्मृतीतिहासपुराणादिकं भारतीयानां कल्पद्रुम एवेति, श्रद्धालवः सर्वेऽपि शक्तावशक्तौ विपदि वा सत्यमुपकृता भविष्यन्ति, यदि

सत्संप्रदायागतविचारपद्धत्यापि शास्त्रमेव शरणमवलम्ब्यते ।

सन्ति हि बहुविधा अशक्तानापन्नान्वा अधिकुर्वन्तो महाभारतमनुस्मृत्यादिनिर्दिष्टा धर्मा इति नेदमवस्तुस्थितिकथनम् । परन्त्विदमेवात्र सूच्यते--यत्, व्यक्तिविशेष आपन्नमात्र इव न सर्वत्रापद्धर्माः प्रवर्तन्ते, न वा वैयक्तिकेषु धर्मानुष्ठानेषु आपन्नानापन्ननिर्णये समाजविशेषः सभाविशेषो वा प्रभुः; किन्तु, आपन्नमात्रे व्यक्तिविशेष एवापद्धर्माः प्रवर्तन्ते, तथा तत्तदापन्निर्णये तत्तद्व्यक्तय एव प्रभव इति ।

नेदं कैरपि विस्मर्तव्यम्—यत्, आपद्धर्मादिविचारप्रसङ्गेऽपि पूर्वाचार्याणां विचारपद्धतिरपि यदि संभवति, तर्हि नियतं सैव सांप्रतमवलम्बितुम् । सुधीरमिदं वक्तुमीश्महे—यत्, नैकोऽपि प्रश्न इदानीन्तनानां नूतनः, न वा नूतनं तेषामुत्तरमेकमपि सम्भवतीति, पूर्वाचार्यसमादृतविचारपद्धतिरेवात्र पर्याप्ता, न तु नूतनविचारपद्धतिरपि प्रवर्तनीयेति ।

भारतीया हि वयं धर्मशास्त्राणां संरक्षकपदमेव केवलमर्हामः, न तु स्वामिपदम् । इयमेव नीतिरत्रावलम्बनीया—यत्—

"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ" । उपस्थितास्वपि महतीषु विपत्तिषु श्रीमच्छंकरभगवत्पादभगवच्छ्रीरामानुजाचार्यश्रीमद्भगवन्मध्वाचार्यश्रीभगवद्वल्लभाचार्यादयोऽपरिवर्तनेनैव धर्मास्तांस्तान्प्रचारयामासुरिति नेदं कस्यापि तिरोहितम् ! सत्यम्, "धर्मज्ञसमयः प्रमाणमि"ति सन्दिग्धेषु विषयेषूपस्थितासु विपत्तिषु च धर्मज्ञा एव व्यवस्थापका इत्यस्त्यनुशासनमापस्तम्बाचार्यादीनाम्, परन्तु नेदं हठात् कतिपयाधर्मज्ञा असमालोच्य परिस्थितिं विपत्तिस्वरूपं च समाजानाम्, पूर्वापरसन्दर्भं च शास्त्राणां प्रभवः कर्तुम्, विना तत्तद्धर्माचार्याणां पण्डितानां च तत्तद्देशीयानां बहूनां सम्मेलनमिति, ब्राह्मणमहासम्मेलनमेकं काश्यां संघटनीय-

मिति बहूनामनुरोधात् आगामिन्याश्विनमासे तदिदं संघटनीयमिति निरणायि ।

इदमेवात्र महद्धैर्यस्थानम्—यत्, प्रारब्धेऽत्र कार्ये सर्वेऽपि धर्माचार्या अवलम्बं दास्यन्तीति । श्रीकाञ्चीकामकोटिपीठाधिपपूज्यपादजगद्गुरुश्रीशंकराचार्यपादाः, ये खल्विदानीं तीर्थयात्राप्रसङ्गेन धर्मप्रचारप्रसङ्गेन वेङ्कं क्षेत्रमधिवसन्ति, ते महामहोपाध्यायश्रीयुक्तानन्तकृष्णशास्त्रिणां प्रकृतमहासम्मेलकार्यसम्पादकानां प्रार्थनानुसारं न केवलं स्वीयान्तेवासिनां सर्वेषां स्वीयश्रीमुखाज्ञापत्रद्वारा प्रकृतमहासम्मेलने सर्वविधसाहाय्यदानार्थमाज्ञापयन्; किन्तु सार्धसहस्रपर्यन्तरूप्याणामनुग्रहेणापि कार्यक्षेत्रे प्रवर्तनेन सर्वानस्मान् प्रोत्साहयन्ति । यथावसरमिदमपि सूच्यते—यत् राजश्रीशशिशेखरेश्वररायमहोदयाः, ये खलु महासम्मेलनप्रस्तावक्षणमात्रे सहस्राधिकानां रूप्याणां वितरणेनोपकृतवन्तः, सत्यं ते धन्यवादार्हा इति । विश्वसिमो वयमन्येऽपि धर्माचार्या राजमहाराजादयो वैषयिकाश्च धर्माभिमानिनो तत्तत्सनातनधर्मसभाविशेषाश्च स्वस्वप्रतिनिधिप्रेषणेन समुचितसर्वविधसाहाय्योपदेशादिप्रदानेन च सफलयिष्यन्ति प्रकृतमहासम्मेलनकार्यमिति ।

परमोऽयमस्माकं विश्वासः—यत्, पण्डितप्रवरश्रीपञ्चाननतर्करत्नपादाः, महामहोपाध्यायपूज्यपादश्रीवामाचरणभट्टाचार्याः, महामहोपाध्यायश्रीलक्ष्मणशास्त्रिद्राविड़चरणाः, श्रीहृषीकेशबन्द्योपाध्याया, वङ्गीयब्राह्मणसभानिर्वाहकश्रीशरच्चन्द्रसांख्यवेदान्ततीर्थमहोदयादयो यत्र नेतारः, तत्र प्रकृते महासम्मेलने—

"यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीति मंतिर्मम ॥" इति भगवदनुशासनं ध्रुवमपरोक्षितं स्यात् ।

इदमेवात्रान्ववसरं सूच्यते -यत्, महासम्मेलनमिदं विवादास्प-

देषु प्रकृतिसमयोपयोगिसमस्याविशेषेषु समाजपरिस्थितिं शास्त्रर-त्नाभुभयं च समालोच्य वैयक्तिकभावपरित्यागेन सर्वेषामपि सना-तनधर्माभिमानिनां मतसमालोचनेन च कानपि समाजसमुन्नतिहेतू-नेव प्रस्तावानुपक्षेप्स्यतीति ।

महासम्मेलनेऽस्मिन् व्यवस्थापकपदेषु शास्त्रविचारकपदेषु ब्रा-ह्मणा एवाधिकरिष्यन्ति । दर्शकपदेषु पृष्ठपोषकपदेषु सहायकपदेषु च चत्वारोऽपि वर्णा अधिकरिष्यन्तीति यथोचितं सहयोगदानेन स-र्वेऽपि समाजा यथाशक्ति उपकुर्वन्त्विति प्रार्थ्यते ।

श्रीकाशीक्षेत्रं परमं पवित्रं महासम्मेलनस्थानम्, समयोऽपि महा-सम्मेलनस्य नवरात्रकाल एव स्यादिति, परमोऽयं विश्वासः—यत्, बहूनां धर्माचार्याणां तत्प्रतिनिधीनां पण्डितप्रवराणां च सहयोगोऽत्र नियतमेव भवितेति ।

नेदमस्माकमनुचितं सूचनम्—यत्, मन्त्रब्राह्मणोभयात्मकवेद-प्रामाण्यम्, सम्प्रदायागततत्तत्प्रामाणिकनिबन्धकारादृतस्मृतिपुरा-णेतिहासप्रामाण्यम्, किं बहुना, अष्टादशविद्यास्थानप्रामाण्यं ये खलु समाद्रियन्ते, तेषामेवात्र विचारकसमितौ प्रवेशो नान्येषां केषामपीति।

अन्ते पुनरिदमेवाशास्यते—यत् महासम्मेलनमिदं धर्माचार्याणां पण्डितप्रवराणां च शुभाशीर्वादेन शुभसंकल्पेन श्रीकाशीविश्वनाथा-नुग्रहेण च निर्वर्तितं सफलमेव स्यादिति शिवम् ।

---

॥ श्रीगुरुः शरणम् ॥

# आमन्त्रणम् ।

अयि माननीया भूदेवाः !

क्षणं दीयतां कृपयाऽवधानं सादरं क्रियमाणे निवेदने—

श्रुतिस्मृतीतिहासपुराणादिषु प्राचीनतमग्रन्थेषु च ब्राह्मणानां महिमाऽनितरसाधारणः क्रियासमभिहारेण निरूप्यमाणो दरीदृश्यते इत्यत्र नास्ति कस्यापि विप्रतिपत्तिसमुन्मेषः । अनादिकालमारभ्य भारतेवर्षे तेषां ब्राह्मणानां श्रैष्ठ्यमप्यसकृदनुभूयते स्मेत्येतदपि न परोक्षं प्रेक्षावताम् । परमिदानीं करालकालेयकालवशात्सर्वतस्त एव भूदेवा इतरेभ्योऽपि वर्णेभ्यो हीनतमां दशामनुभवन्तीत्यपि सर्वेषां नः प्रत्यक्षम् । ये ह्येकस्मिन् काले सर्वेषामुपर्यवर्तन्त येषां चरणरजोभिः स्वात्मानं पावयितुकामा महान्तो निजप्रतापवशीकृतजगत्त्रया अपि राजन्यगणाः सर्वदा तदाराधनपरायणा अवर्तन्त किं बहुना-जगद्गुरुभंगवान्नारायणो यदीयपादाघातमपि स्ववक्षोलङ्कारकारणं मेने । एवं प्रभावातिशयवतां तेषां ब्राह्मणानां सर्वतः समुपजायमानं परिभवमुपलभ्य कस्य नाम सचेतसश्चेतो विदीर्यमाणं न भवेत् । सम्प्रति हि पाश्चात्यशिक्षालोकालोकितेऽस्मिन्हि भारते वर्षे नवीनालोकप्रभावान्नवीनशिक्षिताः वावदूकाः पूजनीयान् ब्राह्मणान् सासूयं पश्यन्तो यथेच्छं विनिन्दन्तः सर्वविधाया भारतोन्नतेः प्रतिबन्धनिदानभूताः देशशत्रव इमे ब्राह्मणाः कण्ठे शिलां बद्ध्वा मध्येसमुद्रं निक्षेप्तव्या इत्युच्चैरुद्घोषयन्ति एभिरेव ब्राह्मणैः स्वार्थसाधनाय नानाविधा आचाराः समुपनिबद्धाः स्वोत्कर्षप्रतिपादकाश्च ग्रन्थाः प्रणीता इति च प्रमाणयुक्तिशून्यं किमपि किमपि स्वैरं व्यवहरन्ति । कुत एवंविधानां प्रलापानां समुदय इति चिन्तायामेतादृशस्य दोषजातस्य मूलकारणं ब्राह्मणानामौदासीन्यमेवेति सुदृढोऽस्त्यस्माकं विश्वासः ।

यदि नाम ब्राह्मणाः स्वकार्यतत्परा अभविष्यंस्तर्हि नैतादृशी दुर्दशा भारतवर्षस्य कदाप्यभविष्यदिति भूदेवाः साञ्जलिबन्धं विनिवेद्यन्ते-यन्नायं समय उपेक्षाया उत्तिष्ठत जाग्रत दावानलज्वालामालाकुलितं वनमिवेदं भारतं वर्षं सर्वतः पाषण्डैर्नास्तिकैर्गुरुमातृपितृसतीधर्म-द्रोहिभिः पापैराक्रान्तं क्रमेणाऽधोगतिमुपगच्छत्कष्टां दशामनुभवतीति किं न विदितं तत्रभवतां श्रीमताम् । सम्प्रति हि जातिभेदविनाशकमण्डलमेकतोऽनुवर्तमानाया जातिमर्यादाया विध्वंसाय सर्वात्मना चेष्टते । अपरतश्चार्यसमाजो म्लेच्छानपि स्वधर्मे दीक्षयित्वा हिन्दुसंख्यां वर्धयितुं कृतसन्नाहो हिन्दुजातिं निर्मूलां कर्तुं प्रयतते । तथान्येऽपि नेतारः सजग्धिसपीतिप्रचारणाय कृतावतारा आहारादि-नियमशास्त्राणि सर्वथोन्मूलयितुं कृतपरिकरास्तथाऽऽघातं कुर्वन्ति येन शीघ्रमेव सनातनो धर्मः नामशेषमुपयास्यतीत्यत्र नास्त्यसम्भावना । सर्वतः प्रसृतेयं वैदेशिकी शिक्षा प्रतिदिनं सनातनधर्मविरोधिनः समुत्पादयन्ती किं नाम न कुर्यात् । यत् वृद्धाः बहोः कालात् पूर्वमिदमकथयन्-भारतवर्षस्य सर्वनाशनिदानं त्रिविधमेवेति तदक्षरशो यथार्थतामवगाहते-तत्र प्रथमं आङ्गलविद्याशालाः द्वितीयं वैदेशिकौषधालयः, तृतीयं बाष्पयानम् । परन्तु सर्वतः प्रधानतमं विनाशसाधनमाङ्गलविद्याशालाः आसु हि प्रत्यहं कोमलमतयो बाला बाल्यादारभ्यैव सनातनधर्मद्रुममूलकुठाराघातस्वरूपैः शिक्षकैर्नानाविधप्रलोभनादिप्रदर्शनपूर्वकं प्राचीनार्यपथाद्भ्रंशकैर्दुरुपदेशैर्दुर्ग्रन्थाध्यापनैः शिक्ष्यन्ते येषु हि ग्रन्थेषु स्वकपोलकल्पनाप्रसूनेतिहासानुसारेण वेदग्रन्थेष्वेव प्रथममप्रामाण्यबुद्धिराधीयते बालानाम् । ये नाम वेदा आस्तिकैर्महताऽऽदरेणात्यन्तं प्रमाणतया च मूर्धभिर्ध्रियन्ते ते केवलं भारतवर्षीयाणां प्राचीनानां कृषीवलानां गीतकान्येवेति प्रमाणाभासैर्व्यवस्थाप्यते । यदा वेदानामेवेदृशी गतिस्तदा कैव कथा वेदानुपजीव्यप्रमाणभावमश्नुवतां स्मृतीतिहासपुराणादिग्रन्थानां प्रा-

माणयं । स्पष्टमेवोद्घोष्यते पुराणानि मैथालोजीति । अपरिपक्वमनसो-ऽनाघ्रातास्मदीयग्रन्थास्तेषां युक्त्याभासानाकर्ण्य तद्वचनेष्वेव कृतादरा वेदादिधर्मशास्त्राणि सर्वथा दूरत एवोज्झित्वा तिष्ठन्मूत्राः सनातनधर्मपरायणान् दृष्ट्वा प्रज्वलन्ति किं वा लिखामः कष्टां दशामाविष्टा धार्मिका जना अमीभिर्नव्यशिक्षितैर्विद्यार्थिभिः । ते च शिक्षिताः विविधापेयाभक्ष्यपानभक्षणानि कुर्वाणास्तेनैव भारतवर्षस्य समुन्नतिं साधयितुमीहन्ते । ब्रुवते च यावदस्पृश्यपरिवर्जनं भारतान्नापगच्छेन्न तावद्भारतीयानां हिन्दूनां बलं वर्धेत । हिन्दूजनसंख्याह्रासश्च प्रत्यहं भवन्न पतितपरावर्तनमन्तरा कथमपि समाधातुं शक्यः । पतितानामस्पृश्यानां चोपेक्षायामेते खृष्टीयैर्यवनैर्वा स्वमतं ग्राहिता भवेयु स्ततश्चास्मदीयानां संख्या क्रमेणापचीयमाना सती केनचित्कालेन नामशेषतामुपयास्यतीत्यवश्यमेव । संग्रह एषां कर्तव्य इति ब्रुवाणास्तत्र तत्र सभासम्मेलनपूर्वकं सर्वान्स्वस्वजातौ प्रवेशयन्ति । एतदांगलशिक्षाया वैभवम् यन्माहात्म्येन वैदेशिकपण्यानां प्रत्यहमधिकाधिकतया प्रचारः समुपजायते तदर्थमेव वैदेशिकैर्विद्याशालाः संस्थापिताः । प्राचीनशिक्षायां प्रचारितायां के नाम तच्छिक्षाशिक्षितास्तदीयं वस्तुजातं क्रेष्यन्ति । सर्वतो वितीर्यतां दृष्टिः के नाम संस्कृतज्ञा अद्य यावत्प्रत्यहं वैदेशिकवस्तुभिरेव व्यवहरमाणा वर्तन्ते नव्यशिक्षितेष्वेवैतद्दरीदृश्यते यद्भारतवर्षे सुलभमपि दन्तधावनकाष्ठं पवित्रं मुखशुद्धिकरं दोषानापादकं विनामूल्यं लभ्यमपि परित्यज्य विदेशनिर्मितमपवित्रं चूर्णं गर्दभादिरोमसंघट्टितमस्पृश्यास्थिनिर्मितं दन्तधावनद्रव्यं मूल्येन क्रीत्वा मुखप्रक्षालनादिकं प्रतिदिनमाचरन्ति । इदमेकमुदाहरणमुपन्यस्तम् । एवमेव सर्वाणि कार्याणि तेषां वैदेशिकवस्तुप्रधानानि भवन्ति । दृश्यताम्—प्रतिसंवत्सरमसंख्या धनकोटयो वैदेशिकधूम्रपानेन भस्मीक्रियन्ते एवमपव्यये प्रचलिते भारतवर्षस्य दारिद्र्यं न कथं भवेत् । एतदस्या नवीनशिक्षाया एव फलम् । एवंविधां

दुरवस्थामनुभवन्तोऽपि विमूढाः न तां शिक्षां परित्यक्तुमिच्छन्ति । सर्वत्र बलात्कारेणापि तस्याः प्रचाराय चेष्टन्ते—वदन्ति च यावन्नियमेन बलात्कारेणापि वा शिक्षाया विस्तारो न स्यात्तावदस्माकमुन्नतिर्न भवेदिति । एतच्छिक्षयैव समुत्पन्ना व्यवहाराजीविनो धर्माधिकरणे निःशंकं वादिप्रतिवादिनां सर्वस्वं विनाश्य तान्मलमल्लकशेषानापाद्य स्वयं यथेच्छं सुखं भुञ्जाना वैदेशिकापेयाभक्ष्यवस्तुक्रयेण तेषामप्युदरदरीं पूरयन्ति । वैदेशिकवस्तूनां विक्रयादिनैव खलु वैदेशिकामहतीं सम्पदं प्राप्ताः । तस्या अभिवृद्ध्यर्थमेव विद्याशालास्थापनम् । विद्याध्यापनेन खलु क्रेतारः सज्जीक्रियन्ते । अत्रत्यानि वस्तून्युज्झित्वा देशान्तरीयाण्येव जिघृक्षन्ति । एवं रीत्याऽस्मदीयसर्वस्वस्याऽनया शिक्षया विनाशः कृतः । इति महतीदानीमापत्समुपस्थिता । एतस्याः प्रतीकाराय सर्वैर्ब्राह्मणैर्यावन्न चेष्टिष्यते तावन्न कथमपि भारतवर्षस्याऽस्वास्थ्यं व्यपैष्यति । यवनसाम्राज्यकाले यवनमहीपतयः नानाविधैरत्याचारैः प्रजाः पीडयन्तोऽपि बाह्यशरीरेष्वेवाघातमकुर्वन् । मानसानि तु प्रजाजनानां तदा विकृतानि नाभूवन् इति बलात्कारे जातेऽपि धर्मपीडायामुपस्थितायां सुखेन प्राणानपि परित्यक्तुं सन्नद्धा अवर्तन्त । सम्प्रति हि तथाविधबलात्कारादीनामभावेऽपि कुशिक्षायाः प्राचुर्यमप्रतिहतं प्रवर्तमानं सर्वेषां मनांसि कलुषितान्यकरोत् इति बलात्कारं विनैव स्वभावत एवाऽधर्मे रुचिः प्रवृद्धा । तया येऽस्माकं सहायभूता इष्टतमाश्चासन् त एवाऽद्यास्माकं महान्तमनर्थमापादयन्ति । इति हेतोः सर्वथा अस्याः कुशिक्षायाः सर्वतो निरसनमेव प्रथमं काम्यम् । तच्चाऽस्मदीयशिक्षाप्रचारं विना न भविष्यति । स च ब्राह्मणानामेवाधीनः । चिराद्ब्राह्मणा एव शिक्षादानेऽधिकृताः । उपदेष्टृत्वं हि परम्परानुगतो धर्मः । तत्पुनस्तैरवलम्बनीयम् । ये कुमार्गं प्रतिपन्नास्तेषां प्रतिबोधनमन्तरा नान्यः कश्चिदुपायो वर्तते, प्रतिनगरं प्रतिग्रामं सर्वत्रैव वेदशास्त्रपाठशालास्थाप-

नेन बालकाः शिक्षणीयाः युवानश्च तत्र तत्र सभासम्मेलनादिना शास्त्रतत्त्वं सम्यक् प्रतिबोध्य सन्मार्गं प्रापणीया इत्यादि कार्यं तत्रभवतां ब्राह्मणानां प्रधानतया कर्तव्यम् । एतच्च देशकल्याणकामिनां ब्राह्मणानां तत्रभवतां सर्वेषां पण्डितानां सम्मेलनमन्तरा नैव भवितुमर्हतीति वङ्गीयब्राह्मणसभयाऽऽगामिनि आश्विने मासे श्रीविश्वनाथनगर्यामस्यां वाराणस्यां भारतवर्षीयाणां निखिलानां ब्राह्मणानां सम्मेलनं कर्तव्यतया निश्चितम् । यच्चेदानीमत्यन्तमुपयुक्तम् । यस्यां सम्प्रति विवादविषयीभूतानां विधवाविवाहास्पृश्यास्पर्शनपतितपरावर्त्तनादीनां विद्वद्भिर्विचारः करिष्यते । यद्यपि व्यतीतेष्वधिवेशनेषु सर्वेषां विषयाणां माननीयैस्तत्तत्सभापतिभिरपरैश्च पण्डितैर्निर्णयः कृत एव तथापि सर्वदेशीयानां विदुषामैकमत्येन विरोधिमतविचारपूर्वकं निर्णयः कर्तव्य इति पूज्यपादमाननीयपण्डितवरपञ्चाननतर्करत्नमहोदयैरित्थं सभा काश्यां कर्तव्यत्वेन निर्णीता । तदर्थं भूदेवाः सादरं समभ्यर्थ्यन्ते यच्छ्रीमन्तो देशस्य साम्प्रतिकीं परिस्थितिं सम्यगवलोक्य विमृश्य च कर्तव्यजातमस्याः सभायाः साहायकं विरचयन्तु । युष्माकमवलम्बेनैव सर्वेषामस्माकं का ं सेत्स्यति अतो यद्यत्कर्तव्यजातं तत्सर्वं समुपदिशन्तु । तदर्थमेव सम्मेलनाभिधमिदं मासिकं पत्रं प्रकटीक्रियते वङ्गीयब्राह्मणसभाया विचारणीयविषयानवलम्ब्य शास्त्रयुक्तितर्कानुभवादिभिः प्रबन्धान् विरचय्य प्रहिण्वन्तु येषामवलोकनेन लोकानां प्रकृतशास्त्रतत्त्वं सम्यग् बुद्धिमारोहेत् । व्यामोहश्चेतसो व्यपगच्छेत् इति वङ्गीयब्राह्मणसभया सभापतिमहोदयैश्च क्रियमाणं कार्यं मासिकपत्रप्रवर्तनं च सर्वथा अभिनन्दामः । प्रार्थयामश्च श्रीजगदीश्वरो ब्राह्मणानां विदुषामस्मिन् कार्ये उत्साहप्रदानपूर्वकं सद्बुद्धिं जनयतु इति । यदा यदा सङ्कटावस्था समुत्पन्ना तदा तदा भगवानवतीर्य स्वश्वेषां दुःखानि निवारयाम्बभूव प्रतिज्ञातं च तेनैव जगदीश्वरेण

गीतायां यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् । परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युग इति । तदनुसारेणावश्यमेव श्रीभगवान् धर्मं सनातनं रक्षिष्यतीत्यस्ति महान् विश्वासः । तथापि तदाभिमुख्यसम्पादनार्थमपि ब्राह्मणैः स्वकर्तव्यन्त्ववश्यं पालनीयमेव तत्परित्यागे ते नियतमपराधिनो भविष्यन्ति । सर्वेषु गात्रेषु शिरः प्रधानमिति शिरसि विकृतिमुपगते सर्वाण्यङ्गानि यथावदवस्थितान्यपि न कार्यक्षमाणि भवन्ति न वा सुखमनुभवन्ति तद्वदेव वर्णानां ब्राह्मणो गुरुरिति श्रेष्ठत्वात्तस्मिन् स्वकर्तव्यं विहाय मार्गान्तरं प्रविशति इतरे वर्णा न कदापि कार्यक्षमास्सन्तो निर्बाधं सुखमनुभवितुं समर्था भविष्यन्ति । अतः पूर्वं येन कारणेन तेषां श्रैष्ठ्यं सर्वत्र परमादरश्च समभूत्तदेव धर्मपरायणत्वं चेदेतस्यामप्यवस्थायामवलम्ब्येत नियतमेव सर्वत्र समादरः पूर्ववदेव स्याद् इत्यत्र नास्ति सन्देहलेशोऽपि । यदीतरे वर्णाः स्वोदरदरीपूर्तये यत् प्रयत्नजातं कुर्वन्ति तदेवैतैरप्यवलम्बिष्यते तर्हि कस्तेभ्य एषां विशेषः स्यात् तेषामवनत्यैव भारतस्याप्यवनतिरिदानीं समुत्पन्नेति पूर्वावस्थामनुभवितुं पुनर्ब्राह्मणधर्मस्य समुज्जीवनं सर्वैरेव कर्तव्य मतो विनयपुरस्सरं प्रार्थयामो यदिदानीमपि न सर्वात्मना ब्राह्मणानां प्राधान्यं विलुप्तं तद्यावत्सर्वात्मना विनाशो न भवति ततः पूर्वमेव स्वस्मिन् वर्तमानां न्यूनतां सम्यग्विनिर्णीय तस्या निरासपूर्वकं तदेव ब्राह्मणत्वं पुनरप्यभिव्यक्तं यथास्यात्तथा प्रयत्यताम् । विस्फुलिङ्गादिरूपेण वर्तमानोऽपि वह्निः क्रमेण वर्द्धमानः सन् यथा सर्वं दग्धुं प्रकाशयितुं वा समर्थस्तद्वदेव सम्प्रति ब्राह्मण्यं पूर्ववदनभिव्यक्तमपि क्रमेण धर्मानुष्ठानादिना तादृशं सामर्थ्यमासादयिष्यति इति उपेक्षामौदासीन्यमालस्य मसूयां मात्सर्यं च समुत्सृज्य सम्मिलन्तु बर्द्धयन्तु च ब्राह्मणसम्पदमिति ।

॥ श्रीरामः शरणम् ॥

# काशीसनातनधर्म्मसभायां सभापते र्भाषणम् ।(१)

वन्दे गिरीशमतिविभ्रमहेतुभूतं
भूतादिवासमसमेक्षणकान्तकान्तम् ।
निर्मृष्टभूतिविधुसोदरयोपगूढं
पञ्चेषुविग्रहकृतं हरिमार्चनीयम् ॥ १ ॥ (२)

श्रीमन्तः सदस्यमहोदयाः मन्दोद्भवसन्तापपीडिता भवन्तः, क्षणविश्रान्तये कथामेकामाकर्णयन्तु; ननु किमुच्यते—

कोऽयं मन्दः कथं च तदुद्भवः सन्ताप इति ? श्रूयतां श्रूयताम्, मन्दो नाम शनैश्चरः तस्य यत उद्भवः स भगवानंशुमाली तत्स-

---

(१) प्रबन्धोऽयं व्यतीतायां वैशाखशुक्लपञ्चम्यां मङ्गलवासरे काश्यां टौनहाल स्थाने काशीसनातनधर्मसभायां सभापति-श्रीमत्पञ्चानन तर्करत्न भट्टाचार्यमहाशयेन पठितः ।

(२) टीका । शिवपक्षे—

गिरीशम् अतिविभ्रमहेतुभूनमितिच्छेदः । असमेक्षणकः अयुग्मनेत्रः अन्तकान्तः मृत्युञ्जयः । विधुर्विष्णुः तत्सोदरा योगमाया । निर्मृष्टभूतीति उपगूहनक्रियाविशेषणम । भूतिर्भस्म । विग्रहकृतं विरोधकरं शरीरवियोजकं वा । हरिमार्चनीयम्—हरिणा मया लक्ष्म्या च पूजनीयम् ।

हरिपक्षे—

मोहिनीमूर्तिः शिवं मोहयामासेति गिरीशेत्याद्येकपदेनैकपादसमाप्तिः । कान्त कान्तिः अनुपमम् ईक्षणकान्तं यस्य अथ च कान्तः कमनीयः । भूतिः सम्पत् विधुश्चन्द्रः तत्सोदरा लक्ष्मीः । निर्मृष्टभूतीति सोदराविशेषणम् । विग्रहकृतं पितरं प्रद्युम्नजनकत्वात् । हरिमितिछेदः । आर्चनीयम सम्यक् पूज्यम् ।

न्तापस्त्वधुनाऽनुभूयत एव सर्वैः, यत एवं नक्तंमुखे सभाप्रवृत्तिः । प्रसिद्धा च श्रमहारिणी जरतां कथा भवति । तदुच्यतेऽसौ कथा । जरंश्चाहं वाचकः । क्षन्तव्योऽस्मि दोषज्ञैरित्यञ्जलिबन्धः ।

पितृभ्यां रहिता बाल्ये पितृव्यप्रतिपालिताः ।
चत्वारो भ्रातरोऽभूवन् सदा कर्मिष्ठ मानिनः ॥ १ ॥
एकदा ग्रीष्ममध्याह्ने निद्रानन्तरमुत्थिताः ।
तेऽन्योन्यं मन्त्रयामासुः किमद्य करवामहै ॥ २ ॥
क्षेत्रकर्मेक्षणं कश्चिद्गृहकर्माऽपरोऽवदत् ।
उद्यानालोकनं चान्य एवं भिन्नमतास्त्रयः ॥ ३ ॥
तूष्णीं स्थितं तदा ज्येष्ठं वीक्ष्य ते विनयान्विताः ।
ऊचुः किमास्यते तूष्णीमार्य स्वमतमुच्यताम् ॥ ४ ॥
ज्येष्ठः पेचकगम्भीरमुखमुन्नमयंस्तदा ।
आददे वचनं कृच्छ्राद्बुद्धिभारश्रमातुरः ॥ ५ ॥
भ्रातरो हन्त वो बुद्धिर्वैपरीत्यमुपधावति ।
तेन दूनोऽऽस्मि नितरां मा कुध्वं मतभिन्नताम् ॥ ६ ॥
एकैकं कार्यमुक्तं यत्तदेकैकस्य युज्यते ।
न तत्र सङ्घबन्धोऽस्ति तदभावे तु नैकता ॥ ७ ॥
एकतापरिहीणानामस्ति नाभ्युदयः क्वचित् ।
दृष्टान्तो भारतं वर्षं किं न प्रत्यक्षमीक्ष्यते ॥ ८ ॥
मिलितानां चतुर्णां नः कार्यमेकं तु विद्यते ।
आवश्यकं तदर्थन्तु कालक्षेपो न युज्यते ॥ ९ ॥
'श्वः कार्यमद्य कर्तव्यं पूर्वाह्णे चापराह्णिकम्' ।
इति शास्त्रीयसिद्धान्तो नोपेक्ष्यो भूतिमिच्छता ॥१०॥
सुस्थदेहः शयानोऽयं पितृव्यो यद्यपीक्ष्यते ।
मरिष्यत्येव कस्मिंश्चित् काले नास्त्यत्र संशयः ॥११॥
तदा कर्मान्तरव्यग्रा वयं चेन्न क्षमेमहि ।

गङ्गागर्भमिमं नेतुं किं स्यात् कष्टतरं ततः ॥ १२ ॥
तस्मादस्माभिरद्यैव कर्मान्तरविवर्जितैः ।
पालकस्य पितृव्यस्य गङ्गायात्रा विधीयताम् ॥ १३ ॥
चतुर्भिर्धारणीयं च खट्वापादचतुष्टयम् ।
ऐकमत्यमेवं सुसम्बद्धसङ्घानां नः प्रथिष्यते ॥ १४ ॥
साधु साध्विति शंसन्तो भ्रातरो ज्यायसोऽनुगाः ।
गङ्गायात्रां पितृव्यस्य स्वस्थस्य व्यदधुस्तदा ॥ १५ ॥
पितृव्यो भ्रातृजानां तज्ज्ञात्वा कर्मविडम्बितम् ।
अवरूढः स्वयं तल्पाद् ददौ गण्डे चपेटिकाम् ॥ १६ ॥

इयं हि पद्यमयी कथा "काज ना थाकिले खुडार गङ्गा यात्रा" इत्याकारकवङ्गवाङ्मयाभाणकस्य व्याख्यानरूपा । साम्प्रतं कथैषाऽऽत्मनः कल्पनात्मतामपहाय सत्यमूर्तिः सर्वत्र भारतप्रदेशेषूपलभ्यते । अभिनीयते कर्मान्तरप्रवृत्तिविधुरैर्भ्रातृव्यैरपरिच्छिन्नायुषः सदाचारपितृव्यस्य गङ्गायात्रोल्लासः; तथाहि लब्धं स्वराज्यसौधप्रथमसोपानं यस्य व्यवस्थापरिषदिति व्यपदेशानुवादः, तत्र च सदस्याः प्रजाक्लेशावह-करह्रासादावावश्यके कर्मणि प्रस्तूयमाने विफलप्रयासाः प्रायेण भवन्ति राजपक्षप्राबल्यात् । तदिदानीं परिहृतराजपक्षसङ्घर्षाः केचन स्वसमाजभङ्गाय सदस्यताशक्तिं प्रकटयन्ति । राजपक्षस्य तत्राविरोधात् सनातनधर्मानुरक्तानां व्यवस्थापरिषदि न्यूनत्वाच्च विजयमाना अपि दृश्यन्ते । विजयोत्साहदृप्ताश्च नवं नवं राजविधिं प्रवर्तयितुं समुत्सहन्ते । अयमेव पितृव्यस्य गङ्गायात्राभिनयः । चित्रीयामहे च वयमनेन स्वराज्यकामानां तेषां स्वावलम्बशाखाच्छेदनप्रयासप्रकर्षेण, यतो मास्तु शास्त्रश्रद्धा, मा तावदास्तां धर्मविश्वासः, वैदेशिकराजविधिनिगडबन्धादस्तितु मुमुक्षा तेषामिति तत एव श्रूयते । समुद्घोषयन्ति हि ते साटोपमन्यतन्त्रतासमुच्छेदप्रयासभूमानमात्मनः, प्रयतन्ते च संयमयितुं कठोरतरतनिगडबन्ध-

परम्परया समाजसर्वाङ्गाणि, इत्युन्मत्तचेष्टितमिव भूताविष्टशीलितमिव मायाविडम्बितमिव तत्कृत्यं दरीदृश्यते । हा देशप्रातिभुवो भद्रमानिनो भीषणपुरुषाः ! एतदपि शक्यते नावगन्तुमायुष्मद्भिः, सामान्यतो भूमा हि राजविधानाम् पारतन्त्र्यकवलितदीनप्रजानामपहरति प्राणयात्रिकद्राविणमात्राम्, मुष्णाति पौरुषम्, विलुम्पति सत्वम्, अपहरति च शीलमिति ? तस्माद् युक्तःखलु येषां तद्बाधाय प्रयासः, त एव धर्मानुबन्धविरोधिनीं राजविधिपरम्परामधुना प्रवर्तयन्तः प्रगल्भन्ते श्रीमन्तः । भवति तावदतीतशताब्दीकप्रवृत्तिः सहमरणप्रतिषेधपरो दण्डविधिरधुनाऽपि समुद्वेजयति धर्मिष्ठान् । अधर्म्ये वर्त्मनि च प्रसभं प्रवर्तयति पुण्यशीलाः साध्वीरवैधात्मघातसम्पादनेन । एवं दुःस्थितिं पश्यन्तोऽपि परिषदग्रेसरा राजपुरुषाः यत् सर्वंसहानां धार्मिकप्रजानामन्तः सन्तापनपटीयांसं धर्म्यविधिभङ्गदहनमुद्वमन्तो नवनवान् राजविधीन् प्रवर्तयितुमुत्सहन्तेऽनुत्सहमाना अपि वा अप्रतिषेधन्यायेनानुमन्यन्ते तत्परिणतिं च नाकलयन्ति तदेतन्महद्दैशसमापतितम् । भुजगदष्टाङ्गुलीयन्यायेन समाजपरित्यक्ता ब्रह्मद्विषः सजातीयाः काममकिञ्चित्करत्वबुद्ध्या समुपेक्षितनिस्सारविरुद्धवचसः पूर्वमासन् अधुना तु ते वा तादृशावा व्यवस्थापरिषदोपादेय वचनतया नोपेक्षितुं युज्यन्ते अतस्तत्कर्मणि वचासि च शास्त्रोपपत्तिव्याघातः प्रदर्श्यते—

तत्रैकं संवेशवयोनियन्त्रणाय राजविधिप्रवर्तनम् । तच्च 'ऋतौ भार्यामुपेयात्' 'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा' इति च स्मृत्या 'ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ।' इति पराशरेण च विहितं कर्म बाधमानमधर्मं साधयति 'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति' इति याज्ञवल्क्यवचनात् । न केवलमिदमुक्तालौकिकानर्थाय, किन्तर्हि लौकिकानर्थायापि । तथा

हि वैरप्रतीकारायान्यैरुद्भावितेऽलीकविवादपदे कुलमानभङ्गहेतुरङ्ग-नाङ्गपरीक्षणमपि नियतं सम्भाव्यते । इदन्तु समाजसंस्कारपरीक्षा-मात्रम् । प्रवर्तयिष्यमाणा राजविधयस्तु इतोऽपि भीतिहेतवो धार्मि-काणाम् । तेष्वेकं "शार्दाबिल" इति प्रख्यातं राजविध्यर्थमुपस्थापि-तं पत्रमनुशासनतयाजिघृक्षितमुदीक्ष्यते सोत्कण्ठमस्माभिः । उत्क-ण्ठाहेतुश्च धर्मविलोपाशङ्का । अस्ति हि तस्मिन् पत्रे स्त्रीपुंसयोर्वि-वाहवयःपरिच्छेदः न तु तत्र रजः प्रवृत्तिविचारः क्रियते, कन्या र-जस्वला भवतु मा वा, निर्दिष्टवयसः पूर्वं तस्या जातोऽपि विवाहो न सेत्स्यति विवोढुः कन्यादातुश्च कारारोधान्तो दण्डश्च भावी, सत्येवं राजविधिप्रतिपालने रजस्वलाविवाहो घटिष्यते, स चाध-र्माय । तदुक्तम्–संवर्त्तेन—

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ अत्रिकश्यपाभ्यां च—
पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥ इति ।

राजविधिलङ्घने च कारावासः यत्राभोज्यभोजनापेयपानाद्यधर्मो जिजीविषुणा दुर्वारः । नन्वप्राप्तषोड़शवर्षायामाहितो गर्भो विपद्यते स्वल्पायुषो दुर्बलेन्द्रियस्य वा शरीरिणः प्रसवाय वा भवति प्रसूतिश्च रोगार्त्ता चिराय भवति शिशुमरणं बालवैधव्यमपुष्पितासङ्गश्च–तदे-तदनर्थवारणायायं युक्तो राजविधिरिति चेद्भ्रान्ता यूयम् । नहि शास्त्र-विश्वासमन्तरेण मनो नियन्तुं शक्यते मनसश्चानियमने राजानुशा-सनशतमपि न मनसिजवेगमभिरोद्धुमीष्टे । तदनिरोधे यूरोपादि-

देश इव कुमारीगर्भसम्भवः कथं वार्येत । विलोक्यतां प्रतीच्यशासनपत्री कुमारीव्यभिचारवार्ता बहुशो लक्ष्यते या साम्प्रतमपि भारते प्रायेण दुर्लभा । तदेतत्पातकं देशान्तरसंस्कारविदग्धमभिकामयन्ते धर्महीनानामनुचिकीर्षापिशाचिकोपगूढा व्यभिचारिण्यो बुद्धयः । शिशुमरणं बालवैधव्यमपुष्पितासङ्गश्चेति यदुच्यते तत्र शास्त्रप्रतिकूलाचरणमेव हेतुः, न तु बाल्यविवाहः, तथात्वे तु यावत् कलिकाताप्रदेशे ब्राह्मणकायस्थादीनां वरपणप्राचुर्यादिना बाल्यविवाहव्याघातो राजविधिमन्तरेणैव जातः, तावत् स्त्रीरोगशिशुमरणयोरतिरेकः प्रत्यक्षमीक्ष्यमाणः कथमपह्नूयेत, धर्महीनो हि पुरुषो भोगलालसाकुलो वैधमुपगमं न मनस्येव करोति । न चातिक्रान्तशास्त्रविधेरधिकारिणः कल्याणं भवति । म्लेच्छादयस्तु अनधिकारान्न शास्त्रातिक्रमदोषं भजन्ते अनुपनीता इव सन्ध्याननुष्ठानात् । पुंसामायुषो ह्रासश्च स्त्रीभ्यो विशिष्टः वेदाभ्यासवर्जनस्याधिकारिपरत्वात् आचारवर्जनान्नदोषयोः स्त्रीषु पुरुषापेक्षया न्यूनत्वाच्च । उक्तं हि मनुना—

> अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
> आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥

एतन्मूलकेनायुर्ह्रासेन पुंसः, भवति बालवैधव्यमङ्गनानां तत्प्रतिकाराय चाचारादिपालनं शास्त्रेण यदुपदिश्यते तदर्थं करणीये प्रयत्ने मन्दादरा शिक्षाविकाराद्बाल्यविवाहरोधाय प्रवर्तन्ते त एव पुनः स्वैरिताप्रधानसाहित्यप्रवर्तनेन किशोराणामपि हृदये परकीयालिप्सां जनयन्ति तथा किशोरीणामपि दुर्लालसामिति विषमवृत्तयः खलु धर्मद्वेष्टारः ।

'व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुया'दित्यादिशास्त्रनिवारितवृत्तीनामपुष्पितासङ्गो नैव भवति । असत्साहित्यालापवर्जनं ब्रह्मचर्यं च शास्त्रोपदिष्टम् । तथा च शास्त्रविश्वासपूतचारित्राणां नैव दर्शितानर्थाः सम्भवन्ति, तस्मात् शास्त्रविश्वासजननार्थं यत्नो विधेयः, न तु राजविधिप्रवर्त्तनार्थम् । समुद्रयात्रादिकं च अन्नदोषहेतुत्वा-

त् भोगप्रधानजनतासंसर्गेण चारित्रभ्रंशस्यप्रायेण साधकत्वाच्च हेय-मेव । एतेन सर्वेऽप्यनाचारा वर्जनीयत्वेन व्याख्याताः ।

एवमाशयवतां भवति धार्मिकाणां दिशि दिशि प्रतिवादगोष्ठी किन्तु धर्मानुकूलवार्तापत्रिकाणां नवयुगे ऽस्मिन्नल्पतया ढक्कानिर्घोषेण प्रतिवादकोलाहलोऽयं न खलु दंध्वन्यते । निर्बाधपुरुषसङ्गति-कामिनीनां रमणीनां हि प्रेयानसौ बाल्यविवाहप्रतिरोधी समयबन्धः। अनतिक्रान्ताङ्गुलिपर्वाणोऽपि ताःसमवेताः सङ्ख्याल्पतानिह्नुतये सङ्ख्याधिक्यमसत्यमपि कपटेन सत्यापयन्त्यः तत्पक्षं समर्थयन्ते । अवरोधमङ्गलाः परः कोटयश्च कुलाङ्गना नैवं समवयन्ति कुतस्तासामभिमतपक्षसमर्थनप्रयत्नः । वैदेशिकं राजकुलमनभिज्ञं हि धार्मि-कस्त्रीपुंसहृदयानाम् ।

इमामवस्थां धर्मविरोधिराजविधिप्रवर्तनानुकूलामाकलय्यतर्जन-गर्जनमर्दनकुर्दनकुशलानल्पीयसोऽपि स्वपक्षपातिनः स्त्रीपुंसान् सन्नाह्य प्रतीपाचारा हि सदस्यपुरुषा राजपरिषदं बुबोधयिषन्ति बहुसम्मतोऽयं विधिरिति ।

अलीकवादादभीरवो हि व्यवहाराजीवेषु यशस्विनो भवन्तीति लोकवादः । तेष्वपि स्थेये स्वपक्षविबोधनकुशलाः श्रेयांसो भवन्ति । ईदृशानां च धर्मद्विषां प्रयत्नो रजोनिमीलिताक्षराजपक्षमुत्पथाय प्रवर्तयन्ति । तदिदानीं धार्मिकैस्तत्प्रतिरोधाय विशेषेण यतितव्यमन्यथा तेषां प्राणेभ्योऽपि गरीयसो धर्मस्य महती ग्लानिर्भविष्यति । वचनं च नवीनशिक्षाविकृतमतीनां तेषां खण्डनीयम् । तत्रासन्नानर्थप्रसवाय परिकल्पितराजविधानपत्रान्तरं सर्वतो भीषणं येन द्विजातीनामपि विवाहबन्धनं छेत्स्यते—

"न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यत" इति ।

"सकृदंशो निपतति सकृत् कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत्" इति महाजनपरि-

गृहीतमन्वादिवचनं बाधमानमपि नारदवचनमुपक्रम्यस्वमतमर्माभिः समर्थ्यते । यथाहि--मूर्खौ भिषगश्वचिकित्साप्रकरणीयं कर्णौ छित्त्वा कटिं दहेदिति विधानं मानवे प्रयुञ्जानो धिक्कृतश्चोपहास्यश्च भवति लोके, विवाहबन्धन विच्छेदायनारदवचनमुपदर्शयन्तस्त्वेते तथैव भवितुमर्हन्ति यतो नारदवचनं राजधर्मप्रकरणीयं,दण्डप्रधाना हि राजधर्म्मा अर्थमध्ये निविशन्ते दृष्टफलप्रधानत्वात् । अतस्तन्नारद वचनमर्थशास्त्रीयं भवद् धर्मशास्त्राद्दुर्बलं भवति ।

अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमितिस्थितिरिति याज्ञवल्क्यस्मृतेः।

स्त्रीसङ्ग्रहप्रकरणे यो दण्डविधिरभिहितः स नष्टादिपतिकानां पुरुषान्तराश्रये नास्तीति तदर्थः। स च पुरुषान्तराश्रयो न वैधः। तदुक्तम् वात्स्यायनीये कामसूत्रे "अग्निसाक्षिका हि विवाहा न निवर्तन्ते ( १अधि० ५ अ० ) कामश्चतुर्षु वर्णेषु सवर्णतः शास्त्रतश्चानन्यपूर्वायां प्रयुज्यमानः पुत्रीयो यशस्यो लौकिकश्च भवतीति सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः पुत्राः सम्बन्धः पक्षवृद्धिरनुपस्कृता रतिश्चेति । अवरवर्णास्व निरवसितासु वेश्यासु पुनर्भूषु च न शिष्टो न प्रतिषिद्धः सुखार्थत्वात्' इति च ।

एतदुक्तं भवति यद्धि कामशास्त्रं यत्र तृतीया प्रकृतिरपि मदन भोगसाधनतयोक्ता तत्रापि संस्काररूपविवाहस्य निवृत्तिर्नास्तीति स्पष्टमभिहितम् । पुनर्भूश्च वेश्येव सुखार्थमुपादीयते । न च सा पुत्रीया । अनन्यपूर्वा हि शास्त्रतः परिणीता सवर्णा पुत्रीया भवति । पुनर्भूसंयोगश्च वेश्यासंयोगवन्न राजविधिप्रतिषिद्ध इति । पुनर्भूः स्वेच्छया एकस्मादन्येन संसृज्यमाना भवितुमर्हति विधवा त्विन्द्रियदौर्बल्यादित्यभिधाय यतस्तु स्वेच्छया पुनरपि निष्क्रमणं निर्गुणोऽयमिति तदान्यं काङ्क्षेदिति बाभ्रवीयाः (२ अधि० २ अ०३९) इत्यादिकमपि द्रष्टव्यम् । तथाच पुनर्भूवृत्तं गणिकावृत्तवद्भवति एकचारिणीवृत्तमनुसरन्ती गणिकेव पुनर्भूरपि कदाचिदेकचारिणी

भवति, तथापि नासौ पत्नी, पत्नीत्वे पुत्रीयाऽप्यभविष्यत् । तस्मान्न केवलं धर्मशास्त्राद्भोगप्रधानकामशास्त्रादपि निर्णीयते विधवाग्रहणं न विवाहरूपं किन्तु सुखार्थं सङ्ग्रहमात्रम् एवमेव नष्टादिपत्नी परिहृतधर्ममर्यादा परंपुमांसमाश्रयन्ती न राजदण्डार्हा पातकभागिनी तु भवत्येव। मनुस्मृतावपि राजधर्मप्रकरणे प्रोषितपतिकानां कालविशेषप्रतीक्षणेन तदुत्तरं पुरुषान्तराश्रयानुज्ञानं तथैव वेदितव्यम् । अन्यथा—

यस्मै दद्यात्पिता त्वेनां भ्राता वाऽनुमते पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत्' इति ।

न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यत' इत्यादिभिः शौचाचारप्रकरणीयस्ववचनैः विरोधः प्रसज्येत। तस्माद्विवाहबन्धनच्छेदनविधानकल्पना धर्मशास्त्रशिष्टाचारपरम्परायामदृष्टस्वरूपा चाधर्महेतुश्चेति विदितमस्तु सर्वेषाम्। एतद्विधानं हि न केवलं वर्णाश्रमधर्मस्य समूलोच्छेदकमपितु दारिद्र्यपीडितभारतस्य शान्तिमयतामेकपदेऽपहरिष्यति । राजविधानदर्शनेन धर्मबाधावुद्धिमतिवर्त्तमाना का हि कामिनी दैन्यपीडिताऽपि धनिनः पत्नीत्वमकामयमाना दरिद्रस्यपत्युर्विवाहबन्धनविच्छेदाय न प्रवर्तेत। भारतीयेषु कियन्तो वा पुरुषा धनसम्पदा रमणीमनुरञ्जयितुमीशते । एतदर्थं विवादपदे प्रवर्धमाने व्यवहाराजीवानामेव धनलाभो हानिश्च सर्वेषामितिदेशवासिनो विदाङ्कुर्वन्तु; प्रतिनिधिर्भवतां कीदृशमर्थं साधयतीत्यपि सुविमृशन्तु । अथोच्यते पूर्वं यथा नष्टपतिकादीनां पुनः परिणयो राजधर्मानुमोदित आसीत् अद्य पुनस्तथैव भवत्विति। अत्रोत्तरं दत्तपूर्वम्, पुरुषान्तरग्रहणं हि तत् न पुनः परिणयः । परिणयत्वे तस्य पुत्रीयत्वमपि स्यात् न तु पुत्रीयत्वं वात्स्यायनेनापि तदनभ्युपगमात् । न च माभूत् वात्स्यायनमतं मन्वादयो महर्षयस्तु मन्यन्ते एव पुत्रीयत्वं, पौनर्भवपुत्राभ्युपगमादिति वक्तव्यम् । पराशरेण पौनर्भवपुत्रानङ्गी-

कारात्, आदिपुराणादिवचनेन कलौ पौनर्भवपुत्रानङ्गीकाराच्च, कलिजन्मना वात्स्यायनेन पुनर्भूसङ्ग्रहस्य पुत्रीयत्वं नाभ्युपगतम् । स हि पुत्रो यः पितुः पिण्डदाता नहि कलौ पौनर्भवः पिण्डदाता भवति । मनुस्मृत्यादावुक्ताः पौनर्भवादि पुत्रा युगान्तरविषयाः । यत उक्तं देवलेन—

द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते ।
अवावट इति ख्यातः शूद्रधर्मा स जातित इति ।

शूद्रधर्मत्वादेव तस्य नास्ति पुत्रत्वं तत्कुतः पुनर्भूसङ्ग्रहस्य पुत्रीयत्वं कलौ सम्भवेत् । पुनर्भूसम्भवानां शूद्रधर्मत्वेपि सामाजिकस्थानं स्वाधीनतादशायां सुनिर्णयमासीत् साम्प्रतन्तु को निर्णयेत् को वा तन्निर्णयमङ्गीकुर्यात्, तस्मात् पारतन्त्र्यदशायामस्मत्समाजसम्पृक्तराजविधानप्रवर्त्तने बाधैवोपजननीया न तु लेशतोऽप्यानुगुण्यम् एतत्समाजस्थितेः श्रुतिस्मृतिमूलत्वात् । श्रुतिस्मृतीनां च व्याख्याविप्रतिपत्तौ चिरन्तनसदाचारेणान्यतरपक्षप्रतिपत्तेर्युक्तत्वात् । आचारद्वैधे तु विचारः, तत्प्रकारस्तु-दृष्टसुखफला हि शिश्नोदरप्रवृत्तिःपशुसाधारणी न सा तच्चारितार्थ्यं वा वर्णाश्रमिषूपदिश्यते श्रुतिस्मृतिभिः । किन्तर्हि ! अदृष्टसुखफला तत्प्रवृत्तिः । प्रवृत्तेरदृष्टसुखफलत्वन्तु शास्त्रप्रदर्शिते वर्त्मनि प्रचरतो भवति नत्वन्यथा अलौकिकत्वाददृष्टस्य । तथा च वैधं भोजनं वैधो विवाहः वैधं गर्भाधानं वैधश्च तत्राधिकारः, शिश्नोदरप्रवृत्तिमदृष्टसुखफलामुपदधते । विधिश्च श्रौतः । श्रुतिः पुनर्द्वेधा प्रत्यक्षा चानुमानिकी च । स्मृत्या लिङ्गेन यस्या अनुमानं साऽनुमानिकी । एतेन श्रुतिस्मृतिमूलत्वं व्याख्यातम् । तथाच लौकिको राजविधिरत्र नान्तर्भवति । अनाचरितसन्ध्याद्युपासनस्य न वैधं भोजनं नाप्यस्पृश्यस्पर्शदूषितस्य स्नानादिशौचमन्तरेण, न वा स्वयं शुद्धस्यापि गर्हितान्नाद्ययोः । अत्र प्रमाणम्—

प्रातरुत्थाय कर्तव्यं यद्द्विजेन दिने दिने ।
तत्सर्वं सम्प्रवक्ष्यामि द्विजानामुपकारकम् ॥

इत्युपक्रम्य—

दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते ।
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ।
षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक् ॥

इत्यनन्तरं शौचस्नानाचमनाद्यभिधाय—

सन्ध्यायां च प्रभाते च मध्याह्ने च ततः पुनः ॥
सन्ध्यां नोपासते यस्तु ब्राह्मणो हि विशेषतः ।
स जीवन्नेव शूद्रः स्यान्मृतः श्वा चाभिजायते ॥

इत्याद्यनन्तरं भोजनविधिः दक्षसंहितायामुपपादितः ।

'तस्याश्रमविकल्पमेके ब्रुवते ब्रह्मचारी गृहस्थो भिक्षुर्वैखानस इति ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्यगृहस्थः सदृशीं भार्यां विन्देतानन्यपूर्विकां यवीयसीम् । असमानप्रवरैर्विवाह ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्य'इत्यादिगौतमादिस्मृतिभिर्विवाहविधिर्दर्शितः।

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।

कार्यः शरीरसंस्कारः पावनः प्रेत्य चेहचेति मन्वादिस्मृतिभिर्गर्भाधानादिविधिः, दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा । शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति । इति मनुस्मृतिः । शुचितत्कालजीवी कर्म कुर्यादिति स्मार्तादिप्रदर्शितश्रुतिः गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षड्इत्यादिमनुस्मृतिः द्विजातिकर्मभ्यो हानिः पतनमिति गौतमस्मृतिः विहितस्याननुष्ठानादित्यादिप्रागुक्तयाज्ञवल्क्यवचनं यथायोग्यं विवाहगर्भाधानादिकालबोधकशास्त्राणि चानुस्मर्तव्यानि । एवं वैधभोजनपरिपाकनिर्वृत्तचरमधातोर्वैधपात्रे वैधी विसृष्टिर्विवाहादिशास्त्रेण नियम्यते । नहि स्त्रीसङ्ग्रहमात्रं विवाहशब्दार्थः किन्तु पात्रस्य वैधत्वहेतुरलौकिकप्रधानसंस्कारः तद्धि पात्रं पत्नी तस्या वैवाहिकसंस्कार एवोपनयनस्थानीयः ।

वैवाहिकोविधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।

पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिष्क्रियेति मनुस्मरणात् अतो ब्राह्मण्या विवाहे गर्भाष्टमोऽष्टमो वाऽब्दो मुख्यः कालः । गर्भात् तु द्वादशे विश इति वैश्यस्य तावन्तरा च क्षत्रियस्य एवं वर्णभेदमाश्रित्य कालविशेषं सङ्क्षिप्याह मनुः—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्। त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वर इति । अत्रोपनयनतुल्यत्वात् षोडशवर्षादिकालस्यापि प्राप्तिः स्यात् इत्याशङ्काव्युदासाय प्रथमं द्वादशवर्षोपन्यासः तदन्तमात्रग्रहणार्थः । सोऽपि गर्भद्वादश एव त्रिमासाधिकदशमवर्षोत्तरं यत् प्रवृत्तिः। अधिकेन व्यपदेशा भवन्तीति न्यायात्क्वचिद्दशमत्वेनापि तदुपादानं न विरुध्यते यथा—

दशवर्षा भवेत् कन्या अत ऊर्ध्वं रजस्वला ।
सम्प्राप्ते द्वादशे वर्षे यः कन्यां न प्रयच्छति ॥
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ।

इत्यत्र पराशरेण गर्भद्वादशाब्दस्यापि दशमत्वेन ग्रहणात् सम्प्राप्ते द्वादशे वर्षे इत्यत्र तु जन्मतो द्वादशग्रहणमित्येकादशवर्षस्य पृथगनुपादानेऽपि न क्षतिः दशवर्षपदोपस्थापिते गर्भद्वादशे तत्प्रवेशात् । अनेन ह्युपनयनसंस्कारस्थानीयेन विवाहाख्यवैदिकसंस्कारेण पत्नीलक्षणे पात्रे कश्चिदतिशयो जन्यते । न त्वसौ स्त्रीसङ्ग्रहमात्रेण । तदुपगमोऽपि न तत्सम्प्रयोगमात्रं किन्तु "पर्वाण्याद्याश्चतस्रो वर्जयेत ।

एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जये"दिति । याज्ञवल्क्याद्युक्तकालविशेषाविधिनियन्त्रितः । इति व्याख्याता वैधी विसृष्टिः । एतादृशविसृष्टिफलं पुत्रः पुन्नामनरकात् पितरं त्रायते पुनः पिण्डदानादिना तदुपकारकोऽपि भवति यदि प्रतिषिद्धाचरणेन वैधाधिकारं न जह्यात् तदीदृक्सत्त्वप्रकाशोज्ज्वलप्रवृत्तिचक्रं वर्णाश्रमिणाम् । नैतस्यां प्रवृत्तावस्ति स्मरोदरपारतन्त्र्यमपि तु विधिपारतन्त्र्यम् । शास्त्रीयविधितन्त्रतामपजहती न प्रवृत्तिर्[illegible] कल्पते ।

जन्मान्तरविश्वासरहितास्तु अविगणय्यादृष्टसुखमुन्मार्गया प्रवृत्त्या नियोज्यन्ते सा हि प्रवृत्तिः पशुसाधारणीति पूर्वमुक्तम् । यावन्ति साम्प्रतिकानां दुश्चेष्टितानि विधवाविवाहोऽसवर्णाविवाहो रजस्वलाविवाहो विवाहबन्धनविच्युतिः सवर्णाविवाहे भोजने चाऽयान्तरभेदतन्त्रतापरिहारः द्वीपान्तरगमनं शुद्धिरस्पृश्यतापरिहारश्च सर्वाण्येवंविधानि पशुसाधारणीं प्रवृत्तिमभिव्यञ्जयन्ति, न हि पशवः शास्त्रनियन्त्रणामुपलभन्ते । यच्च शुद्धौ शास्त्रीयत्वाभिधानं तदपि कल्पनाप्रतिष्ठाया वाचोविजृम्भितमात्रम्, शुद्धौ प्रमाणाभावात् । न हि जात्यायुर्भोगलक्षणं प्रारब्धमुपभोगमन्तरेण क्षीयते नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति स्मरणात् । नहि काचिदस्ति शुद्धिः यया दुर्जातिरपैति अपि च चिरन्तनप्रथितजातिस्थितिकानां जात्यन्तरपरिणामः सहसा सम्पद्यमानो न कस्य विस्मयमापादयति ? सोऽयमिति प्रत्यभिज्ञायमानवस्तुनि पूर्वापरक्षणयोर्व्यधिकरणजातिद्वयं समवैतीति कल्पनमज्ञानामेव शोभते । स्वयं कृतपातकस्य तु प्रारब्धरूपताविरहेण भवति तावत् शास्त्रोपदिष्टप्रायश्चित्तेन शुद्धिः तत्रापि ज्ञानकृतमहापातकादिगुरुतरपापस्य तु प्रायश्चित्तेन पारलौकिकशुद्धिरेव न त्वैहिकीति चिरन्तनः समयः । विज्ञानेश्वरस्तु मरणान्तप्रायश्चित्तेनैव सा प्रायश्चित्तान्तरेण तु क्रयविक्रयादिव्यवहारसम्पादनक्षममैहिकशुद्धिमात्रमिति मन्यते ।

ननु प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतो व्यवहार्यस्तु वचनादिह जायते । इति याज्ञवल्क्य वचनात् कामकारस्थले कृतप्रायश्चित्तस्य व्यवहार्यतां व्यवस्थापयतो विज्ञानेश्वरस्य मतं क्रयविक्रयादिव्यबहारसम्पादनपरतया कथं वर्ण्यत इति चेत् श्रूयतां याज्ञवल्क्यस्मृतौ व्यवपूर्वहृधातुजशब्दस्य संसर्गसामान्यपरतायाः काप्यदर्शनात् आधिकरणिककर्मपरतायाश्च 'व्यवहारान्नृपः पश्येत्' 'व्यवहारान्नृपेण तु' 'चतुष्पाद्व्यवहारोऽय' मित्यादिषु सर्वत्र दर्शनात्

व्यवहाराध्याय इति नामनिर्देशाच्च क्रयविक्रयादिव्यवहारस्य लाभात् अस्वामिविक्रयक्रीतानुशयप्रकरणादौ क्रयविक्रयादेर्व्यवहाररूपतासिद्धश्च । अत एव संवसेयुश्च सर्वश इति याज्ञवल्क्यवचनव्याख्यानावसरे विज्ञानेश्वरेण कण्ठतएवोक्तं क्रयविक्रयादिष्विति ।मरणान्तप्रायश्चित्तेन पारलौकिकी शुद्धिरपि प्रयोजनान्तराभाववर्णनेनाभ्युपगता । यदि कामतो व्यवहार्यस्त्विततिवचने व्यवहार्य इति पदं संसर्गयोग्यइत्यर्थकं स्यात् कथं नाम कृतमरणान्तप्रायश्चित्तस्य प्रयोजनान्तराभावकथनमुपपद्यतां विज्ञानेश्वरस्य ? तत्रापि दाहादिप्रयोजनस्य सत्त्वात् कृतमरणान्तप्रायश्चित्तस्यापि श्राद्धादिसम्पादनाय दाहाद्यर्थं स्पर्शादिसंसर्गस्याववश्यकत्वाच्च । तस्माद्विज्ञानेश्वरमतं यथावर्णितमेव सङ्गतम् । एनं च विचारमन्यत्र प्रपञ्चयिष्यामः ।

यच्चैतिहासिकमानिभिः कैश्चिदुच्यते आचारादिकं सर्वमेव स्वार्थपरैर्ब्राह्मणैः परिकल्पितं प्रयोजनानुबन्धिभिः शकादयो वैदेशिका अपि क्षत्रियत्वेन कल्पिताः तथेदानीमपि शुद्धिर्युज्यत एव तत्रोत्तरम् पूर्वाचार्यैरुक्तम्—क एवं लोकोत्तरो यः परप्रतारणार्थमात्मानमवसादयेदिति आचारातिशयस्य ब्राह्मणपालनीयत्वात् । ब्राह्मणः स्वार्थपरः सन् स्वमेव कथमेवं नामाचारातिशयबन्धेन परिक्लेशयेत् । शकादयः प्राक् क्षत्रिया एवासन् पौण्ड्रका श्चौड्रद्रविडाः काम्बोजा यवनाः शकाः । पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः । इमा क्षत्रियजातयः वृषलत्वं गता इति च मनुना निर्देशात् । नच तेषां ग्रहणमपि निर्णीतम् । 'राजपुत' जातीनां शकादिरूपत्वं तु तेषां वीर्यातिशयो न भारतगौरवहेतुरिति मा नाम तेषां भारतीयेषु वर्णाश्रमिषु मा च तेषु वर्णाश्रमिणां साजात्यप्रीतिरास्त्विति च बुबोधयिषुकूटराजनीतिविदां प्रतीच्यानां काल्पनिकं न तु वास्तवम्, सूर्यवंशसम्भवक्षत्रियैर्यौनसम्बन्धस्य परम्परागततया इतिहासादिसिद्धत्वात् । प्रतीच्यानां कल्पनामात्रेण प्राचीनतमपरम्परामनुलम्भुवां भारतीयानां सिद्धाचा-

रत्यागस्य युक्तत्वं कोनाम समर्थयिष्यते ।

श्रीमन्तः सदस्याः शृण्वन्तु तावदन्यत्, पञ्चगौडाः पञ्च द्राविडाश्चेति दशविधा ब्राह्मणाः तेषामन्योन्यं विवाहं भोज्यान्नतां च व्यवस्थापयितुमुत्क्रुश्यते कैश्चित् । इदमेव सजातीयेष्ववान्तरभेदवर्जनमिति कृत्वा प्रागुपन्यस्तमस्माभिः । न चैतदपि धर्म्यं पञ्चगौडानां पञ्चद्राविडानां चाचारभेदात् । आचारभेदश्च सुप्राचीनः, भगवता बौधायनेनापि देशप्रामाण्याद्यत्समर्थनं कृतमुक्तं च इतर इतरस्मिन् कुर्वन् दुष्यतीति । तत्र मातुलकन्यापरिणयनं पञ्चद्रविडेषु सर्वतो वांशतो वा प्रचलति तत्सन्तानस्याविवाह्यतां मन्यन्ते गौडाः । गौडेषु तदाचाराभावात् परस्परं विवाहे च प्रवृत्ते स्वावलम्बितशास्त्रसदाचारवर्जनप्रसङ्गो गौडानाम् । तथा गौडेषु क्वचित् सगोत्राविवाहो भवति तत्सन्तानस्याविवाह्यतां द्राविडाः परे गौडाश्च मन्यन्ते । तद्विवाहे शास्त्रसदाचारवर्जनप्रसङ्गो द्राविडादीनामेव मिदानीं स्वपरिकल्पितब्राह्मण्यानां चिरन्तनशूद्रादीनां प्रदेशान्तरवासित्वेनासंस्तुतस्वरूपाणामापातपरिचयेन विवाहे सङ्कटप्रसङ्गश्च, अतएवोक्तमाह्निकतत्वे मरीचिः येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः । तत्र तं नावमन्येत धर्मस्तत्रैव तादृश इति ।

अपि च मनुराह—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।

आचारश्चैव साधूनामात्मनस्तुष्टिरेव चेति । शास्त्रतः स्पष्टमनिर्णये सदाचारः प्रमाणम् । तथा च यादृशान्तर्गणिकविवाहादिः सदाचारसिद्धः स एवाभ्युपगन्तव्यः । न तु नवीनमार्गेणेति ।

एतेन तादृशभोज्यान्नतावादोऽपि निरस्तः । द्विजेतरेषु प्रणवमन्त्रोपदेशमतन्तु पृथगेव निराकृतमतो नेह प्रपञ्च्यते ।

गुणत एव ब्राह्मण्यादिकं न जात्येति मतं चैहिके कर्मणि नोपयुज्यते। जातकर्मादावुपनयनसंस्कारे मुख्यकाले च गुणस्फुरणासम्भवात् ।

जात्या ब्राह्मण्यमादायैव तत्सम्पादनस्य युक्तत्वात् । परत्र ब्राह्मणोचिता सद्गतिस्तु सत्यादिगुणवतामेव न तु जातिमात्रोपजीविनाम् ।

अनिर्णीतस्वरूपनिष्पत्तेरन्नस्य स्पर्शादिदुष्टता म्लेच्छैरपि स्वीक्रियते तस्मात् तत्पणनीये भक्ष्यविशेषे नेदं हस्तस्पृष्टमितिलेखेन स्पष्टमाघोष्यते । देशान्तरगमने निर्बाधदुष्प्रवृत्तिचारित्तार्थ्यं प्रायेण घटते तादृगनर्थजातप्रतीकारोपायः केवलं शास्त्रानुवर्त्तनम् । तद्यथा भवति तदेव करणीयम् । नतु पितृव्यगङ्गायात्राभिनयो व्यवस्थापरिषदि ।

तस्मादैहिकमात्रसर्वस्वैः साम्प्रतिकैर्यानि कर्माण्याचरणीयतयोपक्षिप्यन्ते तेषामनाचरणमेव शास्त्रतः सिद्धम् ।

उपपद्यते चैवं यतो द्विविधो हि धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्चेति । तत्र प्रवृत्तिलक्षणोऽपि निवृत्तिं साधयन् धर्मो भवति । न तूच्छृङ्खला प्रवृत्तिः शास्त्रतस्तदप्राप्तेः । साम्प्रतिकोपक्षिप्ता परिपाटी च न निवृत्तिमादधाति । आदधाति तु तादृशं शिश्नोदरसौहित्यं यद्धि पशुसाधारणमुक्तं तेन चाभ्यस्तेन इह परत्र च पशुभावलाभ एव—

यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावित इति ।
तमसि प्रलयं गत्वा मूढसाङ्गिषु जायते ।

इति च गीतोक्तेः । सैषा मूढता परिहरणीयैव प्रमाणकुशलैरिति सङ्क्षेपः ।

गतोऽस्तं मार्तण्डो निशि शशिकला सा तु विकला
स्फुरत्तारामाला बत जलदजालावृततनुः ।
न वा दीपोद्दीपो मरुदतितरां वाति शिव तत्
कृपालोकं स्तोकं तव तमसि दीनो वरयति ॥

इति ।

नमो ब्रह्मण्य देवाय ।

# ब्राह्मणमहासम्मेलनम्

## ( मासिकं संस्कृतपत्रम् )

"न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् ) ।

प्रथम वर्षे ] सौर ज्यैष्ठः शकाब्दाः १८५० [ द्वितीय संख्या ।

### धर्म्मः ।

उक्तं हि भारतसावित्र्यां महर्षिकृष्णद्वैपायनेन;—

"न जातु कामान्न भयान्न लोभाद्
धर्म्मं जह्याज्जीवितस्यापि हेतोः ।" इति ।

तत्र को नाम धर्म्म इति जिज्ञासायां केचनाधुनिकाः स्वमतिप्रभावमनुसृत्य—

"धारणाद्धर्म्ममित्याहुर्द्धर्म्मो धारयते प्रजाः ।"

इति महाभारतीयं वचनांशं स्वव्याख्यानानुकूलं प्रमाणयन्तो लोकधारणानुकूलो धर्म्मः, तथा च येन किञ्चिदैहलौकिकमभ्युदयरूपं फलं सम्पद्यते स एव धर्म्म इति व्याहरन्ति एवं च तेषां मते न स्वर्गाद्यदृष्टं फलं धर्म्मस्य किन्तु दृष्टसुखे लोकोपकारादिफलक एव धर्म्म इति पर्यवस्यति ।

निरन्तरमाबाल्यं पाश्चात्यविद्यां खीस्तीयप्रभावपूरितामभ्यस्यतां खीस्तीयसंस्कारपूर्णान्तःकरणानां यथाविधि गुरुशुश्रूषामुररीकृत्य शास्त्रविद्यामनाकलयतां शास्त्रसंस्कारशून्यानामीदृशेन सिद्धान्तेन न वयं चित्रीयामहे नच दूयामहे । परन्तु परेषु परप्रत्ययनेयबुद्धिषु स्वप्रभाववशीकृतेषु स्वकीयकपोलकल्पितमिमं सिद्धान्ताभासं शास्त्रानुमोदितत्वेन प्रचारयतः साहसिकानाकलयन्तो मिथ्याव्यवहारमिमम-वधार्य्य नितरां दूनाः स्मः । तथ्यप्रकाशनमेव सर्वथा समुचितं मन्यमानैर्जैमिनिप्रभृतिपूर्वाचार्य्यवर्य्यसम्मतं धर्म्मपदार्थं प्रदर्शयितुं प्रयत्यते न खलु विद्वेषकलुषितहृदयैरत्र किञ्चिदुद्भाव्यते ।

कोषकारैर्यद्यपि—

"धर्म्माः पुण्ययमन्यायस्वभावाचारसोमपाः ।"

इत्यादिना धर्म्मशब्दस्यानेकेऽर्थाः प्रकटीकृताः, तथापि "न जातु कामान्न भयान्न लोभा"दित्यादि भारतसावित्रीपद्ये तादृशः कोऽप्यर्थो नाभिप्रेतोऽयोग्यत्वात् । पुण्यादीनां स्वेच्छया त्यक्तुमशक्यत्वात्तत्त्यागनिषेधस्यानुपपत्तेश्च । किन्तु निरुक्तपद्ये धर्म्मशब्देन क्रियैव गृह्यते "धर्म्मं चर" "यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्नि"त्यादिषु श्रुतिषु ।

धर्म्मः स्वनुष्ठितः पुंसा विष्वक्सेनकथासु यः ।
नोत्पादयेद् यदि रतिं श्रम एव हि केवलम् ॥

इत्यादिपुराणवचनेषु च धर्म्मपदं क्रियापरत्वेन प्रयुक्तम् । क्रियाया एव पुरुषतन्त्रत्वेन कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यत्वात् क्रियापरमेव धर्म्मपदं भारतसावित्र्यामिति युक्तमुत्पश्यामः । सा क्रिया कीदृशीति विचारे महर्षिर्जैमिनिः सूत्रयाम्बभूव—

चोदनालक्षणोऽर्थो धर्म्मः । (पू.मी१।१।२) इति ।

इष्टसाधनत्वेन वेदबोधितो धर्म्म इति सूत्राशय इति मीमांसाचन्द्रिकायां गौड़ब्रह्मानन्दः । इमान्येव सूत्राक्षराण्युपजीव्य मीमांसक-

प्रकाण्डेन खण्डदेवेनोक्तं भाट्टरहस्ये धर्म्मलक्षणम्–"वेदबोधितश्रेयः-साधनताकत्वं धर्म्मत्व"मिति । इदमेव जैमिनिमुनिमतं महर्षिर्मनुरपि समन्वमोदत—

"वेदोऽखिलो धर्म्ममूल" मितिवचनेन । यद्यपि मनुना सर्व-स्यापि वेदस्य सामान्यतो धर्म्मे प्रामाण्यं कण्ठत एवोक्तं स्वीकृतं च जैमिन्यादिभिस्तथापि विधिभागस्यैव प्राधान्येन प्रामाण्यमन्येषां च वेदभागानां विध्युपकारकत्वेनैव धर्म्मे प्रामाण्यमिति निश्चयः । सूचितं चेदं द्वितीयसूत्रे चोदनापदं निबध्नता पञ्चमसूत्रे च "तस्य ज्ञानमुपदेश"(१)इति वदता जैमिनिनाऽपि ।

चोदनोपदेशपदयोश्च विधिवाचित्वं स्पष्टमुक्तं श्लोकवार्त्तिके भट्ट-कुमारिलेन—

"चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः" इति ।

[ औत्पत्तिकसूत्रे ११ ]

एतत्प्रपञ्चस्तत्वाकरग्रन्थेषु द्रष्टव्यो विस्तरभयान्नेह प्रतन्यते ।

वेदैरविरुद्धा स्मृतिरपि धर्म्मे प्रमाणम् । समर्थितं च स्मृतिप्रा-माण्यं महर्षिणा जैमिनिना प्रमाणलक्षणीयतृतीयपादे "अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्या"(२)दित्यनेन सूत्रेण । वेदविरु-

---

(१) "तस्य" धर्म्मस्य "ज्ञानं" "ज्ञायते येन तज् ज्ञानं" [ श्लोक-वार्त्तिके ५ सूत्रे ९ ] प्रमाणमिति फलितम् । "उपदेशो" विधिः । तथाच धर्म्मे प्रमाणं विधिरिति भावः । चोदनाशब्दस्य विधिवाच-कत्वं भाष्यकारेण शबरस्वामिनाऽप्युक्तम् "चोदनेति क्रियायाः प्रव-र्त्तकं वचनमाहु"रिति ग्रन्थेन द्वितीयसूत्रे ।

( २ ) सूत्रश्चायम्–"अपिवे"ति पूर्वपक्षनिषेधे–यदुक्तं स्मृतिर-प्रमाणमिति । तन्न । "कर्तृसामान्या"दनुष्ठातॄणामैक्यात "अनुमानं" स्मृतिः "प्रमाणं स्यात्" । अनुमानपदेन स्मृतिर्गृह्यत इति ब्रह्मसूत्री-

द्धायाः स्मृतेः प्रामाण्यं खण्डितं तेनैव "विरोधे त्वनपेक्षं स्यादसति ह्यनुमान"(१)मित्यनेन तत्रैव । अद्वैतविद्याप्रतिष्ठापनाचार्य्याणां शिवावतारशङ्करभगवत्पादानामप्यनुमतोऽयं पन्थाः, यतस्तैरविरोधाध्याये स्मृत्यधिकरणे [ २ अ. १ पा. १ अधि ] वेदमूलायाः स्मृतेः प्रामाण्यं तद्विरुद्धायाश्चाप्रामाण्यं जैमिनीयवचनं प्रमाणयद्भिर्महता संरम्भेण व्यवस्थापितम् । श्रुतिस्मृत्योर्विरोधे श्रुत्या स्मृतेर्बाध एव न तु विकल्प इत्युक्तं भट्टपादेनाऽपि तन्त्रवार्त्तिके विरोधाधिकरणे,—

प्रमाणपदवीं यावन्नारोहत्येव हि स्मृतिः ।
बाध्यते तावदत्यन्तं श्रुत्याऽन्यनिरपेक्षया ॥
स्मृतेर्धर्म्मप्रमाणत्वं न तावत्स्वत इष्यते ।
तुल्यकक्षतया येन विकल्पपदवीं व्रजेत् ॥ इति ।

श्रुतिस्तावत् स्वयमेव स्वविषये प्रमाणम् । स्पष्टं चैतदभिहितं भगवत्पादीयभाष्ये बादरायणीयस्मृत्यधिकरणे—

"वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यं रवेरिव रूपविषये" इति ।

स्मृतेस्तु श्रुतिमूलत्वात् प्रामाण्यं न तु वेदवत् स्वतः । तदुक्तं

---

यभाष्ये समन्वयाध्यायतृतीयचरणे भगवत्पादैरङ्गीकृतम् । अयं भावः, वैदिकशिष्टैर्यथा वेदप्रतिपादिताः पदार्था धर्म्मबुद्ध्याऽनुष्ठीयन्ते एवं स्मार्त्ता अपि पदार्थास्तथैवानुष्ठीयन्ते । न खलु वैदिकशिष्टैर्वेदाप्रतिपादिता अप्रामाणिकाः पदार्था धर्म्मबुद्ध्या अनुष्ठातुं शक्याः, अतस्तेषां धर्म्मबुद्ध्याऽनुष्ठानेनैव स्मार्त्तानां पदार्थानां प्रामाणिकत्वं सिद्ध्यति । तत्र मूलभूतप्रत्यक्षश्रुत्यभावे स्मृत्या श्रुतिरनुमीयते, बहूनां श्रुतीनामधुना कालवशेन लुप्तत्वात् ।

( १ ) श्रुतिविरोधे स्मृतिवाक्यमनपेक्षम् अप्रमाणम् अनादरणीयम् । असति विरोधे मूलवेदानुमानमित्यर्थः" इति मन्वर्थमुक्तावल्यां कुल्लूकभट्टः [ २ अ. १३ ]

तन्त्रवार्तिके—

किन्तु तस्याः(१) प्रमाणत्वं श्रुतिमूलत्वकारितम् इति ।

मूलभूतश्रुत्यभावे स्मृतेरप्रामाण्यमेवेष्टम्—

श्रुतिं मुक्त्वा तु यन्मूलं स्मृतेरन्यत् प्रकल्प्यते ।
तेनैवास्याः प्रमाणत्वमत्यन्तं प्रतिहन्यते ॥ इति ।

[ तन्त्रवार्तिके ]

श्रुतिस्मृतिभ्यामन्यः शिष्टाचारोऽपि धर्म्मे प्रमाणम् । तत्र के तावच्छिष्टा इति समीक्षायामुक्तं महाभाष्यकारेण महर्षिपतञ्जलिना—

"एवं तर्हि निवासत आचारतश्च । स आचार आर्य्यावर्त्ते एव । कः पुनरार्य्यावर्त्तः । प्रागादर्शात् प्रत्यक्कालकवनाद् दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम् । एतस्मिन्नार्य्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारगास्तत्रभवन्तः शिष्टाः ।" इति [ ६. ३. १०९ ]

कुम्भीधान्या इत्यनेन अलोलुपत्वमेवाभिहितम् । एवं चालोलुपा इति कुम्भीधान्या इत्यस्य फलितार्थकथनमिति द्रष्टव्यम् । अगृह्यमाणकारणा इत्यनेन दृष्टकारणमन्तरेणैव सदाचारानुवर्त्तित्वं सूचितमिति कैयटीयव्याख्यायां स्पष्टम् । एवंविधानां शिष्टानां य आचारः स एव धर्म्मे प्रमाणम् । अयं च शिष्टाचारः श्रुतिस्मृत्योरविरोध एव प्रमाणं न तु विरोधे । तदुक्तं भट्टपादेन तन्त्रवार्तिके—

शिष्टं यावच्छ्रुतिस्मृत्योस्तेन यन्न विरुद्ध्यते ।
तच्छिष्टाचरणं धर्म्मे प्रमाणत्वेन गम्यते ॥
यदि शिष्टस्य कोपः स्याद्विरुद्ध्येत प्रमाणता ।
तदकोपात्तु नाचारप्रमाणत्वं विरुद्ध्यते ॥

[ प्रथमाध्याये तृतीयपादे ]

---

( १ ) "तस्याः" स्मृतेरित्यर्थः ।

गौतमेनाप्युक्तम् ;—

देशजातिकुलधर्म्माश्चाम्नायैरविरुद्धाः प्रमाणम् इति ।

[आम्नायपदेन वेदः, आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् ( पू. मी. १. २. १. ) इत्यादावाम्नायपदस्य वेदपरत्वदर्शनात् । आम्नायसमाम्नायशब्दयोर्वेद एव प्रसिद्धेरित्यभियुक्तोक्तेश्च (शब्देन्दुशेखरे संज्ञाप्रकरणे) ] ।

एवं चाधुनिकाः केचन पाश्चात्त्यप्रभावविकृतबुद्धयोऽनाकलितशास्त्ररहस्या देशव्यापकानां प्रतिपुरुषवर्त्तिनां चानाचाराणां महता संरम्भेण प्रदर्शनेन नवीनधर्म्मव्यवस्थां कर्त्तुमुद्यताः सर्वथा स्वकीयानभिज्ञतयैव निरस्ताः । सत्स्वपि पूर्वस्मिन् समये बहुष्वनाचारेषु तानाश्रित्य पूर्वाचार्य्यैर्नवीनधर्म्मव्यवस्थाया अकरणात्, प्रत्युत तेषां प्रसिद्धशिष्टपुरुषवर्त्तिनामप्यनाचाराणां भट्टकुमारिलप्रभृतिभिर्वेदादिनिखिलशास्त्रनिष्णातैः पण्डितप्रकाण्डैरधर्म्मत्वेनैव प्रख्यापनात् । निखिलवेदभाष्यकारैः सर्वतन्त्राप्रतिहतधिषणैर्धिया धिषणसदृशैर्माधवाचार्य्यवर्य्यैरपि पराशरभाष्ये एकादशाध्याये—

युगे युगे च ये धर्म्मास्तेषु तेषु च ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः ॥

इति श्लोकव्याख्यानावसरे "युगप्रवृत्तामधर्म्मप्रवृत्तिमदोषत्वेनाभ्युपगम्य" इत्येतावन्मात्रोक्तेस्तस्या युगप्रवृत्ताया अधर्म्मप्रवृत्तेर्धर्म्मत्वानुक्तेश्च ।

माधवाचार्य्यग्रन्थपर्य्यालोचने न हि युगप्रभावात् प्रवृत्तानामधर्म्माणामनायत्त्या सहनं कर्त्तव्यमिति प्रतीयते । अधुना प्रायेण सर्वैरपि शिष्टैरन्यैश्च गत्यन्तराभावाद् देशविशेषेषु विभिन्नेषु विषयेषु मृष्यत एवाधर्म्मप्रसरः । न तु माधवाचार्य्यग्रन्थादधर्म्माणां कलियुगप्रभावप्रवृत्तानां धर्म्मत्वं प्रतीयते न वा युगप्रवृत्ताधर्म्मानुरोधेन शास्त्रसङ्कोचकर्त्तव्यता सिद्ध्यति । पराशरभाष्यस्य आचाराध्यायेऽपि "तेषां

निन्दा न कर्त्तव्ये"ति वचनमशक्तविषयत्वेन माधवाचार्य्यैर्व्यवस्थापितं निन्दावचनानि तु शक्तविषयाणीति स्पष्टमेव प्रतिपादितम् । एवं च स्वेच्छया धर्म्मत्यागस्याधर्म्मपरिग्रहस्य च कर्त्तव्यता न कुत्रापि ग्रन्थे प्रतिपादितेति सर्वेषां विज्ञानामतिरोहितम् । अनायत्त्या समापतितानामधर्म्मप्रसराणां यथाकथञ्चित् सहनं युक्त्यापि विषयीक्रियते न केवलं शास्त्रकारनिबन्धेन । स्वेच्छया सत्यपि सामर्थ्ये धर्म्मं परित्यज्याधर्म्मस्याश्रयणे तु न कामपि युक्तिं किञ्चिद्वा शास्त्रं पश्यामः ।

भट्टकुमारिलेनाऽपि मीमांसादर्शनीयप्रथमाध्यायतृतीयपादे शिष्टाचारप्रामाण्यविचारावसरे सर्वदेशव्यापिनां देशविशेषवर्त्तिनां पुरुषविशेषव्यवस्थितानां च बहूनामनाचाराणां समुल्लेखनपुरःसरं शास्त्राविरोधिनामेवाचाराणां धर्म्मे प्रामाण्यमभ्युपगतं न तु व्यापकत्वादुत्तमपुरुषनिष्ठत्वाद्वा शास्त्रविरुद्धानामपि आचाराणां धर्म्मत्वमभिहितम् । तस्माद् वेदस्मृत्यविरुद्धानामेवाचाराणां धर्म्मत्वं प्रामाणिकसम्मतं न तु तद्विरुद्धानामिति सिद्धम् ।

एतावता वेदः, वेदाविरुद्धा स्मृतिः, श्रुतिस्मृत्योरविरोधी शिष्टाचारश्च धर्म्मे प्रमाणमिति पर्य्यवसितम् । एतैरेव प्रमाणभूतैः प्रतिपादितो धर्म्मः । एतदतिरिक्तश्च केषांचित् पुरुषाणां स्वमतिप्रभावप्रसूतो म्लेच्छादिप्रणीतग्रन्थप्रमाणको यः कश्चन पदार्थो न धर्म्म इति प्राचीनानामाचार्य्याणां मतम् एवं च शास्त्रकारीयवचनैरेव शास्त्रीयपदार्थनिर्णयस्यौचित्याद् भारतसावित्रीपद्येऽपि धर्म्मशब्दस्य निरुक्त एवार्थः स एव च प्रजानां परलोकसाधनत्वादिह लोके च भोगसौख्यादिप्रदत्वाद्—

"धर्म्मो धारयते प्रजाः"

इत्यनेन प्रजाधारक उच्यत इति सर्वमवदातम् । एतत्सर्वं संक्षिप्याभिहितं मनुनाऽपि—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।

एतच्चतुर्विधं प्राहुः साक्षाद्धर्म्मस्य लक्षणम् ॥ [ २ अ. १२ ]

"वेदो धर्म्मे प्रमाणं स क्वचित् प्रत्यक्षः क्वचित् स्मृत्याऽनुमितः इत्येवं तात्पर्यम् । सदाचारः शिष्टाचारः । स्वस्य आत्मनः प्रियमात्मतुष्टिः । इति कुल्लूककृतमन्वर्थमुक्तावल्याम् ।

आत्मतुष्टिस्तु विकल्पस्थले एव धर्म्मे प्रमाणम् । तदुक्तं कुल्लूकेनैव द्वितीयाध्याये ६ श्लोकव्याख्यायां साधूनां धार्मिकाणामात्मतुष्टिश्च वैकल्पिकपदार्थविषया धर्म्मे प्रमाणम् । तदाह गर्गः—

वैकल्पिके आत्मतुष्टिः प्रमाणम् इति ।

यद्यपि तार्किकमते—

विहितक्रियया साध्यो धर्म्मः पुंसो गुणो मतः ।
प्रतिषिद्धक्रियासाध्यः स गुणोऽधर्म्म उच्यते ॥

इति प्रकारान्तरेण धर्म्माधर्म्मस्वरूपे अभिहिते, तथापि तन्मते विहितक्रियापदेन वेदादिविहितैव क्रिया गृह्यते नतु स्वतन्त्रप्रवृत्तिजनितेति सूचितं वैशेषिकभाष्यकारेण प्रशस्तपादेन—

ईश्वरनोदनाऽभिव्यक्ताद्धर्म्मादिति—

वदता ईश्वरनोदनाऽभिव्यक्तत्वेन धर्म्मं विशेषयता । स्पष्टीकृतं चैतन्न्यायाचार्य्येण सर्वतार्किकमान्यचरणेन श्रीमतोदयनेन निरुक्तभाष्यव्याख्यानावसरे किरणावल्याम्—

"ईश्वरनोदना उपदेशो वेद इति यावत् ।
तेनाभिव्यक्तात् प्रतिपादिताद्धर्म्मात् इति ।

एवं च वेदादयः पूर्वोक्ता एव धर्म्मे प्रमाणं नान्यदित्येव सर्वेषां शास्त्रकाराणामभिमतिरिति फलितम् ।

श्रुतिस्मृतिप्रतिपादितः श्रुतिस्मृतिभ्यामविरुद्धेन चिरागतपरम्परासेवितेन सदाचारेण परिशीलितो यो धर्म्मः स एव सनातनधर्म्मपदेन व्यपदिश्यते । अस्य च धर्म्मस्य स्वरूपं श्रुतिस्मृतिभ्यामुपनिबद्धं श्रीमद्भगवच्छङ्कराचार्य्यकुमारिलभट्टोदयनाचार्य्यप्रमुखैः पू-

र्याचार्य्यवर्य्यैः सकलशास्त्रसागरपारङ्गममतिभिः सम्यग् विचार्य्या-वधारितम् । सनातनेति विशेषणेनैवास्य धर्म्मस्य पुरातनत्वं प्रथितम् । एवं चास्य सुनिर्णीतस्वरूपस्य निर्णयाय कश्चन नवीनो विचारो नापेक्ष्यते पूर्वाचार्य्यैरेव सुनिर्णीतस्वरूपत्वात् । सनातनधर्म्मस्य सनातनत्वं प्रथयद्भिस्तस्य पुराऽपि सत्त्वमवश्यमभ्युपेयम् । स्वरूपं विना स्थितेरसम्भवेन पुराऽपि तस्य स्वरूपमङ्गीकरणीयम् एवं च यदेवास्य पूर्वाचार्य्यनिर्द्धारितं पुरातनं स्वरूपं तदेवाधुनाऽपि सनातनत्वादेवेति सनातनधर्म्मस्य स्वरूपनिर्णयाय संनह्यद्भिस्तदर्थं नवीनं विचारं प्रवर्त्तयितुमिच्छुभिरनवसर एव प्रयासेनात्मा मुधैव परिक्लेश्यते न तु तस्य किमपि प्रयोजनं नवा सम्यगवसर इति मन्तव्यं शास्त्रग्रन्थानां परिशीलने नित्यनिरतैः समाकलितशास्त्ररहस्यैर्विद्वद्वरेण्यैः ।

---

# पुरुषोत्तमप्रयाणम् ।

श्रीमन्तः पाठकमहोदयाः, महदिदं शोकस्थानं समापतितं, विशुद्धप्राचीनवर्णाश्रमधर्म्मरक्षणपक्षपातिनामस्माकं यद्वङ्गेषु सुगृहीतनामधेयो वर्णाश्रमधर्म्मप्रचारव्रतैकदीक्षितः पण्डितधौरेयः श्रीमान् शशधरतर्कचूडामणिमहोदयो विगते सौरफाल्गुनस्य प्रथमदिवसे भौमवासरे सवितुरुदयसमये भवाम्भोधितरणाय स्वेष्टस्य परमेशितुर्मन्त्रं जपन् षाट्कौशिकं शरीरमुत्सृज्य नाममात्रशेषतामभजदिति ।

ये खलु महामतयो जन्मसम्पदा वङ्गधरणीमलंकृतवन्तो महाभागोऽयं तेषामेवान्यतमो वर्णाश्रमधर्म्मस्यालङ्कारभूतो मूर्द्धन्यश्च ब्राह्मणसमाजस्यासीदित्यत्र नास्ति कस्यापि विप्रतिपत्तिसमुन्मेषः । यद्यप्यस्याशीतिवर्षदेशीयस्य महाभागस्य परलोकगमनं विकरालेऽस्मिन् कलिकाले नाकालिकमभवत्तथाप्यद्य महोदयस्यास्य वियोगे-

नास्माकं धर्मस्य समाजस्य च या हानिः समुत्पन्ना तां विगणय्य विषीदामो वयं चिन्तयामश्च हानेरस्याः प्रपूरणं कदा भगवान्नारायणो विधास्यतीति । अयं च सुगृहीतनामधेयस्य स्वर्गतस्य वङ्गीयब्राह्मणसभासंरक्षकस्य इन्द्रनाथवन्द्योपाध्यायमहोदयस्य प्रधानसहायक आसीत् । ब्राह्मणसभासंस्थापनाय महाभागेनानेनापि महानायासः स्वीकृत इति सर्वे जानन्ति । वीरभूमनगरे यदा ब्राह्मणमहासम्मेलनमभवत्तदा तस्याः समितेः प्रधानसभापतिपदमनेनैवाधिष्ठितम् । मादारीपुरजनपदे चाभ्यर्थनासमितेः सभापतिपदमप्यधिष्ठितमनेन । मरणसमयात्पूर्वं कियन्ति दिनानि जरापीड़ितशरीरतया गुरुकार्यभारं वोढुमसमर्थोऽपि मनसा ब्राह्मणसभायाः कल्याणं कामयतेस्मेत्यपि सुविदितं सर्वेषाम् । वर्णाश्रमधर्म्मरक्षणपक्षपातिनोऽस्य महाभागस्य चरित्रसमालोचनं ब्राह्मणमहासम्मेलनपत्रिकायामवश्यं विधेयमिति पूज्यवरश्रीमत्पञ्चाननतर्करत्नमहोदयैराज्ञप्तमतो महतां चरित्रसमालोचनं महते कल्याणाय भवति प्रेक्षावतामित्यतश्चास्य चरित्रसमालोचने प्रयत्यतेऽस्माभिः ।

महाभागोऽयं वङ्गीयफरिदपुरजनपदान्तर्गत 'मुखडोवा' ग्रामवासिनः प्रसिद्धकाश्यपान्वयसम्भूतस्य पण्डितहलधरविद्यामणिमहोदयस्य गेहं जन्मनाऽलङ्कृतवान् । अद्वैतसिद्ध्यादिग्रन्थानां प्रणेतारः प्रसिद्धवाग्वैदुषीविभवाः श्रीमन्तो मधुसूदनसरस्वतीस्वामिपादा अपि एतद्वंश्या एवेति प्रसिद्धा किम्वदन्ती । अन्येऽपि वहवः सुगृहीतनामधेया विद्वांस एतद्वंशीयाः समभवन् । जननी चास्य पूतचरितकलेवरा श्रीमती विश्वेश्वरीदेवी रथीतरान्ववायसम्भूतासीत् । कलियुगपावनावतारश्रीमद्गौराङ्गदेवोऽपि एतस्मादेव रथीतरवंशात्समुत्पन्नस्य श्रीमतो नीलाम्वरचक्रवर्त्तिमहोदयस्य दुहितुरपत्यमिति प्रसिद्धिः । एवं च पवित्रकुलसम्भूतमातापितृकस्यास्य स्वधर्मे श्रद्धा स्वाभाविकी समभवत् । वाल्य एव वयसि

वर्त्तमानोऽयं पितुः सकाशाद् व्याकरणशास्त्रमधीत्य तत्र विशेषव्युत्पत्तये विक्रमपुरजनपदनिवासिनो वैयाकरणधुरीणस्य श्रीमतो विश्वेश्वरचक्रवर्त्तिमहोदयस्यान्तिकमागत्याधीतवान् । अनन्तरं च न्यायशास्त्रमपि विक्रमपुरस्थनैयायिकप्रवरश्रीदुर्गाप्रसादतर्कालङ्कारमहोदयादध्येतुमारेभे । कियद्दिनानन्तरमस्य जनको दैवदुर्विपाकवशात्परलोकं ययौ । ततः कुटुम्बपरिपोषणभारनिपीड़ितोऽयं विद्याव्यासक्तमना अपि न्यायशास्त्राध्ययनं परित्यज्य धनार्जनार्थं त्रिपुराजनपदं प्रस्थितवान् । तत्र च तदानीं सुप्रसिद्धभूम्यधिकारिणः श्रीमदन्नदाप्रसादरायचतुर्धुरीणमहोदया निजकार्यार्थमवर्त्तन्त तैः सार्द्धमस्य परिचयो बभूव । ते च रायमहोदया अस्यानन्यसाधारणीं प्रतिभां दृष्ट्वा गुणमुग्धमानसाः सन्तो निजसभापण्डितपदेऽभिषिच्यैनं मुर्शिदाबादनगरमधिवासयाञ्चक्रुः । अयं च तत्रागत्य तत्रत्यैः पण्डितैः सार्धं वादञ्चकार । जल्पकल्पतरुप्रभृत्यनेकग्रन्थकृत्सुप्रसिद्धकविराजगङ्गाधरसेनमहाशयेन सहास्य तदानीं महान् शास्त्रीयो वादः समजनीति श्रूयते । उक्तकविराजमतखण्डनार्थमयं तदानीमेव श्राद्धान्नविवेकनाम्नैकं ग्रन्थमुपनिबद्धवान् । वादेनानेनास्य मुर्शिदाबादनगरे महती प्रसिद्धिः समभवत् । उक्तरायमहोदयास्त्वस्य गुणपक्षपातिनः प्रागेवासन् अनन्तरं चास्यान्यैरपि क्रियमाणं समादरमवलोक्य सन्तुष्टहृदया वेदान्ताध्ययनार्थमेनं स्मरहरनगरीं प्रेषयामासुः । वाराणसीमागत्यायं परमहंसपरिव्राजकाचार्यश्रीमद्विश्वरूपस्वामिपादेभ्यो महता श्रमेण वेदान्तशास्त्रमधिजगे । श्रीविश्वरूपस्वामिचरणा अप्यस्य प्रतिभया गुणपक्षपातिनः समभवन् । अनन्तरं चायमध्ययनं समाप्य मुंगेरजनपदं समागतः । तदानीं च वर्णाश्रमधर्मद्रुममूलच्छेदनाय धृतकुठाराः केचन केशवचन्द्रसेनप्रभृतयः परमेशितुराकारं, ब्राह्मण्यादिवर्णभेदं, एकादश्यादिव्रतोपवासादिकञ्च धूर्त्तप्रकल्पितं ब्रुवाणाः सर्वत्र

निर्गुणब्रह्मोपासनावादं प्रचारयन्तिस्म । तन्मते च व्रतोपवाससन्ध्योपासनादिनियमक्लेशराहित्यमवगत्य पाश्चात्त्यशिक्षाकलुषितमानसा वहवस्तत्सभासभ्या अभवन् । केशवचन्द्रादिकश्च गुरुत्वेन स्वीकृत्यथ ह्योपवीतधारणादिकं गर्हितम्मन्यमानाः परितत्यजुः । सर्वत्रैव वङ्गदेशेषु निर्मूलनास्तिकवादप्रचारं दृष्ट्वा खिन्नोऽयं वर्णाश्रमधर्म्मप्रचाराय नास्तिकमतनिरासाय च सुदृढ़ां मतिं चकार । कुमारकृष्णप्रसन्नसेनेन सार्द्धं सम्भूय मुंगेरनगर एवैकां धर्म्मसभां स्थापयामास । ततश्च कलिकातानगरमागत्य महत्यां सदसि प्रायो दशसहस्राणां जनानां पुरतो वज्रगम्भीरया वाचा सुयुक्त्युपन्यासपूर्वकं सगुणब्रह्मोपासनायाः प्रयोजनं प्रतिपादितवान् । सर्वे चास्य वाग्वैदुष्येण स्तम्भिता इव समभवन् । विरोधिनश्चास्य पुरतः समुपस्थातुं न शेकिरे । सर्वत्र वङ्गदेशेष्वस्य नाम्नः प्रचारः समभूत् । वङ्गदेशे च वेदान्तवादस्य तदानीं समीचीनप्रचारो नासीत् । न्यायशास्त्रस्यैव सुमहान् प्रचार आसीत् । अनेन च वेदान्तवादे प्रचारिते तदानीन्तना नैयायिकधुरन्धरा बहवोऽस्य विरोधिनः समभवन्निति श्रूयते । परन्त्वस्य प्रतिभां वाग्वैदुष्यं, पाण्डित्यञ्च दृष्ट्वा तदानीन्तनवङ्गधरणीभूषणभूताः सूक्ष्ममतयो वङ्किमचन्द्रभूदेवेन्द्रनाथयोगीन्द्रप्रभृतयो गुणपक्षपातिनः सञ्जाताः । परमहंसरामकृष्णमहोदया अप्यस्य गुणमुग्धा आसन् । वङ्गभाषायामनेन तदानीं धर्म्मव्याख्येति नाम्ना ग्रन्थरत्नमुपनिवद्धम् । ग्रन्थमिममधीत्य बहवः स्वधर्मे श्रद्धालवः समभवन् । वङ्गभाषायां यद्यप्यनेनान्येऽपि साधनप्रदीपभवौषधादिग्रन्थाः समुपनिवद्धाः परन्तु धर्म्मव्याख्याया यादृशप्रचारः सम भूद्वंगेषु मन्ये नान्येषां तथा प्रचारः समजायतेति । धर्मव्याख्यामधीत्यैव सुप्रसिद्धयोगिवरश्रीशशिभूषणसान्याल महोदयोऽपि गुरुत्वेनैनं स्वीकृतवान् । किं वा वहु कथयामः वर्णाश्रमधर्मप्रचाराय महाभागेनानेन वालानां धर्म्मशिक्षणाय च वङ्गेषु प्रतिनगरं वालकाश्रमनाम्ना

बालानां धर्मशिक्षागाराः संस्थापिताः बहूनि पुस्तकान्यपि तदर्थ-मुपनिबद्धानि । यदा किल राजपुरुषाः स्त्रीसहवासमवलम्ब्य राजवि-धिनियमानुसारेण दण्डविधिं चक्रुः तदानेन तत्प्रतिरोधाय कलिका-तानगर्यां महतीं सभामाहूय राजपुरुषेभ्यो भयमप्यविगणय्य तत्प्र-तिवादः कृतः । तदानीमस्य यादृशी प्रतिष्ठा समभूद्बङ्गीयेषु मन्ये न तथा प्रतिष्ठा तदानीन्तनानां पण्डितधौरेयाणां समजायतेति । इदानीं यद् भारतधर्म्ममहामण्डलं दृश्यते अस्यापि मूलं शशधरतर्कचूडा-मणिमहाशय एव । प्रथमं धर्ममण्डलनाम्ना एका परिषत् ताहेर-पुराधिपश्रीशशिशेखरेश्वरराथबाहादुरश्रीशशधरतर्कचूडामणिमहोद-यप्रभृतिभिः संस्थापिता सैवेदानीं बृहदायतना भारतधर्म्ममहाम-मण्डलनाम्ना प्रसिद्धा समभूत् । यदा किल रमेशचन्द्रदत्तेन वेदाः सर्वे कृषकाणां गीतकान्येवेति मतं प्रतिपादितं तदाप्यनेन तन्मतखण्डनार्थं पुस्तकमेकं प्रणीतम् । तत्र च वेदानामपौरुषेयता प्रतिपादिता। मरणसमयाद् बहुपूर्वमेतेन धर्मप्रचाराय पर्यटनं परित्य-क्तम् । सम्यगवगतमेभिः यदिदानीं धर्म्मजिज्ञासवः प्रायेण न विद्यन्ते सर्वएव जना घोरेऽन्धतमसे निमग्ना एषां धर्मोपदेशो न किमपि फल मुत्पादयिष्यतीति । जिज्ञासुभ्यः श्रद्धालुभ्यश्च शिष्येभ्यो धर्मोपदेशे चरमे वयसि वर्त्तमानस्याप्यस्य विरागो नाभवत् । सुगृहीतनामधेयाः श्रीनिखिलनाथरायज्ञानेन्द्रनाथपाण्डेय यतीन्द्रमोहनसिंहप्रभृतयो बह-वो बङ्गीयाः शिष्या इदानीमपि बङ्गधरण्यां विचरन्ति । सर्व एव ते देवब्राह्मणभक्तिभाजो नास्तिक्यबुद्धिविरहिताश्चेति । एतदेवास्य महात्मनो वैशिष्ट्यं यदेतस्य शिष्यतामापन्नेषु न कोऽपि नास्तिक्यबु-द्धिसम्पन्नो दृश्यत इति । सुप्रसिद्धताहेरपुराधिपतिश्रीमच्छशिशेखरे-श्वररायबहादुर-गौरीपुराधिपश्रीव्रजेन्द्रकिशोराचार्य काशिमबाजा-राधिपति महाराजश्रीमणीन्द्रचन्द्रादयो राजानः महामहोपाध्याय यादवेश्वरतर्करत्न श्रीमत्पञ्चाननतर्करत्न प्रभृतयः पण्डितमूर्द्धन्या

योगिवरशशिभूषणसान्याल रामदयालमजुमदार प्रभृतयः साधुमूर्द्ध-न्याश्च यस्य गुणपक्षपातिनः समभवन् तस्यास्य महाभागस्य पुरुषोत्तमत्वे नास्ति मनागपि विप्रतिपत्तिलेशः ।

राजानो यं प्रशंसन्ति यं प्रशंसन्ति पण्डिताः ।
साधवो यं प्रशंसन्ति स पार्थ पुरुषोत्तमः ॥

॥ इति ॥

---

## ब्राह्मणमहासम्मेलनस्येतिवृत्तम् ।

अहो महाकालसागरस्योरसि समाहिताः स्रोतःसमा द्वाविंशतिः समाः समाजशुभकाम्यया प्रतिष्ठिताया वङ्गीयब्राह्मणसभायाः । यस्याः खलु सदस्यास्तदानीं प्रशिथिलमूलमालोक्य धर्म्ममहापादपमापदश्च महतीमनुभूय वर्णाश्रमिणामदःसदोरचनया वङ्गभूमावाद्यं विप्रसम्मेलनवीजमवातारयन् । ततश्च यावद्वर्षसप्तकं पर्षदोऽस्याः कलिमलागारेऽपि कलिकातानगरे प्ररूढ़मूलायाः प्रायः षष्टिसंख्यकाः शाखासमितयः प्रसूताः किलासामदेशे विभिन्नेषु च वङ्गमण्डलेषु । रविरिव प्रतिदिनमुदीयमानः प्रभावश्चास्याः सभायाः सुमनोमनः सभाजनभाजनमंशतः समभवत् । परन्तु सर्वतो विसारिभिर्वन्याक्षारवारिभिरिव प्रतिकूलशिक्षाविधिभिर्निरवधि प्रतिवध्यन्ते संयमसदाचारभूम्युपजीविनो धर्म्मोपदेशप्ररोहाः । तथा क्रियन्ते श्रद्धापद्मिनीविरहितानि सरांसीव विनेयानां चेतांसि । श्रद्धाविध्वंसाद्विधिवोधितानां कर्म्मणामननुष्ठानं कर्म्मलोपाच्च स्वतः समुच्छेदो धर्म्मस्य । अहो दौर्भाग्यं, यो हि धर्म्मो वर्म्मस्वरूपः परकरवालादिव प्रतीच्यभावप्राबल्याद्विरं परित्रायते

भारतं स एव चेदुच्छिद्येत शिक्षाव्यवस्थया दूरमास्तां देशजातिसमुद्धारणं मरणमेव सद्यः सन्निहितं स्यादतएवात्मरक्षणकामिभिर्वर्णाश्रमिभिः सैव धर्म्ममयी सरणिः शरणीकर्त्तव्या या हि महतो भयादपि सेवकान् परिरक्षेत् । अतश्च सदाचारतत्त्वविचारेण देशजातिकुलधर्म्मसाधारणधर्म्मव्याख्यानेन तथा नानाशास्त्रमर्मोद्घोषणेन पराङ्मुखानामप्याभिमुख्यविधानाय समाधानाय च सर्वविधसङ्कटानां चातुर्वर्ण्यस्य प्रतिवर्षं भारतवर्षस्य विभिन्नेषु प्रदेशेषु मण्डलेषु च विचरन्ती काचिन्महती ब्राह्मणसम्मेलनी कल्पनीया ब्राह्मणानामुत्तमाङ्गोद्भवत्वाज्ज्येष्ठत्वाद्विधात्रा धर्मकोषस्य गुप्तये सृष्टत्वाच्च चतुर्णां वर्णानां धर्म्मोत्कर्षापकर्षयोः प्रतिभूत्वं तेषामेवेति वङ्गीयब्राह्मणसभासदां द्वितीयमिदं निदिध्यासनम् अहङ्काररूपतामाधत्त ।

इतश्चतुर्द्दशवर्षेभ्यः पूर्वमागते पञ्चत्रिंशदधिकाष्टादशशततमे शकाब्दे कस्मिन्नपि शिवतमे मुहूर्त्ते कुलीनाग्रजगणप्रधाने विक्रमपुराभिधाने विश्रुतवङ्गमण्डले विद्याधर्म्मयशःप्रथितानां ताहेरपुरपतीनां राजश्रीयुतशशिशेखरेश्वररायवहादुरमहोदयानां सादस्पत्येन ब्राह्मणमहासम्मेलनस्य प्राथमिकोऽवतारः समजनि । अतिमधुराभिः सभापतीनां वाचोयुक्तिभिः स्वमण्डलान्मण्डलान्तरेभ्यश्चागतानां विदुषाञ्च सूक्तिभिः प्राथम्येऽपि सम्मेलनानुष्ठानस्य तस्य सर्वेषामेव सहृदयसदस्यानां हृदयान्यभिनवोत्साहभरैर्विभराम्बभूविरे । आलोचिताश्च तत्राधिवेशने त्रयोदश विषया येषु केचिदिह निबन्धे वर्णनीयतामर्हन्ति । तथाह्यधुनातनेषु पाश्चात्त्यविद्यानिकेतनेषु यान्यध्याप्यन्ते शास्त्रमतविरुद्धानि पुस्तकानि तेषामुत्सादनाय सदुपायः समाश्रयणीय इत्येकः, सुकुमारमतीनां पाश्चात्त्यविद्यामन्दिरच्छात्राणामुपयोगिनो धर्म्मग्रन्थाः शास्त्रसारसहिता वङ्गभाषया विरचयितव्या इत्यन्यः । परिणये पणग्रहणमन्यतरपक्षयोः प्रत्यक्षं परोक्षं वा सर्वथा

प्रतिषिद्धम् इत्यपरः । इहोपस्थितैरत्रत्यैः पण्डितैस्तथा कुलाचार्यैरेव सिद्धान्तः क्रियते यथा द्वीपान्तरम्लेच्छदेशप्रत्यावृत्तानामभोज्यभोजनजन्यदोषनिवृत्तये कृतप्रायश्चित्तानामपि नैव व्यवहार्यत्वम् । सिद्धान्तोऽयं विक्रमपुरसमाजस्य तावत्प्रभविष्यति यावदन्यस्मिन् महासंमेलने सिद्धान्तान्तरमुपदेक्ष्यते । परन्त्विदमपि विज्ञाप्यते यदागामिनि महासम्मेलने वङ्गदेशप्रतिनिधीभूतानां विपश्चितां विशिष्टया समित्या शास्त्रार्थनिश्चयपूर्वकमेतद्विषयकः प्रस्तावः सदस्यानां पुरतः समुपस्थास्यते । इत्येवमादयो दिङ्मात्रेणोदाहृताः । दिनद्वयव्यापिना कार्यकलापेनैतदधिवेशनस्य द्रागुज्जृम्भितनवोत्साहसम्भूतानन्दसन्दोहाः सम्मेलनकर्मधुरीणाः संवत्सरान्तमसहमानास्तस्मिन्नेव हायने पुण्यफाल्गुनपौर्णमास्यां कलिकातानगरीयकालीघट्टमहापीठे पञ्चाहव्यापि द्वितीयमधिवेशनं महताडम्बरेण प्रवर्त्तयामासुः ।

अहो महिमा हिमालयबालिकाया भगवत्या कालिकायाः यदङ्घ्रिमूलस्थितिमालभमानं द्वितीयं ब्राह्मणमहासम्मेलनं तथोन्नतिमापद्यत यथा कल्पनापथमप्यत्यवर्त्तत मर्त्यानां स्वल्पशक्तीनाम् । सम्पूर्णमुपवर्णनन्तु अस्याधिवेशनस्य नैवाशास्यतां सहृदयैरिह स्वल्पीयसि निबन्धे । समासेनावश्यकविषयाणाम्भवताम्प्रीतिकारणं नैव भवतु भवतामित्यर्थ्यते । ( क्रमशः )

---

॥ श्रीगुरुःशरणम् ॥

# साम्प्रतिकस्पृश्यास्पृश्यशुध्यादिविचारपरीक्षणम् ।

सम्प्रति भारते वर्षे तत्र तत्र प्रदेशेषु पाश्चात्यशिक्षाशिक्षिता नवीनास्तदनुयायिनश्च स्वराज्यलाभाय कांग्रेससभाहिन्दुमहासभास्तदनुगामिनोऽरितराश्च क्षुद्राः सभाः सम्पाद्य सर्वैः प्रकारैः प्राचीनतमं सनातनधर्मं श्रुतिस्मृतीतिहासपुराणादिप्रमाणजातञ्च महाजनैरद्ययावन्महता समादरेणाभ्युपगतं तृणाय मन्यमाना स्तद्विरुद्धानि कार्याणि यथेच्छमाचरन्तो दृश्यन्ते। स्वराज्यलाभस्य चाहिन्दूनां हिन्दूकरणमस्पृश्यानामस्पृश्यत्ववर्जनञ्च प्रधानतममुपायं मन्यन्ते। तेषामयमभिप्रायः यावदस्पृश्यानामस्पृश्यत्ववर्जनं न क्रियेत तावदस्पृश्यानां 'वयं यदि हिन्दुसमाजान्तर्गता एव स्थास्यामस्तर्हि कदाचिदपि श्रेष्ठजातीनां हिन्दूनां तिरस्कारदृष्टेरविषया न भविष्यामस्तद्वरं भिन्नमतं क्रैस्तवं माहम्मदं वा प्रविशामेति' बुद्धिरुत्पद्यमाना न निवर्तयितुं शक्यते। अस्याश्च बुद्धेरनुत्पादाय यदि न प्रयतिष्यते तथासति येऽस्मत्समाजघटकास्समाजस्य सर्वथा परिपालकाश्च त एव विरोधिमतानि समाश्रित्य तद्भावमापन्ना अस्मद्विरोधिन एव भूत्वाऽभीप्सितस्वराज्यलाभे प्रतिबन्धका भविष्यन्ति। क्रमेण चास्माकं हिन्दूनां सङ्ख्याऽपचीयमाना परेषामाक्रमणसमये सर्वथा स्वरक्षणेऽसमर्था विशेषतो हानिमासादयेदिति स्वबलं वर्द्धयितुकामैः प्राथम्येनास्पृश्यानामस्पृश्यत्ववर्जनपूर्वकं सार्वजनिकेषु देवालयादिषु प्रपाकूपारामतडागादौ सभाव्याख्यानादिस्थानेषु चाप्रतिबन्धेन तेषां प्रवेशः कार्यः तथा ये क्रैस्तवं माहम्मदं वा मतं प्रविष्टास्तेषां चेत्पुनर्हिन्दुधर्माश्रयणे प्रवृत्तिस्तर्हि नाममात्रैकसारेणापि प्रायश्चित्तादिविधिना पावयित्वा ते पूर्वजातौ प्रवेशनीयाः ये च जन्मना म्लेच्छास्तेषामपि हिन्दुधर्मेऽभिरुचिश्चेत्तेऽपि हिन्दुधर्मं ग्राहयितव्यास्तथा

सत्येव हिन्दूनां बलं वर्द्धेत । यवनैश्च संप्रति बहुशो हिन्दूनां योषितो बलादपह्रियन्ते तत्प्रतीकारस्याप्ययमेव उपाय इति च ते वर्णयन्ति । तत्र वयं किञ्चिदिव विचारयामो यदनादिकालमारभ्य भारतवर्षीयैर्भारते वर्षे राज्यानि स्थापितानि किं बहुना देशान्तरेष्वपि स्वीयं राज्यमप्रतिहतं व्यवस्थापितमित्यत्र प्राचीनेतिहास एव प्रमाणम् । तदानीं च सर्वापि प्रवृत्तिर्धर्मशास्त्रानुमतैवाऽऽसीदित्यपि नैतिहासिकानां परोक्षम् । सत्यपि शास्त्रैकपारतन्त्र्ये ते स्वातन्त्र्यं रक्षितुं समर्था अभवन् स्वराज्यानि च स्थापयितुं कृतप्रयत्नाः सफला अभवन् न वयं प्रभवाम इत्यत्र किं धर्मानुवर्तित्वं जातिभेदो वर्णाश्रमधर्मो वा प्रतिबन्धक इत्युच्यते ? तथासति यवनसमये जातिभेदे सत्यपि शिवाजीप्रभृतिभिः कथं स्वराज्यं प्रतिष्ठापितमिति परीक्षका एव विवेचयन्तु । किं तदानीमस्पृश्यानामस्पृश्यत्ववर्जनं कृतम् ? किं वा तदानीमस्पृश्याः समाजेष्वेव घटकतया नासन् ? तदानीं कैरप्यस्पृश्यैर्वयं यदि न स्पृश्या भविष्यामस्तर्हि मतान्तरं प्रवेक्ष्याम इति विभीषिका प्रदत्ता किम् ? अथवा तदनुसारेण कैरपि स्पृश्यास्ते सम्पादिताः ? एवं सत्यपि यदा स्वकार्यकरणसमर्थास्ते संवृत्तास्तस्य कारणमन्यदेवेति विचार्यताम् । मूलकारणं किञ्चिदपरिशोध्य किमपि कार्यमनुष्ठितं चेत्तावता को लाभः स्यात् । यच्चोच्यते समाजे तेऽतीव घृणादृष्ट्याऽवलोक्यन्तेऽस्पृश्याः कथमस्मत्समाजे ते स्थास्यन्तीति । तदिदं बालसम्मोहनम् । नेदानीं पूर्वं वा कदापि घृणादृष्ट्या केऽपि अस्पृश्यास्समवलोकिताः, यो यज्जातिविहितं कार्यं कुर्वन् स्वधर्मेण भगवन्तमाराधयति स प्रशंसनीय एव भवति । तत्तज्जात्युचितकार्यकरणेन तत्र तत्र ख्यातिपूजादिकमपि अस्पृश्यैः सम्पादितमिति किं भवद्भिर्न विज्ञायते ? सन्ति हि बहून्युदाहरणानि नीचजात्युद्भवा अपि गुणेन कर्मणा चेतरेभ्योपि विशिष्टं सम्मानमलभन्तेति । रोहिदासकबीरदासादयो हीनजात्युत्पन्ना अपि भगवद्भजनेन विशिष्टगौरवभाजनानि

भूत्वाऽद्य यावत्पूज्यदृष्ट्यैव समवलोक्यन्ते इति प्रसिद्धमेव । न वा तैरेतादृशं गौरवं लब्धमिति कृत्वा समाजेऽन्तः प्रविश्य कर्मसङ्करो वर्णसङ्करो वृत्तिसङ्करो वा कृतः न वा तज्जातीयैरपि स्वस्य हीनतामवगत्य कदाचिदपि विरोधः कृतः तथेदानीमपि कुतो न स्यादिति भवन्त एव विचारयन्तु । न चेदानीमपि अस्पृश्याः स्वीयास्पृश्यत्वपरिहारं कामयन्ते । केवलं पाश्चात्यैर्बुद्धिभेदं प्रापिता भवन्त एव घृणादृष्ट्या तेऽवलोक्यन्त इति मुहुर्मुहुर्घोषणेन कोलाहलं कुर्वन्ति । अस्पृश्येष्वपि ये केचिदत्यन्तमविवेकिनः परकीयशिक्षामासाद्य नव्यालोकप्रभावेण दूषितबुद्धयस्त एव द्वित्राः क्वचिदेवं प्रलपन्ति नतु तत्समाजघटकास्सर्वेऽपि, किंचेदमपि विचारणीयं यदस्पृश्येष्वपि बह्वो जातयो विद्यन्ते न तासु सर्वासु परस्परं स्पृश्यत्वं सहभोजनादिकं वा विद्यते तास्वपि उच्चनीचभावो विद्यते तत्रोच्चजातीयेन न नीचजातीयैः सह संस्पर्शः तत्स्पृष्टभोजनादिकं वा क्रियत इत्यपि भवतां नव्यशिक्षितानां नाविदितम् । यदाऽस्पृश्येष्वेवेत्थं व्यवस्था विद्यते नच तस्या अन्यथाकरणं केनापि कर्तुं शक्यते तदा कथं ब्राह्मणक्षत्रियवैश्यशूद्रैस्ते स्पृश्या भवितुमर्हन्ति । नव्यशिक्षिताः केचित्प्रोत्साह्य बलात्तेषां देवालयादिप्रवेशं कारयितुं समीहन्ते इत्येतत्सत्यम् । परं ये नव्यशिक्षितमतानुवर्तिनोऽस्पृश्यास्ते तज्जातीयैः स्वसमाजादित्थमाचरणेन बहिष्क्रियन्ते इत्यपि किं न विदितं श्रीमताम् । अद्यापि दक्षिणप्रदेशेषु अस्पृश्या ब्राह्मणादिविशिष्टजातीयानामग्रहारादिषु प्रवेशेन महदनिष्टं परलोकेऽस्माकं स्यादिति भिया बलात्प्रोत्साहिता अपि न प्रविशन्ति पल्लीम् । काश्यादिप्रदेशेष्वपि अस्पृश्या इदमेव प्रतिपादयन्ति कथमेवं ब्राह्मणाद्युत्तमं जन्म प्राप्यापि नव्याः पाश्चात्यैर्दूषितबुद्धयो भक्ष्याभक्ष्यपेयापेयस्पृश्यास्पृश्यविभागं न मन्यन्ते इति खेदं प्रकाशयन्ति । अस्पृश्यानामस्पृश्यत्वव्यवस्थापनमात्रेण तत्र घृणादृष्टिरवलक्ष्यत इत्यपूर्वोऽयं नवीनानां पूर्वपक्षोद्भावनप्रकारः । दृश्यता-

मेकं प्रजननेन्द्रियम् । तत्र कीदृशो भवतामपि प्रेमप्रकर्षो विद्यत इत्यत्र नास्त्यस्माभिरेव किमपि वक्तव्यम् भवन्तएव विचारयन्तु तज्जनितपरमानन्दानुभवार्थमेव खलु युष्माकं सर्वेषां महत्याऽऽरभस्याप्रवृत्तिः तथापि किं तत्स्पर्शे हस्तमप्रक्षाल्यैव भोजनादिकमाचर्यते ? परस्परं स्त्रीपुंसयोरित्थमस्पृश्यस्थानस्पर्शेनैव सर्वेषामुत्पत्तिरित्यत्राप्यविवादएव । तज्जनिते च सन्तानादौ निरतिशयः स्नेहो वर्ततएव किं बहुना प्रतिप्राणिशरीरएव कियन्ति वस्तून्यस्पृश्यानि विद्यन्तइत्यत्र संख्यापि न विद्यते परं तेषु सर्वैर्घृणादृष्टिः क्रियते इति न केनाप्यद्य यावदुद्भावितमिति भवतामपूर्वबुद्धिकौशलं दृष्ट्वा सत्यं विस्मिताः स्मः । एकस्मिन् शरीरेऽनेकेऽवयवाः सन्ति सर्वेषां च कार्याणि भिद्यन्ते व्यवस्थितानि च तानि कार्याणि । नान्यदीयं कार्यमन्येन क्रियते नवा कर्तुं शक्यते, न कश्चिदद्य यावत्पद्भ्यामेव गमनं कृतवानितीतः परं शिरसा गन्तुं समर्थः स्यात् । किं बहुना मुखेन क्रियमाणं कार्यं नाधस्तनेनेन्द्रियेण कर्तुं शक्यते नच तेन निर्वर्त्यमानं कार्यं मुखेन कदापि कर्तुं शक्येतेति कश्चिदपि प्रज्ञावान् वक्तुं शक्नुयात् नच दक्षिणेन हस्तेन क्रियमाणं कार्यं वामहस्तेन कर्तुं शक्येत नवा तेन सम्पादनीयं तदितरेण सम्पादयितुं शक्यते यदि शक्येत तथासति एतावतामवयवानां निर्माणमेव व्यर्थं प्रसज्येत एकेनैवान्यतमेन सर्वकार्याणां कर्तुं शक्यत्वात् । एवं सत्यप्यनेकत्वे भिन्नप्रयोजनकत्वेऽस्ति सङ्घातः अस्ति च संहतभावेन स्थितानां सर्वेषां तेषामवयवानां परस्परविरोधेन शरीरधारणलक्षणं कार्यमेकं नच तत्र कस्यापि परस्परं विमतिर्वर्तते नच तावता शरीरिणो महावयविनस्तेषु सर्वेष्ववयवेष्वात्मबुद्धौ कश्चिन्न्यूनाधिकभावो विद्यते । यादृशोह्यात्मभावः शिरसि हस्ते वा विद्यते तादृशएव पादयोर्जङ्घयोर्वा किं बहुना गुह्येष्वपि पायूपस्थादिष्वस्ति । अतएव शिरसि वेदनायां स्फोटकाद्युपद्रवे वा सञ्जाते तत्प्रतीकाराय यादृशः प्रयत्नो

धनव्ययो वा क्रियते तादृश एवास्पृश्येष्वप्यवयवेषु स्फोटकादिजनित-वेदनाप्रतीकाराय यत्नः क्रियतइति प्रसिद्धमेव सर्वेषाम् । तद्वदेव स-माजरूपशरीरस्यावयवा अनेके वर्तन्ते तेषां च कार्याणि भिन्नानि व्य-वस्थितानि च विद्यन्ते नचान्येनान्यस्य कार्यं कर्तुं शक्यते । एवं भेदे सत्यपि सर्वैः परस्पराविरोधेन समाजरक्षणरूपं कार्यं कर्तव्यमित्येव शास्त्रकाराणामभिप्रेतम् । सर्वत्रात्मदृष्टिरप्यविशेषेणैव क्रियतामतएव खलु भगवतीश्रुतिर्ब्रूते सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासी तेति । आत्मदृष्ट्या सर्वत्र समानत्वेऽपि औपाधिकदृष्ट्या भेदोऽस्त्ये-वेति यावद्व्यवहारं स भेदस्तत्प्रयुक्तकार्यभेदोऽप्यङ्गीकरणीय एव । यु-ष्माभिरपि सर्वैः सर्वात्मनाऽभेदोऽपाकर्तुमिष्यते वा ? तथासति दीय-न्तां कन्यकास्तेभ्यः प्रदीयन्तां च स्वीयधनधान्यकुप्यपशुस्त्रीपरिच्छदा-दीनि । तदा खलु वयं विश्वास्यामः सत्यमस्ति श्रीमतामात्मत्वाभिमा-नस्तेषु । एवं चेत्केवलमस्पृश्येष्वेव कोऽयमात्मत्वाभिमानः ? क्रैस्तवेषु माहम्मदादिष्वपि क्रियतामात्मत्वाभिमानः परित्यज्यतां भेदभावः किमिति स्वराज्यं परराज्यं स्वदेशः परदेशः स्वीयाः परकीया इत्या-दिभेदेन व्यवहारभेदोऽवलम्ब्यते ? यच्चावश्यकं कार्यं तत्तु न क्रियते केवलं सनातनधर्मीयाश्चेच्छास्त्रेषु प्रामाण्यबुद्धिमवलम्ब्य तत्परतन्त्रा स्तदुक्तेन मार्गेण व्यवहरन्ति तदा किमित्यक्षिणी रक्ते कृत्वा तेऽवलो-क्यन्ते । यदि नामास्पृश्यानामस्पृश्यत्वपरिहारः स्यात्तावता सनातन-धर्मीयाणां लाभएव स्यात् अधिकतया तदीयकार्यकरणाय मनुष्या लप्स्यन्ते तथा लाभे सत्यपि यन्नाङ्गीकुर्वन्ति तत्प्रतिकूलञ्चाचरन्ति अत्र केवलं शास्त्रपारतन्त्र्यमेव कारणं तच्च न दूषणम् । महच्च प्रामाण्यका-रणमेतद्यद्दृष्टप्रयोजनादिविघातेनापि केवलं शास्त्रपारतन्त्र्यमात्रेणैव तत्प्रतीकारकरणं नाम ! सर्वत्र ब्रह्मत्वे समाने कथमयमुच्चनीचभावा-विर्भाव इति चेत्स्वात्माज्ञानमुपालभ्यताम् । स्वस्वस्वरूपमविज्ञाय र-ज्ज्वामहिरिव विपरीतभावः समारोपितस्तत्र नास्माकमपराधः । स

विपरीतभावोऽपनेयश्चेत्तर्हि यावज्ज्ञानोदयं श्रुत्युक्तप्रकारेण वर्णाश्रमधर्मः परिपाल्यतामुच्चनीचभावोऽपि भवतैव परिकल्पितः विषमभक्ष्यं मधु भक्ष्यं इत्ययं भेदश्चेत्संरक्ष्यते तर्हि सर्वएव भेदः परिपाल्यतां कथमर्द्धंजरतीयन्यायेन किञ्चित्त्यज्यते किञ्चित्तु परिगृह्यते । यदि नाम भवतां शीतोष्णयोः सुखदुःखयोः मधुरतिक्तयोः स्त्रीपुंसयोः गवाश्वयोः सर्वेषु द्वन्द्वेषु समा बुद्धिः तर्हि स्पृश्यास्पृश्यविभागोऽपि परिह्रियतां नोचेदेवं कथं न साहसमात्रं सर्वथाऽस्मदीयोन्नतेर्विघातकमित्येव वयं विश्वसिमः । न वयमप्यस्पृश्यानामैहिकं पारलौकिकं वा सुखमनुभवितुं प्रतिबन्धं कुर्मः । यावद्धि शास्त्राविरोधेन तेषामानुकूल्य मारचयितुं शक्यं तावत्कर्तुं सन्नद्धाः स्मः । क्रियन्तां तेषां दृष्टदुःखनिवृत्तये प्रात्यहिकशरीरयात्रानिर्वृत्तये च व्यवस्थाः क्रियन्तां च तेषां कृते विशिष्टजलाशयादिनिर्माणानि । तदर्थं सनातनधर्मीया अद्ययावदपरिमितानि धनानि व्ययितुं न कथमपि सङ्कोचमकुर्वन् न वा करिष्यन्ति इति निश्चितं मन्यताम् । वस्तुतस्तु अस्पृश्यानां समाजे वर्तमानानां महादुःखं भोक्तव्यं भवतीति कथनमेव सर्वात्मनाऽलीकमिति मन्यामहे । कस्मिन् कार्ये एते घृणादृष्ट्याऽवलोक्यन्ते इत्यपि विचार्यताम् । न तावद्धूमशकटादौ स्पृश्यास्पृश्यविभागः केनापि समाश्रीयते । एकस्मिन्नेव शकटे नीचा अतिनीचाः सर्वेऽपि उच्चजातीयैः सममेवैकत्रोपविशन्ति न तत्र केनापि किमपि प्रोच्यते मध्ये मध्ये यत्र यत्र बाष्पयानं निरुद्धं भवति तत्रावतीर्य जलपानार्थं नलिकास्थाने सर्वे एव स्पृश्यास्पृश्यविभागमुपेक्ष्य स्वीयं कार्यमनुतिष्ठन्त्येव । राजकीयव्यवहारालयादावपि सर्वै र्जातिभेदं स्पृश्यास्पृश्यविभागञ्च परित्यज्यैव स्वस्वकार्याणि क्रियन्तएव । तथा आपणादिष्वपि नायं भेदः समवलम्ब्यते तर्हि कुत्र ते प्रतिबध्यन्ते भवन्त एव वदन्तु । लौकिकव्यवहारे न कुत्रापि ते परिवर्ज्यन्ते एवञ्चेत्तेषु घृणादृष्टिः क्रियते इति कथनं मुधैव भवताम् । देवालयादौ तेषां प्रवे-

शो न दीयते इति चेत्तर्हि भवन्तः प्रष्टव्याः किमर्थं देवालयादौ तेषां प्रविविक्षा । देवदर्शनार्थमितिचेत् । किं सा शास्त्रेषु प्रामाण्यबुद्धिपूर्विका उत स्वतन्त्रा ! यदि प्रथमः पक्षः तथासति शास्त्रेषु तेषां विश्वासे शास्त्रेणैव तद्बोधितं यदस्पृश्यैः मन्दिरशिखरदर्शनमात्रेणैव भगवदर्शनं लप्स्यते अतएव मन्दिराण्यपि शैववैष्णवादीनि शास्त्रोक्तप्रकारेण निर्मीयन्ते चेत्तानि यन्त्ररूपाणि देवताप्रतिमात्मकान्येव भवन्ति इति शास्त्रविदां समयः । एवं केवलं भगवन्मन्दिरदर्शनेनैव चेद्भगवद्दर्शनजनितपुण्यलाभपापनिवृत्त्योः सम्भवः तावतैवास्पृश्याः सनातनधर्मीयाः शास्त्रविश्वासिनः सन्तुष्यन्त्येवेति तद्विश्वासबुद्धिमतां न कथमपि देवालयाभ्यन्तरे प्रविविक्षा भवितुमर्हति, एवमपि भगद्विग्रहदर्शनेनैव परितोषो भवेदित्युत्कटेच्छावतां कृते एव प्रतिवर्षं तेषु तेषु पर्वसु प्रतिमासमप्येकादश्यादि पुण्यतिथिषु महोत्सवो रथोत्सवो भगवद्विग्रहादिपरिदर्शनं महत्यारभट्या क्रियतइति सर्वविदितम् । नच तत्रानेनैव दर्शनं विधेयं नापरेणेति नियस्यते केनापि । द्वितीयेऽपि पक्षे यस्य नास्ति शास्त्रेषु विश्वासः श्रद्धा वा तस्य भगवदालये प्रविविक्षा केवलमस्मद्धर्मे द्वेषमूलिकैवेति वक्तव्यम् । एवं चेत्किमिति तस्य प्रवेशाभ्यनुज्ञा शास्त्रविरुद्धमस्माभिर्देया । यथाहि स्वयं आर्यसमाजीयाः सर्वथा मूर्तिद्वेषिणोऽपि चेद्भगवन्मन्दिरं प्रतिगच्छेयुस्तर्हि ते निरुध्यन्ते तथैव तेऽपि निरोद्धव्या एव । एवमपि भवतामाग्रहश्चेदयमन्याय एव स्याद्राजदण्डेन च स प्रतिरोद्धव्य एव । अतएव धर्मशास्त्रेषु संविद्व्यतिक्रमो नाम एकं व्यवहारपदं वर्तते तस्य स्वरूपमेतावदेव यस्य राज्ञो विषये ये केचन जना निवसन्ति तेषां परम्परानुगतो यो धर्मो वर्तते स धर्मतः परिपालनीयस्तत्र न केनापि प्रतिरोधः कर्तव्यः यथा नारदस्मृतौ १० श्लोके—

"पाखण्डिनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ।"

पाखण्डिनः वेदमार्गविरोधिनः वाणिज्यादिकराः नैगमास्तद्विरोधिनः आदिपदेन त्रैविद्या गृह्यन्ते ।

पाखण्डिनैगमश्रेणिपूगव्रातगणादिषु ।
संरक्षेत्समयं राजा दुर्गे जनपदेषु च ॥

एतेषां समयभेदे दण्डो दर्शितः—

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥

अनेन हीदं सूच्यते यदेकस्य राज्ञः प्रजाजनेषु नैकजातीया निवसन्ति न वैकधर्मीयाः एवंचेद्येषां परम्परानुगतो यो धर्मस्तत्परिपालनं यथा भवति तथा राज्ञा सम्पादनीयम् । भारते वर्षे चानादिकालमारभ्यैतावत्कालपर्यन्तमियं मर्यादाऽनुवर्तते यदस्पृश्या देवालयादौ न प्रविशन्ति इदानीं चेद्भवद्भिरूपोद्बलिताः प्रविशेयुस्तथा सति राष्ट्रक्षोभः स्यादिति निर्विचिकित्सं निश्चीयताम् । राजा च यदि तत्र निवारयेत्तदापि प्रजाभिरेतन्न विषह्येत ।

---

## चातुर्वर्ण्यम् ।

### विषयः—

"चातुर्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः"

इति गीतावचनम् ।

### संशयः—

कस्तावदस्यार्थः ?

किं गुणकर्म्मणो र्यो विभागो भेदः तदनुसारेण चातुर्वर्ण्यं मया ईश्वरेण सृष्टमिति ? आहोस्वित् गुणकर्म्मणी विभज्य विभज्य मया चातुर्वर्ण्यं सृष्टमिति ?

प्रथमपक्षे यस्मिन् पुरुषे यादृशी गुणकर्म्मणी, तत्र तदनुरूपवर्णत्वं

मया दत्तं—यथा स्वाभाविकं ब्राह्मणकर्म्म यत्र वर्त्तते स शूद्रयोना-वुत्पन्नोऽपि ब्राह्मणः, एवं स्वाभाविकशूद्रकर्म्म यत्र वर्त्तते जात्या ब्राह्मणोऽपि स शूद्रः । इदंरूपा वर्णसृष्टिर्वर्णकल्पना मया कृतेति फलितम् । द्वितीयपक्षे तु—मुखबाहूरुचरणतो मया चातुर्वर्ण्यसृष्टिः कृता—तेषु च गुणकर्म्मणोर्विभागः कृतः—यथा ब्राह्मणा एवंगुणा एवंकर्म्माणश्च भवेयुः क्षत्रियादयश्च गुणविशेषवन्तः कर्म्मविशेषव-न्तश्च स्युः—एवं विभागोऽपि मया कृत इति फलितम् ।

पूर्वपक्षः—गुणकर्म्मभेददर्शने च चातुर्वर्ण्यकल्पनेत्ययं पक्षः प्राप्तः । कथमिति चेत्—युगान्तरसंवादात् । तथाहि ब्राह्मणः को भवे-दिति सर्पयोनिगतनहुषप्रश्ने युधिष्ठिर उवाच—

सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः ॥ ......
सर्प उवाच—चातुर्वर्ण्यं प्रमाणन्ते सत्यञ्च ब्रह्म चैवहि ।
शूद्रेष्वपि च सत्यञ्च दानमक्रोध एव च ॥
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर । ......
युधिष्ठिर उवाच—शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
नैव शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत् सर्प तं शूद्र इति निर्दिशेत् । ......
सर्प उवाच—यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तदायुष्मन् कृतिर्यत्र न विद्यते ॥
युधिष्ठिर उवाच— जातिरत्र महासर्प मनुष्यत्वे महामते ।
सङ्करात् सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥
सर्वे सर्वास्वपत्यानि जनयन्ति यदा नराः ।
वाङ्मैथुनमथो जन्म मरणञ्च समं नृणाम् ॥
इदमार्षं प्रमाणञ्च ये यजामह इत्यपि ।

तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥

( इति वनपर्वणि युधिष्ठिराजगरसंवादे ) ( १८० अध्याये ) तथा शान्तिपर्वणि भृगुभरद्वाजसंवादे ( १८९ अध्याये )

भरद्वाज उवाच—ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम ।
वैश्यः शूद्रश्च विप्रर्षे तद् ब्रूहि वदतां वर ॥
भृगुरुवाच—जातकर्म्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु कर्म्मस्ववस्थितः ॥
शौचाचारस्थितः सम्यग् विघसाशी जितेन्द्रियः ।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥
सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥
क्षत्रजं सेवते कर्म्म वेदाध्ययनसङ्गतः ।
दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥

वणिज्या पशुरक्षा च कृष्यादानरतिः शुचिः ।
वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः ॥
सर्वभक्षरतिर्नित्यं सर्वकर्म्मकरोऽशुचिः ।
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥
शूद्रे चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।

न वै शूद्रो भवेच्छूद्रो ब्राह्मणो ब्राह्मणो न चेति । अत्र गुणकर्म्मणोरेव ग्रहणं न तु जन्मनोऽपि ।

अपिच श्रीमद्भागवते सप्तमस्कन्धे एकादशाध्याये ( ३५ )

यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।
यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥

ब्राह्मणलक्षणं यदि शूद्रे गच्छेत् तं शूद्रं ब्राह्मणत्वेन निर्दिशेदित्यर्थः । अतएव गीतायामप्यग्रे वक्ष्यते—

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।

ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजम् ॥ इत्यादि ।

यदि वर्णविशेषसृष्टिस्तदीयगुणकर्मविभागश्चेश्वरकृतः स्यात्—जात्या ब्राह्मणाः सर्वत्र शमादिमन्तः स्युः, तस्माद् यत्र स्वाभाविकं शमादिकं वर्त्तते स एव ब्राह्मणः—एवं क्षत्रियादयोऽपि वेदितव्याः। जातिब्राह्मणत्वादिकं तु कल्पितमिति ।

उत्तरम्—

तदत्राभिधीयते—द्वितीयार्थ एव युक्तः। सौप्तिकपर्वणि तृतीयाध्याये तदर्थस्य स्पष्टमभिहितत्वात् । तथाहि ।

प्रजापतिः प्रजाः सृष्ट्वा कर्म्म तासु विधाय च ।
वर्णे वर्णे समाधत्त ह्येकैकं गुणभागगुणम् ॥
ब्राह्मणे वेद मग्र्यं तु क्षत्रिये तेज उत्तमम् ।
दाक्ष्यं वैश्ये च शूद्रे च सर्ववर्णानुकूलताम् ॥
अदान्तो ब्राह्मणोऽसाधु निस्तेजाः क्षत्रियोऽधमः ।
अदक्षो निन्द्यते वैश्यः शूद्रश्च प्रतिकूलवान् ॥

इति वर्णसृष्ट्यनन्तरं तत्र गुणकर्म्मणोर्विभागेनाधानं व्यक्तमवगम्यते। अवगम्यते च गुणहीनानां ब्राह्मणादीनां निन्दितत्वं न तु तेषां ब्राह्मणेतरत्वमपि । विवक्षितश्चान्यदागामिखण्डे प्रकाशयिष्यते ।

---

# वार्त्ताः सम्पादकाभिप्रायाश्च ।

## नासिकक्षेत्रयात्रावृत्तान्तः ।

अतीतेषु पंचविंशतिदिवसेषु परमपवित्रं श्रीनासिकक्षेत्रं सनातनधर्मचर्चायाः प्रधानतममास्पदमभूत् । करवीरपीठाधिपतिभिः श्रीकुर्तकोटिशङ्कराचार्यस्वामिमहोदयैः सम्पादितं मिस्मिलरनाम्न्याः इङ्गणाङ्गनायाः हिन्दूकरणमधिकृत्य वाराणसेयैः पण्डितप्रकाण्डैः महा-

महोपाध्याय पं० लक्ष्मणशास्त्रिद्राविडमहोदयैः श्रीमत्पण्डितराजेश्वरशास्त्रिद्राविडमहोदयैः तथा कलिकातानिवासिभिः सुगृहीतनामधेयैः पण्डितप्रवरमहामहोपाध्यायश्रीमदनन्तकृष्णशास्त्रिमहोदयैः पण्डितप्रकाण्डैः श्रीसीतारामशास्त्रिमहोदयैश्च काशीस्थसनातनधर्मसभापक्षीयै निषेधात्मकं सुमहदान्दोलनं सम्पादितं यत्र श्रीकुर्तकोटि शङ्कराचार्यस्वामिमहोदयानां अमीषां पण्डितप्रवराणां च अन्ते वादप्रतिवादोऽपि जातः, तथा अमीषामेव पण्डितकेसरिणां संवादे श्रीमद्भिः कुर्तकोटिशङ्कराचार्यमहोदयैः स्वयंकृतस्य हूणाङ्गनाहिन्दूकरणस्याशास्त्रीयत्वपर्यवसायिनो बहव एव विषयाः स्वीकृता, उपसंहारभाषणे च स्वयमेव कुर्तकोटिस्वामिभिः इतःपरं केनापि एवंविधं हिन्दूकरणं न कर्तव्यमिति स्पष्टमेव प्रत्यपादि । महदिदं हर्षस्थानं सनातनधर्मीयाणां कृते जातमिति निःसन्देहं जानीमः ।

आरम्भएव तत्रत्यश्रीराममन्दिरे पण्डितप्रवरश्रीमद्राजेश्वरशास्त्रिमहोदयै रहिन्दूनां हिन्दूकरणं हिन्दुजातेः अपमानकारकं क्षयकारकं चेति प्रवचनद्वारा दिनद्वयं जनतासु उपदेशः कृतः, येन जनतायां महदान्दोलनमुदपद्यत । तस्यैव प्रभावात् नासिकक्षेत्रीयवसन्तव्याख्यानमालायां श्रीकुर्तकोटिशंकराचार्यपादैरपि हिन्दूकरणसमर्थनात्मकमेकं प्रवचनं एतेषां पण्डितप्रकाण्डानां पुरतः प्रदत्तम् । यत्र कैस्तमाहम्मदाद्यपेक्षया हिन्दुधर्मस्य वैशिष्ट्यं प्रतिपादयद्भिः श्रीस्वामिपादैः सर्वविधस्यापि निर्बन्धस्याभाव एव हिन्दुधर्मस्य परमं मर्म अविदद्भिः पुराणमतानुयायिभिः पण्डितैः धर्मशास्त्रीयाक्षरपंक्तिमात्रनिष्ठैः मुधैव भारतवर्षस्य पारतन्त्र्यशृङ्खलाबन्धः प्रत्यहं दृढीक्रियते अतः श्रेयस्कामैः धर्ममर्मानभिज्ञा अमी पण्डिताः दूरतएव परिहर्तव्या इत्यादिकं अत्यद्भुतं स्वाभिमतं धर्मतत्त्व मुपदिश्य स्वयंकृतस्य हिन्दूकरणस्य धर्मशास्त्रीयवचनशतविरोधे सम्भावितेऽपि सनातनधर्माविरोधित्वं समर्थितम् । श्रीस्वामिचरणानां व्याख्यानसमाप्त्यनन्तरं तदु-

त्प्रेक्षितस्य कुकल्पनाजालस्य समीचीनं खण्डनं सकलसहृदयहृदयग्राहि महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिमहोदयैः पंडितप्रवरश्रीमद्राजेश्वरशास्त्रिमहोदयैश्च तथा खलु कृतं येन प्रत्युत्तरप्रदानसमये कुर्तकोटिस्वामिमहोदयानां बुद्धिशक्तिः कुंठिता प्रतिहता प्रतिभोन्मेषरहिता प्रत्युत्तरापरिस्फूर्त्या निरतिशयं संकोचमनुभवन्तीव सर्वैरेव चतुःसहस्राधिकैः सभ्यश्रोतृभि र्निःसन्देहमपरोक्षीकृता ।

तद्दिनमारभ्य नासिकनगरे काशीस्थपण्डितानां प्रभावः परां वृद्धिमुपागमत् । ततः प्रभृत्येव च सार्वजनिकसभासु काशीस्थपण्डितानां पुरतः हिन्दूकरणचर्चां प्रयत्नेन परिहरद्भिः कुर्तकोटिशंकराचार्यपक्षीयैः पण्डितप्रवराणाममीषां परोक्षे सभाः सम्मेल्य हिन्दूकरणसमर्थनसंरम्भो महताऽऽटोपेन समुपक्रान्तः । प्रतिपक्षीयाणां बह्वीभि र्विभीषिकाभि रीषदप्यस्खलितधैर्याः अमी पण्डितप्रकाण्डा अपि प्रतिदिनमेव श्रीराममन्दिरे प्रवचनानि कृत्वा प्रतिपक्षीयैरुद्भावितानां दूषणानामाभासतां विशदमेव वर्णयामासुः । येन सनातनधर्मीयाणामेव पक्षः प्रत्यहं प्रबलतां वृद्धिं चालभत ।

ततः अगत्या कुर्तकोटिशङ्कराचार्यपादैः स्वकीये श्रीकृष्णमन्दिरे अमीभिः पण्डितप्रकाण्डैः सह विवादार्थं समुपस्थानं स्वीकृत्य तस्य सूचनापत्र मेकं मुद्राप्य प्रकाशितम् । योऽयं विवादो दिनद्वयं संवृत्तः अस्मिंश्च—विवादे सनातनधर्मस्याभूतपूर्वो महिमा, पण्डितप्रकाण्डानाममीषां च अद्भुततमं प्रावीण्यं, कृतस्य हूणाङ्गनाहिन्दूकरणस्य अतिनिन्द्यत्वं च, इत्यादयो विषया स्तथा सभ्यानां मनस्सुप्रतिफलिताः यथा भूयस्सु दिवसेषु व्यतीतेष्वपि न ते विस्मृतिपथमुपयास्यन्ति । परमचतुरैः श्रीकुर्तकोटिशंकराचार्यपादैरपि अवसरोचितमेव जन्मसिद्धम्लेच्छत्वस्य प्रायश्चित्तसहस्रेणाप्यनपनेयतां अत्युत्कृष्टगुणानामप्यहिन्दूनां कबीरदासप्रभृतीनां हिन्दुशब्दानभिधेयतां, आर्यसमाजब्रह्मसमाजप्रार्थनासमाजीयादिषु च हिन्दुशब्दप्रयोगस्य आधुनिक-

दुःशिक्षितकपोलकल्पनामात्रजृम्भिततां च, आर्यजनसमय विरुद्धहिन्दुपदाभिलापस्य च वैदिकाना मनादरणीयतां, मिसमिलर इत्यस्याः आर्यप्रसिद्ध्यनुसारेण हिन्दुप्रयोगानर्हतां, स्वयमनर्हत्वेऽपि हिन्दुपदप्रयोगेण मिस्मिलर इत्यस्या आत्मनः उत्कर्षप्रकाशनाभिप्रायस्य सत्यतां, तादृशाभिप्रायस्य ब्रह्महत्यासमानपातकप्रयोजकतां च, अनुमानयद्भिः स्वकीयहस्ताक्षरविभूषितानि स्वीकारपत्राणि, एवंविधाभिप्रायसूचकानि पत्राणि च पण्डितप्रकाण्डेभ्य उपहरद्भिः निपुणमेव वैतसीं वृत्तिमाश्रित्यात्मगौरवं संरक्षितम् । इति निवेद्यतां नोऽन्तःकरणं अमन्दमानन्दं विन्दति । प्रार्थयामहे च वयं श्रीकाशीपतिं विश्वेश्वरं एवमेव वाराणसीवासिपण्डितजनानामुत्साहवर्धनेन सद्बुद्धिप्रदानेन धर्मरक्षणक्षमतां वर्धयतु करुणावरुणालयः श्रीभगवान्विश्वनाथ इति ।

---

## काशी ब्राह्मणमहासम्मेलनम् ।

सुविदितचरमेतदस्मत्पाठकमहोदयानां यदस्मिन्नविमुक्तक्षेत्रे ऐषमः शारदीयनवरात्रोत्सवादनन्तरं पूर्वञ्च दीपावल्युत्सवाद् भारतवर्षीयनिखिलब्राह्मणानां महासम्मेलनं भविष्यतीति । सम्मेलनस्यास्योद्देश्यजातं प्रयोजनीयत्वञ्चास्यैव ब्राह्मणमहासम्मेलनपत्रस्य प्रथमसंख्यायां महामहोपाध्यायैः पण्डितवर्यैः श्रीमद्भिर्लक्ष्मणशास्त्रिद्राविड़महोदयैः सम्पादकसङ्घेन च सम्यगेव प्रकाशितमिति पुनरुक्तभिया नात्र तदुल्लेखः क्रियते । समग्रेऽस्मिन् भारतवर्षे यानि खलु गीर्वाणभाषामयाणि प्रादेशिकभाषामयाणि च वृत्तान्तपत्राणि प्रकाश्यन्ते तेषु क्वचिदेव विशुद्धसनातनधर्मसम्बन्धिनः प्रबन्धाः स्थानं लभन्तेऽन्यत्र तु सर्वत्रैव तद्विरुद्धा एव विषयाः शास्त्रमतोन्मूलनाय

साटोपं प्रचार्य्यन्ते । ततोऽप्यद्भुततरमेतद् यत् प्रकाशनार्थं प्रेषितेऽपि प्रबन्धे वराकस्य सनातनधर्मस्य कृते न तत्र क्षोदीयोऽपि स्थानं तैरनुमन्यते । हन्त कालस्यैवायं महिमा ! समन्ततोऽवस्थामिमामवलोक्य महासम्मेलननेतॄणां स्वमतप्रचारार्थैव ब्राह्मणमहासम्मेलनाभिधमासिकपत्रप्रकाशनोद्योगः ।

प्रस्तुतमहासम्मेलनस्य यथाभिलषितनिर्विघ्नपरिसमाप्तये काचन प्रबन्धकारिणी समितिरपि संस्थापिता यस्याः सभापतयो महामहोपाध्यायाः षड्दर्शनाचार्याः श्रीमन्तः पञ्चाननतर्करत्नपादाः, सहकारिसभापतयः श्रीमन्महामहोपाध्याय लक्ष्मणशास्त्रिद्राविड़महोदयाः, महामहोपाध्यायाः, श्रीमन्तो वामाचरणन्यायाचार्यमहोदयाः पण्डितवराः श्रीमन्तो रामभवनोपाध्यायमहोदयाश्च । प्रबन्धकारिण्याः सभायाः पत्रिकायाश्च सम्पादकाः—महामहोपाध्याय श्रीमदनन्तकृष्णशास्त्री, पण्डितवर श्रीराजेश्वरशास्त्री न्यायाचार्यः, पण्डितवर श्री-श्रीजीवन्यायतीर्थः एम, ए, श्रीताराचरणभट्टाचार्यश्च । कोषाध्यक्षौ-श्रीमान् हृषीकेशवन्द्योपाध्यायः ( प्राप्तावसरः स० डे० कालेक्टर ) श्रीमान् डाक्टरकालीपदवन्द्योपाध्यायश्च परिदर्शकौ च पण्डितवरौ श्रीहाराणचन्द्रशास्त्रि-श्रीगोपीचन्द्रसांख्यतीर्थमहोदयौ ।

महासम्मेलने प्राधान्येनालोच्यविषयाः—

१. गङ्गाद्वारमारभ्य भगवत्या गङ्गायाः प्रवाहसंरक्षणम् ।
२. विवाहः ।
३. अस्पृश्यस्पर्शादिः ।
४. शुद्धिः ।
५. समुद्रयात्रा ।
६. जातिपरिवृत्तिश्च ।

अद्ययावद् ये खलु विद्वांसः प्रबन्धकारिण्यां समितौ सदस्यत्वेन

परिगृहीतास्तेषां नामान्यधो निर्दिश्यन्ते—

महामहोपाध्याय पं० श्रीपद्मनाथविद्याविनोदः एम. ए. ।
पं०श्रीदेवकीनन्दनशास्त्रीदर्शनालङ्कारः। पं०श्रीगुलाबझा व्याकरणतीर्थः ।
पं० श्रीरामयशस्त्रिपाठी । पं० श्रीगणपतिशास्त्री व्याकरणाचार्यः ।
पं० श्रीवाणीशझा काव्यतीर्थः । पं० श्रीश्यामाचरण कविरत्नः ।
पं० श्रीमहेशचन्द्रविद्याविनोदः । पं० श्रीनीलरत्नवन्द्योपाध्यायः एम. ए. बी. एल.
पं० श्रीधर्मदत्तवेदशास्त्री । पं० श्रीमदनमोहनशास्त्री ।
पं० श्रीनवकुमारशास्त्री । पं० श्रीश्रीशङ्करतर्करत्नः ।
पं० श्रीशशिभूषणस्मृतितीर्थः । पं० श्रीकमलकृष्णस्मृतितीर्थः ।
पं० श्रीदक्षिणारञ्जनकाव्यतीर्थः । पं० श्रीमाधवचन्द्रसांख्यतीर्थः ।
कविराज पं० श्रीहरिदासरायचौधुरी भिषगाचार्यः ।
कविराज पं० श्रीविश्वेश्वरप्रसादसांख्यतीर्थः ।
कविराज पं० श्रीज्योतिश्चन्द्रकाव्यतीर्थः । पं० श्रीभीमचन्द्रचट्टोपाध्यायः बी. ए. वी. एस्. सी. एल. एल. बी.
पं० श्रीरामरञ्जनतत्त्वनिधिः । पं० श्रीअतसीकुमारभट्टाचार्यः ।
पं० श्रीविजयानन्दत्रिपाठी । पं० श्रीरजनीकान्तविद्यारत्नः ।
पं० श्रीकमलाप्रसादस्मृतिभूषणः । पं० श्रीमन्मथनाथकाव्यतीर्थः ।
श्रीयुक्त वाबूवरदाकान्तरायः (सब्जज) पं० श्रीकेदारनाथभट्टाचार्यः ।
पं० श्रीदीनेशचन्द्रभट्टाचार्यः । कविराज श्रीवंशीधरकविरत्नः ।
कविराज श्रीयतीन्द्रनाथकाव्यतीर्थः । पं० श्रीगौरीनाथपाठकः ।
श्रीमान् भरद्वाज चक्रवर्त्ती ।

सदस्यानां महासम्मेलनव्ययनिर्वाहार्थं रूप्यकपञ्चकमेककालिकं साहाय्यं प्रदेयं भविष्यति । परम्परागतसदाचाररक्षणशीलैः सर्वैरेव ब्राह्मणैरेतन्महासम्मेलनसिद्धये यावच्छक्यं प्रयतितव्यमित्यस्माकं सनिर्वन्धोऽनुरोधः ।

नमो ब्रह्मण्य देवाय ।

# ब्राह्मणमहासम्मेलनम्

## ( मासिकं संस्कृतपत्रम् )

"न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् ) ।

प्रथम वर्षे ] सौर आषाढः शकाब्दाः १८५० [ तृतीय संख्या ।

## विवाहः ।

( निवन्धकः—म. म. श्रीपञ्चाननतर्करत्नः )

नमामि शशिखण्डवन्मसृणभालपट्टोर्द्धदृग्-
जटापटलसंकुलालकविलोलवेणीश्रियम् ।
तुषारसितकाञ्चनच्छवि-भुजङ्गमुक्तालता-
युतांशयुगलैकताकलित-मर्द्धनारीश्वरम् ॥

भगवन्नर्द्धनारीश्वर, निजलीलाविलसितापूर्वशरीरे प्रदर्शितमपि देवेन श्रौतविवाहस्य देहद्वयैकीभावरहस्यं सम्प्रत्यबुध्यमाना दुर्बुद्धि-नियन्त्रिताः पुरुषा विघटनाय प्रयतन्ते । अचिन्त्यपूर्वेयमापद्भीतिः श्रीचरणशरणानामकिञ्चनब्राह्मणानां कथं तावदुपशाम्येत् कं तावद-न्यं शरणमाश्रयेमहि । कल्पतरुमूलाश्रयस्य काकिनीमात्रार्थं भिक्षाटनं न युज्यते—रक्ष प्रभो रक्ष ।

असुरवलनिरस्तमहिमानो देवा भगवता बहुधा रक्षिताः सम्प्रति राजकीयव्यवस्थापरिषत्सदस्यदुर्विलसितैं निराक्रियमाणप्रायधर्म्मा-णो विदितोदन्ता ब्राह्मणा भगवन्तमेव प्रपन्नाः—रक्ष प्रभो रक्ष ।

धर्म्माचाररता ब्राह्मणाः प्रायेणाद्यापि न जानन्ति कथमेवं विल-पामः तदधुना प्रकाश्यते—

विविधोपाधिविभूषितः श्रीमान् हरिसिंहगौड़ो राजकीयविधिपरि-षदः सदस्यपदमधितिष्ठन् अन्तरान्तरा राजविधिमेवं प्रवर्त्तयितं यत-ते येन सनातनधर्म्मस्य मूलच्छेदः स्यात् । १६२८ खीष्टाब्दीय १८ संख्याकप्रस्तूयमानविधानलेख्यं तेषु मूर्द्धन्यम् । तस्य तात्पर्यं मि-त्थम्—इदं हि राजविधानं व्रिटिशाधिकृतभारते सर्वत्र प्रचरिष्यति-पत्युः क्लैव्ये दुर्वलत्वे कुष्ठव्याधावुन्मादे च पत्नी विवाहवन्धान्मुक्ता भवितुं विवाहासिद्धिं वा घटयितुमनेन विधानेन प्रभवेत् । अत्र च तदुपस्थापिता युक्तिः-विवाहो नाम पुत्रार्थो विहितः, पूर्वं पुत्रकाम्यै-वमासीत् यन्नियुक्तेनापरेण पुंसापि विधवादेः पुत्रोत्पादनमभूत्, सा पद्धतिरिदानीं निषिद्धा । तन्निषेधाच्च व्याहता स्त्रीणां मर्य्यादा, तद्रक्षायै प्राचीना नारदस्मृतिरेवास्मिन्नंशे पुनः प्रवर्त्तनीया । वसिष्ठे-नापि पुनर्भूविवरणे समर्थितोऽयमाचारः । स्वमतस्थापनाय श्रीमता गौड़ेन कानिचिदुट्टंकितानि नारदवचनानि । इदानीं तद्र हस्यमुद्धाट्य-ते—तत्रादौ नारदस्मृतेः परिचयः—"भगवान् मनुः प्रजापतिः सर्व-भूतानुग्रहार्थमाचारस्थितिहेतुभूतं शास्त्रं चकार"—"तत्र तु नवमं प्रक-रणं व्यवहारो नाम यस्येमां देवर्षिर्नारदः सूत्रस्थानीयां मातृकां चकार" इत्ययं सन्दर्भः अभिमुखाख्यया नारदस्मृतौ प्रथममुपनिवद्धः । तथा च स्मृतिरियं व्यवहारप्रधाना । धर्म्मशास्त्रान्तर्गतमपि व्यवहा-रप्रकरण मर्थशास्त्रमेव । तदुक्तं मिताक्षरायां "स्मृत्योर्विरोधे न्या-यस्तु वलवान् व्यवहारतः । अर्थशास्त्रात्तु वलवद् धर्म्मशास्त्रमिति स्थिति" रिति याज्ञवल्क्यव्यवहाराध्यायैकविंशवचनव्याख्याने धर्म्म-

शास्त्रानुसारेण ( व्यवहारान्न यः पश्येद् विद्वद्भिर्ब्राह्मणैः सह । धर्म्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ इति व्यवहाराध्यायप्रथम-वचनोक्तेन ) इत्यनेनैव औशनसाद्यर्थशास्त्रस्य निरस्तत्वात् धर्म्म-शास्त्रान्तर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितम् । मनु-संहिताया व्यवहारप्रकरणीयं च—आततायिनमायान्तं हन्यादे-वाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥ इति वच नमर्थशास्त्रत्वेन श्रीधरस्वामी सिद्धान्तयामास । अन्यथा "पापमेवाश्रये-दस्मान् हत्वैतानाततायिन इति गीतावचनं नोपपद्यते—मनुस्मृति-विरोधात् । आततायिनमायान्त मित्यादिमनुवचनस्य व्यवहारप्रकर-णीयत्वेनार्थशास्त्रत्वे तु अर्थशास्त्रात्तु वलवद्धर्म्मशास्त्रमिति स्थिति-रिति याज्ञवल्क्यवचनाद्धर्म्मशास्त्रात्मकगीतावचनस्य वलवत्त्वं श्रीध-रोक्तमुपपद्यते । नारदस्मृतावपि याज्ञवल्क्यप्रकारोऽस्ति—तथाहि धर्म्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितमतिः पश्येद् व्यवहारमनुक्रमादित्यादिवचनोपन्यासात्परं "यत्र विप्रतिपत्तिः स्या-द्धर्म्मशास्त्रार्थशास्त्रयोः । अर्थशास्त्रोक्तमुत्सृज्य धर्म्मशास्त्रोक्तमाचरे-दित्यत्राप्यर्थशास्त्रं धर्म्मशास्त्रान्तर्गतमेव ग्राह्यम् । औशनसाद्यर्थशा-स्त्रस्य धर्म्मशास्त्रं पुरस्कृत्येत्यनेन निरस्तत्वात्। एवञ्च धर्मशास्त्रान्त-र्गतमपि संग्रहादिप्रकरणमर्थशास्त्रमेवेति सिद्धम् । व्यवहारप्राधान्ये-प्यस्ति नारदस्मृते रंशतो धर्म्मशास्त्रत्वम् । तदंशे चास्या बलवत्त्व-स्वीकारात् तेनैव व्यपदेशः । एवञ्च यथा आततायिवधे हन्तूराजद-ण्डादिकं नास्ति धर्म्मशास्त्रान्तर्गतार्थशास्त्रवचनात् तथा तद्बाधक-धर्म्मशास्त्रात् पापं तु भवत्येवेति निर्णयः । तथा नष्टे मृते इत्यादि ( १२-९६-९७ ) नारदवचनोक्तनष्टादिपतिकानां पत्यन्तरग्रहणे संग्र-हदण्डाभावेऽपि पापं भवत्येव धर्म्मशास्त्रेण तथा प्रतिपादनात्—तच्च धर्म्मशास्त्रं मनुस्मृत्यादिकमस्त्येव नारदवचनमपि भवति । ननु किं

तदिति चेत् ? श्रूयताम्—

सकृदंशो निपतति सकृत् कन्या प्रदीयते ।

सकृदाह ददानीति त्रीण्येतानि सतां सकृदिति नारदवचनम् (१२।२८) सकृदेव कन्यादानमाह विवाहाख्यः संस्कारश्च वर्णानां कुमार्य्यैव भवति न तु परपूर्वया इति चोक्तं नारदेन। इदानीं तत्प्रपञ्चः क्रियते—

नारदस्मृते द्वादशविवादपदे विवाहादिविधिः स्त्रीणां यथा पुंसा च कीर्त्यते। स्त्रीपुंसयोगो नामेदं विवादपदमुच्यते। इत्युपक्रमः। (१२।१) तथाचास्मिन् विवादपदे विवाहविधि रन्यश्च स्त्रीपुंसयोगप्रकारे कथ्यत इत्यर्थः विवाहादीत्यादिपदग्रहणात् पर्य्यवस्यति। ततश्च, स्त्रीपुंसयोस्तु सम्बन्धे वरणं प्राग् विधीयते। वरणाद् ग्रहणं पाणेः संस्कारोऽयं द्विलक्षणः॥ (१२।७) तयोरनियतं प्रोक्तं वरणं दोषदर्शनात्। पाणिग्रहणमन्त्रश्च नियतं दारलक्षणम्। (१२।१–३) वरणं क्वचित् कन्यायाः। ब्राह्मविवाहे च वरस्यैव भवति। कन्यावरणं वात्स्यायनसूत्रे "तस्या वरणे मातापितरौ सम्बन्धिनश्च प्रयतेरन्नित्यादावुक्तं, प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखा इत्यादौ वरस्य, यदस्तु नहि तत् नियतं दारलक्षणं सत्यपि वरणे दोषदर्शनाच्च वरस्य क्लीवत्वादिदोषे ज्ञाते पात्रान्तरे दानस्य वा सम्भवात् तथा कन्याया अपि त्यागसम्भवात्। पाणिग्रहणमन्त्रस्तु नियतं दारलक्षणम्, पात्रान्तरे दानासम्भवात् नियतमव्यभिचारिदारलक्षणम्। एतेन पाणिग्रहणानन्तरं सत्यपि दोषदर्शने न विवाहनिवृत्तिः पात्रान्तरे दानं वा भवितुमर्हति। यदि भवेत्, वरणपाणिग्रहणयोरविशेषः स्यात्, न तु नियतानियतत्वेन तयोर्विशेषः। वरणात् प्राक् पात्रपरीक्षणं कर्त्तव्यं क्लीवश्चेन्न कन्याग्रहणयोग्य इति परीक्षणोपायश्च नारदेनोक्तः। वरणं च कीदृशं कर्म्म तन्नारदेन स्पष्टं नोक्तं किन्तु तद्वचनभंग्यावगम्यते वाग्दानं वरणएवान्तर्भवति। असति दोषदर्शने

वाग्दानानन्तरं पात्रान्तराय कन्यादानमपि ब्राह्मादिपञ्चविवाहेष्वपराधः आसुरादित्रये तु नापराधः, तथाहि वचनानि—

सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥
ब्राह्मादिषु विवाहेषु पञ्चस्वेव विधिः स्मृतः ।
गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु ॥
कन्यायां दत्तशुल्कायां ज्यायांश्चेद् वर आव्रजेत् ।
धर्म्मार्थकामसंयुक्तं वाक्यं तत्रानृतं भवेत् ॥

अत्रैतत् पर्यवसन्नं यत् आसुरविवाहे शुल्कग्रहणेन कन्यापित्रा वाग्दाने कृतेऽपि श्रेयोवरलाभेऽनृतमपि वक्तव्यं-यतः तत्र गुणापेक्षं दानं—श्रेयस एव वराय कन्याप्रतिपादनं किन्तु ब्राह्मादिविवाहेषु नैवं भवति । दोषदर्शने तु वाग्दानोत्तरं ब्राह्मादिविवाहेष्वपि यत् पात्रान्तरप्रतिपादनं तदपराधमजनयदपि न धर्म्यम्—

सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमंगला ॥
उदकस्पर्शिता या च या च पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूप्रभवा तथा ।
सप्तैताः काश्यपेनोक्ता दहन्ति कुलमग्निवत् ॥

इति काश्यपवचनात् । नापि प्रजाकरम्—

"वाग्दत्ता मनोदत्ताग्नि परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूः—तां गृहीत्वा न प्रजां न धर्म्मं विन्देत् ।" इति बौधायनस्मरणात् ।

ननु न प्रजां विन्देदिति व्याहतं दृष्टविरोधादिति चेन्न, यस्य हि प्रकृष्टं जन्म सा प्रजेत्युच्यते येन च कुलं न पतति, पतनाद्रक्ष्यते तदपत्यं प्रजाऽपत्यशब्दयो रेकोऽर्थः । पुनर्भूविवाहस्य पर्य्युदस्तत्वेन पुनर्भूप्रसवस्य न प्रजात्वं नाप्यपत्यत्वम् अत उक्तं न प्रजां विन्देदिति ।

पुत्रार्थो विवाहविधिरिति गौड़ेन यदुक्तं तस्याभिप्रायश्चेदेवं तदा ओमिति ब्रूमः, किन्तु पुनर्भूग्रहणार्थं तद्युक्त्युपन्यासो न युज्यते । पुनर्भूः कुमारी वा प्रसवितुं न प्रभवतीति को ह्यनुन्मत्तो ब्रूयात्, किन्तु तत्प्रसवस्य वैधत्वाभावेन न प्रजात्वं नाप्यपत्यत्वमिति प्रसवस्य वैधत्वसम्पादनार्थं विवाहविधिः । तत्र च विधौ नास्ति पुनर्भूणां प्रवेशः । कुमार्य्याः पाणिं गृह्णीयादिति पारस्करस्मरणात् "पिता दद्यात् स्वयं कन्या"मिति नारदस्मरणात् (१२।१६) गृहस्थः सदृशीं भार्य्यां विन्देतानन्यपूर्वामित्यादिस्मृतिभ्यः । न विवाहविधावुक्तं विधवावेदनं क्वचिदिति मनुस्मृतेश्च ।

एवञ्च त्यक्तपतिकानां पुरुषान्तरग्रहणाधिकारविधानं न तासां मर्य्यादारक्षकं किन्तु सतीधर्म्मविलोपहेतुत्वेन चिरन्तनमर्य्यादाविनाशकमिति बोध्यम् । तेन स्त्रीणां मर्य्यादारक्षणाय विवाहविच्छेदविधानमावश्यकमिति गौड़महोदयस्य युक्तिः परास्ता । स्त्रीणां मर्य्यादारक्षणनाम्ना भोगलालसाचारिताथ्यं यदि श्रीमद्गौड़ेन विवक्षितं स्यात् तर्हि तत्र नियोगविधेः प्रतिरोधवार्त्ताश्रयणमेकान्तेनानुपन्नं भवति, नियोगविधिपालनं ह्यसिधाराव्रतम् । यथोक्तं नारदेन—

अनुत्पन्नप्रजायास्तु पतिः प्रेयाद यदि स्त्रियाः ।
नियुक्ता गुरुभिर्गच्छेद्द् देवरं पुत्रकाम्यया ॥
स च तां प्रतिपद्येत तथैवापुत्रजन्मनः ।
पुत्रे जाते निवर्त्तेत संकरः स्यादतोऽन्यथा ।
घृतेनाभ्यज्य गात्राणि तैलेनाविकृतेन वा ।
मुखान् मुखं परिहरन् गात्रैर्गात्राण्यसंस्पृशन् ॥
कुले तदवशेषे हि सन्तानार्थं न कामतः ।
अतोऽन्यथा वर्त्तमानः पुमान् स्त्री वापि कामतः ।
विनेयौ सुभृशं राज्ञा विप्लवः स्यादतोऽन्यथा ॥

अविकृतेन तैलेनेति पुष्पवासितादितैलव्यावृत्त्यर्थम् ।

इदं हि नियोगविधिपालनं विजितेन्द्रिययोरेव स्त्रीपुरुषयोः सम्भवति तत्प्रसवस्य च सुतरां विजितेन्द्रियत्वम्—

"पैतृकं भजते शीलं मातुर्वोभयमेव वा ।"

इति मनुनिर्देशात् प्रत्यक्षाच्च । तस्मान्नियोगो न भोगलालसाचारितार्थ्याय । इन्द्रियजयशक्तिह्रासदर्शनान्निवर्त्तितो नियोगधर्म्मः । पूर्वं चायं वैकल्पिक आसीत ।

ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥

इति मनुस्मरणात् । देवरेण सुतोत्पत्तिश्च कलिवर्ज्यगणे पुराणे पठितः । बृहस्पतिरपि "अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः । न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैरिति ।" नियोगमूलको योऽसौ क्षेत्रजपुत्रः स क्षेत्रस्वामिन एव, तत्र युक्तिर्गोदृष्टान्तेन नारदेन दर्शिता—महोक्षो जनयेद् वत्सान् यस्य गोषु व्रजे चरन् । तस्य ते यस्य ता गावो मोघं स्कन्दितमार्षभम् । अत्र स्वामित्वं पतित्वं तच्च ब्राह्मादिविवाहस्थले वाग्दानमात्रेण ।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवर इति मनुवचनेन, संकृदंशो निपतति सकृत्कन्या प्रदीयते । सकृदाह ददानीति त्रीण्येतानि सतां सकृत् । ब्राह्मादिषु विवाहेषु पञ्चस्वेव विधिः स्मृतः । गुणापेक्षं भवेद्दान मासुरादिषु च त्रिषु ॥ इति नारदवचनस्यैकवाक्यत्वात् । आसुरादिविवाहत्रये तु विवाहकर्त्तृत्वमेव । पाणिग्रहणमन्त्रश्च नियतं दारलक्षणमिति प्रागुक्तवचनात् ।

ब्रह्मचर्याश्रमस्योपनयनवद् गृहस्थाश्रमस्य संस्कारो विवाह एव, न तु वाग्दानमात्रं नापि प्रकारान्तरेण स्त्रीसंग्रहः । तदुक्तं नारदेन—अष्टौ विवाहा वर्णानां संस्कारार्थं प्रकीर्त्तिताः । ब्राह्मस्तु प्रथमस्तेषां प्राजापत्यस्तथापरः । आर्षश्चैव हि दैवश्च गान्धर्वश्चासुरस्तथा ।

राक्षसोऽनन्तरस्तस्मात् पैशाचस्त्वष्टमः स्मृतः ।........। एषां तु धर्म्याश्चत्वारो ब्राह्माद्याः समुदाहृताः । साधारणः स्याद् गान्धर्वस्त्र-योऽधर्म्या स्ततः परे । इत्यन्तं विवाहविधिप्रकरणं, विवाहादिविधिरिति यत् प्रतिज्ञावाक्येऽभिहितं, तत्र आदिपदार्थं विवृण्वन्नारद आह— परपूर्वास्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् । पुनर्भूस्त्रिविधा तासां स्वैरिणी च चतुर्विधा । परपूर्वास्त्रिय इत्यनेनास्याः कन्यात्वं व्यावर्त्ति-तम् । अन्याहृति विवाहविधिवहिर्भावो दर्शितः । अत्र पुनर्भूः स्वैरिणी चेति भेदेन ग्रहणम् । वसिष्ठेन च स्वैरिण्यपि पुनर्भूत्वेन गृहीता । तथाच वसिष्ठेन गृहस्थो विनीतक्रोधहर्षो गुरुणानुज्ञातः स्नात्वा असमानार्षीमस्पृष्टमैथुनां यवीयसीं सदृशीं भार्य्यां विन्देतेति यो विवा-हविधिरुक्तः तत्र अस्पृष्टमैथुनामिति परपूर्वाव्यवच्छेदः । अनन्यपति-कामित्यादि याज्ञवल्क्यादिवचनैकवाक्यत्वात् । स्वैरिणी हि स्पृष्ट-मैथुना भवति, अस्पृष्टमैथुनापि परपूर्वात्वेन पुनर्भूर्वर्जनीया । वसिष्ठेन स्वैरिणी पुनर्भ्वोरेकपर्यायत्वेन ग्रहणात् । तद्गर्भजातपुत्रस्य पौनर्भवा-ख्यचतुर्थप्रकारपुत्रत्वकथनं सङ्गच्छते । अन्यथा प्रथमप्रकारमौरसपु-त्रत्वमेव स्यात् । अतएवोक्तं वसिष्ठेन—अद्भिर्वाचा च दत्तायां म्रिये-ताथो वरो यदि । न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥ यावच्चेदाहृता कन्या मन्त्रैर्यदि न संस्कृता । अन्यस्मै विधिवद् देया यथा कन्या तथैव सा इति । तेन पाणिग्रहणाख्यमन्त्रसंस्कारे वृत्ते तु तस्या दानं नास्ति इत्यवसीयते । यत्तु पाणिग्राहे मृते बाला केवलं मन्त्रसंस्कृता । सा च त्वक्षतयोनिः स्यात् पुनः संस्कारमर्हति इति तदनन्तरवचनं तदपि पूर्ववचनद्वयेन तस्या दानायोग्यतायां प्राप्तायां पुनः संस्कारो हि तद्गर्भजसुतस्य क्षेत्रिपितृकत्वव्यावृत्त्यर्थः ।

अत्रेदं बोध्यम्—प्रथमवचने अजातपाणिग्रहणाया दत्तायाः पितुः कुमारीत्वकथनं नियोगार्थं पुनर्दानार्थं वा तत्र स्पष्टीकृतम्, अस्मिन् विषये नियोगो मनुनोक्तः—यस्या म्रियेत कन्याया वाचा सत्ये कृते

पतिरित्यत्र। पुनर्दाने च प्रतिग्रहीतुर्न विवाहसंस्कारसिद्धिरित्युक्तं बौधायनेन काश्यपेन च "वर्जनीया" इत्युक्तम्। तथाच सर्वमुनिमताविरोधेन नियोगार्थत्वं तस्य युक्तं कुमारीत्वकथनं पितुरेव नियोक्तृत्वाधिकारसूचनाय। द्वितीयवचनं क्रयहरणविषयम् आहृतेत्युक्तेः। पाणिग्राहे मृते इति तृतीयवचनं तु सन्निधानात् क्रयहरण विषयमेव। एवं सति नारदस्मृते रेकवाक्यत्वं स्यात्। नारदेनोक्तं ब्राह्मादिषु गान्धर्वान्तेषु पञ्चसु विवाहेषु कन्यादानं सकृत्। आसुरादित्रये नैवं नियम इति। तथाच नारदेन अक्षतयोनेर्यः पुनः संस्कारः नष्टादिपतिकानां च पत्यन्तरविधानमुक्तं तदासुरादिविवाहविषयमिति पर्यवस्यति। क्रयहरणघटितमेवासुरादिविवाहत्रयम्। इति वसिष्ठनारदयोरेकवाक्यत्वसाधनप्रकारः। वसिष्ठस्मृतेः पुनर्भूविवरणदत्ताप्रदानादिवचनानि व्यवहारप्रकरणीयानि सप्तदशाध्यायान्तपातित्वात्, अथ व्यवहारा इति षोड़शाध्यायोपक्रमात् "नात्र दोषोऽस्ति राज्ञां वै" इत्यादिश्लोकान्तैकोनविंशाध्यायसमाप्तिं यावत् तस्यैव प्रपञ्चनात्। तस्मान्नारदवसिष्ठस्मृत्युद्धारेण सकलविवाहविच्छेदसंस्थापनप्रयासोऽसत्यप्रतिष्ठः, आसुरादित्रये स्थितोऽपि विवाहविच्छेदो न धर्म्यः किन्तु राजदण्डप्रतिषेधार्थः। तत्र विवाहविच्छेदानन्तरं यत् पत्यन्तरग्रहणं तदपि न पत्युः संस्कारकं यतः अनन्यपूर्वाविवाहश्च पूर्वं पश्चाद् वा अवश्यकर्त्तव्य इत्ययं नारदाभिप्रायोऽपि नाविष्कृतो गौड़महोदयेन। अपि च विरोधद्रष्टॄणां नयने धूलिमुष्टिं प्रचिक्षिप्सुनेव तेन महोदयेन नारदस्य वचनद्वयमुद्धृतं तत्रैकं–प्रतिगृह्य च यः कन्यां वरो देशान्तरं व्रजेत्। त्रीनृतून् समतिक्रम्य कन्यान्यं वरयेद् वरमिति (ना १२।२४) विवाहं कृत्वा वरस्य देशान्तरगमने ऋतुत्रयं प्रतीक्ष्य पुनः पुरुषान्तरं वरयेदिति श्रीमद्गौड़कृतोऽस्यार्थः। स तु नारदस्यैव वचनान्तरेण विरुद्धः। तथाहि अष्टौ वर्षाण्यपेक्षेत ब्राह्मणी प्रोषितं पतिम्। अप्रसूता तु चत्वारि परतोऽन्यं समाश्रयेत्। क्षत्रिया षट्

समास्तिष्ठेदप्रसूता समात्रयम् । वैश्या प्रसूता चत्वारि द्वे वर्षे त्वितरा वसेत् ॥ न शूद्रायाः स्मृतः काल इति प्रोषितभर्तृकाणां प्रतीक्षणीयकालमध्ये ऋतुत्रयस्य क्वचिदप्यप्रवेशात् । प्रकृतार्थस्तु—प्रतिगृह्य वाग्दानेन स्वीकृत्य वरो यदि देशान्तरं गच्छेत् तदा ऋतुत्रयं प्रतीक्षितवती पात्रान्तरस्था भवेत् । प्रतिग्रहशब्दो न विवाहार्थक इत्यत्र नारदवचनमेव प्रमाणं तद् यथा—प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेन्नरः । स विनेयस्त्वकामोऽपि कन्यां तामेव चोद्वहेत् ॥ (१२।३५।३६) अत्र प्रतिग्रहः प्रथमः ततस्त्यागः, ततस्तस्या एव विवाह इति प्रतिग्रहविवाहयोर्भेदनिर्देशात् । वाग्दानस्वीकारेऽपि प्रतिग्रहपदप्रयोगात् ।

विवाहभङ्गद्योतकमिति कृत्वा श्रीमता गौड़ेन यदुद्धृतं—आक्षिप्तमोघवीजाभ्यां कृतेऽपि पतिकर्म्मणि । पतिरन्यः स्मृतो नार्य्या वत्सरार्द्धं प्रतीक्ष्य तु ( १२।१६ ) इति नारदवचनं तत् पतिकर्म्मणीति वाग्दानस्वीकारलक्षणं कर्म्म पतिकर्म्मपदेन प्रतिपादयति । पाणिग्रहणकर्म्म च दारलक्षणं वा दारकर्म्म वेति प्रसिद्धम् । आसुरादिविवाहे क्लीबविशेषे पत्यौ कालविशेषाप्रतीक्षायां राजदण्डार्थं वा वचनमिदम् ।

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते । इति वचनमासुरादिविवाहस्थल एवेत्युक्तं कथं सङ्गच्छते एताविति सामान्यनिर्देशात् इति चेन्न—अब्राह्मण्याः स्वैरिण्या गम्यतायाः "स्वैरिण्यब्राह्मणी वेश्येत्यादि" (१२।७७) वचने नारदेन कथनात् "सकृदंशो निपततीति" पाणिग्रहणमन्त्रस्तु नियतं दारलक्षणमिति च" नारदोक्तेः पूर्वं निर्देशात् ब्राह्मादिविवाहानामासुरादिविवाहानां च तत्त्वावमर्शे हि नारदस्य "ब्राह्मादिषु विवाहेषु पञ्चस्वेष विधिः स्मृतः······(१२।१६) इत्यादि भेदनिर्देशवीजमुपलभ्यते । तद् यथा—ब्राह्मादिविवाहेषु पत्या सह पत्न्या एकत्वं जायते-स्वगोत्राद् भ्रश्यते नारी विवाहात् सप्तमे पदे इति लघुहारीतादिव-

चनात् ब्राह्मादिषु विवाहेषु या वधूरिह संस्कृता । भर्तृगोत्रेण कर्त्तव्या स्तस्याः पिण्डोदकक्रियाः इति गरुड़पुराणवचनाच्च । आसुरादिविवाहेषु तु नैकत्वं गोत्रभेदसत्त्वात्, तदुक्तं गरुड़पुराणे—आसुरादिविवाहेषु या व्यूढा कन्यका भवेत् । तस्यास्तु पितृगोत्रेण कुर्यात् पिण्डोदकक्रियामिति ।

अत्र माधवाचार्य्येण पराशरभाष्ये द्वितीयाध्याये वचनमिदं मार्कण्डेयपुराणीयमिति कृत्वा लिखितं तत्र पाठश्च—गान्धर्वादिविवाहेषु यातूढ़ा कन्यका भवेदिति । स चेदानीन्तन मार्कण्डेयपुराणे नोपलभ्यते । उपलभ्यते च यथा गरुड़पुराणस्य उत्तरखण्डे षड्विंशाध्याये विंशश्लोकानन्तरं तदुपदर्शनं कृतपूर्वम् । माधवाचार्यगृहीतपाठस्यादरे तु गान्धर्वादीत्यत्र अतद्गुणसंविज्ञानबहुव्रीहिः स्वीकरणीयः तेन गान्धर्वमपहाय तदधःस्थासुरराक्षसपशाचविवाहलाभः । आसुरादिविवाहेष्विति गारुड़वचनैकवाक्यत्वात् ।

ब्राह्मादिषु पञ्चसु विवाहेषु संस्कृतायाः पत्या सह सपिण्डनमाह यमः—पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः । साऽमृतापि गतकत्वं चरुमन्त्राहुतिव्रतैः॥ वचनमिदं सहमृतापरमिति माधवाचार्यः । स्मार्त्तस्तु मृतपतिकायाः पत्न्याः सपिण्डनमात्रपरमित्याह । तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम् । आसुरादिविवाहेषु वर्णानां योषितां भवेत् ॥ माधवाचार्य्यधृतशातातपवचनेनासुरादिविवाहे पतिं विना सपिण्डनप्रतिपादनात्—चरुमन्त्राहुतिव्रतैरेकत्वं गतायाः पत्या सपिण्डनस्य यमेन प्रतिपादनाच्च पारिशेष्यादासुरादित्रयान्यविवाहसंस्कृतास्थलं यमवचनस्य विषय इत्ययमेव साधीयान् पक्षः । इत्येवं विवाहेषु द्वौ गणौ वर्त्तेते तयोरेकः ब्राह्मादिपञ्चकघटितः अन्यश्चासुरादित्रिकघटितो बहुषु शास्त्रेषु विविधरूपेण तत्परिचयो दर्शितः । तत्र प्रथमगणस्य यथैकीभावनिर्वाहकत्वं द्वितीयस्य तु तन्नास्तीति तत्र पत्यन्तरविधानं लौकिकं कथञ्चित् स्थितं

न तु धर्म्म्यमिति प्रागेवोक्तम् । प्रथमस्य तु तन्न भवत्येवैकत्वादिति ।

दम्पत्योरेकत्वं श्रुत्यापि दर्शितम्—अर्द्धो ह वा एष आत्मना यज्जायां न विन्दत इति कुल्लूकभट्टधृतवाजसनेयब्राह्मणम् । पारस्कारेण चतुर्थीहोमे स्थालीपाकप्राशनीयं वैदिकब्राह्मणमुपदर्शितम्—"प्राणैस्ते प्राणान् संदधामि अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति ।" एतत्फलमपि तत्रोक्तं—"तस्मादेवं विच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदित्यादि ।" एवमेकत्वमितायाः पत्यन्तरसम्बन्धो वैवाहिकविधेरसत्यतां प्रकाशयेत् । न च तद् युज्यते श्रुतिमूलत्वात् तस्य । यत्र तादृगेकत्वं नास्ति तत्रैव विवाहे पतिरन्यो विधीयत इत्यपराधपरिहारार्थो व्यावहारिकव्यवदेशो नारदेन कृतः । एतत्प्रबन्धस्थोऽपराधशब्दो राजदण्डार्हताबोधक इति वेदितव्यम् ।

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा । कलौ पञ्च न कुर्वन्ति भ्रातृजायां कमण्डलुमित्यादि माधवाचार्यादिधृतवचनेभ्यः अन्यपूर्वाया यो विवाहः सोऽपि कलौ प्रतिषिद्धः । विधौ प्रवेशो नास्तीत्युपदर्शितं प्राक् । यदि कश्चिद् राजदण्डविरहेण भोगार्थी तां संगृह्णीयात् सोऽपि मनुसंहितादौ श्राद्धे वर्जनीयत्वेनोक्तः—

औरभ्रिको माहिषिकः परपूर्वापतिस्तथा ।
प्रेतनिर्हारकश्चैव वर्जनीयाः प्रयत्नतः ॥ (मनु० ३।१६६)
परपूर्वापतिः स्तेनः कर्म्मदुष्टश्च निन्दिताः । (याज्ञ० १।१२४)

परपूर्वागर्भजातोऽपि वर्ज्यः, यथा—श्राद्धवर्ज्यप्रकरणे मनुः—
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे । (३।१५५)

याज्ञवल्क्योऽपि—रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
एवमेकपत्नीत्वमेव धर्म्म्यमित्यप्युक्तं मन्वादौ—

यस्मै दद्यात् पिता त्वेनां भ्राता वानुमते पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् (५।१५१)

विशीलः कामवृत्तो वा धनैर्वा परिवर्जितः ।
उपचर्य्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥ (५।११८)
कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥ (५।११७)
दुःशीलो दुर्भगो वृद्धो जड़ो रोग्यधनोऽपि वा ।
पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥

इति श्रीभागवते । मृते जीवति वा पत्यौ या नान्यमुपगच्छति । सेह कीर्त्तिमवाप्नोति मोदते चोमया सहेति—याज्ञवल्क्यसंहितायाञ्च ।

इत्यादिसकलशास्त्रप्रतिपादितं सतीधर्म्मं सनातनधर्म्मप्राणभूतमपध्वंसयितुकामः श्रीमान् गौड़ः समुत्पन्नोऽपि सनातनधर्म्मिकुले कथं नाम नापत्रपते विस्मयस्थानमिदमस्माकम् परं चेतोऽपि महतो विस्मयस्य खेदस्य च स्थानं यदसौ भवन्नपि भारतीयो जायामात्रसहायस्य परिचर्य्यादिना कथमपि सम्भावितारोग्यस्यापि कुष्ठादिप्रपीड़ितस्य पत्युः परित्यागाय पुरुषान्तरसम्भोगलालसां राजविधिना प्रवलीकुर्वाणो जायामुत्साहयति, रोगशय्यायां शयानमश्रुपूर्णनयनं पतिमुपेक्ष्य पुरुषान्तरभोगाय जायाया हृदयमुत्सुकयन् द्रागेव परुषव्यवहारोन्मुखं विदधानो भारतसीमन्तिनीविभूषणहृदय सौभाग्यमप्युन्मूलयति—हा धिक् ईदृशोऽपि पुरुषो राजविधानपरिषदि सदस्यपदे वृतो यस्य कर्म्मणा सर्व्वे एव सनातनधर्म्माण स्तारकासुरोपद्रुता देवा इव कांदिशिकतामापन्नाः । तदसकृत् प्रार्थ्यते रक्ष भगवन्नर्द्धनारीश्वर, सतीधर्म्मं रक्ष वर्णाश्रमिणो रक्ष, भारतं रक्ष ।

---

# समाजसंगठनम् ।

( निबन्धकः—पं० श्रीश्यामाचरण कविरत्नः विद्यावारिधिः )

याऽसौ युगपूगस्थायिनी सुविपुला पुरीपरिगता पुरुषोत्तमपुरी, नाऽसावल्पैरहोभिर्निर्मिता, नानभिज्ञैः स्थपतिभिः, न सामान्यबुद्धि-पूर्वकं, नापि चाविशिष्टैरुपादानैः । अकुशलैः कृतं प्राचीरमपि न चिरमवतिष्ठत इति । रोगाणामौषधनिर्वाचने कति कति युगानि व्यतीतानि, कतीनां महामनीषिणां वैज्ञानिकानां मस्तिष्कमालोड़ितं चासीत् । तान्यौषधान्यविगणय्य केनचिद् भिषजम्मन्येन यदि "कासे धूमस्तुषाणां जठरगुरुगदे पिष्टकं चाममांस"मित्येवमादीनि व्यवस्थाप्येरंस्तदा रोगिणां सद्यः शमनसदनातिथित्वं घटेतेति । भक्ष्याभक्ष्यविनिर्णयोऽपि तथैवानेककालिकप्रचेष्टाभिः प्रविहितः । स एव सर्वैरवश्यमङ्गीकरणीयः । अन्यथा, पटोलस्य फलपत्रनाड़ीनां भक्ष्यत्वे, मूलभक्षणे को दोष इति मत्वा स्वेच्छया तद् भक्षयतो विरेचनेनैव विरिच्यते कायः प्राणैरिति । उद्याननिर्मित्सुभिरपि पियाल-पीलुपनसाम्रादिभिः सममुद्भिद्धर्म्ममात्रं पुरस्कृत्य समदृष्ट्या शमी-शाल्मलिवर्वुरकुशकाशादीनां रोपणे कृते नोद्यानत्वं सिध्यति । तदरण्यायैव कल्पत इति ।

एवमेव मानवानां समाजसंगठनं भूयसा कालेन भूयस्या चालोचनया समभवत । विशेषेणार्य्याणाम् । यैरयमार्य्यसमाजः संगठितस्ते खलु महाप्रज्ञा भूयोदर्शिनः परिणामभाविनः सर्वजनहितैषिणो महनीयचरिताः स्वयमेवादर्शभूताश्चासन् । धर्म्ममेव सुदृढ़ां भित्तिं कृत्वा सुनिर्मितो महाप्रासाद इवैष समाजः । येनैतावन्तं कालं विधर्म्मिणां बहुशोऽत्याचारटङ्कप्रहारान् सहमानोऽक्षुण्ण एवास्ते । सम्मूर्च्छन्ति नात्र धर्म्मान्तरप्रचारकाणामविरतावगानझञ्झामरुतः । न प्रभवन्ति चान्तर्जातानामपि विभीषणायमानानां विधर्मिणामां नेतृ-

व्याजभद्दामूषिकाणां सुतीक्ष्णा रदराजयः। तथा चायमादितः प्रभृत्येव सुगठितः सुसंस्कृतश्च, यथा नापेक्षते पुनःसंस्कारलेशम्। अपेक्षते चेद्व्यवस्थितबुद्धिभिः स्वधर्म्मनिष्ठैर्निपुणदृष्टिभिरादर्शचरितैराप्तजनैरेव क्रियमाणम्। न त्वव्यवस्थितचित्तै-रन्तरनादृतधर्म्मभिर्बहिर्बकधार्म्मिकैर्विप्रलिप्सापरायणैर्वृथापाण्डित्याभिमानिभिर्लोभमोहोपहतमतिभिश्छिन्नपुच्छशृगालवत् सर्वान् स्वसदृशांश्चिकीर्षुभिरिति।

येऽत्र वर्णभेदा जातिभेदाश्च व्यवस्थापितास्तैरस्य दृढ़तैव सम्पादिता, परिपुष्टिरेव परिकल्पिता, सुश्रृङ्खलैव साधिता च। न तु जातिविशेषान् प्रति प्रकटिता विद्वेषिता पक्षपातिता वेति। तत् सर्वमबुद्ध्वाऽवमत्य च क्रियमाणे पुनरभिनवयथेच्छसंस्कारे, गठनदोषेण शिवस्य वानरत्वमिव, समाजस्यास्याकारविपर्य्ययेण समजत्वमेवावश्यम्भावीति सम्भावयामः।

जन्मकर्म्मस्वभावादिहेतुका गुणदोषाश्चेतनाचेतनेषु सर्वेष्वेव वर्त्तन्ते, संसर्गिषु संक्रामन्ति च। तेषां मध्ये स्थूला एव स्थूलदृष्टिभिः प्रत्यक्षीक्रियन्ते। सूक्ष्मातिसूक्ष्मास्तु सूक्ष्मदर्शनैर्यन्त्रसाहायकेन वेति। आर्य्यसमाजनियामकास्तपःसिद्धा महर्षयो—येषामतीन्द्रियज्ञानगरिमा स्वदेशीयैः सम्यगनुपलभ्यमानोऽपि वैदेशिकैर्वैज्ञानिकैः शनैः शनैरुद्घोष्यते—ते खलु विभिन्नजातीयानां तथाविधान् सर्वान् गुणदोषान् समीक्ष्य स्पृश्यास्पृश्यत्व-मन्नजलादीनां व्यवहार्य्याव्यवहार्य्यतां च निर्णीतवन्तः। तद्धि सर्वेषां स्वास्थ्याद्युपकारार्थमेव। न तु घृणाविद्वेष पक्षपातादिप्रदर्शनार्थमिति। प्रायः सर्व एवाशुचीन् स्पर्शाक्रमकव्याधिबाधितान् वा पुत्रकलत्रादीन् न स्पृशन्ति। अनेके च स्वगृहेष्वपि स्वपाकसम्पादितमन्नं भुञ्जते। तेन किं तेषां पत्नीपुत्रस्नुषादुहित्रादिषु घृणाविद्वेषनिःस्नेहताः परिलक्ष्यन्ते ? मनुष्यत्वपुरस्कारेण सर्व एव समाना अतः सर्व एव स्पृश्या व्यवहार्य्यजलाश्चेत्येवंवादिनः समाजसंस्कारे ये न्यस्तहस्ता अहो तेषां निर्बुद्धिता-

याः प्रकारः । परार्द्धाधिकाः पृथिव्यां मनुष्याः सन्ति । तेषां नैक-स्याप्याकृतिर्यदाऽन्यदीयाकृतेः साम्यं भजति, तदा का कथा प्रकृतेः ।

विचित्रं वत साम्प्रतिकं चित्रं समाजस्य । तथाहि ब्राह्मणाः प्रायेण स्वकर्म्माणि त्यजन्ति । अपरेऽनधिकारिणोऽपि सदम्भं शास्त्राणि यथेच्छं व्याचक्षते । पामरा अपि गलधृतसूत्रगुच्छा ब्राह्म-णत्वाभिमानिनः साटोपं विचरन्ति । वंशरक्षार्थं हि काम्यन्ते कुल-पावका वंशोज्ज्वलकाश्च सन्तानाः सर्वैः । अनेके त्वद्य समुल्लङ्घ्य स्ववंशमर्य्यादामन्यवंशसम्भवत्वमात्मनां ख्यापयन्तो, यत् सत्यं, कुलपावकायमाना एव समूलमुज्ज्वलयन्ति प्राप्तप्रसारान् प्राचीन-तरान् पितृपैतामहान् वंशान् । वृथाजात्युत्कर्षख्यापनं हि मार्जाराणां व्याघ्रत्वपरिचय इव, डुण्डुभानां कृष्णसर्पानुकरणमिवातीवोपहास-जनकमिति बुद्धिमन्तः सन्तोऽपि हन्त ते नाववुध्यन्ते । ये पुनरंशतः सनातनधर्म्मानुवर्त्तिनो हिन्दुनाम्ना परिचिता वाह्यजातीयाः पुरु-षपरम्परया ह्यस्पृश्या अव्यवहार्य्यजला अपि सर्वेषां स्नेहभाजनता-मवाप्नुवन्तः परस्परसौहार्दसम्बद्धाश्च स्वस्थमन्याः सुचिरं सन्तोष मभजन्, श्रेयसो यथायथं सममानयन्, प्राक्तनकर्म्मवशादेव निकृ-ष्टयोनिजत्वमात्मनां मन्यमाना उत्कृष्टैः सह नास्पर्धन्त कदाचित्, स्वेषां जातिगतहीनताङ्गीकारे च नाहृणीयन्त, ते यदिदानीं चिरन्त-न्यामात्मवृत्तौ सन्तोषमलभमाना अस्वस्थमनसो विपरीताचरणे उत्तिष्ठन्ते, तत्र केवलं समाजस्य, अपि तु तेषां स्वेषामप्यधःपाताय चोच्छेदाय चेति नात्र संशयः । अन्याय्यो हि संघर्षो न केषामपि श्रेयसे भवतीति पश्यन्तोऽपि ते न पश्यन्तीति महत्तरं दुःखम् । न जाने, कुतस्त्योऽयमनात्मनीनो मतिभ्रमस्तेषां साम्प्रतम् ।

सामाजिकाश्चेदद्य प्राचीनं नियममुल्लङ्घ्य, वाह्यजातीयानां सन्तो-षसाधनार्थं केवलं, साधुं सम्मन्यन्ते स्पर्शं, व्यवहरन्ति च जलं, श्व-स्तेऽन्नग्राहणाय यतिष्यन्ते, परश्वः सहभोजनाय, ततः परं कन्या-

नामादानप्रदानाभ्यां चेत्येवमुत्तरोत्तरं प्रगल्भतरत्वमापद्यमानाः कदाचिन्नालंबुद्धयो भविष्यन्तीत्येष निश्चयः। तथाहि—

"न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥"

किञ्च न शक्यन्ते केनापि कदापि सर्वे सन्तोषयितुमित्यवधारणीयम्। अस्पृश्यतावर्जनेनैव सर्वे सन्तुष्टा भविष्यन्तीति ये मन्यन्ते, ते ह्यपरिणामदर्शिनो भ्रान्ता एवेति।

समाजबन्धनं नाम सर्वजनीनं भवितुमर्हति। न तु कतिपयजनीयं कतिपयजातीयं वेति विचार्य्य सामाजिकैः शास्त्रप्रामाण्येनैव तथा वर्त्तितव्यं, संस्कारे च तथा प्रवर्त्तितव्यं, यथा सुचिरं सुव्यवस्थितेऽस्मिन्नार्य्यसमाजेऽनार्य्यजनाचरिता सर्वोच्छेदकरी विश्रृङ्खला नोत्पद्येत, नोत्सीदेच्च जातिधर्म्मकुलधर्म्मपरंपरेति। न हि भवितुमर्हति प्रतिदिनपरिवर्त्तमानलोकप्रवृत्त्यनुसारिता समाजस्य, किन्तु समाजानुसारिता लोकानाम्। स्रोतसामनुसारेण सेतुबन्धनं न कदापि सफलतां भजते। द्रढीयसा सेतुना तेषां नियमनमेव श्रेयसे भवति। उच्छास्त्रवर्त्तिभिः समाजस्यास्य परित्यागे कृते जनसंख्याह्रासान्न शङ्कितव्यम्—

"वरं शून्या शाला न च खलु वरो दुष्टवृषभः" इति।

स्वार्थसाधनार्थमेव शास्त्रप्रणयनं ब्राह्मणानामिति वदन्तो ये तेभ्यो विद्विषन्ति, तेषां वंशधरेभ्योऽप्यसूयन्ति, तैः स्थिरबुद्ध्यैतद् विचारणीयं यद् यथेच्छाचारप्रवर्त्तनपरैरपि शास्त्रवंचनान्येवोद्धृत्य स्वमतसमर्थनानुकूलतया कथमपि व्याख्यायन्ते। स्वार्थपराणां कुत ईदृशः सम्मान इति। अपि च युगपदुत्पन्नेऽपि चातुर्वर्ण्ये कथं नाम ब्राह्मणा एव धर्म्मशास्त्रार्थशास्त्रराजनीतिसमाजनीतिपुराणेतिहासादिसर्वविधशास्त्राणि प्रणिन्युः? कथं वा ब्राह्मणेतरेषां कृतमतीनामपि तदानीन्तनानां नोदपद्येत तत्तच्छास्त्रप्रणयने सामर्थ्यम्? अतो भगव-

इत्यैषां तेषामसाधारणी शक्तिर्न केनापीर्ष्यया वा विद्वेषेण वाऽभ्यसूयया वा व्याहन्येत कदाचित् ।

यावत्तपति मार्त्तण्डो यावत्तिष्ठति मेदिनी ।
यावदार्य्यसमाजश्च तावद् ब्राह्मणमुख्यता ॥ इति ।

ये पुनरधुना पाश्चात्यशिक्षाविकृतमस्तिष्काः समाजविप्लवं चिकीर्षवो ये तत्समर्थकाश्च, तान् प्रत्येकं प्रति तथैव वक्तव्यं, यथा प्रह्लादमुद्दिश्य हिरण्यकशिपुना प्रोक्तम्—

"दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः ।
तन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥" इति ।

अहो कलेः प्रभावः ! यं प्रत्यक्षयतामस्माकं मनसीदमुपतिष्ठते पौराणिकं वचनम्—

"धर्म्मः प्रव्रजितस्तपः प्रचलितं सत्यं च दूरे गतं
पृथ्वी मन्दफला जनाः कपटिनो लौल्ये स्थिता ब्राह्मणाः ।
मर्त्याः स्त्रीवशगाः स्त्रियश्च चपला नीचा जना उन्नता
हा कष्टं खलु जीवितं कलियुगे धन्या नरा ये मृताः ॥" इति ।

सर्वतोमुखस्वयंभूमुखसम्भवत्वाद् आसृष्टेर्ब्राह्मणानामेव सर्वतोमुखं प्राधान्यम् । ते यदि—विद्वांसोऽपि मूर्खा अपि विषयिणोऽपि धनिनोऽपि निर्धना अपि विभिन्नजनपदवासिनोऽप्यभिन्नमतमालम्ब्य सर्वे संप्रति निर्वाणप्रायपूर्वगौरवसंधुक्षणे स्वसमाजसंरक्षणे च बद्धपरिकराः समुत्तिष्ठेरंस्तदैव सर्वाङ्गीणं सुमङ्गलं स्यादित्यतः सविनयमनुनयामहे—

भो भो भूमिदेवाः ! नायमत्रभवतामौदासीन्यावसरः, नापि महानिद्रापरिणतिकस्वच्छन्दनिद्रासमयः ।

"उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत ।"
"सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥"

"समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सु सहासति ॥"
इत्यत्रैव शम् ।

---

# कः पन्थाः ।

( निबन्धकः—म०म० श्रीपद्मनाथविद्याविनोदः एम्. ए. )

कात्यायन्यै नमोवाकं नुत्वा कात्यायनं मुनिम् ।
केशवञ्चादिपुरुषं वन्दे पञ्चाननं गुरुम् ॥

इह खलु समये समन्तात् सनातनवर्णाश्रमधर्म्मस्य भूरिशो ग्लानिकारणमवेत्य समाजहितैषिणां चेतांसि नितरामवसन्नानि जायन्ते । केचिदिदं प्रौढ़ीभूतस्य कलेरेव विजृम्भितम् इति मन्यमानाः समयस्यैवास्य परिणाम इति विचिन्त्य अप्रतीकार्यमिदं विभाव्य च किंकर्त्तव्यविमूढ़ा इव उदासते । नास्त्यत्र लेशतोऽपि सन्देहावसरः यदयं कलियुगः,इदानीं युगप्रभावेणैव धर्म्महानिः सञ्जाता—यतः—

धर्म्मः संकुचितस्तपो विरहितं सत्यञ्च दूरं गतं,
क्षौणी मन्दफला नृपाश्च कुटिलाः शास्त्रेतरा ब्राह्मणाः ।
लोकाः स्त्रीवशगाः स्त्रियोऽतिचपलाः पापानुरक्ता जनाः,
साधुः सीदति दुर्ज्जनः प्रभवति प्रायः प्रवृत्ते कलौ ॥

सत्यमेतत् युगप्रभावाद् धर्म्मस्य संकोचः सञ्जातः परन्तु अस्मिन्नपि युगे धर्म्मो हि भगवान् पादविशिष्टः सन् सन्तिष्ठते—पादस्यास्य संरक्षणमपि कर्त्तव्यमस्माभिः सर्वप्रयत्नेन । नायं कालः अवसादस्य अपि तु यथाहि व्याधिप्रपीड़ितः कश्चिद् अगदसेवनादिना निरामयो भवितं यतते–विनाशधर्म्मायं देह इति मत्वा तादृस्थ्यं नाव-

लम्बते तथा वयमपि अधर्म्मस्य प्रावल्येन धर्म्मस्य संकटापन्नाम-वस्थां दृष्ट्वा यथाशक्ति अधर्म्मप्रभावं दूरीकर्त्तुं यतेमहि—अप्रतिविधे-यमिदं कलियुगप्रभावजनितं धर्म्मग्लानिकारणमिति बुद्ध्वा उदासीन-वदासीना भवितुं नार्हाम इति ।

अथ किं कर्त्तव्यमस्माभिरिति प्रश्ने सर्वादौ द्वयं स्वधर्म्मपालनं यथाशक्ति कर्त्तव्यं ततः पश्चात् यथाशक्ति सनातनवर्णाश्रमधर्म्मस्य हितसाधनं कायेन मनसा वाचा च कर्तव्यम् । अत्रोदाहरणं प्रदर्श्यते शास्त्रविरुद्धः कश्चिद् विधिश्चेत् व्यवस्थापकसभायां प्रणीयते तर्हि प्रतिवादार्थं दृढसङ्कल्पेन भवितव्यम् । धर्म्मपरायणा अपरेऽपि जना यथा कर्म्मण्यस्मिन् विनियुक्ता भवेयुस्तदर्थं तेषां समीपगमनमाव-श्यकम् । सामाजिकानां प्रबोधनाय वाग्व्यापारोऽपि कर्तव्यः ।

ब्राह्मणेतरा जातयः साम्प्रतं सङ्घबद्धाः सत्यः यथामति स्वजा-तीयानामुन्नतिविधानार्थं बद्धपरिकरा भवन्ति । परन्तु ब्राह्मणानां मध्ये नास्ति तादृशः कोऽपि संहतिभावः । ये खलु ब्राह्मणपण्डिताः प्रायेण ते आत्मानं बहु मन्यन्ते—इतरान् अविदुषो मत्वाऽवधीरयन्ति । ईदृशस्य दम्भभावस्य परिणामो भयावहो भवति । दृष्टान्तच्छलेन कापि घटना वर्ण्यते—कश्चिद् दुष्कर्म्मा समाजपरित्यक्तो भूत्वा निक-टस्थग्रामाधिवासिनं पण्डितमेकमुपसृत्य दण्डवद् भूमौ कायं प्रणि-पात्यावदत्—भो भो महात्मन् रामचन्द्रस्मृतिरत्नस्य व्यवस्थानुसा-रेण मद्ग्रामस्थाः सामाजिका माम् प्रायश्चित्तविधानेनापि अपांक्तेयं मन्यन्ते । अथ शरणागतोऽस्मि सर्वशास्त्रपारदृश्वनो भवतः, पातु मामिति । श्रुत्वैतत् सार्वभौमः कृष्णचन्द्र उक्तवान्—कोऽयं राम-चन्द्रो व्यवस्थाप्रदाता ? किं वा स जानाति ? मा भैषीः, अहं त्वां पांक्तेयं करिष्यामीति । अयं तावत् पण्डितमूर्खः प्रणिपातेन प्रसा-दित इति मनसि विचिन्त्य प्रकाशञ्च स्तुतिवचनानि व्याहृत्य द्वित्राणि रूप्यकाणि अस्मै प्रदाय व्यवस्थां गृहीत्वासौ दुष्कर्म्मा स्वग्रामं

गत्वा निर्भयं विचरन्नास्ते । शास्त्रज्ञानविहीना सामाजिकाः पण्डितव्यवस्थां प्रति अश्रद्धां प्रकटयन्तः क्रमशो दुष्कर्म्माणं तं समाजमुक्तं चक्रुः ।

समाजशिरोमणिस्वरूपाणां ब्राह्मणपण्डितानामीदृशः परस्परद्वेषभावः पण्डितेतरेषु ब्राह्मणेष्वपि संक्रामितः राढ़ीयवारेन्द्रवैदिकाः परस्परानवमन्यन्ते पञ्च गोत्र-षट्पञ्चाशद्ग्रामीणान् ( गाइँ इति भाषा ) अन्तरेण नास्ति कोऽपि ब्राह्मण इति च व्याहरन्ति । पश्चिमदेशीयाः प्राच्यान् प्राच्याश्च प्राच्येतरान् इत्थं भौगोलिकविभागानुक्रमेण च स्वेतरान् ब्राह्मणान् द्विषन्ति ।

ब्राह्मणानां मध्ये ईदृश आत्मसम्भानाभावः सञ्जातो येन ब्राह्मणग्रन्थकारेणैव लिखिते नाटके ब्राह्मणचित्रं सुमलिनमंक्यते । यदि कश्चित् शूद्रजातीयः स्वामीति संज्ञां गृहीत्वा ब्राह्मणं शास्त्रञ्च परिवदेत्-बहवो ब्राह्मणसन्तानास्तस्य शिष्यत्वमङ्गीकृत्य पादसंवाहनं कुर्वन्ति अपितु ब्राह्मणः कश्चिच्चेत्तादृशं पाषण्डं स्वरूपतः प्रदर्शयितुं चेष्टेत निबन्धञ्च कश्चित्प्रकाशयेत् तमेव निबन्धकारं गर्हयितुं न भवति ब्राह्मणानामभावः । वैद्यं ब्राह्मणम्मन्यं शूद्रञ्च क्षत्रियम्मन्यं याजयितुं यदि कोऽपि पुरोहितो न स्वीकुर्यात् तस्य स्थानमधिकर्त्तुमहमहमिकया धावन्त्यपरे याजनव्यवसायिनः ।

इत्थं गते कथं नावसीदेयुः समाजहितैषिणां चेतांसि ब्राह्मणानां दुरवस्थामनैक्यघटितां समवलोक्य ।

अथ ये खलु ब्राह्मणानां सम्मेलनं घटयितुं यतन्ते—यथा सर्वे समाजहितचिन्तकाः परस्परं समेत्य स्वजातेरुन्नतिपथं परिभावयन्त्विति तदर्थं चेष्टन्ते ते खलु सर्वतोभावेन धन्यवादार्हाः सर्वेषामेव समाजहितषिणाम् । सर्वे भारतवर्षीयाणां ब्राह्मणानां प्रतिनिधयः पुरेऽस्मिन् पुरहरस्य सम्मिलिता भवन्तो हितोपायं परिचिन्तयिष्यन्तीति संवादमाकर्ण्य मनसि मे सञ्जातः परमहर्षसन्दोहः सर्वान्तःक-

रणैः प्रार्थये च श्रीश्रीविश्वेश्वरसमीपे संमेलनमिदं सर्वेषां भारतीया-नां ब्राह्मणानां साफल्यमण्डितं भवतादिति ।

वदन्ति च नीतिशास्त्रनिष्णाताः—अल्पानामपि वस्तूनां संहतिः कार्यसाधिका । पाश्चात्यपण्डिता अप्याहुः--तिष्ठेम संहताः सन्तः पतेम खल्वसंहताः । अतएव "सं गच्छध्वं सं वदध्वम्"--नान्यः पन्था विद्यतेऽयनाय ।

अत्रैवोदाहरिष्याम इतिहासं पुरातनम् । यदा तु महिषेण पराजि-ता भ्रष्टराज्याः सुरेन्द्रप्रमुखाः सुराः संमिलिताः सन्तो हरिहरौ उपा-सते स्म तेषां प्रत्येकेषां शरीरतो महत्तेजो निष्क्रान्तं तच्चैवयं समुप-गम्य महाशक्तिरूपेण परिणतमासीत्-- तया खलु निखिलदेवसमूहमू-र्त्त्या लीलयैव निहतः स दुरात्मा महिषासुरः ।

अतएव ब्रूमः--"सं गच्छध्वं सं वदध्वम्" । यया च देवानां कार्यसिद्ध्यर्थं रूपं प्रकटितम्--भूदेवानामुपकारार्थमपि सा स्वकी-यामघटनघटनपटीयसीं मायामवश्यमेव प्रकटीकरिष्यतीति प्रत्याशितं यतस्तयैव प्रतिज्ञातम्—इत्थं यदा यदाबाधा दानवोत्था भविष्यति । तदा तदावतीर्य्याहं करिष्यास्यरिसंक्षयम् । * परन्तु जनन्यपि क्रन्द-नमन्तरेण न ददाति स्तन्यं स्तनन्धयाय जगन्मातापि अयाचिता नैव किञ्चित् करिष्यति--अतो भूयोऽपि ब्रूमः "सं गच्छध्वं सं वदध्वम्" । एकचित्तीभूय सर्वे विश्वमातरमाह्वयन्तु–अवश्यमेवाविर्भविष्यति सा संरक्षणार्थं धर्म्मस्य ।

व्यष्टिभावेनापीत्थं जगदुपकाराय समाराधितः स्वेष्टदेवः प्रसादं गच्छति आविर्भवति च नरदेहेनेति च उदाह्रियते—

इतः प्रायेण प्राक्पञ्चशताब्दीतः कश्चित् श्रीहट्टजन्मा कमलाक्षना-

---

* वासुदेवरूपेणापि तथैव प्रतिज्ञातम्—

यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्म्म-स्य तदात्मानं सृजाम्यहमिति ।

मा ब्राह्मणः अनुगङ्गं शान्तिपुरमधिष्ठाय प्रत्यहं गङ्गागर्भमवगाह्य कृत्वा च स्वशिर एव साधनयन्त्रं सुचिरं तपस्तेपे, "धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे" इति येन प्रतिश्रुतं तमेव देवमाचकर्ष च धर्म्महीनं वङ्गदेशं सद्धर्म्मेणालोकयितुम् । अथ भगवान् श्रीगौराङ्गरूपेण अद्वैतापरनाम्नस्तस्यैव तपःपरायणस्य द्विजवर्य्यस्य वन्धोः श्रीहट्टदेशीयजगन्नाथमिश्रस्य भवने सञ्जात इति वैष्णवा मन्यन्ते ।

हे भूदेवाः, बद्धकरपुटोऽयं जनः प्रार्थयते दीयतां भवद्भिः किञ्चिदवधानमत्र विषये, आधीयतां यत्नः सम्भवार्थं महापुरुषस्य गोब्राह्मणहिताय जगद्धिताय च । यथा हि समष्टिभावेन महासम्मेलनादौ समागत्य उपायश्चिन्तनीयो येन अधर्म्मस्य प्रतीकारो भूयात्–तथैव व्यष्टिभावेनापि आहूयतां स्वेष्टदेवो यस्य प्रसादाद् अधर्म्माभ्युत्थानं दूरीभविष्यति । प्रत्यहं त्रिसन्ध्यं सन्ध्योपासनसमये सनातनवर्णाश्रमधर्माभ्युदयं संकल्प्य कतिवारं नियमरूपेण स्वेष्टमन्त्रजपः क्रियताम् ।

एतदर्थं प्रस्तूयते यद् ये खलु ब्राह्मणा वाराणस्यां महासम्मेलने समागमिष्यन्ति आनयन्तु ते सप्तशतीपुस्तकं पठनार्थं श्रीमदन्नपूर्णामन्दिरे । इत्थं यदा यदा वाधेत्यादिश्लोकपुटितां कृत्वा च पठन्तु ते सप्तशतीं तत्र । इत्थं सर्वेषां समवेतपाठेन ध्रुवं देव्याः प्रीतिः सञ्जनिष्यते । प्रीता चेज्जगदम्बिका कटाक्षपातेन नः सर्वाण्यरिष्टानि दूरीकरिष्यति—नात्र संशयः कार्य्यः ।

अयमेव पन्था: शुभायेति शम् ।

---

# धर्म्मः ।

( द्वितीयः प्रवन्धः )

( निबन्धकः—श्रीहाराणचन्द्र शास्त्री । )

स एष श्रुत्यादिप्रमाणको नित्यमद्वेषरागिभिर्धर्म्मैकप्राणैर्विद्वद्भिरनुष्ठितो धर्म्मो द्विविधः,—साधारणधर्म्मो विशेषधर्म्मश्च । सर्वैर्वर्णैराश्रमिभिश्चानुष्ठेयः शास्त्रेषु मनुष्यमात्रकर्त्तव्यत्वेन निर्द्दिष्टो धर्म्मः साधारणः । स चायं मुनिमुख्येन मनुना समुपदिष्टः,—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ॥" इति ।

[ मनुस्मृतौ ६ अध्याये ९२ ]

आश्रमविशेषनिविष्टैर्वर्णविशेषभागिभिरन्यैर्वा स्त्रीभिः पुरुषैरधिकारिविशेषैरनुष्ठेयत्वेन शास्त्रेषु वर्णितो विशेषधर्म्मो "गृहस्थः सदृशीं भार्य्यां बिन्देते"त्यादिरूपः । अलौकिकश्रेयःसाधनस्यैवास्माकं शास्त्रेषु धर्म्मसंज्ञेति व्यक्तं शास्त्ररहस्यनिष्णातानाम् । स चायं यदीयश्रेयःसाधनरूपेणोपदिष्टः शास्त्रेषु, तदीय एव धर्म्मो नान्यस्य कस्यचित् । यथा कस्याश्चित् कन्याया भार्य्यात्वेन स्वीकरणं गृहस्थस्यैव धर्म्मो न तु ब्रह्मचारिणो वाणप्रस्थस्य चतुर्थाश्रमिणो वा । एवं स्थिते केवलया युक्त्या धर्म्मनिर्णयकामना सर्वथाऽयुक्तैव । किञ्च युक्तिर्नामानुमानं तर्को वा । तत्र शास्त्रविरुद्धमनुमानमनुमानाभास एव तत्त्वानिर्णायकतयेति न्यायभाष्यकारेण वात्स्यायनेन सुस्पष्टमभिहितम्—

"यत्पुनरनुमानं प्रत्यक्षागमबिरुद्धं न्यायाभासः सः" इति ।

[ प्रथमसूत्रे ]

वादरायणीयभाष्ये द्वितीयाध्यायस्य प्रथमचरणे "तर्काऽप्रतिष्ठाना"दित्यादिसूत्रव्याख्यानावसरे शङ्करभगवत्पादैः शास्त्रमनपेक्षमा-

णस्य तर्कस्याप्रतिष्ठितत्वदोषेणाप्रामाण्यमेव समर्थितम्—

"निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति । उत्प्रेक्षाया निरङ्कुशत्वात् । तथाहि—कैश्चिदभियुक्तैर्यत्नेनोत्प्रेक्षितास्तर्का अभियुक्ततरैरन्यैराभास्यमाना दृश्यन्ते । तैरप्युत्प्रेक्षिताः सन्तस्ततोऽन्यैराभास्यन्त इति न प्रतिष्ठितत्वं तर्काणां शक्यमाश्रयितुं, पुरुषमतिवैरूप्यात् ।" इति ।

वैयाकरणधौरेयेण भर्त्तृहरिणैतदेव वाक्यपदीये ब्रह्मकाण्डे समुपवर्णितम्—

"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥" [ ३४ ] इति ।

तस्माद् धर्म्मव्यवस्था न तर्कसाध्या किन्तु शास्त्रसमधिगम्या; तदप्युक्तं भर्त्तृहरिणा—

नचागमादृते धर्म्मस्तर्केण व्यवतिष्ठते । इति ॥
[ वाक्यपदीये ब्रह्मकाण्डे ३० ]

भगवताऽप्युक्तम्—

तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहार्हसि ॥ इति ।
[ श्रीमद्भगवद्गीतायाम् १६ अध्याये २४ श्लोकः ]

ननु यथा शास्त्रकारैः केवलतर्कस्याप्रामाण्यमुक्तं तथा शास्त्रस्याऽपि केवलस्य धर्म्मविनिर्णयेऽप्रयोजकत्वमभिहितम् । तथाच वृहस्पतिः—

केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः ।
युक्तिहीनविचारे तु धर्म्महानिः प्रजायते ॥ इति ।

एवं च केवलशास्त्रस्यापि प्रामाण्याभावेन तर्कतुल्यतया शास्त्रमेवादर्त्तव्यं न तर्क इत्यत्र नास्ति किञ्चिद् विनिगमकं प्रत्युत द्वयोस्तुल्यकक्षतया विकल्पात् स्वाभिरुचिमनुसृत्यान्यतरदेवाश्रयणीयं शारीर-

सुखस्वाराज्यादिफलाय । एवं च—

विप्रान्नं चेद् भवेद् भोज्यं चाण्डालान्नेऽप्यदूषणम् ।
द्वयोर्मानुष्यके तुल्ये भेदहेतुर्न विद्यते ॥
ब्राह्मणी चेत् समुद्वाह्या ब्राह्मणेन सुतार्थिना ।
सन्तानोत्पादसामर्थ्या शूद्रा किमपराध्यति ॥
द्वयोरवयवास्तुल्या नारीत्वं च—द्वयोरपि ।
एकस्याः परिहारेण कथमन्यत्र सम्मतिः ॥
ब्राह्मणाय प्रदातव्या विप्रा न क्षत्रियादिषु ।
सर्वावयवसामान्ये पक्षपातः कथं वद ॥

इति चेत् । न । पूर्वाचार्य्यैरेव दत्तोत्तरत्वात् । तथाहि—तर्कस्य समादर्त्तव्यत्वेऽपि न शास्त्रसमकक्षत्वं तस्य, किन्तु शास्त्रस्यैव प्राधान्येन प्रामाण्यम्, तर्कस्य तु शास्त्राविरुद्धस्य प्रामाण्यम् । तथाच शास्त्रार्थनिर्णयायेव शास्त्रानुकूलतर्कस्यापेक्षा न तु स्वातन्त्र्येण । तदुक्तं मनुना द्वादशाध्याये—

आर्षं धर्म्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः ॥ १०६ ॥" इति ।

अत्र श्लोके ऋषिदृष्टत्वाद्वेद एवार्षपदेनोक्तः, धर्म्मोपदेशशब्देन च वेदमूलकः स्मृत्यादिक इति कुल्लूकभट्टव्याख्यायां स्पष्टम् । पूर्वोक्ताश्च तर्का वेदशास्त्रविरुद्धत्वेन हेयाः । एतादृशां वेदशास्त्रविरुद्धानां तर्काणामुद्भावका ये, तेऽपि साधुभिरव्यवहार्य्याः, सर्वधर्म्ममूलभूतायाः श्रद्धाया विघातकत्वात् । तथाचोक्तं मनुनैव;—

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः ।
स साधुभिर्वहिष्कार्य्यो नास्तिको वेदनिन्दकः ॥ इति ।
[ द्वितीयाध्याये ११ श्लोकः ]

पूर्वप्रदर्शितेन—

केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः ।

युक्तिहीनविचारे तु धर्म्महानिः प्रजायते ॥

इति वृहस्पतिवचनेनाऽपि शास्त्रानुसारितर्कस्यैव समाश्रयणीयत्वमुक्तम्, पूर्वोक्तमनुवचनैकवाक्यत्वात् । मनुवचननैरपेक्ष्येण तु वृहस्पतिवचनं न शक्यं व्याख्यातुम्, वृहस्पतिनैव--

वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम् ।
मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते ॥

इति वचनेन मनोः सर्वाधिकप्राधान्यं मनुवचनार्थविरुद्धायाश्च स्मृतेरप्रामाण्यमाविष्कृतम् । एवं च वृहस्पतिना मनुमुखप्रेक्षिणा मनुविरुद्धं किमपि स्वातन्त्र्येण वक्तुमशक्यमिति वृहस्पतिवचनस्यापि मनोरनुकूल एवाभिप्रायः । तत्सिद्धं पूर्वोक्तं वृहस्पतिवचनमपि मनुवचनाविरोधि शास्त्रानुकूलस्यैव तर्कस्य सम्यक्त्वेनाश्रयणीयत्वं प्रतिपादयतीति ।

बादरायणीयेऽपि अविरोधलक्षणे प्रथमपादीयतृतीयाधिकरणे शङ्करभगवत्पादैरागमानुसारिणस्तर्कस्यैव तत्त्वनिर्णयोपयोगित्वेनादर्त्तव्यताऽभ्युपगता । निरागमानां पुनस्तर्काणां निराकरणमप्रतिष्ठितत्वदोषेण कृतमिति प्रतिपादितमधस्तात् ।

आधुनिकोत्प्रेक्षिताः सर्वेऽपि तर्का आगमविरुद्धत्वाद्बौद्धचार्वाकादितर्कवन्निर्मूलत्वेन शास्त्रैकप्रमाणैरास्तिकवर्य्यैर्वर्जनीयाः खण्डनीयाश्च विरोधितर्काणामुद्भावनेन । द्वयोर्गवोरश्वयोर्वैकजातीयत्वेऽपि कस्याश्चिद् दुग्धे माधुर्य्यमधिकं नवनीतञ्च, न तथाऽपरस्याः; अश्वस्याऽपि कस्यचिच्छीघ्रगामित्वं कस्यचिद्वा मन्दगतित्वम्, एवं ब्राह्मण चाण्डालयोस्तुल्येऽपि अवयवसंस्थाने ऽस्त्येव किञ्चिदुपादानकृतं वैलक्षण्यं शास्त्रगम्यं, येनैकस्य भोज्यान्नत्वमपरस्य नेति वक्तुं शक्यम् । न खलु सर्वे पदार्थाः प्रत्यक्षेणैव गम्या इति केनचित् प्रतिज्ञातुं शक्यते। आप्तवचसामपि प्रामाण्यमनिच्छद्भिरपि अभ्युपेयमन्यथा व्यवहार लोपप्रसङ्ग एव स्यात् । अस्मादृशामयोगिनांसर्वपदार्थज्ञानस्य स्वकीय-

प्रत्यक्षेण कर्तुमशक्यत्वात् । तथाच व्यवहारानुरोधेन परप्रत्यक्षमपि बहुषु स्थलेषु समाश्रयणीयम् । तत्राप्तवचसामप्रामाण्ये कथङ्कारं पर प्रत्यक्षाश्रयेण व्यवहारनिर्वाहः स्यात् । प्रत्यक्षमपि प्रतिपुरुषं तारतम्येन विद्यमानं सातिशयं क्वचिद्विश्रान्तम् । यथाऽणुपरिमाणतारतम्यं परमाणौ विश्राम्यति । एवं चास्मदुत्कृष्टानामृषीणां प्रत्यक्षं वेदाविरुद्धं धर्म्मे प्रमाणम् । आप्तानां च तेषां वचनादस्माकं धर्म्मकृत्येषु पर-लोकसाधनेषु प्रवृत्तिः । तदुक्तं भर्त्तृहरिणा वाक्यपदीये ब्रह्मकाण्डे-

आविर्भूतप्रकाशानामनुपद्रुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥ ३७ ॥ इति ॥

नचार्षं ज्ञानं तर्केण बाधनीयम् । आर्षज्ञानविषयीभूतपदार्थानां तर्का-विषयत्वात् । अनुमानं हि लौकिकप्रत्यक्षादिप्रमाणपरिगृहीतवह्नि धूमादीनां सम्बन्धविशेषमादाय प्रवर्त्तते; आर्षज्ञानविषयेषु धर्म्मब्रह्मा-दिवस्तुषु लौकिकप्रमाणानि नैव क्रमन्ते, तेषां लौकिकप्रमाणाविषय-त्वात् । एवं च तत्र ऋषीणां ज्ञानं तदुपजीवि च शास्त्रं प्रमाणम्, न तु लौकिकतर्कमूलकमनुमानादिकम् । तस्माल्लौकिकेन तर्केण ऋषीणां दर्शनं नैव शक्यं बाधितुम् । तदुक्तं भर्तृहरिणैव--

अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान्, वचनं तेषां नानुमानेन बाध्यते ॥ इति ॥
[ वाक्यपदीये-ब्रह्मकाण्डे--३८ ]

महाभारतेऽप्युक्तम्—

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ॥ इति॥

आर्षं दर्शनं तु तथ्यभूतत्वान्न वेदविरोधीति वेदविरोधेन तद्बाधो नाशङ्कनीयः, वेदस्यापि यथाभूतार्थप्रकाशकत्वेनार्षदर्शनेन संवादात् ।

यैः खल्वाधुनिकैर्भ्रान्तमानिभिरृषिदर्शनमवमत्य केवलतर्कावष्ट-म्भेन धर्म्मव्यवस्थाकरणाय प्रयत्यते तेषां स्वकीयं धर्म्मविज्ञानं किंमूलक-मिति गवेषणायामृषीणामिव तपःसदाचारश्रुतादीनामभावेन केवल-

मोहमूलकदर्पोद्रेकमूलत्वात् तज्ज्ञानस्य भ्रान्तत्वेनानादेयत्वमिति पर्य्यवस्यति । एवं च तपःश्रुतसदाचारादिपूतचेतसामृषीणां वचनमेवादृत्य नव्यशिक्षितानां विधर्म्मविद्यामनारतमभ्यस्यतां भोज्याभोज्यपेयापेयादिविचारविमूढानामयतचित्तानां वचसि कैरपि कदाचिदपि धर्म्मनिर्णयाय नास्था कार्य्या ।

ये खलु धार्म्मिका धर्म्मज्ञाश्च तद्वचोभिरेव धर्म्माधर्म्मव्यवस्था स्वीकरणीया । अस्मास्वपि केषाञ्चिदनाचाराणां दर्शनेन अनाश्वासश्चेदस्तु तावदनादेयत्वमस्मद्वचसाम् । मन्वादीनां पुनर्ऋषीणां परमधार्म्मिकत्वेन धर्म्मनिर्णयाय धर्मानुष्ठानाय च यावज्जीवं कृतप्रयत्नत्वेन तपःश्रुतसदाचारपरायणत्वेन तेषां वञ्चकत्वे प्रमाणाभावेन च कथं तेषामुक्तिर्नादर्त्तव्येति न विद्महे । अहो दौर्भाग्यं देशस्य । अहो प्रभावः कलिमहाराजस्य । ये खलु महर्षयो धर्म्मार्थमेव समग्रं जीवितं क्षपितवन्तस्तेषामुक्तयोऽनादेयाः संवृत्ताः; ये च धर्म्मज्ञानाय धर्म्माचरणाय वा कदापि कमपि यत्नं नास्थितवन्तस्त एव धर्म्मे स्वात्मनः प्रामाण्यप्रख्यापनाय सन्नद्धाः । वयं च केचन ख्यातिलोभेन लाभाशया वाऽन्येन वा केनचित् कारणेन तानेव धार्म्मिकान् धर्म्मज्ञांश्च प्रख्यापयन्तो धर्म्माचार्य्यपदवीं नेतुमुत्सहामहे ।

किमाश्चर्य्यमतः परम् ।

---

# मिस् मिलर शुद्धिसमालोचनम् ।

श्रीकाशीस्थसनातनधर्मसभया मिस्मिलरहिन्दुकरणविषये करवीरमठाधिपानां ( डाक्टर कुर्तकोटि ) श्रीशङ्कराचार्याणां सविधे

महामहोपाध्यायश्रीलक्ष्मणशास्त्रिणः महामहोपाध्यायश्रीमदनन्तकृष्णशास्त्रिमहोदयाः व्याकरणाचार्यश्रीसीतारामशास्त्रिमहाशयाः न्यायाचार्यश्रीराजेश्वरशास्त्रिवर्याश्च सप्रमाणं तर्कविशेषाणां मतविशेषाणां च विज्ञायोपस्थापयितुं नासिकक्षेत्रं प्रति गन्तव्यमिति प्रार्थिताः । तदनुसारेण च तैस्तत्र गत्वा कृते तत्तच्छङ्कोपक्षेपे करवीरमठाधिपाः श्रीचरणाः स्वीयान्युत्तराणि यानि यानि सनातनधर्मसभाया आस्तिकसमाजविशेषाणां च निरतिशयोत्साहवर्धनपूर्वकमन्वगृह्णन् तेषां समालोचनं सविस्तरं सप्रमाणं च कर्तव्यमिति तेषामेवाज्ञया सनातनधर्मसभा यथाशक्ति स्वीयं समालोचनं प्रकाशयितुमभिलषन्ती प्रथमतः सनातनधर्मसभाप्रतिनिधीनां श्रीचरणानां च शङ्कोत्तरादीनि यथावदेव सङ्गृह्य प्रकाशयति । तद्यथा—

## श्रीचरणानां प्रास्ताविकं भाषणम् ।

श्रीचन्द्रमौलीश्वरं प्रणम्य प्रकाशितपत्रिकानुरोधेन सभाकार्यमारभ्यते। सभास्वरूपनिर्णयसमय एव ते ते पण्डिताः पत्रद्वाराऽऽहूताः । तेषु केभ्यश्चिदुत्तराणि समधिगतानि । तेषु वेदान्तवागीशश्रीधरशास्त्रिपाठकमहोदयानामिदं पत्रमिति पत्रमनुवाचितम्—तस्य सारांशस्तु यदि यथानियमं सभा व्यवस्थाप्यते तर्ह्यवश्यमेव सभागमिष्यत इति । अनन्तरं श्रीचिन्नावशास्त्रिमहोदयानां तन्त्री, एवं श्रीमराठेशास्त्रिमहोदयानां पत्रं, सर्वं च श्रीचरणैरनुवाचितम् । यत्त इदानीं तेऽत्र समुपस्थातुं न शक्नुवन्ति इति प्रतीतम्, काशीस्थपण्डितास्तु अतर्कितमागताः बहुकालपर्यन्तमत्रावस्थापनं च तेषां नोचितमितीदानीमेव कार्यमारभ्यते । यथाकार्यक्रमं सनातनधर्मसभाप्रतिनिधिभिः पण्डितप्रवरैः शङ्कायाः उपक्षेपो विधीयेतेति विश्वसिमि ।

ततः परं महामहोपाध्यायैः श्रीमदनन्तकृष्णशास्त्रिभिर्भाषणमार-

ध्यम् । श्रीवरणानां तेषां च म्लेच्छत्वरूपाहिन्दुत्वनिवृत्तिपूर्वकहिन्दुत्वप्रापणं हिन्दूकरणमित्यत्रैकमत्यमासीत् ।

प्र०—किं नाम म्लेच्छत्वम् ?

उ०—अस्ति द्विविधं म्लेच्छत्वम् एकमहिन्दुत्वसमानाधिकरणमपरं तद्व्यावृत्तम् ।

प्र०—किं पुनर्हिन्दुत्वम् ?

उ०—भारतवर्षीयमहापुरुषप्रस्थापितयत्किञ्चिद्देवतोपासकत्वयोग्यत्वम् । तेन च माहम्मदक्रैस्तव्यतिरिक्ता हिन्दव इति पर्यवसितम् । माहम्मदेषु हिन्दुत्वासमानाधिकरणं म्लेच्छत्वम्, तन्मतावलम्बिषु हिन्दुषु तु आगन्तुकधर्मविशेषरूपम् ।

प्र०—मिस्मिलरइत्यस्याः कीदृशं म्लेच्छत्वम् ?

उ०—जातिरूपमेव तत् ।

प्र०—प्रायश्चित्तेन जातिपरिवर्तनं भवति वा ? धर्मविशेषप्रापणं च भवति वा ?

उ०—प्रायश्चित्तेन जातिपरिवर्तनं न सम्भवति । धर्मपरिवर्तनन्तु सम्भवति ।

प्र०-शोधकप्रायश्चित्तस्य विहिताकरणनिषिद्धसेवनप्रयुक्तस्वकर्मानधिकार युक्तस्वकर्मानधिकारप्रयोजकाप्रायत्यविशेषनिवर्तकत्वं खलु लक्षणम् ?

उ०—तदेव ।

प्र०—मिस्मिलर इत्यस्या म्लेच्छत्वदशायां हिन्दुत्वप्रयुक्तधर्माधिकारो वर्तते वा ? यदि नास्ति, तर्हि स हिन्दुधर्मानधिकारः किं विहिताकरणनिषिद्धसेवनप्रयुक्त उत जातिप्रयुक्तः ?

उ०—जातित एव तस्यास्तद्धर्मानधिकारः न तु विहिताकरणनिषिद्धसेवनादिना ।

प्र०—मिस् मिलर इत्यस्याः प्रायश्चित्ते कृते हिन्दुधर्मानधिकारापादकम्लेच्छत्वजातेर्निवृत्तिर्भवति न वा ?

उ०—न भवति ।

प्र०—भगवद्भजने तत्स्वरूपज्ञाने वा किं मनुष्यमात्रस्याधिकारः उत कस्यचिद्विशिष्टस्य ?

उ०—मनुष्यमात्रस्यैव । नात्र कश्चन जातिविशेषोऽपेक्ष्यते ।

प्र०—तर्हि मिस् मिलर इत्यस्याः प्रायश्चित्तेन किम्प्रयोजनम् ?

उ०—गोमांसभक्षणादिप्रयुक्तपापनिर्हरणं भारतवर्षीयदेवतानुसन्धानप्रयुक्ताप्रायत्यविशेषनिवर्तनं च ।

प्र०—मिस्मिलर इत्यस्या अशोधितावस्थायामपि भक्तिशास्त्रादावधिकारो वर्तते न वा ?

उ०—वर्तत एव ।

प्र०—भक्तिशास्त्रे निषिद्धकर्मानुष्ठानादिप्रयुक्तमप्रायत्यं किमधिकारप्रतिबन्धकम् ?

उ०—न प्रतिबन्धकम् । तथापि यदि निषिद्धकर्मजन्यपापनिर्हरणाय प्रायश्चित्तं क्रियते तर्हि न कापि हानिः ।

प्र०—किं प्रायश्चित्तमिदं वैधम् ?

उ०—वैधमेव ।

प्र०—वैधे कर्मणि कदाचिदनुष्ठानं कदाचिदननुष्ठानमिति भवति वा ?

उ०—भवति, यदि वैकल्पिकम् ।

प्र०—भक्तिशास्त्राधिकारप्रापणाय प्रायश्चित्तं कर्तव्यमिति विधिः न कर्तव्यमिति निषेधश्च वर्तते वा ?

उ०—वर्तते । सामान्यविधिः प्रायश्चित्तप्रापकः कलिसन्तरणोपनिषदादिषु वाक्यशेषेण तन्निषेधोऽपि गम्यते ।

( ततः परं कालातिपाताद्परदिने सभा भवत्विति सूचनपूर्वकं सभाविसर्जनं जातम् )

| | |
|---|---|
| वैशाख कृष्ण १० भौमे शके १८५० | एकनाथ धोंडदेव जामखेडकर |
| ह० श्री० अनन्तकृष्णशास्त्री | चिटणीस निसबत |
| वै० कृ० १० भौमे शके | श्रीशङ्कराचार्यमठ करवीर । |

---

## द्वितीयदिनवृत्तान्तः ।

अथोत्तरमात्रं सङ्गृहीतं प्रश्नास्तु न सङ्गृहीताः ।

श्रीकबीरदासादिभिर्गुरूपदेशेन श्रीरामादिभक्तिः स्वीकृता, मिस-मिलरइत्यनयाऽपि गुरूपदेशेन भक्तिः स्वीकृता । इयान् विशेषः कबीरदासादीनां वैदिकधर्मेऽधिकारो न दत्तः । मिस्मिलर इत्यस्यास्तु वैदिकधर्माधिकारोऽपि दत्तः । वर्णधर्म आश्रमधर्मो वा तस्यै न दत्तः । वैदिकधर्मपदेन साधारणधर्मा विवक्ष्यन्ते । न तु जातिधर्माः । कबीरदासादीनां सनातनधर्मेऽधिकारो नासीत् । अतस्तेषां हिन्दुपदेन व्यवहारो न प्रवर्तितो गुरुभिः । मिस्मिलर इत्यस्यास्तु सनातनवैदिकधर्मेऽप्यधिकारो दत्त इति कृत्वा हिन्दुपदसङ्केतोऽपि गुरुचरणैरेव कल्पितः । म्लेच्छानां प्रायश्चित्तेन वैदिकधर्मेऽप्यधिकारः सम्भवति । मिस्मिलर इत्यस्या भारतीयशास्त्राधिकारिवर्णचतुष्टयसङ्करादिजातिमध्ये न प्रवेशः । अयम्भावः तस्या जन्मसिद्धा म्लेच्छत्वजातिर्न कथमपि निवर्तिता । बौद्धादीनां वैदिकधर्माननुयायित्वेऽपि यथा हिन्दुपदेन व्यवहार आधुनिकसमाजसिद्धः एवमस्या अपि आधुनिकसमाजस्थित्यनुसारेण हिन्दुपदसङ्केतः कल्पितः । हिन्दुपदशक्यतावच्छेदकस्तु हिन्दुशब्दः । बौद्धादीनां हिन्दुशब्दवाच्यत्वं न पूर्वाचार्यानुमतम् । ( ६३ ) तमे पृष्ठे आत्मतत्त्वविवेक एवमुक्तं यत्—परैः पूज्य-

मानानामन्यत्राप्रवेशात्, इतः पतितानामपि परैरुपादानात् इति उद-यनाचार्यैरुक्तमिदं प्रमाणमिति मन्यते । साङ्केतिकमुख्यहिन्दुत्वपरिचा-यको धर्मः भारतवर्षीयमहापुरुषप्रस्थापितपत्किञ्चिद्देवतोपासकत्वयो-ग्यत्वं योग्यतावच्छेदकधर्मश्च हिन्दुपदव्यवहार्यसन्तानत्वम् । क्रैस्त-मतावलम्बिनामपि हिन्दुसन्तानानां हिन्दुत्वं न विहीयते । देवलस्मृ-तिप्रामाण्यन्तु स्वीक्रियते । तत्र संवत्सरैश्चतुर्भिस्तु तद्भावमधिग-च्छतीति वचनेन म्लेच्छसंसर्गे वत्सरचतुष्टयानन्तरं तदूर्ध्वं तत्सम-त्वेन पतितत्वात्प्रायश्चित्ताभावान्मरणमिति शूलपाणिनिबन्धेनेदमव-गम्यते—यद्वत्सरचतुष्टयानन्तरं तत्पूर्वं येषु धर्मेषु प्रायश्चित्तपूर्वकम-धिकारः प्रसक्तः तेषु स नास्तीति । देवलस्मृतौ म्लेच्छैः सहोषितो यस्तु पञ्चप्रभृतिविंशतिः । वर्षाणि शुद्धिरेषोक्ता तस्य चान्द्रायणद्वयम् इत्यस्मिन् वाक्ये सहोषित इति पदेन पञ्चसंवत्सरमारभ्य विंशतिसं-वत्सरपर्यन्तं सहवासमात्रं चान्द्रायणद्वयप्रयोजकतया विवक्षितमिति स्फुटीभवति । यावत्स्मृत्यन्तरेण विरोधो न भवति तावत्स्मृतिगतानां तत्तत्पदानामुपलक्षणत्वं न युक्तम् । पञ्चसंवत्सरप्रभृतिविंशतिवर्षप-र्यन्तमभक्ष्यभक्षणं चान्द्रायणद्वयप्रयोजकमित्यपरं स्मृत्यन्तरवचनं किमपि नास्ति ।

वत्सरचतुष्टयानन्तरं म्लेच्छभावं प्राप्तानां वैदिकधर्माधिकारः स्यादित्यत्र प्रमाणं 'मातापित्रोर्हि शुश्रूषां' इत्यारभ्य वेदधर्मक्रियाश्चैव इतिवाक्यघटितं महाभारतवाक्यं प्रमाणमिति श्रीचरणाः ।

सनातनधर्मसभाप्रतिनिधयस्तु—

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ।
पौण्ड्रकाश्चोड्रद्रविडाः काम्बोजा यवनाः शकाः ।
पारदाः पल्हवाश्चीनाः किराता दरदाः खशाः ।
मुखबाहूरुपज्जानां या लोके जातयो बहिः ।

म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ।

इति मनुना दस्युशब्देन व्यवहृतानां व्रात्यक्षत्रियादीनां धर्मे स्थापनं कथं स्यादिति राजधर्मेषु पञ्चषष्टितमाध्याये—

यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः ।
शकास्तुषाराः कङ्काश्च पल्हवाश्चान्ध्रमद्रकाः ।
पौण्ड्राः पुलिन्दा रमठाः काम्बोजाश्चैव सर्वशः ।
ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ।
कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः ।
मद्विधैश्च कथं स्थाप्याः सर्वे ते दस्युजीविनः ।
एतदिच्छाम्यहं श्रोतुं भगवँस्तद्ब्रवीहि मे ।
त्वं बन्धुभूतो ह्यस्माकं क्षत्रियाणां सुरेश्वर ।

इति मान्धातुरिन्द्रं प्रति प्रश्ने—

मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ।
भूमिपानाञ्च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ।
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ।
दानानि च यथा कालं द्विजेभ्यो विसृजेत्सदा ।
अहिंसा सत्यमक्रोधो वृत्तिर्दायानुपालनम् ।
भरणं पुत्रदाराणां शौचमद्रोह एव च ।
दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
पाकयज्ञा महार्हाश्च दातव्याः सर्वदस्युभिः ।
एतान्येवं प्रकाराणि विहितानि पुराऽनघ ।

इत्यादि मन्वादिवाक्यैकवाक्यतया दस्युशब्दवाच्य व्रात्यक्षत्रियादिपरमिदं न तु जातिम्लेच्छपरमिति मन्यन्ते यतः—

मेदस्य राजवनिता तथा वेनेन सङ्गता ।

सा सूते यवनं पुत्रं तुरुष्कः सम्प्रकीर्तितः ।
क्षत्रवीर्येण शूद्रायामृतुदोषेण पापतः ।
अविद्धकर्णाः क्रूराश्च निर्भया रणदुर्जयाः ।
बलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातयः ।
शौचाचारविहीनाश्च दुर्धर्षा धर्मवर्जिताः ।

इत्यादिवाक्यैर्जातिम्लेच्छाः पृथगेव धर्मविवर्जितत्वेनाभिहिताः श्रीचरणैस्तु मिस्मिलर इत्यस्या वैदिकधर्माधिकारोऽनेनैव वचनेन निर्णीतः । अस्य वचनस्यैतदर्थनिर्णायकत्वं सम्भावनामात्रेणैवेदानीं वर्तते । यो यज्जातिस्तस्योत्कृष्टजात्यत्यन्तरेण व्यवहरणं ब्रह्महत्यासममिति अनृतं च समुत्कर्षे ( ११।५५ ) इति मनुवचनाभिप्रायः । मिस्मिलर इत्यस्या जात्या हिन्दुत्वं नास्ति । तथा यदि जात्या हिन्दुत्वं मन्यते तर्हि तस्या उक्तमनुवचनसिद्धं पापं भवति । मिस्मिलर इत्यस्या हिन्दूकरणं यदस्माभिः कृतं तदिदं न जात्या हिन्दुना सह विवाहोपयोगि । एवं हिन्दूकृतानां जात्यन्तरेण विवाहोऽशास्त्रीयः ।

एवं रीत्या विचारः पर्यवसितः । एतेषां विषयाणां समालोचनपूर्वकं सनातनधर्मसभया श्रीचरणानां सविधे स्वीयं मतं सप्रमाणं सविस्तरं च प्रायेण पञ्चदशदिनाभ्यन्तरेण उपहरिष्यते । अनन्तरं च श्रीचरणैर्यद्विधेयं तदवश्यं विधीयेतैव ततः परश्च सर्वमेतत्पत्रिकाद्वारा प्रकाशयिष्यते इति निर्णीतम् । अनन्तरं च काशीसनातनधर्मसभया निरवधिकवात्सल्यस्वीकरणेन कृतस्य साहाय्यस्य कृते धन्यवादाः प्रदत्ताः अनन्तरं च सभाविसर्जनं जातम् ।

| | |
|---|---|
| वैशाखकृष्ण १० भौमे शके १८४०<br>ह० श्रीअनन्तकृष्णशास्त्री<br>काशीसनातनधर्मसभाप्रतिनिधिः | एकनाथ धोंडदेव जामखेडकर<br>चिटणीस निसबत<br>श्रीशंकराचार्यमठकरवीर |

एतावत्पर्यन्तं नासिकक्षेत्रे वृत्तस्य शास्त्रार्थविचारस्य प्रतिलिपिः।

इतःपरं समालोचनम्।

एतैर्ह्युत्तरैः श्रीचरणाः स्पष्टमिदमेवाभिप्रयन्ति यत् माहम्मदक्रैस्तव्यतिरिक्ताः सर्व एव हिन्दुपदाभिधेया इत्याधुनिकसमाजनिर्णयः, भारतवर्षीययत्किञ्चिद्देवतोपासकसन्तानत्वमेव हिन्दुपदप्रवृत्तिनिमित्तम्। कबीरदासादयो हिन्दुसन्तानाः श्रीरामादिभक्तिस्वीकारेऽपि न हिन्दुपदसङ्केतयोग्याः, हिन्दुसन्तानानामेव मतान्तरप्रविष्टानां प्रायश्चित्तादिना पुनर्हिन्दुमतप्रवेशाधिकारः, तत्रापि देवलस्मृत्यनुसारेण शूलपाणिनिबन्धानुसारेण च वत्सरचतुष्टयं यावत् म्लेच्छादिसंसर्गिणामेव पुनर्हिन्दुधर्माधिकारः न तदधिककालतत्संसर्गिणामपि हिन्दूनाम्, तेषान्तु तदूर्ध्वं तु तत्समत्वात्प्रायश्चित्ताभावान्मरणमिति शूलपाणिनिबन्धात्प्रायश्चित्तेनापि हिन्दुधर्मेषु नाधिकारः भागवतधर्मदीक्षायां भगवद्भजनादौ वा म्लेच्छानामपि विना प्रायश्चित्तमप्यधिकारो न विहन्यते। गोमांसभक्षणादिनिषिद्धसंसेवनं न भक्त्यधिकारप्रतिबन्धकम्, प्रायश्चित्तेन जातिपरिवर्तनं न भवति यतः प्रायश्चित्तेन निषिद्धसेवनादिनिर्वर्तितस्वधर्माधिकारमात्रं प्राप्यते न तु जात्यन्तरादिधर्माधिकारः न वा जात्या हिन्दुना सह हिन्दूकृतानां विवाहादिशास्त्रीयतेति। सति चैवं श्रीचरणा अपि मिस्मिलरशुद्धिविषये इदमेवाभिप्रयन्तीति स्फुटमिदं भासते—यत् मिस्मिलरित्यस्याः शोधकं न किमपि वैधं प्रायश्चित्तं सम्भवति, तथा कृतेऽपि प्रायश्चित्ते वर्णचतुष्टयसंकरादिजातिमध्ये सा न प्रवेशमर्हति यतः स्वयमेव श्रीचरणा वदन्ति भारतीयशास्त्राधिकारिवर्णचतुष्टयसङ्करादिजातिमध्ये न प्रवेशः प्रायश्चित्तेन जातिपरिवर्तनं न भवति मिस्मिलर इत्यस्याः प्रायश्चित्ते कृते हिन्दुधर्मानधिकारापादकम्लेच्छत्वजातेर्निवृत्तिर्न भवति इति। तथा च शोधनानन्तरमपि श्रीचरणाः मिस्मिलर इतीमां म्लेच्छजातिमेव मन्यन्ते। अत्र चेदमेवालोचनीयं यन्म्लेच्छत्वं यथा

श्रीचरणोक्तरीत्या हिन्दुत्वासमानाधिकरणं तत्समानाधिकरणं चेति द्विविधमेव हिन्दुत्वमपि द्विविधं भवितुमर्हति वा न वेति । तदर्थं चेदमालोचनीयं यन्म्लेच्छा यथा हिन्दून् स्वधर्मं प्रवेशयितुमर्हन्ति एवं हिन्दवोऽपि म्लेच्छान् विना समयविशेषं स्वमतं प्रवेशयितुमर्हन्ति वा न वेति । अयमत्र निष्कर्षः यन्म्लेच्छत्वमिव हिन्दुत्वमपि जातितः धर्मतश्चेति द्विविधमिति श्रीचरणा वक्तुमर्हन्ति वा न वेति ।

अयं भावः यथा जातितो हिन्दवो धर्मतो म्लेच्छा भवितुमर्हन्ति । म्लेच्छधर्मस्वीकारेण म्लेच्छाचार्यानुमतेन । एवं जातितो म्लेच्छा हिन्दुधर्माचार्यानुमनेन हिन्दुधर्मस्वीकारेण धर्मतो हिन्दवो भवितुमर्हन्ति वा न वेति । एवं हिन्दुधर्माचार्याः वैदिकधर्माधिकारं सर्वसाधारणं मन्यन्ते वा न वेति ।

इदमेवात्र श्रीचरणा अपि श्रीमदुदयनाचार्याणामात्मतत्त्वविवेकगतस्य परैः पूज्यानामन्यत्राप्रवेशात् इतः पतितानामपि परैरुपादानात् इति वाक्यस्य प्रामाण्यस्वीकारेण मन्यन्ते यत् हिन्दुधर्मो न सर्वसाधारणाधिकारः किन्तु व्यक्तिविशेषमात्राधिकारः इति म्लेच्छत्वमिव हिन्दुत्वमपि न द्विविधं भवितुमर्हतीति । अयं भावः धर्मतो म्लेच्छेषु जातितो हिन्दुत्वमिव धर्मतो हिन्दुषु जातितो म्लेच्छत्वमिति नायं हिन्दुधर्माचार्यानुमतः सिद्धान्तः । तथा च जातितो म्लेच्छानां धर्मतो हिन्दुत्वव्यवस्थापनं उदयनाचार्यादिसिद्धान्तविरुद्धमित्येव श्रीचरणानामपि सिद्धान्तात् मिस्मिलर इत्यस्याः हिन्दुधर्माधिकारदानं शास्त्रदृष्ट्या पूर्वाचार्यदृष्ट्या च नार्हमिति श्रीचरणाः स्पष्टमेवाङ्गीकुर्वन्ति । शास्त्राणि हि देवलादिप्रवर्तितानि धर्मतो म्लेच्छत्वमपि वत्सरचतुष्टयानन्तरं न प्रायश्चित्तेन परिवर्तनयोग्यमिति स्पष्टमेव विवेचयन्ति । स्वीकृतमिदं श्रीचरणैरपि—

म्लेच्छैः सहोषितो यस्तु पञ्चप्रभृतिविंशतिः ।
वर्षाणि शुद्धिरेषोक्ता तस्य चान्द्रायणद्वयम् ॥

इति वाक्यं देवलस्मृतिगतं सहवासमात्रस्यैव विंशतिवत्सरव्यापिनः चान्द्रायणद्वयप्रयोजकत्वं साधयति न तु गुरुलघुसाधारणसंसर्गमात्रस्यैव य तो म्लेच्छानामपि समयविशेषातिक्रमे निवृत्तहिन्दुत्वप्रापणस्य शास्त्रासम्मतत्वे जातितो म्लेच्छानां हिन्दुत्वप्रापणं सुतरामसाम्प्रतम्। एतादृशेषु प्रसङ्गेष्वेवायमाभाणकोऽनुसन्धेयः यत्—

आषाढमासे चलति द्विपेन्द्रे चक्रीव नो वारिधिरेव काष्ठा इति।

इममेव सिद्धान्तमभिप्रेत्य कबीरदासादीनां धर्मतो न हिन्दुत्वं जातितो म्लेच्छानां पूर्वाचार्यैरनुमतमिति श्रीचरणा अपि मन्यन्ते। यत्तु श्रीचरणाः कबीरदासादीनां वैदिकधर्मेऽधिकारो न दत्तः मिसूमिलर इत्यस्यास्तु तत्राप्यधिकारो दत्तः वैदिकधर्मपदेन च साधारणधर्मा एव विवक्ष्यन्ते न जातिधर्मा इति वदन्ति। इदमेवात्रानुयुज्यते-यत् कथं श्रीचरणाः कबीरदासादीनामपि साधारणधर्मेष्वहिंसादिषु नाधिकार इति मन्यन्ते इति। साधारणधर्मा हि मनुष्यमात्राधिकारा न जातिविशेषाधिकारा इति दुरपन्हवमिदं तत्त्वम्। तथा च श्रीचरणैः कबीरदासादिभ्यो विशेषोऽस्याः कल्पितश्चिन्त्योपपत्तिक एव।

मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः।

आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनामित्यादि महाभारतवाक्यं हि

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च॥

इत्यादि मनुवचननिर्दिष्टव्रात्यक्षत्रियादिपरमेव, दस्युशब्दसंयोगात् न तु जात्या म्लेच्छमाहम्मदादिपरम्। अत्र यवनशब्दनिर्दिष्टा जातिस्तु न माहम्मदादि जातिः, या खलु—

क्षत्रवीर्येण शूद्रायामृतुदोषेण पापतः।
बलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातयः
अविद्धकर्णाः क्रूराश्च निर्भया रणदुर्जयाः॥

इति ब्रह्मवैवर्तवचननिर्दिष्टा किन्त्वन्यैवेत्यधिकमवसरान्तरे विवे-

चयिष्यते सर्वथा माहम्मदकैस्तानां श्रौतमार्गाधिकारप्रापणमिदं न शास्त्रानुमतम् । श्रीचरणा अपि सम्भावनामात्रेणैवोक्तवचनस्य मिस्मिलर इत्यस्या वैदिकधर्माधिकारे प्रमाणतां मन्यन्ते । सति चैवमनिर्णयावस्थायामेव कथं तस्यास्तदधिकारदानमुक्तवचममूलं युक्तमिति श्रीचरणा एव विवेचयन्तु ।

यत्तु सामाजिकपरिस्थित्यनुसारेण हिन्दुपदसङ्केतः कल्पित इति श्रीचरणैर्मन्यते तत्रेदमेवास्माभिर्मन्यते यच्छास्त्रबाधनेन परिस्थितिविशेषमात्रविरोधं मनसि कृत्वा धर्मव्यवस्थापनमिदं न शङ्करभगवत्पादानामपि सम्मतम्, भारतवर्षे हीदानीं बह्वयः परिस्थितयो जाग्रति यत्र शास्त्राबाधेनापि धर्माचार्या अन्ये सर्वेऽपि प्रायेण समाजरक्षां सम्भवदुक्तिकां मन्यन्ते । सर्वथा धर्माचार्याणां श्रीचरणानां सुधारकपरिस्थितिमात्रसमालोचनं सनातनधर्मावलम्बिनां हानय एव स्यान्न रक्षणाय ।

प्राचीनधर्माभिमानिनोऽपि न सुधारकविशेषिणः, यतस्तेऽपि सुधारकानपेक्षन्ते इयान् विशेषः सुधारकाः स्वस्य सुधारकत्वमेव, धर्माचार्यादीनां सर्वेषान्तु सुधार्यत्वं कामयन्ते, वयन्तु अस्माकं सुधार्यत्वम्, धर्माचार्याणां शास्त्रैकजीवितानां सुधारकत्वमिति ।

अर्थशास्त्राद्धि बलवद्धर्मशास्त्रमिति स्थितिरिति याज्ञवल्क्यस्मृति विरुद्धं 'तस्माच्छास्त्रं प्रमाणन्ते कार्याकार्यव्यवस्थितौ' इति भगवदाज्ञाविरुद्धं च धर्मप्रवर्तनं हिन्दुधर्मस्य हिन्दूनां वाऽवमाननमेव न सम्माननमिति सर्वं एवापरे धर्माचार्या मन्यन्ते ।

अपि चेदमत्र समालोचनीयं यच्छ्रीचरणोक्तरीत्या मुख्यं हिन्दुपदप्रवृत्तिनिमित्तं यदि वैदिकधर्मानुयायित्वम्, यदि च धर्मविशेषावलम्बिनामपि गौण्या वृत्त्या हिन्दुपदेन व्यवहारः सङ्केतविशेषेण वा तर्हि म्लेच्छानामुदयनाचार्याद्युक्तरीत्या कथमपि वैदिकधर्माधिकारमनर्हतां कथं हिन्दुपदसङ्केतोऽपि सम्भवदुक्तिकः । अस्मिंश्च प्रसङ्गे

आर्थप्रसिद्धिबलीयस्त्वाधिकरणमपि पूर्वमीमांसाप्रथमलक्षणतृतीयपादगतं श्रीचरणैः नान्यथयितव्यम् अनेन ह्यधिकरणेनेदमेवावगम्यते यत्पूर्वाचार्याननुमतेऽर्थे शब्दानां प्रयोगो न युक्त इति।

अयम्भावः-यत्र पूर्वाचार्या एकस्मिन्नर्थे शब्दं प्रयुञ्जते आधुनिकाश्चापरस्मिन्नर्थे, तत्र धार्मिकेषु व्यवहारेषु पूर्वाचार्यानुमतैव व्यवस्था समादरणीया नान्या। हिन्दुधर्माधिकारप्रयोजकन्तु हिन्दुपदप्रवृत्तिनिमित्तं न बौद्धादिसाधारणमपि भवितुमर्हति। ऊरीकृतश्चायमर्थः श्रीचरणैरपि स्वीयोत्तरदानावसरे बौद्धादीनां वैदिकधर्माननुयायित्वेऽपि यथा हिन्दुपदेन सङ्केत आधुनिकसमाजसिद्ध इति वदद्भिः। इदमेवाऽत्र सविनयमनुयुज्यते-यत् कथं धर्माचार्याः पूर्वाचार्यनियमविरुद्धां शब्दार्थसम्बन्धव्यवस्थां धर्मविशेषाधिकारव्यवस्थापनपूर्वकं कर्तुमर्हन्ति? यदि हि हिन्दुधर्माधिकारव्यवस्थापनं श्रीचरणानां पूर्वाचार्याणां वा जातिम्लेच्छम्लेच्छसमादिसाधारणमिति मतं स्यात् तर्हि हिन्दुपदसङ्केतोऽयं प्रायश्चित्तादिना हिन्दुकरणपूर्वकं साम्प्रतं मन्येत नचैतदस्ति। श्रीचरणैरेव शोधकप्रायश्चित्तस्य विहिताकरणनिषिद्धसेवनादिप्रयुक्तस्वधर्मानधिकारप्रयोजकाप्राथत्यविशेषनिवर्तकत्वं लक्षणमिति वदद्भिः प्रायश्चित्तेन यस्य कस्यापि यत्र कुत्रापि धर्मेऽधिकारो न शास्त्रसिद्ध इति स्पष्टमेवास्ति विवेचितम्। तथाचाहिन्दूनां हिन्दुधर्मप्रवेशानधिकारमुदयनादिसिद्धान्तानुसारेण मन्यमानानां श्रीचरणानां प्रायश्चित्तविशेषशर्मिष्ठाभिधेयादिव्यवस्थापनं न कथमपि साम्प्रतमित्येव श्रीचरणानामेवोत्तरवाक्यैरवगम्यते।

इदमत्र सानुनयं सूच्यते-यद्यावच्छ्रीचरणानां समालोचनदर्शनं श्रीचरणानां विषये न वैयक्तिकं भावविशेषं केऽपि कमपि ग्रहीतुमर्हन्तीति। सर्वं एवेदं हिन्दुकरणावसरे श्रीचरणानां व्याख्यानदर्शनेन ज्ञास्यन्ति यत्तदानीमेव श्रीचरणैरिदमुक्तमेव यत् मिस् मिलर इत्यस्याः न प्रायश्चित्तेनापि जातिः परिवर्त्यते न वा जातिधर्मेष्वधिकारोऽस्या

अस्माभिर्दीयत इति । न हि कुत्रापि श्रीचरणैरिदमुपक्षिप्तं यज्ज्ञात्या हिन्दुना सह विवाहोऽस्याः शास्त्रीय इति । केवलमिदमेव श्रीचरणानामपि मतमासीद्यद् यदीच्छया पश्चात्तापेन वा भागवतधर्मदीक्षायां प्रवेशो म्लेच्छैरपि काम्यते तर्हि तत्राधिकारस्तेषामपि भवितुमर्हति-विनापि प्रायश्चित्तं म्लेच्छानामपि कबीरदासादीनामिव भागवतधर्म-दीक्षायामधिकारश्चेच्छास्त्रसम्मतः तर्हि गोमांसादिभक्षणप्रयुक्तप्राय-श्चित्ताचरणेन म्लेच्छानां तत्र प्रवेशः कथं न सम्भवदुक्तिकः । सत्यं हिन्दुपदसङ्केतमात्रमस्याः कल्पितम् , परन्तु सङ्केतो यदि धार्मिका-धिकारविशेषार्थं कल्पितः स्यात् तर्हि विरोधः समापतेत् । यदि तु बौद्धादीनामिव सामाजिककार्यार्थं तर्हि को वा विरोध इति प्राचीन-धर्माभिमानिनोऽपि धर्मशास्त्राविरोधेनार्थशास्त्रस्याप्युपयोगं मन्वाना भागवतधर्मदीक्षादीक्षितानां म्लेच्छानामपि हिन्दुपदेन व्यवहारमात्र-मनुमन्तुमर्हन्तीति श्रीचरणा अपि मन्यन्ते । वयन्तु पृच्छामः धर्मवि-शेषाधिकारिसन्तानत्वप्रवृत्तिनिमित्तकतया श्रीचरणैरप्यभिहितं हिन्दु-पदं कथं सामाजिकपरिस्थितिनिबन्धनमन्यत्र प्रवर्तनमर्हतीति, हिन्दु-पदसङ्केतो हि भक्ताग्रगण्यानां कबीरदासादीनामपि नासीदिति श्री चरणैरेव मन्यत इति कथं वा जात्यन्तरेषु जात्यन्तरनामप्रवर्तनं हठादप्रमाणं साम्प्रतम् ।

विश्वसिमः श्रीचरणा अप्यचिरेणैव स्वीयसमालोचनप्रकाशनेन सर्वानास्तिकसमाजाननुग्रहीष्यन्तीति ।

म०म० श्रीपञ्चाननतर्करत्नभट्टाचार्याः
म०म० श्री वामाचरणभट्टाचार्याः
म०म० श्री गुरुचरणतर्कदर्शनतीर्थाः
म०म० श्री अनन्तकृष्णशास्त्रिणः
म०म० श्री लक्ष्मणशास्त्रिणः
श्री हाराणचन्द्रशास्त्रिणः

श्री ताराचरणभट्टाचार्याः
श्री चण्डीचरणतर्कतीर्थाः
श्री रघुवीरत्रिवेदिनः
श्री सीतारामशास्त्रिणः
श्री राजेश्वरशास्त्रिणः
शास्त्ररत्नाकर श्रीकृष्णशास्त्रिणः
वेदान्तालङ्कार श्रीरामचन्द्रदीक्षिताः
पण्डितप्रवर श्रीलक्ष्मणशास्त्रिणः
" श्री सुब्रह्मण्यशास्त्रिणः

---

# वार्त्ताः सम्पादकाभिप्रायाश्च ।

## १ । महासम्मेलन वृत्तान्तः ।

तत्र तत्र महासम्मेलनप्रचारं कृत्वा म० म० श्रीमदनन्तकृष्णशास्त्रिमहोदयाः साम्प्रतं कलिकातानगरं प्रति समायाताः । तत्र तत्र महासम्मेलनसाहाय्यमन्यादृशं लब्धमिति महदिदमानन्दस्थानम् । विशिष्य च तदितिवृत्तमनन्तरसंख्यायां विशदं प्रकाशयिष्यते ।

## २ । धर्म्मप्रचारः ।

ब्राह्मणमहासम्मेलनकार्यप्रचारार्थं काशीतः म० म० श्री० पञ्चानन तर्करत्नमहोदयाः, म० म० श्री लक्ष्मणशास्त्रिणः, म० म० श्री वामाचरण न्यायाचार्याः, श्री राजेश्वरशास्त्रिणः, श्रीश्रीजीवन्यायतीर्थमहोदयाश्च प्रस्थिताः मानभूमप्रदेशान्तर्गतं बेडोस्थानमेवं पुरुलियाप्रभृतीन्यपराण्यपि स्थानानि गत्वा तत्र तत्र श्री महाप्रभुराजगोपालाचार्यप्रभृतीनां साहाय्येन निरतिशयोत्साहपूर्वकेण शाखासमितीः स्थापयित्वा नव्यशिक्षितानां नानाविधशङ्कानिरासेन प्राचीनधर्मे

विश्वासव्यवस्थापनपूर्वकं धर्मप्रचारं कृत्वा कलिकातानगरं समुपगताः तत्रापि शुद्ध्यादिविषये महदान्दोलनं कृत्वा ब्राह्मणमहासम्मेलनमुद्दिश्य समागमिष्यतां सर्वेषां प्रतिनिधीनां भोजनादिव्यवस्थां व्यवस्थापितवन्त इति महदिदमानन्दस्थानम् । शुद्धिविषये म० म० श्री प्रमथनाथतर्कभूषणमहाशयानां मैमनसिंह हिन्दुमहासभायामभिभाषणमधिकृत्य प्रतिवादसभाऽपि महत्येका सङ्घटिता । श्रीतर्कभूषणमहोदयैः सार्कं विचारार्थमपि सन्नद्धा वयमिति पूर्वोक्तैः पण्डितप्रवरैरुद्घोषणमपि कृतम् । महदिदमाशास्पदमासीत्, यत् श्रीतर्कभूषणमहोदयैरपि विचारार्थमनुमतिर्दत्तेति, विचारसभाऽचिरेणैव घटयिष्यत इति परन्तु इदमेव सदुःखं निवेद्यते, यत् तर्कभूषणमहोदयनिर्दिष्टाः विचारकपदमधितिष्ठन्तः मान्यश्रीमन्मथनाथमुखोपाध्यायप्रभृतयो न माध्यस्थ्यपदमङ्गीचक्रुरिति न विचारसभा यथानिर्दिष्टं सङ्घटयितुमशक्यतेति । आशास्महे अपरेषां सुयोग्यानां गृहीतावकाशानां केषाञ्चनोत्तमविचारपतीनां माध्यस्थ्यव्यवस्थापनेन विचारसभाऽवश्यमेव सङ्घटयिष्यत इति ।

---

## पाठ्यापाठ्य निर्णयः ।

६७ पृष्ठे १ म पङ्क्तौ—व्यवहारान्न यः पश्येदित्यत्र व्यवहारान्नृपः पश्येदिति—

६८ ,, १० म ,, —संयोगप्रकारे कथ्यत इत्यत्र संयोगप्रकारः कथ्यत इति—

७० ,, १६ श ,, —हरादिधारव्रत मित्यत्र ह्यासिधारव्रतमिति पाठ्यम् ।

---

नमो ब्रह्मण्य देवाय ।

# ब्राह्मणमहासम्मेलनम्

## ( मासिकं संस्कृतपत्रम् )

"न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् ) ।

प्रथम वर्षं ] सौर श्रावणः शकाब्दाः १८५० [ चतुर्थ संख्या ।

## महासम्मेलनम् ।

( निबन्धकः—म० म० श्रीअनन्तकृष्णशास्त्री । )

किंप्रयोजनमिदं महासम्मेलनमिति सर्वत एवोद्गच्छन्ति शङ्काङ्कुराः परन्तु नेदानीमस्माकं प्रयोजनचिन्तावसरः ।

'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' ।

इति समुल्लसत्यनुशासनं भगवतो वासुदेवस्य । न चाप्रयोजनमपि महासम्मेलनमिदम् । सनातनधर्मचर्चा, विधर्मणामाक्रमणप्रत्याक्रमणम्, आत्मरक्षणम्, अवलम्बनीयस्य मार्गस्योद्घोषणेन सुधारकैरन्यैर्वाऽपथं नीयमानानां भगवदाम्नायादीनां पूर्वाचार्यपरम्पराद्वृतमार्ग एवेतिहासपुराणाद्युपबृंहणेन स्थिरीकरणमित्यादीनि सन्त्येव बहूनि प्रयोजनानि । सत्यं प्रयोजनानि सर्वाणि नैकेनाधिवेशनेन हस्तगतानि भवन्ति । कुत्र वा सम्मेलने तदीयं प्रयोजनमेकेनैवाधिवे-

शनेन हस्तगतम् ? राजनीतिसभासु जानपदसभासु वा प्रतिक्षणं कति विभागाः कति वा मतभेदाः समुन्मिषन्ति !! किं सत्यप्येवं केनापि काम्यते किंप्रयोजनमिति प्रतिबन्धनं जानपदसभायाः ? दृष्टफलेषु हि यावत्फलं साधनानुष्ठानमेव नीतिः, नतु सकृदनुष्ठानमात्रेण फलानुत्पत्त्या नैराश्यानुसरणम्, सत्यप्युपरोधे ततस्ततः साधनचिन्तैव परमं साधनं लक्ष्यसमुन्नतये, न तन्नैराश्यम् । कथं वेयं विधर्मिभिः परिपाल्यते नीतिरिति सर्वएव विभावयन्तु । ततस्ततः कुण्ठितोत्साहा अपि हि विधर्माणः कार्यावसरे न स्वाभाविकं स्वीयमुत्साहं परित्यजन्तीति प्रत्यक्षमिदं सर्वेषाम् । इदमेव दुःखास्पदम्—यत् केवलं सनातनधर्मावलम्बिन उदासते ततस्ततो विधर्मभिराक्रमणेऽपि । कति वा यातना महात्मना मारुतिना राक्षसानां तृणायामन्यन्तेति नेदं कस्यापि तिरोहितम् । धर्मयुद्धस्य ह्ययमवसरः । यत्र ह्यवलंबनीया नीतिः—

क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥

नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृदिति हि सर्वविदितम् । सति चैवमन्ततो गत्वा कतिचन क्षणा धर्मसमालोचनार्थं, कतिचन तदनुष्ठानार्थं, कतिचन श्रीभगवतो वासुदेवस्य, श्रीसदाशिवस्य, श्रीदुर्गाया वाऽनुसन्धानार्थं यदि विनियुज्यन्ते, तर्हि कीदृशो वा समानन्दः स्यादिति सर्व एवानुभवन्तु नाम । ये हि किल भगवत्पारवश्यं, भगवत्कैङ्कर्यं वा मन्यन्ते परमं धर्मम्, धर्मकैङ्कर्यमेव तेषामपि प्रथमः सोपानः । भगवान् हि धर्मग्लानिमेवात्मनो ग्लानिम्, धर्मग्लानिमेव स्वस्य स्वेच्छावशेनापि दुःखमयसंसारप्रवेशनिदानं च मन्यते—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहमिति ॥

भगवानुदयनाचार्यः, श्रीशङ्करभगवत्पादादयोऽन्ये च धर्माचार्या मुक्तिविचारप्रसङ्गेऽपि न भगवदाम्नायपरतन्त्रतां धर्मकैङ्कर्यं वा परिज-

इति। सत्यं परिस्थितयः संसारस्य प्रतिक्षणं, प्रतिपुरुषं च विपरिवर्तन्ते। धर्मस्तु दृढमूलो न कदापि विपरिवर्तते। किमग्निः कदाचन शीतः, कदाचनोष्णः, कदाचनानुष्णाशीतः, कदाचन रोहितः, कदाचन श्वेतः, कदाचन कृष्णः, कदाचन नीरूप इति सतीष्वपि तत्तादृशीषु परिस्थितिषु विपरिवर्तते ? कालोऽपि हि दुरतिक्रम इति वचनमापन्नमात्रविषयम्। किमापत्सर्वाऽपि दुष्परिहरेति कोऽपि मन्यते ? किमापन्नः सन्निपातग्रस्तोऽपि प्रत्यासन्नमरणोऽपि चिकित्साविमुखः कोऽपि संसरति ? सत्यमतिवृद्धानां प्रत्यासन्नमरणानां नाधिभौतिकचिकित्सां केचन कुर्वन्ति। आध्यात्मिकचिकित्साया माधिदैविकचिकित्सायां वा न कोऽप्युदास्ते। 'सनातनधर्मो हि सत्यं पुराणपदेन व्यपदिश्यते, परन्तु नेदमन्नैवमालोचनीयम्—शरीरमिव पुराणं शीर्णस्वभावोऽयं सनातनो धर्मः। धर्मोहि पुराणो नाम—यतः पुराऽपि नवः, श्वोऽपि नवः, परश्वोऽपि नवः, युगसहस्रानन्तरमपि नव इति—

अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे।

धर्मपुरुषो ह्यपथैर्विनाप्यङ्गं प्रधानमात्रस्य क्षणमात्रानुष्ठानेनानुसन्धानमात्रेणाप्यात्मा समशिथिलमेव लभते। नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते। धर्मपरिवर्तनवादो हि आत्मपरिवर्तनवाद एव। किमात्मपरिवर्तनं कोऽपि कामयते।

तदेव राज्यं स्वराज्यम्, यत्र नात्मपरिणामः। सनातनधर्मावलम्बिनोऽपि स्वराज्यमनुमन्यन्त एव विरुन्धन्ति धर्मपरिवर्तनवादम्। स्वराज्यचर्चाप्रसङ्गेन कति वा मतभेदा व्यवस्थापकसभायां राजनीतिसभासु वा सुधारकाणामपि वर्तन्त इति सुधारकैः प्राचीनमतावलम्बिनोऽपि न तृणाय मन्तव्याः। व्यवस्थापकसभास्वन्यत्र वाऽस्मदीयधर्मप्रस्तावा बहव एव भारतीयैरेव कैश्चनानीयमानाः सनातनधर्मावलम्बिनां निरतिशयदुःखनिदानमिति विना विलम्बमिदमालोचनीयम्—यत् कथं व्यवस्थापकसभास्वन्यत्र वा विधर्मभिः

साकमस्मदीयधर्मसमालोचनप्रतिबन्धनं कर्तव्यम् इति । हिन्दुमहासभयाऽपि यथा सनातनधर्मावलम्बिन आर्यसमाजीया, अन्ये च बहवो हिन्दूनामवान्तरविभागा ऊरीक्रियन्ते, सनातनधर्मावलम्बिनां सङ्घटनार्थे महासम्मेलनेऽत्र सम्पूर्णसाहाय्यं दीयेतेति विश्वसिमः । ब्राह्मणमहासम्मेलनमिदं सनातनधर्मावलम्बिनामवलम्बनीयस्य शास्त्रानुसारिणो मार्गस्य विवेचनार्थमेव । नायमस्माकमपि राद्धान्तः—यद् विवेचनमात्रेणोद्घोषणमात्रेण वा सर्वेऽपि सदाचारा एव भविष्यन्तीति, नायं भगवतो वासुदेवस्य, भगवत आम्नायस्य वापि सिद्धान्तः—

प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ।

किं व्यवस्थापकसभायामुद्घोषिताः सर्वेऽपि सर्वैरप्यवलम्ब्यन्ते ? केचनोदारहृदया राजनीतिक्षेत्र इवात्रापि स्वानुष्ठाननिष्ठा अवर्तन्त वर्तन्ते, वर्त्स्यन्तीति च दुरपह्नवमिदं तत्त्वम् । सत्यं सदाचारपरा महर्षिव्यासवसिष्ठादिसदृशाः के वा सन्तीति न वयं जानीमः इति महासम्मेलनसहयोगस्तादृशानां पण्डितानामतिक्लेशसाध्यः ।

शास्त्राणां पूर्वापरसन्दर्भसमालोचनेन शास्त्ररहस्यविवेचकास्तु केचनेदानीमपि वर्तन्त इति न सर्वात्मना निष्प्रयोजनमिदं महासम्मेलनं यदि वैयक्तिकं विद्वेषादिकं, भावविशेषं च वैयक्तिकं परित्यज्य विचारप्रणाली समवलम्ब्येत । आशास्यते भगवान् धर्मपुरुषः सम्मेलनमिदं सफलोद्यमं यथावसरं करिष्यतीति ।

---

# समाजसंरक्षणम् ।

( निबन्धकः श्रीश्यामाचरणकविरत्नः )

मूर्धादीन्यङ्घ्रिपर्य्यन्तान्युत्तममध्यमाधमान्यङ्गानि मानवशरीरस्य । सत्यपि संस्थानभेदात् कार्य्यभेदाच्चाङ्गानामुत्तमाधममध्यमत्वे परस्परमुपकार्य्योपकारिता स्नेहवत्ता सुखदुःखयोः सहानुभूतिश्च सम्यग् विद्यन्त एव । तथाहि विना पादयोः कार्य्यमाहार्य्यसंग्रहो न भवेत् । हस्तकार्य्यमृते नान्नमुत्तिष्ठेन्मुखविवरे । जिह्वाकार्य्यमन्तरा न गलाधः क्रियेत उदरकार्य्यमन्तरेण भुक्तं न परिपच्येत । पायुकार्य्यव्यतिरेकेण न निर्गच्छेन्मलो जठरादित्येवमादीनि द्रष्टव्यानि ।

यद्यपि मलनिःसारणमेव पायोः कर्म्म, मलपरिष्करणं च वामहस्तस्य तथाप्येतौ न घृणार्हौ, परं सर्वथा सस्नेहं सयत्नं च रक्ष्यमाणावेव । एकस्याङ्गस्य स्वस्थतायां सर्वाण्यङ्गानि स्वास्थ्यमनुभवन्ति । अस्वस्थतायां च सर्वाण्येवास्वास्थ्यम् । कण्टकविद्धे हि चरणे शिरोऽपि यातनया शीर्य्यति । आहार्य्यसंग्रहादौ सर्वदा यथाशक्ति चेष्टामहे वयम् । उदरं तु केवलं निश्चेष्टं भुङ्क्त इति मत्वा पादादीनि यदि स्वस्वचेष्टां त्यजेयुस्तदाऽचिरेण स्वयमेवावसन्नानि भवेयुः । किञ्च कथं नाम वयमेवापकृष्टकर्म्माणि कुर्म्म इति विचिन्त्य पाय्वादीनि यदि स्वस्वकार्य्याणि परित्यज्य सर्वाण्युत्कृष्टाङ्गकार्य्याणि कर्त्तुमीहेरंस्तदा सामर्थ्याभावात् किमपि कार्य्यं न तैः साध्येत; प्रत्युत सर्वावयवैः सह शरीरस्यैव परममत्याहितं भवेत् । अपरञ्च नाभेरधोऽङ्गानि यदि स्वस्वसंस्थानेषु सन्तोषमलभमानानि ईर्ष्यया ऊद्र्ध्वमुत्थास्यन्ति, तदा सुदर्शनमिदं मानवशरीरमतिकुत्सितदर्शनं कौतुककरं च भविष्यति । दृश्यते हि तादृशावयवविशिष्टः सकाण्डोऽकाण्डकुष्माण्ड इव मानुषः कदाचित् कुत्रचित् कुत्रचिन्मेलादौ धनार्जनार्थमुपनीतो जड़वन्निश्चेष्टं शयानश्चेति ।

एवमेवार्य्यसमाजशरीरम् । वर्त्तमानस्यास्य समाजस्योत्तमान्यङ्गानि—ब्राह्मणाः क्षत्रिया वैश्या अम्बष्ठाः कायस्थाश्च । मध्यमानि—नवशायकाः पञ्च वणिजश्च । अधमानि च—कैवर्त्तादयश्चाण्डालान्ताः सर्वे । तेषां मध्ये ब्राह्मणा एवोत्तमाङ्गम्—ये खलु सर्वेषां गुरुपुरोहितकर्म्मकर्त्तारो धर्म्म्यकर्म्मसु व्यवस्थादातारो दानप्रतिग्रहीतारो हव्यकव्यभोक्तारश्च—तेषां भोजनं विना कर्म्मणां सिद्धिर्न कैश्चिन्मन्यते—विफलेषु सर्वेष्वौषधेषु येषामेव चरणरेणवो रोगार्त्तैः परमौषधधिया सभक्तिकं सेव्यन्ते—किं वहुनोक्तेन, निषेकादिश्मशानान्तेषु तत्परतोऽपि च सर्वकर्म्मसु येषां साहायकं सर्वैरपेक्ष्यत एव प्राचीनकालादारभ्यैवमेव सर्वसमञ्जसतया सर्वसम्मततया च समाजव्यवस्था प्रचलिता । सर्वेषामेषामुपकार्य्योपकारितासम्बन्धः शाश्वतिकः । येषां या या वृत्तयो विहितास्तास्ता अन्तरेण केषामपि संसारयात्रानिर्वाहो न सुघटः । अतएवैषां परस्परमनुरक्तिः सुखदुःखसहानुभूतिश्चैतावन्तं कालं सुष्ठु वर्त्तेते स्म । ब्राह्मणाः खलु प्रतिवेशिनः स्वग्रामवासिनश्च स्पृश्यानस्पृश्यान् वा सवयसो वयोज्येष्ठांश्च यवनपर्य्यन्तानपि सर्वान् भ्रातृपितृव्यमातुलादिसम्बन्धैर्व्यवहरन्ति स्म । तेऽपि तथैव ब्राह्मणानिति । विपदि च सम्पदि च सर्वे सर्वेषां यथोचितं यथासम्भवं च साहाय्यमाग्रहेण सर्वात्मना च यथाशक्ति कुर्वन्ति स्म । सर्वे स्वस्ववृत्तिषु स्वच्छन्दं वर्त्तमानाः सुखेन कालं नयन्तिस्म च । तेन समाजस्यापि सुश्रृङ्खला सर्वत्रैव सुव्यवस्थिता चासीत् । साम्प्रतं तु दुर्भाग्यवशात् प्रायः सर्व एवोच्छृङ्खलाः सुखमये संसारे महद्दुःखमानयन्ति । एकतस्तावदुत्कृष्टान् प्रति विद्वेषभावो निकृष्टानां नितरां प्रबलीभवति । अपरतश्च कृषकतनयाः शैशवादारभ्य प्रातराशं निर्वर्त्य लम्बशाटककञ्चुकच्छत्रोपानहसज्जिताः पाश्चात्यरीत्या प्रतिष्ठिते सर्वथाऽविद्यालयेऽपि नामतो विद्यालये दिवसमात्रं वा दीर्घकालं वा कृताध्ययना नग्नकायेन शीतवातातपेषु स्ववृत्तिं निर्वर्त्तयितुं

सुतरां लज्जन्ते, प्रवर्त्तन्ते च दशविंशमुद्रावेतनेन श्ववृत्तिं कर्त्तुम् । ब्राह्मणादीनां सर्वजातीनामेवमेव दशाविपर्य्ययः सञ्जातः । तदुपरि प्रायः सर्व एवाधुना पाश्चात्यशिक्षालक्षणोल्कामुखीमुषितेक्षणाः सुसरणीं मत्वा कुसरणीमनुसरन्ति । न कोऽप्यधमजातौ अवस्थातुमिच्छति । सर्व एव प्रायेण मध्यमोत्तमाङ्गत्वमारोढुमीहन्ते । तथा कृते सुदर्शनोऽयं समाजः क्रमशः किम्भूतः किमाकारश्चान्येषां कौतुककरो भविष्यतीति नो विचारयन्ति । सर्वेषु विक्रेतृषु क्रेतृणामभावाद् हट्टो न घट्टते । सर्वेषु राजसु प्रजानामभावाद् राज्यं निरर्थकं भवति । सर्वेषु शासकेषु गृहस्थस्य गृहमपि विगृह्यते, किं पुनः सुविशालः समाजः । सत्स्वप्युन्नतिसाधनेषु बहुषु कर्त्तव्यकर्म्मसु तान्युपेक्ष्य साम्प्रतं ते सुघटितस्यास्य समाजस्य विघटनायैव घटन्ते । एवम्भूतस्वेच्छाचारप्रचारप्रतिबन्धकभूतान् शास्त्रकृतो ब्राह्मणान् स्वार्थपरा इति कृत्वा मृषा व्याक्रोशन्ति । न गणयन्ति चात्मनां तरतमो महास्वार्थपरताम् ।

सकललोकलोचनगोचरेषु शास्त्रेषु कुत्र वा का नाम स्वार्थपरता शास्त्रकृतां तैरतिबुद्धिभिरवलोक्यत इति न विद्मः । यदि ते स्वार्थपरा अभविष्यंस्तदाऽर्थकामसाधनभूयिष्ठां प्रजापालनीं वृत्तिं राजन्येभ्योऽप्रदाय स्वयमेवाग्रहीष्यन् । बहुलधनागमकरीं वाणिज्यवृत्तिमपि वैश्यभागे न कृत्वा ह्यात्मभागेऽकरिष्यन् । तैरेव विहितास्वन्येषां सर्वेषां वृत्तिषु स्वार्थसहकृतः परोपकारो दृश्यते । तथाहि कृषका यानि शस्यान्युत्पादयन्ति, तैः परेषां जीविका निष्पाद्यते, स्वेषामपि तद्विक्रयेणार्थलाभो भवति । एवमेव सर्वेषाम् । ब्राह्मणानां वृत्तिषु तु केवलं निःस्वार्थपरोपकारः प्रतिभाति । तथाहि तेषामध्ययनाध्यापनयजनयाजनदानप्रतिग्रहरूपा याः षड्वृत्तयो विहितास्तासामध्ययनं तावत् कायक्लेशसाध्यं, दानयजने द्वे व्ययसाध्ये एव । वृत्त्यर्थं विहितेऽप्यध्यापने तत्र धनादानस्य पुनर्निन्दैव कृता ।

यथा विष्णुना—

"यश्च विद्यामासाद्य तया जीवेन्न च सा तस्य परलोकफलप्रदा भवति, यश्च विद्यया परेषां यशो हन्तीति" ।

मनुरपि "तांश्च श्राद्धे न भोजये"दित्युपक्रम्य—

"भृतकाध्यापको यश्च भृतकाध्यापितस्तथा इत्युक्तवान् । तेन हि प्राचीनकालात् प्रभृतीयन्तं कालं यावत् सर्वैरेव ब्राह्मणपण्डितैर्वित्तादानं विना विद्या वितीर्य्यते ।

याजनेन यादृग् धनागमो भवति, स सर्वेषां सुविदित एव ।

"विभवे सति यो मोहान्न कुर्य्याद्विधिविस्तरम् ।
न तत्फलमवाप्नोति देवद्रोही स उच्यते" ॥

इति स्मृतिशासनेऽपि धर्म्ये कर्म्मणि प्रायः सर्वे ह्यविधिविस्तरमेव कुर्वन्ति । तथाहि ये खलु दुर्गोत्सवादौ नृत्यगीताभिनयाद्यर्थं प्रभूतं धनं यथेष्टं विनियुञ्जते, तेऽपि पूजार्थं विचित्य विचित्य सूत्रदरिद्राणि जानुप्रावरणासमर्थानि च वस्त्राणि क्रीणते । केवलेनानेनैव प्रयोजनेन तन्तुवायाः प्रभूतानि तादृशानि वस्त्राणि वयन्ति । केचित् पितृश्राद्धादौ पुरोहितसकाशात् षोड़शदानद्रव्याणि गृहीत्वा त्रिचतुरा एव रजतमुद्रास्तन्मूल्यत्वेनार्पयन्ति । अनेकेषां कर्म्मदक्षिणा च वर्षत्रयेणापि न निष्क्रामति पेटकात् ।

प्रतिग्रहविषये दातृप्रतिग्रहीतृननुशिष्टवान् भगवान् मनुः—

"यथेरिणे वीजमुप्त्वा न वप्ता लभते फलम् ।
तथानृचे हविर्दत्त्वा न दाता लभते फलम्" ॥

"न वार्य्यपि प्रयच्छेत्तु वैड़ालव्रतिके द्विजे ।
न वकव्रतिके विप्रे नावेदविदि धर्म्मवित् ॥
त्रिष्वप्येतेषु दत्तं हि विधिनाऽप्यर्जितं धनम् ।
दातुर्भवत्यनर्थाय परत्रादातुरेव च" ॥

तत्र वैड़ालव्रतिकबकव्रतिकयोर्लक्षणान्याह स्म स एव —

"धर्म्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः ।
वैड़ालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः" ॥

अनयोष्टीका—यो बहुजनसमक्षं धर्म्ममाचरति, स्वतः परतश्च लोके ख्यापयति, तस्य धर्म्मो ध्वजं चिन्हमिवेति धर्म्मध्वजी । लुब्धः परधनाभिलाषुकः । छद्मना व्याजेन चरतीति छाद्मिकः । लोकदम्भको निक्षेपापहारादिना जनवञ्चकः । हिंस्रः परहिंसाशीलः । सर्वाभिसन्धकः परगुणासहनतया सर्वनिन्दकः । विड़ालव्रतेन चरतीति वैड़ालव्रतिकः । विड़ालो हि मूषिकादिहिंसारुचितया ध्याननिष्ठ इव विनीतः सन्नवतिष्ठत इत्युपचाराद् विड़ालव्रतशब्दः । अधोदृष्टिर्निजविनयख्यापनाय सततमध एव निरोक्षते । निकृतिर्निष्ठुरता, तया चरतीति नैष्कृतिकः । स्वार्थसाधनतत्परः परार्थखण्डनेन । शठो वक्रः । मिथ्याविनीतः कपटविनयवान् । बकव्रतं चरतीति बकव्रतचरः । बको हि प्रायेण मीनहननरुचितया मिथ्याविनीतः सन्नेवंशीलो भवतीति बकव्रतशब्दः । ( कुल्लुकः ) ।

तथा—

"प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् ।
प्रतिग्रहेण ह्यस्याशु ब्राह्मं तेजः प्रशाम्यति ॥
हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम् ।
प्रतिगृह्णन्नविद्वांस्तु भस्मीभवति दारुवत्" ॥

आपद्यप्यसत्प्रतिग्रहमतिमात्रं गर्हते स्म—

"प्रतिग्रहाद् याजनाद् वा तथैवाध्यापनादपि ।
प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः" ॥ इति ।

ये स्वयं स्वार्थपरास्ते कथं "स्वार्थसाधनतत्पर" इति सजातीय-

मेव गर्हयेयुः ?

अपि चाज्ञानादष्टचत्वारिंशद्वारचाण्डालयवनाद्यन्नभोजने द्वादश-वार्षिकव्रतं प्रायश्चित्ततया विहितं, ज्ञानात् तद्द्वैगुण्यं च । तच्च व्रतं ब्रह्महत्याप्रकरणे प्रोक्तं मनुना—

"ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ।
भैक्ष्याण्यात्मविशुद्ध्यर्थं कृत्वा शवशिरो ध्वजम्" ॥ इति ।

तत्र विष्णुना—

"विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम् ।
वैश्येऽर्धं पादशेषस्तु शूद्रजातिषु शस्यते" ॥

इत्युक्त्वा ब्राह्मणस्य पूर्णप्रायश्चित्तं विधाय क्षत्रवैश्यशूद्राणां पादपादहानिर्व्यवस्थापिता । अर्थादीदृशमतिक्लेशकरं व्रतं ब्राह्मणस्य चतुर्विंशतिवार्षिकमेव, क्षत्रस्याष्टादशवार्षिकं, वैश्यस्य द्वादशवार्षिकं, शूद्रस्य षड्वार्षिकं चेति ।

किमियं स्वार्थपरता नाम ?

परन्तु ब्राह्मणानां यदशौचसंकोचः कृतस्तदपि न स्वार्थसाधनार्थं, किन्तु परार्थसाधनार्थमेव । ते यदि मासाशौचं पालयेयुस्तदा याजनाध्यापनप्रतिग्रहविरहादन्येषां सुमहती क्षतिर्घटेतेति । एवमेव क्षत्रवैश्यशूद्राणामपि कार्य्यानुसारेण समाजस्येष्टानिष्टपर्य्यालोचनया यथासंख्यं द्वादशाहपञ्चदशाहमासाशौचानि विहितानि । स्वार्थपरतया चेद् ब्राह्मणानामशौचसंकोचोऽकारिष्यत, तदा त्र्यहाशौचं वा सद्यःशौचं वा व्यधायिष्यत; किं पुनर्दशाहाशौचेन वेति । दिङ्मात्रमेव दर्शितम्। अन्यास्वपि व्यवस्थास्वेवमेवोहनीयम् । स्मरणीयं च तावत्—

"न विस्मयेत तपसा वदेदिष्ट्वा च नानृतम् ।
नार्त्तोऽप्यपवदेद्विप्रान् न दत्त्वा परिकीर्त्तयेत् ॥
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानं च परिकीर्त्तनात् ॥

( मनु ४।१३६-१३७ ; विस्मयो गर्वः ) इति ।

आस्तां तावद्धर्म्मकथामशुश्रूषमाणानां चौराणामिवाल्पीयसां समाजद्रोहिणां वार्ता । अद्यापि भूयिष्ठाः स्वधर्म्मनिष्ठाः शास्त्रविश्वासिनो विप्रभक्ताः पुरुषपरम्पराचरिताचारपराश्चातुर्वर्णिका अन्त्यजातीयाश्च सन्त्यस्मिन् समाजे । आशास्महे—समुपस्थितेऽस्मिन् महति व्यतिकरे ब्राह्मणमहासम्मिलन्या मतानुसारेण तैः सर्वैरेवैकमत्यमवलम्बमानैर्ब्राह्मणादीनां सर्वेषामेव यथा कथमपि दुराचारदमनेन समाजसंरक्षणे सर्वात्मना प्रयतितव्यमिति ।

---

# स्पृश्यास्पृश्यशुद्ध्यादिविचारपरीक्षणम् ।

## पूर्वतोऽनुवृत्तम् ।

( निबन्धकः—मं० मं० श्रीलक्ष्मण शास्त्रि द्रविड़ः । )

या चैवं मुहुर्मुहुर्विभीषिका प्रदीयते यद्यस्पृश्याः स्पृश्या न करिष्यन्ते तर्ह्येते माहम्मदं कैष्टं वा मतं प्रविशेयुस्तथा सत्यस्माकं हिन्दूनां सङ्ख्या क्रमेणापचीयमाना नितरां ह्रासमुपैष्यति तथा चास्माकं दौर्वल्येनेतरे पीडयेयुरस्मानिति ।

तदेतन्न मनोरमम्—अस्पृश्यानां स्पृश्यत्वं यदि न सम्पद्येत तदैतेषां हिन्दूसमाजं परित्यज्य परमतप्रवेशः कर्तव्य इति या बुद्धिर्भवति तत्र कारणं किं तदन्वेषणीयम् । अस्पृश्यरूपेण तेषामस्मत्समाजेऽवस्थाने सर्वैर्घृणादृष्ट्याऽवलोक्यन्ते त इति तदेव कारणमिति चेत्तर्हि परमतसमाश्रयणेनापि सा घृणादृष्टिर्निवर्त्स्यति किम् । एतदपि विचार्यताम् । नहि सनातनधर्मीया अस्पृश्यानिव माहम्मदान् कैस्तान्वा स्पृश्यान् मन्यन्ते यथाऽस्पृश्या धार्मिकेषु कार्येषु न स्पृश्यन्ते तथा माहम्मदाः

क्रैष्टा अपि, तथा च भक्षितेऽपि लशुनेन शान्तो व्याधिरित्याभाणक-स्यानुसरणप्रसङ्गः ।

ननु कुत्रचित्प्रदेशे माहम्मदाः क्रैस्ता वा सभासमित्यादिषु प्रवेश्यन्ते अस्पृश्यास्तु नेत्येवं वैषम्यं दृश्यते, अस्पृश्या अपि यावद्धिन्दुसमाजान्तर्भूता भवन्ति तावदेवास्पृश्यत्वप्रयुक्तं दुःखं तैर्भोक्तव्यं भवति यदा च परमतं समाश्रयन्ति तदा तु नास्पृश्यत्वं भवति तेषामिति तादृशदुःखपरिहारार्थमेव भिन्नमतं ते प्रविशन्तीति चेत् ।

नैतदपि चारुतरम् । न हि यत्र माहम्मदाः क्रैस्ता वा प्रवेश्यन्ते तत्राऽस्पृश्या न प्रवेश्यन्ते । देवमन्दिरादिष्वस्पृश्या न प्रवेश्यन्त इति चेत्? माहम्मदाः क्रैस्ता अपि न प्रवेश्यन्ते । धूमशकटादिषु अश्व-शकटादिषु वा राजकीयधर्माधिकरणे वा राजस्थाने वा माहम्मदानां चेत्प्रवेशः तर्ह्यस्पृश्यानामप्यस्त्येव । कुत्र तेषां स्पर्शः परिह्रियते! धार्मिककार्येषु परिहार उभयोरपि समानः । तस्मान्मुधैवाऽयमाक्षेप इति निश्चीयताम् । धूमशकटावतरणस्थाने जलयन्त्रस्थाने वा न केऽपि परिह्रियन्ते इति प्रत्यक्षीक्रियतां, सर्वैः परस्परं संसृष्टैरेव जलं गृह्यते न तत्र स्वल्पोऽपि विचारः कैरपि क्रियते, नगरेषु वा जलयन्त्रस्थाने सर्वत्रैवास्पृश्यसंसृष्टं जलं सर्वैः पीयत एव कुत्रैतेषां परिहारः क्रियते इति सुसूक्ष्ममीक्ष्यताम् । तस्माद्व्यावहारिकेषु कार्येषु कुत्राप्यस्पृश्यत्व-दोषो नास्त्येव । सर्वत्रैवैते स्पृश्या एव दृश्यन्ते । यच्च कुत्रचिद्वापी-कूपतडागादौ माहम्मदानान्तु वर्तते जलग्रहणानुज्ञा नास्ति केवलम-स्पृश्यानां, तदिदमत्यन्तं क्वाचित्कं न सर्वदेशसाधारणम् । काश्यादि-प्रदेशेषु तु वैपरीत्यमेव प्रत्यक्षमीक्ष्यतेऽस्माभिः गङ्गाघट्टेषु अस्पृश्यानां स्नानार्थं प्रतिबन्धो नास्ति परन्तु माहम्मदानां नितरां प्रतिबन्धो वर्तते यत्र माहम्मदानां कृते निर्दिष्टं स्थानं वर्तते तद्विहायान्यत्र तैः स्नातु-मशक्यमिति सर्वजनविदितमिदं, तथा च यत्र यत्राऽस्पृश्यानां प्रवेश-स्तत्र तत्र सर्वत्र यवनानां क्रैष्टानां वा नास्ति प्रवेश इति यवनेभ्यो वि-

शिष्टत्वेनैवास्पृश्या गण्यन्ते,कुतस्तरां तेषु घृणादृष्टिरिति विचार्यताम् ।

किञ्च घृणादृष्ट्याऽवलोक्यन्ते इति दुःखमेव तेषां यदि पर-मतग्रहणकारणं तथासति यत्र तन्नास्ति तत्र प्रवेष्टव्यमेवं चेद् ब्राह्म-समाजार्यसमाजादयोऽपि प्रवेष्टुं योग्या आश्रया वर्तन्ते इति तत्रैवैः तेषां प्रवेशबुद्धिः कस्मान्न भवति । आर्यसमाजादयो हि द्वाराण्युद्घाट्य सर्वानेव स्वसमाजे ग्रहीतुं बद्धपरिकरा एव तिष्ठन्ति, प्रत्युत तन्मत-प्रवेशेऽस्पृश्यैर्ब्राह्मण्यमप्यनायासेन यथेच्छं सम्पादयितुं शक्यं, तत्रैते कुतो न प्रविशन्ति, माहम्मदं क्रैस्तं वा मतमेव प्रवेष्टव्यमित्याग्रहस्तेषां कस्मादिति ते प्रष्टव्याः। आर्यसमाजाश्रयणेन हिन्दुसङ्ख्याह्रासोऽपि न भविष्यति । तस्माद्घृणादृष्ट्याऽवलोक्यन्ते इति कारणेनैव ते परमतं प्रविशन्ति इति न वास्तवमपि तु अन्यदेव किञ्चित्कारणमवश्यमङ्गीक-र्तव्यम्। तत्किमितिचेत्परदेशीयानां शिक्षापद्धतिरेवेत्यवश्यं वाच्यमि-तरथा स्पृश्या ये चत्वारो वर्णाः ते किमिति यवनाः क्रैष्टा वा भवन्ति तत्र कारणमुच्यतां ते तु न कदाचिदपि घृणादृष्ट्याऽवलोकिताः । तस्माद-स्पृश्यानामस्पृश्यत्वेनैव परमतप्रवेशो भवति इत्येतदनैकान्तिकम् । किञ्चाद्य परमतप्रवेशं करिष्यन्तीति भिया तेषां स्पृश्यत्वं सम्पादितं चेत् श्व एतदपि वक्ष्यन्ति सनातनधर्मीयैरस्माभिः सह भोजनं कर्तव्यं न करिष्यते चेद्भिन्नमतं प्रवेक्ष्याम इति विभीषिका तैः प्रदीयेत, तदर्थम-स्माभिस्सहभोजनानुमतिरपि प्रदेया स्यात् । अनन्तरं ते वदिष्यन्ति भवद्भिः कन्यका प्रदेया नोचेद्वयं न भवत्समाजे स्थास्याम इति तथा सति तेभ्यः कन्याप्रदानमपि कर्तव्यं भविष्यतीति महत्यनर्थपरम्परा सोढव्या स्यात्तस्मादेतादृशाक्षेपाणामनादर एव श्रेयान् इति वयं नि-श्चिनुमः । किञ्चास्पृश्यानां शुद्धिं विधाय तेषां समवायेनास्मत्सङ्-ख्यावृद्ध्यपेक्षया स्पृश्यानामेव चतुर्णां वर्णानां भिन्नमतप्रवेशो यथा न स्यात्तथोपायोऽनुष्ठीयतां तावतैव सङ्ख्याह्रासकृतो दोषो न भवेत् ।

यदपि कैश्चिदिदानीन्तनैरुच्यते शुद्धिरियं न नूतना प्राचीनकालेऽपि

यदा सर्वे ब्राह्मणादयोऽपि बौद्धाः सञ्जातास्तदा भगवत्पादशङ्कराचार्य-रामानुजाचार्यादिभिस्तेषां शुद्धिं विधाय पुनर्हिन्दुसमाजः पूर्ववत्स्थापित इति, अन्यथा तदानीं कुत्रापि न गता बौद्धा अद्य कुतो न दृश्यन्ते भारते वर्षे इत्यापत्तिः स्यादतः स्वीकार्यमेतद् यत् पूर्वमनेके बौद्धाः प्रायश्चित्तादिद्वारा विशोध्य पुनः पूर्वतनजातिं प्रापिता इति ।

अत्र वयं विचारयामः इदानीं सर्वे आर्यसमाजीया नास्तिका वा सञ्जाता इत्युक्ते किं सर्वैः स्वीयाचारं परित्यज्य नास्तिकाचार एव परिपाल्यते ? तथा तु न दृश्यते, किन्तु प्रायः सर्वेषां मनांसि नास्तिक्यभावमुपागतानि तत एव नानाविधा आक्षेपाः सनातनधर्ममधिकृत्य सनातनधर्मीयैरेव क्रियन्ते तदभिमानं गृहीत्वा । कैश्चित्तु स्वीयाचारं परित्यज्य सर्वात्मना नास्तिकाचारोऽपि गृहीतः एतत्सर्वेषामनुभवसिद्धम् । एतद्दृष्टान्तेनैव बौद्धादिकालेऽपि सर्वे बौद्धाः संवृत्ता इत्यस्यायमेवार्थो यत् सर्वेषां मनांसि विकृतान्यभूवन् तत्र तत्र बौद्धधर्मस्यैव विशेषतश्चर्चा समभूत्सनातने धर्मे श्रद्धारहिताः प्रायशः संवृत्ताः, परन्तु सनातनधर्माचारपरिपालनं तदानीं तैर्न परित्यक्तम् । कैश्चिदल्पसङ्ख्याकैः परित्यक्तमपि स्यात् तेषां पुनः पूर्वतनजातिप्रवेशो नैव भगवत्पादादिभिः कदापि कृतः न वाऽत्र किञ्चिदबाधितं प्रमाणमपि दृश्यते पूर्वजातिं प्रापितास्त इत्यतो येषां मनांसि केवलं विकृतान्यासंस्त एव प्रायश्चित्तादिना संशोधिता इत्यनुमीयते । ये च सर्वात्मना नास्तिकाः संवृत्तास्ते भारतवर्षाद्बहिरेव निष्कासिता इति भारते वर्षे तेषामदर्शनमुपपद्यते ।

किञ्च ये नाम नास्तिका आसँश्चार्वाकादयस्तेऽपि वर्णाश्रमाचारविपरीतमनुष्ठानमकुर्वन्नित्यत्रापि न किञ्चित्प्रमाणमस्ति, प्रत्युत वर्णाश्रमाचारमेव परिपालयन्ति स्म । न च तेषां वर्णाश्रमाचारपरित्यागोऽप्यभिमत आसीदित्यस्मिन्विषये भूयांसि प्रमाणानि समुपलभ्यन्ते । तत्र तावत्कामसूत्रमेव वात्स्यायनीयमस्म-

न्नर्थं प्रमाणमयं च वात्स्यायनः श्रीशङ्करभगवत्पादेभ्योऽतिप्राचीन इत्यत्र नास्त्यैतिहासिकानां विप्रतिपत्तिः। तेन यदुक्तं तदवलोक्यताम्। धर्मा-नुष्ठानं न कार्यमिति विप्रतिपत्तिं दर्शयितुमिमानि सूत्राणि-"न धर्मां-श्चरेत् = एष्यत्फलत्वात् सांशयिकत्वाच्च। को ह्यबालिशो हस्तगतं परगतं कुर्यात्। वरमद्य कपोतः श्वो मयूरात्। वरं सांशयिकान्निष्का-दसांशयिकः कार्षापण इति लौकायतिकाः"।

एभिः सूत्रैः पूर्वपक्षो दर्शितो लौकायतिकमतानुसारेण जन्मान्तर-फलत्वात् सन्दिग्धफलत्वाच्च न धर्मानुष्ठानं कर्तव्यमिति। अनन्तरं समाधानसूत्रम्—

"शास्त्रस्यानभिशङ्क्यत्वादभिचारानुव्याहारयोश्च क्वचित्फलदर्श-नान्नक्षत्रचन्द्रसूर्यताराग्रहचक्रस्य लोकार्थं बुद्धिपूर्वकमिव प्रवृत्तेर्द-र्शनाद्वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्राया हस्तगतस्य च बीजस्य भविष्यतः शस्यस्यार्थे त्यागदर्शनाच्चरेद्धर्मानिति वात्स्यायनः।

अनेन हि सूत्रेण धर्मानुष्ठाने वर्णाश्रमाचारस्थितिलक्षणत्वाल्लोक-यात्राया इति हेतुः प्रदर्शितः तेनैव ज्ञायते चार्वाकादीनामपि वर्णाश्रमा-चारपरिपन्थित्वं नासीत्, प्रत्युत तदनुष्ठातृत्वमेव, कथमन्यथाऽयं हेतु-र्वात्स्यायनेन प्रयुक्त इति विचार्यताम्। हेतोश्चायमर्थो विवृतष्टीकाकारैः "वर्णा ब्राह्मणादयः आश्रमा ब्रह्मचर्यगार्हस्थ्यादयः तेषामाचारः स्वधर्मः तस्य स्थितिर्व्यवस्था सैव लक्षणं यस्या लोकयात्रायाः सा लौकायतिकैर्माभूदव्यवस्थायां मात्स्यो न्याय इति दृष्टार्थं वर्णिता संव-रणमात्रं हि त्रयीति लोकयात्राविद इति तां च लोकविश्वासनार्थ-माचरद्भिः कथं नाचरितो धर्मः। दृष्टार्थश्च यद्यदृष्टार्थोऽपि स्यात् को विरोध" इति

अत्र हि टीकाकारेणार्थशास्त्रस्थविद्यासमुद्देशप्रकरणगतं वचनमु-पक्षिप्तम्—तत्र हि विद्यासमुद्देशे इमानि सूत्राणि विद्यन्ते—

"आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः। त्रयी वार्ता

दण्डनीतिश्चेति मानवाः त्रयीविशेषो ह्यान्वीक्षिकीति । वार्ता दण्डनीतिश्चेति बार्हस्पत्याः संवरणमात्रं हि त्रयी लोकयात्राविद् इति । दण्डनीतिरेका विद्येत्यौशनसाः तस्यां हि सर्वविद्यारम्भाः प्रतिबद्धा" इति । मतभेदान् दर्शयित्वा स्वमतमाह कौटिल्यः "चतस्र एव विद्या इति कौटिल्यः" ।

योहि कौटिल्यः स एव कामसूत्रप्रणेता तस्यैव वात्स्यायन इति नाम इति टीकाकृद्भिः प्रदर्शितम् । तेन हि कौटिल्येनार्थशास्त्रे लोकयात्राविद इति शब्देन बार्हस्पत्याँश्चार्वाकान्निर्दिश्य त्रय्याः संवरणमात्रत्वमिति तदभ्युपगमो दर्शितः, तमेवानुसृत्य कामसूत्रेऽपि वर्णाश्रमाचारव्यवस्थैव लोकयात्राया लक्षणमिति धर्मांश्चरेदित्युक्तम् । अनेन चैतत्सूच्यते लोकयात्राया धर्मानुष्ठानं विना न सिद्धिः स च धर्मो वर्णाश्रमाचारलक्षण एव नान्यः एतच्च चार्वाकाणामपि सम्मतमितिप्रदर्शयितुं टीकाकृतैतदुक्तं अव्यवस्थायां मात्स्यो न्यायः प्रवर्तेत यथा महान्तो मीनाः क्षुद्रान्मीनान् भक्षयन्ति तथा प्रबला दुर्बलान् बाधेरन् तन्माभूदिति वर्णाश्रमाचारः पालनीयः तस्य धर्मस्य प्रतिपादकत्वात्त्रय्यपि परिपालनीया । एवं रीत्या त्रय्या दृष्टार्थत्वं लौकायतिकैरभ्युपगतं, केवलं परलोकार्थत्वं नाभ्युपगतम् । संवरणमात्रार्थं हि धर्मानुष्ठानमित्यत्र संवरणशब्दस्यार्थः लोकविश्वासनार्थमाचरणं, येन लोका विश्वसेयु रस्ति परलोकः अधर्मकरणे महत्पातकं स्यात् तेन च परलोके दारुणं दुःखं भोक्तव्यं भविष्यति । अतः सर्वैर्धर्मोऽवश्यमनुष्ठातव्यः इति । यद्यपि नास्तिकस्य स्वदृष्ट्या परलोको नास्ति पापं पुण्यमिति च, तथापि लोकानां परलोकविश्वासजननमन्तरा लोकयात्रा सम्यङ्न सेत्स्यति राजदण्डभयात्सर्वो लोको न तथा सन्मार्गगामी भवति यथा परलोकविश्वासात्, नास्तिकेनापि लोकानां विश्वासजननार्थमास्तिकवद्वर्णाश्रमाचारः परिपालनीयः । तत्राप्येवमाचरणीयो धर्मः यथा कस्यचिदेतादृश्यपि बुद्धिर्न भवेद्यल्लोकानां विश्वासजन-

नार्थमनेनानुष्ठीयतेऽस्य तु तत्र नास्ति विश्वास इति । तथासति लोका यद्येतद्विजानीयुरस्य श्रद्धा विश्वासो वा नास्ति अस्मान् प्रवर्तयितुं केवलमित्थमनेनाचर्यते इति, तदा कथमपि न ते वर्णाश्रमधर्मेषु प्रवर्तेरन्निति सर्वथाऽवहितेन नास्तिकेन लेशतोऽपि विकलता यथा न स्यात् तथा वर्णाश्रमाचारः परिपालनीयः एवं च लोकरक्षार्थं लोकविश्वासार्थं चावश्यकं वर्णाश्रमधर्मरक्षणमितिरीत्या दृष्टार्थत्व स्वीकारे त्रयीप्रतिपादनानुसारेण परलोकार्थत्वमपि स्वीक्रियतां का तेन हानिः । परलोकार्थमपि भवतु तदनुष्ठानमिति प्रतिपादयता भगवता कौटिल्येन वात्स्यायनापरपर्यायेण तद्व्याख्यात्रा च नास्तिका अप्यास्तिकवद् वर्णाश्रमाचारलक्षणधर्मानुष्ठातार एवासन् न तु तद्विरोधिन इति स्पष्टं प्रतिपाद्यते । यदा च नास्तिकमूर्धन्य एव चार्वाको धर्ममनुतिष्ठतीति सिद्धं तदा सुतरां बौद्धादयः स्वीकृतपरलोका वर्णाश्रमाचारपरायणा एवासन्नित्ययत्नसिद्धमिति भारतवर्षीया बौद्धसमये भ्रष्टाः संवृत्तास्ते च भगवत्पादैः पुनः शोधिता इति कथनं निर्मूलमेवेति सिद्धम् ।

एवमेव कामन्दकीयनीतिसारव्याख्यायामुपाध्यायनिरपेक्षायां त्रयी पृथग्विद्यात्वेन बार्हस्पत्यैर्न गण्यते इत्यर्थकस्य—

'वार्ता च दण्डनीतिश्च द्वे विद्ये इत्यवस्थिते ।
लोकस्यार्थप्रधानत्वाच्छिष्याः सुरपुरोधसः"

इति श्लोकस्य व्याख्यानावसरे सा त्रयी संवरणप्रयोजनैव अर्थशास्त्रे पञ्चमाधिकरणे ८९ दाण्डकर्मिकप्रकरणे—

"राज्योपघातिनस्तु वल्लभाः संहता वा ये मुख्याः प्रकाशमशक्याः प्रतिषेद्धुं दूष्यास्तेषु धर्मरुचिरुपांशु दण्डम् प्रयुञ्जीते"ति वचनात् । चार्वाकाणां मते परलोकाभावेन धर्माधर्मयोरभावात्तत्प्रतिपादिका त्रयी निष्प्रयोजनैव, परन्तु यदा दुर्बलः सन् प्रकाशं राज्योपघातिनो दण्डयितुमशक्त उपांशुदण्डम् प्रयुञ्जीतेतिवचनादुपांशुदण्डम् प्रयोक्तुमिच्छेत्तदा धर्मरुचिरेव प्रयुञ्जीत तदा त्रयी संवरणार्थैव भवति, त-

थाहि त्र्य्युक्तकर्मानुष्ठानपरायणः परेषामनाशङ्कनीयो भवति यदयं धर्मानुष्ठानतत्परः कथमनेन उपांशु दण्डः प्रयोक्ष्यते तदन्येनैव केनचिदयं दण्डित इति लोकानां बुद्धिर्भवतु इत्येतदर्थमेव धर्माचरणं तैरपि क्रियते कर्तव्यं चेति नानर्थकं कर्माचरणं नास्तिकानाम् । आस्तिकानां परलोकार्थकमपि तेषामैहिकार्थमेव तदिति न निष्प्रयोजना त्रयी संवरणमात्रत्वेनापि सप्रयोजनत्वं तस्याः सिद्धमेव । किञ्च चार्वाकेणापि न कुत्रापि वर्णाश्रमाचारविरुद्धं परदारानुपगच्छेत् सुरां पिबेदितिवा धर्मशास्त्रनिषिद्धं किमप्युपदिष्टम् । यच्च यावज्जीवं सुखं जीवेदित्यादि तदखिलपुरुषार्थसाधनमूलभूतशरीररक्षार्थम् । यच्च—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पति रित्यादि, तदपि न विरुद्धम् बुद्धिपौरुषहीनानां जीविकामात्रार्थत्वे विवादाभावात् । एतेनैतदपि सिद्धं यदास्तिकापेक्षयापि नास्तिकैरधिकश्रद्धाप्रदर्शनपूर्वकं त्रय्युक्तं कर्मानुष्ठातव्यमेवेति तथा चेदानीन्तना धर्मं परित्यज्य केवलां राजनीतिमेवाश्रित्य स्वराज्यं साधयितुं यत्प्रयतन्ते तदिदं प्राचीनराजनीतिशास्त्रविरुद्धं निष्फलं चेत्येतदपि सिद्धम् भवति ।

एतावता प्रयत्नेनैतत्साधितं यद्भगवत्पादेभ्यः पूर्वतनै राजनीतिविद्भिराचार्यैर्नास्तिकाश्चार्वाकादयो वर्णाश्रमाचारस्य त्रयीप्रतिपादितस्यानुष्ठानपरा एवासन् न तु तत्परित्यागिन इति । इदानीं तत्समकालवर्तिनां वाक्यान्युद्धृत्य बौद्धादीनामपि वर्णाश्रमाचारपरिभ्रष्टत्वं नासीदिति साध्यते ।

पूर्वमीमांसाभाष्यवार्तिककाराः श्रीकुमारिलभट्टपादाः श्रीशङ्करभगवत्पादसमकाला इति सर्वेषामविप्रतिपन्नम् । तैर्भट्टपादैः श्लोकवार्तिके निरालम्बनवादे—

"तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।

वञ्चनार्थं उपन्यासो लालावक्त्रासवादिवत्।
नास्तिक्यपरिरारार्थं संवृतिः कल्पनेति च"

प्रदर्शयद्भिर्बौद्धादीनां वर्णाश्रमाचारपरायणत्वं स्पष्टीकृतम्। तद्व्याख्याने न्यायरत्नाकरे ह्युक्तं तेन मिथ्यावचनोऽप्ययं संवृतिशब्दः बौद्धैः स्वनास्तिक्यपरिहारार्थं लोकं वञ्चयितुम् प्रयुक्तः लालायामिव वक्त्रासवशब्द इत्याह तुल्यार्थत्वेपीत्यादिना। अयमभिप्रायः सर्वस्य धर्मस्य मिथ्यात्वं मिथ्येतिशब्देन प्रतिपाद्येत चेल्लोके एते नास्तिका इति बुद्धिः स्यात्तथासति लोकानामेषु श्रद्धा न स्यात्तथा माभूदिति स्वस्यास्तिक्यप्रदर्शनार्थं कथञ्चिल्लोकान्वञ्चयितुं तुल्यार्थत्वेपि मिथ्येत्यनभिधाय संवृतमेतदितिशब्देन स एवार्थः प्रतिपादितः। एतेन सिद्धमिदं यच्छङ्करभगवत्पादसमये ये केचन बौद्धा इतिव्यपदिष्टा आसन् ते मनसा बौद्धा अपि प्रकाशं धर्मभ्रष्टा नाभवन्नन्यथा कुमारिलवचनं विरुद्ध्येत।

तथा च सिद्ध्यत्यस्माद्भट्टपादवचनाच्छ्रीशङ्करभगवत्पादसमयेऽपि बौद्धा वर्तमाना न सर्वथा वर्णाश्रमाचारपरिभ्रष्टा इति कुतस्तेषां पतितानां पुनः शुद्धिं विधाय पूर्वतनजातिप्रवेशः प्रामाणिक इति।

इदानीन्तत्परवर्तिन्यायाचार्योदयनवाक्यादपि बौद्धादीनां न वर्णाश्रमाचारपरिभ्रष्टत्वमित्येतत्साधयामः—श्रीमदुदयनाचार्या हि बौद्धमतखण्डनार्थं बद्धपरिकरा अनेकान् ग्रन्थान् प्रणीय तिलशो बौद्धकल्पनाः खण्डयामासुरिति प्रसिद्धम्। तैः प्रणीत आत्मतत्त्वविवेकस्तु प्राधान्येन बौद्धपरिकल्पितक्षणभङ्गादिवादानां खण्डनपूर्वकं वैदिकमतेऽपि तदुद्भावितानां दोषाणां सर्वथा निर्मूलनपरः। तत्र हि वेदप्रामाण्यसाधनावसरे आयुर्वेददृष्टान्तेन महाजनपरिगृहीतत्वाद्वेदा अपि सर्वज्ञपूर्वका इत्युन्नीयते इत्युक्त्वाऽनन्तरमिदमुक्तं "ननु महच्छब्दो यद्यत्र पूज्यप्रामाणिकवचनस्तदा सन्दि(१)ग्धासिद्धविशेषणो हेतुः।

(१) सन्दिग्धेति। परिग्राहकाणां प्रामाण्यासिद्धेस्तथात्वम्।

अथ बह्वर्थः ? तदा सुगताद्यागमरनेकान्तः तेषामपि वा सर्वज्ञपूर्वक-त्वमिति चेन्न । बहुत्वातिशयस्य विवक्षितत्वात् । कोऽतिशयः ? (१)सर्वदर्शनान्तःपातित्वम् । कस्तैः परिग्रहः ? (२)अर्थानुष्ठानम् (३)स्वीकृतव्यवहारव्याकरणादिपालनीयत्वं, (४)स्वीकृतप्रामाण्यायु-र्वेदस्वीकृतार्थत्वञ्च । (५)तथाहि नास्त्येव तद्दर्शनं यत्र (६)सांवृतमे-तदित्युक्त्वापि गर्भाधानाद्यन्त्येष्टिपर्यन्तां वैदिकीं क्रियां जनो नानुति-ष्ठति स्पृश्यास्पृश्यादिविभागं वा जनो नानुमनुते व्यतिक्रमे वाऽऽचमन-

---

(१) सर्वेति । न्यायादिदर्शनाभिज्ञेयत्वं पाषण्डादिपुस्तकानि तु न दर्शनानि । विशिष्य वा न्यायादीन्युपादेयानि ।

(२) अर्थेति । तथा च न्यायाद्यभिज्ञानुष्ठीयमानार्थत्वमेकं महा-जनपरिगृहीतत्वं तत्तद्दर्शनप्रतिपाद्यस्वर्गापवर्गादितत्साधनाद्यङ्गीकर्त्र-नुष्ठेयार्थत्वं तदित्यपि केचित् ।

(३) द्वितीयं तदाह-स्वीकृतेति । स्वीकृतो निखिलतैर्थिकैरङ्गी-कृतो वाचकत्वव्यवहारादिर्येषां तानि व्याकरणानि प्रकृतिप्रत्ययादि-विभागेन साधुशब्दव्युत्पादकानि इन्द्रचन्द्रपाणिन्यादिप्रणीतानि शा-स्त्राणि तैः पालनमुद्देश्यीभूततदर्थानामवधारणमनुष्ठानं च सुगता-द्यागमार्थावधारणन्तु न तेषामुद्देश्यम् । स्वीकृतो यथार्थत्वेनाभ्यु-पगतो व्यवहारः प्रकृतिप्रत्ययविभागादिना व्युत्पादनं येषां पाणिन्या-दिव्याकरणानां तैः पालनीयत्वं तथा व्युत्पाद्यासाधारणपदशालित्वम्, सुगताद्यागमस्थानि तु पदानि नासाधारणानि । असाधारणानि तु छान्दसानि गृभ्णामीत्यादीनीत्यपि कश्चित् । स्वीकृतेत्याद्यप्रयोजक-त्वशङ्काव्युदासार्थम् । एवमग्रेऽपि ।

(४) तृतीयं तदाह स्वीकृतेति ।

(५) प्रथमं तद्व्युत्पादयति । तथा हीति ।

(६) सांवृतमिति । संवृतिरविद्या आविद्यकं मिथ्येत्यर्थः ।

स्नानादि प्रायश्चित्तं नानुतिष्ठति ।

एताभिः पङ्क्तिभिः स्पष्टमुद्घोषयत्याचार्यः न कोऽपि तदानीं वर्णाश्रमाचारपरिपन्थी बौद्ध आसीत् कथमितरथा नास्त्येव तद्दर्शनं यत्र सांवृतं ( मिथ्या ) इत्युक्त्वापि गर्भाधानादिवैदिकीं क्रियां जनो नानुतिष्ठति स्पृश्यास्पृश्यविभागं वा जनो नानुमनुते व्यतिक्रमे वा स्नानाचमनादि प्रायश्चित्तं नानुतिष्ठति इति कथं ब्रूयात् । अनेनेदं स्पष्टमवगम्यते तदानीं बौद्धा वर्णाश्रमाचारपरिभ्रष्टा नासन् स्पृश्यास्पृश्यविभागश्चासीदेव । अत इदानीं यत्कैश्चिदुपलभ्यते तदा सर्वे भ्रष्टाः पतिताः समभूवन् ब्राह्मणादयस्तदत्यन्तं निर्मूलं, सुतरां भगवत्पादैः शुद्धिं विधाय स्वजातावन्तर्भाविताः पतिता इति कथनमसङ्गतम् । एतदपेक्षयापि वर्णाश्रमधर्मस्यानुष्ठातार एवासन् बौद्धा इत्यत्राधिकं प्रमाणं किं वक्तव्यम् । अथापि प्रमाणान्तरस्येतोऽपि स्पष्टस्यापेक्षायां तदपि प्रदीयते,दृश्यताम्—महर्षिगौतमप्रणीतन्यायसूत्राणां जयन्तभट्टविरचितायां न्यायमञ्जर्यभिधायामतिप्राचीनायां वृत्तौ महाजनपरिग्रहाद्वेदप्रामाण्यमिति साधिते महाजनस्वरूपं प्रदर्शयितुं शङ्कोत्तररूपेण यानि वचनानि समुपनिबद्धानि तान्येवोपस्थाप्यन्ते येषामवलोकनेन पूर्वोक्तार्थस्य दृढीकरणं भविष्यति—

"आह—कोऽयं महाजनो नाम किमाकारः किमास्पदः ।
किंसङ्ख्यः किं समाचार इति व्याख्यातुमर्हसि ॥

अपि च—बौद्धादयो बुद्धादीनाप्तान् स्वागमप्रामाण्यसिद्धये वदन्ति ते महाजनमपि निजं तत्सिद्धये वृन्दादिकं वदेयुरेव कस्तत्र प्रतीकारः । उच्यते—चातुर्वर्ण्यं चातुराश्रम्यं च यदेतदार्यदेशप्रसिद्धं स महाजन उच्यते । आकारस्तु तस्य कीदृशः पाणिपादं कीदृशं शिरोग्रीवं वा कियती तस्य सङ्ख्येति पुरुषलक्षणानि गणयितुं न जानीमः । चातुर्वर्ण्यचातुराश्रम्यरूपश्चैष महाजनो वेदप्रथमप्रवृत्त आगमान्तरवादिभिरप्रत्याख्येय एव । तथा चैते बौद्धादयोऽपि दुरात्मानो वेदप्रा-

माण्यनियमिता एव चाण्डालादिस्पर्शं परिहरन्ति, निरस्ते हि जाति-वादावलेपे क्व चाण्डालादिस्पर्शे दोषः । येऽप्यन्ये केचिदशुचिभक्षणागम्यागमनादिनिर्विकल्पदीक्षाप्रकारकार्यमनुतिष्ठन्ति तेऽपि चातुर्वर्ण्यादिमहाजनभीतास्तन्त्रं रहसि कुर्वन्ति न प्रकाशम्, निर्विशङ्के हि तच्छास्त्रप्रत्यये किमिति चौर्यवत्तदर्थानुष्ठानम् । अतएव न निजो महाजन इत्थापयितुं शक्यते वृन्दकादिः किन्त्वयमेव चातुर्वर्ण्यादिमहाजनः । स चैष महाजनो वेदविरुद्धमागमं परिहरत्येव नानुमोदते ।

संसारमोचकं स्पृष्ट्वा शिष्टाः स्नान्ति सवाससः ।
बौद्धैरपि सहैतेषां व्यवहारो न कश्चन ॥
वेदधर्मानुवर्ती च प्रायेण सकलो जनः ।
वेदबाह्यस्तु यः कश्चिदागमो वञ्चनैव सा ॥

ईदृशश्चाऽयमनन्यसामान्यविभवो महाभागो वेदनामा ग्रन्थराशिः यदन्ये बाह्यागमवादिन एवमेव स्पर्द्धन्ते । ते हि स्वागमप्रामाण्यमभिवदन्तो वेदरीत्याऽभिदधति वेदे यथा तथा प्रवक्तुमीहन्ते वैदिकानर्थानन्तराऽन्तरा स्वागमेषु निबध्नन्ति वेदस्पर्शपूतमिवात्मानं मन्यन्ते तेषामप्यन्तर्हृदये ज्वलतीव प्रामाण्यम् । अत एवं विधाया महाजनप्रसिद्धेरागमान्तरेष्वदर्शनान्न तेषामाप्तप्रणीतत्वम् ।

एतैर्हि वचनैः स्पष्टमेव प्रतीयते बौद्धादयो नास्तिकाः वेदविपरीतानुष्ठातारो नाभूवन् ततः पूर्वकाले तादृशानां भ्रष्टानां विरलत्वान्न पूर्वे श्रीशङ्कराचार्यप्रभृतयः शुद्धिं चक्रुरिति तद्दृष्टान्तेनेदानीं शुद्धिमागमविरुद्धां शिष्टाचारविरुद्धां कुर्वाणा भ्रान्ता इत्यत्र नास्ति सन्देह इति शिवम् । अधिकमग्रे ।

---

# चातुर्वर्ण्यम् ।

( सौरज्यैष्ठप्रकाशितावशिष्टम् )

( निबन्धकः—म० म० श्रीपञ्चाननतर्करत्नभट्टाचार्यः )

प्रथमं तावदुच्यते सौरज्यैष्ठमासीयपत्रस्य ५७ छदे नवमपंक्तौ युगान्तरसम्वादादित्यस्ति तत्र ग्रन्थान्तरसम्वादादिति पठनीयमिति ।

अथ प्रकृतम् प्रस्तूयते—यदुक्तं शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते । नैव शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ इत्येतद्प्रभृ युधिष्ठिराजगरसम्वादवचनं यच्च भृगुभरद्वाजसम्वादमयं शान्तिपर्ववचनं श्रीमद्भागवतवचनं च तत् केवलजात्यपेक्षया सत्यादिपराणां प्रशंसार्थम् । जातकर्मादिसंस्काराणामवश्यकर्त्तव्यतावोधनार्थञ्च । नतु जातिब्राह्मणादीनामेकान्तेन निरासार्थम् । तथात्वे शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते । नैव शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मण इत्यत्रैव प्रथमार्द्धोक्तशूद्रादिपदस्यासिद्धार्थता द्वितीयार्द्धे चोद्देश्यासिद्धिप्रसङ्गः । जात्या शूद्रब्राह्मणयो रनभ्युपगमात् गुणतस्तु तत्र शूद्रत्वाभावाच्च । तदयं सिद्धान्तः—द्विविधं हि ब्राह्मणत्वम् सामान्यरूपं गुणरूपञ्च । तत्र सामान्यरूपं स्थूलदेहगतं गुणरूपं चात्मगतं सूक्ष्मदेहगतं वा । तेन त्रिविधो ब्राह्मणः पर्यवसन्नः—मुख्य एको गौणौ चापरौ । यो हि जात्या ब्राह्मणः सत्यादिगुणवान् वेदज्ञः स मुख्यः यश्च जात्या ब्राह्मणोऽपि सत्याद्यपेतः स एको गौणः यश्च जात्या हीनः सत्याद्युपेतश्च स चापरो गौणः, तत्र मुख्यब्राह्मणस्य ब्राह्मणत्वं सामान्यरूपं गुणरूपञ्च वर्तते । प्रथमोक्ते गौणब्राह्मणे सामान्यरूपं ब्राह्मणत्वं द्वितीये च गुणरूपम्, सामान्यरूपस्य स्थूलदेहवृत्तित्वात्, यस्मिन् स्थूलदेहघटितकर्मणि ब्राह्मणस्याधिकारः शास्त्रप्राप्तः, तत्र गुणरूपब्राह्मणत्वमात्रवतः पुरुषस्य

नाधिकारः किन्तु सामान्यरूपब्राह्मणत्ववत एव । स्थूलदेहबहिर्भूत-विषये तु ब्राह्मणयोग्य स्वर्गादौ सामान्यरूपब्राह्मणत्वमात्रवतोऽधि-कारो नास्ति अस्ति तु गुणरूपब्राह्मणत्ववतः । जातकर्मादिसंस्कारः स्थूलदेहघटितं कर्म, सच ब्राह्मणोचितो यथा भवति न तथा शूद्रा-दीनाम् । आदिपदादुपनयनसंस्कारोऽपि गभ्यते विशेषानुपदेशात् वेदाध्ययनोक्तेश्च । सच अजातगुणविकाशस्य शूद्रशिशो नास्त्येव । शतपथब्राह्मणादिश्रुतौ स्मृतौ च त्रैवर्णिकमात्रगोचरतया तस्य प्राप्तेः । न च श्रुतिस्मृतिषु संस्कारविध्यङ्गभूत पात्राणां जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिरित्याद्युपदर्शितदिशा ब्राह्मणत्वादिकमभिप्रेत-मिति युक्तम्, परस्पराश्रयप्रसङ्गात्, सति हि ब्राह्मणत्वे तदुचित-जातकर्मादिसंस्कारो वेदाध्ययनं च, सति च समुचित जातकर्मादि-संस्कारे वेदाध्ययनान्तकर्मणि च ब्राह्मणत्वमिति परस्परापेक्षित्वेन कर्मानध्यवसायाद् ब्राह्मणादीनां बन्ध्यापुत्रादिवदसत्यत्वप्रसङ्गात् । तस्माद् जातकर्मादिसंस्कारविधि र्जातिब्राह्मणगोचर एव । स एव जातिब्राह्मणो यस्य स्थूलदेहे ब्राह्मणत्वं सामान्यं वर्त्तते । यो हि स्थूलदेहो ब्राह्मणजातीयमातापितृसम्भूतः सवर्णेभ्यः सवर्णासु जायन्ते वै सजातय इति स्मृतिमूलः तपःसमाहृतविलक्षणोपादानकः सर्वं ब्राह्ममिदं जगदिति भारतपुराणमूलो वा तत्र सामान्यरूपम् ब्राह्मण-त्वं वर्त्तते । तथाविधस्थूलदेहवान् पुरुषो जातिब्राह्मण इत्युच्यते । उक्तं हि महर्षिणा पैठिनसिना—जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यत इति । स एव तपोविद्यायुक्त आत्मनि सूक्ष्मदेहे वा गुणब्रा-ह्मणत्ववान् मुख्यो ब्राह्मणो भवति तदुक्तम् महाभारतानुशासनपर्वैक-विंशत्यधिकशततमाध्याये "तपः श्रुतं च योनिश्चाप्येतद् ब्राह्मण्य-कारणम् इति । अत्र तपःपदं जात्यादिपरमपि भवति—तपः सत्यमिति शान्तिपर्वणि नवत्यधिकशततमाध्याये भृगूक्तेः । युधिष्ठिराजगरस-म्वादे सत्यादेः पृथगुक्तिस्तु विशेषबोधनार्था । गुणब्राह्मणत्वहीनस्तु

जातिब्राह्मणः मरणोत्तरं न ब्राह्मणोचितां गतिं लभते नवा तदुत्तरज-न्मनि स्थूलदेहेऽपि ब्राह्मणत्वम् । तद्बाधकदुरदृष्टस्य सञ्चयात् । यस्तु जात्याशूद्रोऽपि सत्यादिसम्पन्नः आत्मनि वा स्थूलदेहे वा गुण-ब्राह्मणत्वं दधानस्तत् स्थूलदेहपातोत्तरं सद्गतिं लभते ततश्चोत्तरे जन्मनि स्थूलदेहेऽपि सामान्यरूपब्राह्मणत्वं प्राप्णोति । दीर्घकालव्या-पिभाविकल्याणाश्रयस्य पुरुषस्य प्रशंसार्थं युधिष्ठिराजगरसंवादवच-नमित्युपपन्नम् । अतएव जातिब्राह्मणस्य दशविधत्वोक्ति रप्युपपद्यते तथाचात्रिसंहितायां देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः । पशुर्म्लेच्छश्च चाण्डालो विप्रा दशविधाः स्मृता इत्यादि ।

जातिब्राह्मणस्यासत्वे एवं विभाग एव नोपपद्येत । अवान्तर-धर्मप्रकारेण धर्म्मिप्रतिपादनं हि विभागः । अवान्तरधर्माश्च धर्म्मि-तावच्छेदकव्याप्यधर्म्माः । नच देवादिसाधारणं ब्राह्मणत्वं दर्शयितु-मिदं विभागवचनं तथाहि केचिद्देवा ब्राह्मणाः केचिन्मुनयो ब्राह्मणाः केचिद् द्विजा ब्राह्मणा इत्येवं रीत्या—केचिच्चाण्डाला अपि ब्राह्मणा इति गुणब्राह्मणानामेव दशविधत्वमुक्तमिति वाच्यम् । अग्रिमविवर-णवचनैर्विरोधात् । तानि हि वचनानि—

सन्ध्यां स्नानं जपं होमं देवतानित्यपूजनम् ।
अतिथिं वैश्वदेवं च देवब्राह्मण उच्यते ॥
शाके पत्रे फले मूले वनवासे सदा रतः ।
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ॥
लाक्षालवणसम्मिश्रकुसुम्भक्षीरसर्पिषाम् ।
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ॥
ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः ।
तेनैव स च पापेन विप्रः पशुरुदाहृतः ॥
क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः ।
निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते ॥ इति ।

एषु सन्ध्यास्नानहोमदेवतानित्यपूजनादीनि न देवधर्माः देवानां होमदेवतापूजादावनधिकारस्य जैमिनीये प्रतिपादितत्वात् । शूद्राणां मधुमांसादिविक्रयेण उत्कर्षानुपपत्तेः । पशोर्ब्रह्मसूत्रेण गर्वितत्वासम्भवात् । क्रियाहीनत्वादिभिः सर्वचाण्डालधर्मैश्चाण्डाल विशेषावोधनाच्च जातिब्राह्मणा एव गुणदोषविशेषवशाद्ध देवब्राह्मणादिभावेन विविच्यन्ते इत्येतदेवानवद्यम् ।

अथ जातिब्राह्मादिकथनमश्रौतं, स्मृतिषु तदुपलम्भेऽपि श्रुतिविरोधादेव स्मृतेरप्रामाण्यमिति चेन्मैवम् पुरुषसूक्ते—ब्राह्मणोऽस्य मुखमासीदित्यादिमन्त्रे जातिब्राह्मणाद्यवगमेन तस्य श्रौतत्वात् । नच ब्राह्मणोऽस्य मुखमासीदित्ययं मन्त्रो न जातिब्राह्मणादिबोधकः किन्तु स्थितानां गुणब्राह्मणादीनां पुरुषमुखादिभावेन रूपणबोधक इति शङ्कनीयम्—पद्भ्यां शूद्रो अजायतेति तुर्य्यपादे स्पष्टं जन्मोक्तेः । "स मुखतस्त्रिवृतं निरमिमीत ... ब्राह्मणो मनुष्याणाम् । उरसो बाहुभ्यां पञ्चदशं निरमिमीत ... राजन्यो मनुष्याणाम् । मध्यतः सप्तदशं निरमिमीत ... वैश्यो मनुष्याणाम्" इति तैत्तिरीयसंहितायाः ( ६।१।१।५ ) माम्नातत्वाच्च । एतेन पुरुषसूक्तं प्रक्षिप्तमिति प्रलपितमपास्तं तैत्तिरीयसंहिता समानार्थत्वात् । नच ऊरू तदस्य यद्व वैश्य इति बलवता पुरुषसूक्तेन मध्यतो वैश्यनिर्म्माणबोधकतैत्तिरीयसंहिताया बाधनिर्णयान्न समानार्थत्वकल्पनं युक्तम् इति लपनीयम्—आथर्वणपुरुषसूक्ते ( १६। १।७) मध्यं तदस्य यद्वैश्य इति श्रवणेन तैत्तिरीयसंहिताश्रुतेर्बाधासम्भवात् । सूक्तसंहितयोर्बलाबलनिर्णयस्य काल्पनिकत्वाच्च । नच माभूद् बाधः विरोधस्तु भवत्येवेति वक्तव्यम् मध्यपदेनोरुमध्यस्य मध्याङ्गसन्निहितोरोरूद्र्ध्वभागस्य वा ग्रहणेन विरोधनिरासात् । कलिवर्जितपुरुषमेधयज्ञव्यवह्रियमाणपुरुषसूक्तस्य चिरन्तनव्यवहारसिद्धत्वेन सूक्तान्तरत्वात् प्रामाणिकत्वाच्च ।

सर्ववेदसाधारणं हि पुरुषसूक्तं छान्दोग्यगायत्रीब्राह्मणाद्युप-

निषत्प्रसिद्धं, लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयदिति मन्वादिस्मृतिपुराणाद्युक्तं च कस्तावदिदमप्रमाणीकर्त्तुमुत्सहेत यद्यनुन्मत्तमानी स्यात् ।

छान्दोग्योपनिषत्सु पितृयानविवरणे ब्राह्मणयोनिं वेत्यादिप्रतीकेषु संवर्गविद्यायां च जातिब्राह्मणाद्युपन्यासश्च स्मर्त्तव्यः ।

नन्वेवं विश्वामित्रस्य वीतिहव्यस्य हारीतानां मौद्गल्यादीनाञ्च क्षत्रियतनयानां पुराणेषु ब्राह्मण्यप्राप्तिकथनं नोपपद्यते । इति चेन्नैवं तपःप्रकर्षसमाहृतब्राह्मणशरीरोपादानजकलेवरे तस्य तस्य ब्राह्मणत्वसामान्यान्वयात् । नह्येकस्मिन् धर्मिणि तथाविधसामान्यद्वयं समवैति सङ्करप्रसङ्गात् । सूचितं चैतत् विश्वामित्रोपाख्याने—

स गत्वा तपसां सिद्धिं लोकान् विष्टभ्य तेजसा ।
ततापं सर्वान् दीप्तौजा ब्राह्मणत्वमवाप्तवान् इति ॥

इदं हि तेजसा लोकव्यापनं भस्माच्छादितवह्नेः भस्मोत्सारणेनेव क्षत्रियत्वव्यञ्जकांशापसारणेन ब्राह्मणत्वव्यञ्जककलेवरसम्बन्धं सूचयति । प्रपञ्चितश्च प्रकारोऽयं योगदर्शनस्य "दृष्टादृष्टजन्मवेदनीयादिसूत्रभाष्ये । स्वतपसा वा ज्ञानमयादितपःसिद्धसंकल्पेन वा यस्य देहपरिवर्त्तनं न जातं तस्य गुणब्राह्मण्यं जात्या क्षत्रियत्वं च विष्णुपुराणादावुक्तं यथा मौद्गलाः क्षत्रोपेता द्विजातयो बभूवु रिति । यदा च तद्वंशीयेषु देहपरिवर्त्तनं तदैव ब्राह्मणत्वसामान्यान्वयः । विश्वामित्रस्यैकदेह एव क्षत्रियत्वब्राह्मणत्वयोः सम्भवोक्तिस्तु मातापितृजदेहव्यवधानाभावाभिप्राया वेदितव्या । यथा क्षत्रियवंश्यानां ब्राह्मणत्व मेवं ब्राह्मणवंश्यानामपि क्षत्रियत्वं सिद्धपुरुषशापाद्वा स्वकृतदोषाद्वा सति देहपरिवर्त्तने भवति नहुषस्याजगरत्ववत् । अपूर्वदेहसम्बन्धस्यैव जन्मतया अत्रापि जात्या ब्राह्मणत्वक्षत्रियत्वादि सिद्धान्तो न व्यपैति । प्रकाशितमिदम् महाभारते शान्तिपर्वणि भृगुभरद्वाजसम्वादे—

भृगुरुवाच—असृजद् ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन् ।
इत्युपक्रम्य—ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ।
ये चान्ये भूतसंघानां वर्णास्तांश्चापि निर्म्ममे ॥
ब्राह्मणानां सितो वर्णः क्षत्रियाणान्तु लोहितः ।
वैश्यानां पीतको वर्णः शूद्राणा मसित स्तथा ॥
इत्यनन्तरं भरद्वाजप्रश्नः—तत् प्रतिवचने च—
"न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्म्मभिर्वर्णतां गतम् ॥"
"त्यक्तस्वधर्म्मा रक्ताङ्गा स्ते द्विजाः क्षत्रतां गताः ।"
"पीताः कृष्युपजीविनः" "ते द्विजा वैश्यतां गताः"
"कृष्णाः शौचपरिभ्रष्टा स्ते द्विजाः शूद्रतां गता" इति ॥

सर्वत्रैव दैहिकवर्णपरिवर्त्तनाख्यानात् पूर्वदेहनिवृत्ति रपरदेह-सम्बन्धश्च सूचितः । अस्मिन् पूर्वदेहसम्बन्धे पुरुषापराधो ब्रह्मणः संकल्पश्च हेतुः । कर्मभिर्वर्णतां गतमिति वर्णांस्तांश्चापि निर्म्ममे इति चोक्तेः । यदि ब्राह्मणशरीरएव वृत्तिविशेषात्मककर्म्मवशात् क्षत्रियत्वा-दिकमिष्येत, नहि तत्र रक्ताङ्गत्वादिकमपैक्षिष्यत । नापि प्रजापतेर्वर्ण-निर्म्माणकर्त्तृत्वोक्तिरपि समगंस्यत । तस्मादपूर्वदेहसम्भवरूपजन्मैव जातिब्राह्मणत्वादिप्रयोजकम् । नतु गुणभेदः । तस्माच्चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश इति गीतोक्तिः चातुर्वर्ण्यसृष्टे रीश्वरकृत-त्वम् प्रतिपादयन्ती प्रागुक्तद्वितीयपक्षमेव समर्थयते नतु प्रथमपक्ष-मिति सर्वमवदातम् ।

# वार्त्ताः सम्पादकाभिप्रायाश्च ।

अतीतायां ज्येष्ठकृष्णद्वादश्यां भृगुवासरे श्री नासिकक्षेत्रे प्रतिष्ठितायां वेदशास्त्रपाठशालायां संकेश्वरपीठाधिप श्रीमज्जगद्गुरुशङ्कराचार्यपादानामागमनसमये तत्पाठशालाकार्याधिकृतैर्यदभिनन्दन पत्रं प्रदत्तं तत्रभवद्भ्य स्तदस्मत्पाठकानां मवगतयेऽविकलं प्रकाश्यते—

श्रीमद्योगीश्वर याज्ञवल्क्याय नमः ।

श्रीमत्पूज्यपादाचार्यजगद्गुरुशङ्कराचार्यसङ्केश्वरस्वामिमहाराजानां श्रीमन्नासिकक्षेत्रशुक्लयजुःशाखीयवेदशास्त्रपाठशालायामागमनसमारम्भे श्रीचरणेभ्यस्तच्छालाप्रवर्तकमण्डलेन परमादरपूर्वकं दत्तं सन्मानपत्रम् ।

स्वस्ति श्रीमत्समस्तसुरवृन्दपूजितपादारविन्दशिवप्रतिबिम्बवर्यश्रीमत्परमहंसपरिव्राजकाचार्यपदवाक्यप्रमाणपारावारपारीणयमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठानतपश्चर्याचक्रवर्त्यनाद्यविच्छिन्नगुरुपरम्पराप्राप्तषड्दर्शनसंस्थापनाचार्यव्याख्यानसिंहासनाधीश्वरसकलनिगमागमसारहृदयसाङ्ख्यत्रयप्रतिपादनसकलनास्तिकमतोच्छेदनपूर्वकसकलसनातनधर्मसंस्थापनैकधुरीणवैदिकमार्गप्रवर्तकेत्याद्यनेकबिरुदावलिसमलङ्कृतेषु श्रीसङ्केश्वरकरवीरसिंहासनाधीश्वर श्रीमदभिनव श्रीसच्चिदानन्दश्रीविद्यानृसिंहभारती स्वामि श्रीमज्जगद्गुरुशङ्कराचार्य ( श्रीशिरोळकरस्वामिमहाराज ) इत्याख्येषु—

सनातनधर्मानुयायिनां शिष्यानुशिष्याणामस्माकं परमविनयपुरःसरं प्रणतिसहस्रावलिं कृत्वा श्रीचरणारविन्दयोरत्यादरपूर्वकं विज्ञापनम् ।

अद्यास्यां नासिकशुक्लयजुःशाखीयवेदशास्त्रपाठशालायां श्रुतिस्मृत्युपदिष्टसनातनधर्मोन्नतिधुरीणत्वसत्कीर्तिकर्पूरसुवासितदिङ्मण्डलैः पण्डितप्रकाण्डमण्डलमण्डनायमानैः परमपूज्यपादाचार्यैरस्माकं दीनशिष्याणां सप्रश्रयप्रार्थनां स्वीकृत्यातिकृपयाऽऽगमनमत्र कृतं, तेन पाठशालेयं श्रीचरणारविन्दधूलिपूतेति मन्यमानाः श्रीचरणारविन्दमधुरमकरन्दभ्रमरीभूतान्तःकरणाः परमानन्दार्णवमग्ना वयं सर्वे महानुग्रहं मत्वा सोत्साहं श्रीचरणानां स्वागतं भक्तिप्रेमपुरःसरं कर्तुं समुत्सहामहे ।

विदितमेवैतत् श्रीचरणैः प्राच्यप्रतीच्यप्राक्तननूत्नविद्याचारकोविदैः पुरैकस्मिन् काले भारतवर्षमिदं विविधानवद्यविद्याविहारमन्दिरं सकलकुशलकलाकलापकौशलालयः सकलसंस्कृतिभास्वद्भास्करभासुरायमाणमासीद्दीर्घकालपर्यन्तम्, तत्सर्वं नितान्तमभिमानास्पदं तदासीदस्माकं सर्वेषाम् । परं च दुर्दैववशात्तदखिलैश्वर्यप्रचण्डमार्तण्डोमध्यममण्डलं संत्यज्य रजनीमुखाभिमुखः प्रतस्थे । इदन्तु निरतिशयोद्वेगकरं स्वधर्मावनतिकारकं च । इदानीन्तनकाले नयविनयदयादाक्षिण्यादिगुणगणालङ्कृताङ्गलभौमचक्रवर्तिषु एतद्देशीयराजकार्यधुरीणत्वं स्वायत्तीकुर्वत्सु पाश्चात्यपद्धत्यनुसारशिक्षणक्रमस्तैः सनातनधर्मीयेष्वस्मासु समुपक्रान्तः । परन्तु शिक्षणक्रमोऽयं धार्मिकशिक्षणं विना केवलव्यावहारिकोऽनिष्टफलदायी च । तदस्ति मुहुर्मुहुरनल्पकल्पनातीताऽनिष्टपरिणामावहम् ।

धार्मिकशिक्षणाभावः खलु प्रतीच्यविद्यासु शिक्षितमपि स्वधर्मज्ञानशून्यं श्रुतिस्मृतिविहितकर्मपराङ्मुखं स्वैरवृत्त्यवलम्बिनं स्वयंग्राहितमतग्राहग्रस्तमतिं करोतीत्यनुचितफलम् ।

भिन्नभिन्नसमाजेषु विचाराचाराणामनर्गलत्वम्, अविचारानाचारप्राबल्यं; धार्मिकबन्धनशैथिल्यम्, इत्याद्यनेकविधावर्णनीयरीत्या सनातनधर्माज्ञानमूलिका धर्मावनतिः सर्वत्र दृग्गोचरीभवति ।

इमां धार्मिकावनतस्थितिं दृष्ट्वैकादशवर्षेभ्यः प्राक् तरुणविद्यार्थिजनेभ्यो धार्मिकं व्यावहारिकम् इत्युभयविधसंमिश्रितशिक्षणस्य युगपत् दानहेतुकं शुक्लयजुःशाखीयशिक्षणप्रसारकं नाम मण्डलं संस्थापितम् । तेन मण्डलेन सनातनधर्मोन्नतिहेतुसाधनार्थं वेदशास्त्रपाठशालेयं संस्थापिता ।

सनातनधर्मीय-भारतवर्षीयाणामस्माकं धर्मशास्त्रानुसारेण नित्यनैमित्तिकाखिलविधिविधानानि श्रुतिस्मृतिपुराणादिमूलकानि गीर्वाणभाषायां परिबद्धानि सन्ति । गीर्वाणभाषाज्ञानं विना वेदशास्त्रपुराणादिज्ञानं कथं भविष्यति । तद्विना पुरुषार्थचतुष्टयसिद्धिः कदापि न भवति । शास्त्रविहितकर्माणि सम्यग्रीत्या कर्तुं कोऽपि न शक्नोति । तेन धर्मच्युतिरस्माकं निश्चयेन भविष्यति । ऐहिकामुष्मिकश्रेयस्करसद्गतिफलावाप्त्यभावान् मनुजजन्मनोमोक्षसुखादिसार्थक्यं न भवेदित्यवधार्य—

"वेदशास्त्रे उभे नेत्रे द्वाभ्यां पश्यन् स पश्यति ।
"एकेन हीनः काणः स्यात् द्वाभ्यां हीनोऽन्ध एव सः"

इत्यादिना—उपरिनिर्दिष्टमण्डलेन बालानां हितसम्पादनहेतुनाऽस्यां पाठशालायां वैदिकं, काव्यादिशास्त्रीयं, आन्हिककर्म, ज्यौतिषं चैतद्विषयचतुष्टयस्याध्यापनं समारब्धम् ।

भिन्नभिन्नविषयशिक्षणसम्पादकच्छात्राणामधुना षष्टिः सङ्ख्या पाठशालायामस्याम् । सर्वच्छात्राणां विषयपृथक्त्वेन शिक्षणं मूल्यं विना दीयते । शुक्लयजुःशाखीयवैदिकशिक्षणं विना शेषविषयशिक्षणं सर्वशाखीयबालकेभ्योविना मूल्यं दीयते । भिन्नभिन्नविषयाध्यापनाय शिक्षकत्रयं विद्यतेऽधुना । प्रतिवर्षं सर्वच्छात्राणां तत्तद्विषयाभिज्ञैर्विद्वद्भिर्वार्षिकपरीक्षा भिन्नभिन्नविषयेषु गृह्यते । पारितोषिकवितरणसमारम्भोपि यथावसरं प्रतिवर्षं क्रियते । एतद्विषयकवृत्तान्तोयथाकालं प्रकाशितो भवति ।

सनातनधर्मोन्नत्यर्थं भिन्नभिन्नस्थलेषु सञ्चारप्रसङ्गे सत्कार्यनिर्वाहधुरन्धरैरविद्यातिमिरदिवाकरैः सन्मार्गवर्तिवर्गोत्तेजकैः पाखण्डखण्डनाग्रेसरैः सर्वत्र सनातनधर्मोत्कर्षार्थं जागृतिं कुर्वाणैः श्रीपूज्यपादाचार्यैः श्रीमद्भिरेतादृग्धर्मावनतिं दृष्ट्वाऽनेकस्थलेषु वेदशास्त्रादिपाठशालास्थापनं कृतं च, नानाविधगहनधार्मिकविषयप्रतिपादकवाक्यपीयूषपरिप्लुतप्रवचनैः गभीरमधुररसप्रचुरैर्हृदयस्पर्शिभिरखिलशिष्यजनान् ज्ञानोद्दीपितशुद्धभावपरिपूतमतीन् कृत्वाऽस्मान् सर्वाननुगृह्य सर्वेषामस्माकमुपरि सहस्रश उपकृतिश्रेण्योविहिताः । तेन वयं सर्वे कृतार्था भूत्वा परमानन्दसन्दोहोदधिनिमग्नाः सञ्जाताः ।

अयि ? प्रणतवत्सला जगद्गुरुचरणाः सनातनवैदिकधर्माभिवृद्धिबद्धशुद्धबुद्धिसंलब्धश्रद्धाः परमवैराग्यौदार्यपरोपकरणादिप्रशंसनीयगुणगणस्वायत्तीकृतसकलभक्तजनहृत्कमला आचारव्यवहारप्रायश्चित्तादिकार्येषु निग्रहानुग्रहादिकुर्वाणाः ? महोदारमनस्कैः श्रीमद्भिः सनातनप्राचीनवाङ्मयावनार्थं संततं समुत्साहेन यतमानैरियं पाठशालाऽनाश्रितापि सदा परमानुग्रहेण सनाथीकर्तव्या इति सर्वेषामस्माकं सविनया प्रार्थना सफलीकर्तव्या इति परमादरेण विज्ञप्तिः ।

अस्यां पाठशालायामागमनेन पूज्यपादाचार्येभ्योऽपरिमितः परिश्रमोऽस्माभिर्दत्तः सोऽनितिकृपया क्षन्तव्यः श्रीचरणैरिति सप्रश्रयं प्रार्थयामहे इति ।

| | |
|---|---|
| श्रीक्षेत्रनासिक, वेदशास्त्र पाठशाला,<br>ज्यैष्ठमासे कृष्ण पक्षे १२<br>भृगुवासरे शके १८५० | शुक्लयजुः शाखीयशिक्षणप्रसारकमण्डलस्याज्ञानुविधायी कार्याधिकृतः शौचेइत्युपनामकस्य आबाजीशर्मणः सूनुर्गोविन्दशर्मा । |

नमो ब्रह्मण्य देवाय ।

# ब्राह्मणमहासम्मेलनम्

## ( मासिकं संस्कृतपत्रम् )

"न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् ) ।

प्रथम वर्षे ] सौर भाद्रः शकाब्दाः १८५० [ पञ्चम संख्या ।

## वैदिकेभ्योऽभ्यर्थनम् ।

( निबन्धकः—साहित्याचार्यश्रीनारायणशास्त्री खिस्ते )

सत्यं विश्वेशरूपं स्फुरति मतिमतामन्तरे सन्ततं यद्
वेदाऽभेदेन मोदं सपदि वितनुते मानसे पण्डितानाम् ।
विप्रैः स्वाचारशीलै स्तिमिरविरहितैः सम्प्रदायक्रमेण
प्राप्तास्ते पावयन्तु स्फुटतममहिमाऽभ्युन्नता हन्त वेदाः ॥ १ ॥

'सत्यं शिवं सुन्दर' मित्युदारं
रूपं परब्रह्मण आमनन्ति ॥
सत्त्वैव सत्यं ननु सैव वेदा-
स्त्रैकालिकाऽबाध्यतया प्रसिद्धाः ॥ २ ॥

वेदात्मकं सत्यमयं शिवस्य
वपुर्विलोक्यैव गुरोः प्रसादात् ॥
तदुक्तमाचारमनन्तरायं
प्रचारयन्ते किल केऽपि धन्याः ॥ ३ ॥

आसीत् पुरा भारतभूरियं नः
सर्वाऽऽत्मना वेदपथाऽध्वनीना ॥
सर्वे स्ववर्णाश्रमकर्मदक्षा
वेदैकरक्षाव्रतिनो बभूवुः ॥ ४ ॥
वेदाऽक्षराऽभ्यासपवित्रवाचो
भावानुसन्धानविधूतपापाः ॥
आचान्तसोमा ज्वलदग्निदीप्रा
विप्रा न केषाममवन्नमस्याः ॥ ५ ॥
ब्रह्मैव लोकोद्धरणाय नून-
माविर्बभूव श्रुतिरूपधारि ॥
साक्षात्कृतं तन्मुनिभिः पुराणैः
प्रचारितं शिष्यपरम्परासु ॥ ६ ॥
कर्मप्रधानं तदपेक्षतेस्म
श्रीमान् मुनिर्जैमिनिनामधेयः ॥
ज्ञानप्रधानत्वमवोचदस्य
व्यासो मुनिर्मान्यतमः समेषाम् ॥ ७ ॥
अन्योन्यसापेक्षतयाऽस्य रूप-
द्वयस्य नैवास्ति मनाग् विरोधः ॥
साक्षात्कृतेशैर्गुरुभिस्तु शिष्या-
ऽधिकारमालोच्य तथोपदिष्टम् ॥ ८ ॥

इत्थं वेदपथाऽध्वनीनधिषणैः कर्मप्रधानैः परै
र्ब्रह्माद्वैतविभावनापटुतरस्फूर्जन्मतिप्रक्रमैः ॥
विप्रैर्विश्वनमस्यतामुपगतैः सम्भूषितं भारतं
सत्यं भा-रतमेव वेदमहिमोत्तुङ्गं पुराऽभूदिदम् ॥ ९ ॥
यत्रैकत्र विराजतेस्म मखिनां सङ्घः क्रियाकोविदः
श्रौतैः कर्मभिरेव विश्वमखिलं नूनं विधातुं क्षमः ॥

वेदान्तानुभवेन कृत्स्नभुवनं ब्रह्मैव, पश्यन् परो
मुक्तानां निवहस्तु विस्मयकरो यस्मिन्नभूद्भारते ॥ १० ॥

वेदानामयमेव दृश्यमहिमा यत्तत्पराणां नृणा-
मार्यावर्त्तनिवासिनां बलयशः श्रीकीर्तिपुष्ट्यादयः ॥
सर्वेऽभ्योऽभ्यधिकाः पुरा समभवन् मोक्षोऽवसाने तथा
तस्माद्वेदविदां करामलकवद् भोगाऽपवर्गौ स्थितौ ॥ ११ ॥

धन्यास्ते तु कुमारिलप्रभृतयो विद्वत्कुलाग्रेसरा
यैर्वेदाऽवनतत्परै स्तृणमिवोत्सृष्टं निजं जीवितम् ॥
येषामेव महात्मनामनुपमैस्त्यागैः प्रतापैस्तथा
श्रौतोऽध्वाऽद्य कथञ्चिदञ्चितवपुर्जागर्त्यसौ भारते ॥ १२ ॥

वेदान् निन्दति यः स ईश्वरवपुर्निन्दां विधत्तेतरां
प्रामाण्यं मनुते न यः स तु जनः सत्याऽपलापी किल ॥
वेदाः सत्यमिति स्फुटं सुविदितौ पर्यायशब्दाविमौ
सत्यं नाऽपरमस्ति वेदवचनादन्यत्तु किञ्चित् क्वचित् ॥ १३ ॥

नाऽसत्यात् परमस्ति पातकमिति प्रोक्तं मुनीनां गणै-
र्हेतुस्तत्र तु सत्यमेव भगवद्रूपं यतः कथ्यते ॥
तद्वेदात्मकमेव, वेदवचनाऽप्रामाण्यवादात् परं
नाऽसत्यं न च तस्य शोधनविधिः शास्त्रेषु सन्दर्शितः ॥ १४ ॥

ईशेन स्वमुखोद्भवेषु निहिता वेदास्तु विप्रेषु तैः
स्वप्राणाऽधिकमेव यावनजनोत्पाताच्च संरक्षिताः ॥
ग्राम्यं गीतमिति स्फुटं कृतपरीहासा दिदानीन्तनात्
संरक्ष्यास्त्वधुनाऽऽङ्ग्लशिक्षणविपर्यस्तस्वभावाज्जनात् ॥ १५ ॥

सत्यं ब्रह्म तदेव शब्दवपुषो वेदा द्विजेषु स्थिता
धर्मस्तत्कृत एव सृष्टिसमयादारभ्य सम्भाव्यते ॥
उच्छेत्तुं तमनादिमुद्धतधियो दैत्याः प्रवृत्ता नवा-
स्तद्विप्रैः कृतनिश्चयैः समुदितैरुत्थान मालम्ब्यताम् ॥ १६ ॥

# धर्म विप्लवः ।

( निबन्धकः म० म० श्रीपञ्चाननतर्करत्नभट्टाचार्यः )

साम्प्रतं हि तिस्रः श्रेण्यो दृश्यन्ते याः सर्वा एव सनातनधर्माचारविध्वंसनाय प्रवृत्ताः, तासु चैका श्रुतिस्मृतिसदाचारप्रामाण्यं नाभ्युपगच्छति, प्रतीच्यम्लेच्छानामाचारमेव बहु मन्यते तत्सभ्यतामेव वरिवस्यति, तानेव च मानयति परमिममान्तरभावं देशात्मबोधसंज्ञया कल्पितेन कपटनाटकेन निगूहमाना देशाभ्युदयपरिपन्थिनी किल वर्णाश्रमधर्मस्थितिः धूर्तब्राह्मणरचनेति कृत्वोपहसन्ती तथा प्रयतते यथास्याः सावलेपवाग्विलसितेन मुग्धमतयो जना स्तत्पक्षपातिनो भवन्ति स्वैराचारपरिपोषकत्वात् । संयमप्रधानः सनातनो धर्म्मः संयमश्च स्वैराचारविरोधी, स्वैराचारो हि पानभोजनादिषु यौनादिसंसर्गे च विधिनिषेधावतिवर्तमानः प्रभवत्येवापातसुखाय । को हि तस्य परिणामविरसतां प्रतीयादृते श्रुत्यादिपरतन्त्रान् । अनर्थंकरं हि श्रुत्यादिपारतन्त्र्यं येन च चिरन्तनेन सता वैदेशिकपारतन्त्र्यं भारतस्य घटयाम्बभूवे । तस्मात् प्रथमं तत् पारतन्त्र्यं हेयं तेन च जातिभेदव्यवस्था सर्वथैव परिहृता भविष्यति, भविष्यति च भारतीयानां सर्वत्र साम्यं यथा हि नहि ब्राह्मणा वा चाण्डाला त्रेत्यत्र कश्चिद् विशेषः सर्व एव भारतीया वयमेकजातीया इत्येवं जातीयकं हि तस्या वाग् विलसितम् ।

अपरा च श्रेणिः स्वकपोलकल्पितार्थश्रुतिमात्रप्रामाण्याङ्गीकर्त्तुः कस्यचित् सन्यासलिङ्गिनः शासनं नामानुवर्त्तमानेति व्यपदिश्यते । सा हि ब्राह्मणादिसंज्ञाभेदं मन्यमानापि सर्वमानवानां पानभोजनादौ यौने च संसर्गे समानैव स्थितिरित्युद्घोषयति । अप्रमाणं खलु जातिवर्णकृतं तद्विशेषनियमनम्, श्रुतिविरुद्धत्वात् । याश्च तत्साधिन्यः, ताः प्रक्षिप्ताः स्वयं विरचयद्भि र्धूर्त्त ब्राह्मणैरित्युपालभते च । यदि च

तन्मते श्रुतिपुराणादीनां नास्ति प्रामाण्यम्, तथापि स्वमतसमर्थनांशविशेषात् तदीयवचनमाकृष्य पूर्वापरविरुद्धमपि तद्व्याख्यानं स्वमतानुगुण्येन कथञ्चिद्विधाय प्रदर्शयति। जन्मना वर्णभेदव्यवस्थां धिक्कुर्वतीयं गुणकृतवर्णभेदश्चाद्रियमाणा फलतः प्रथमश्रेणिवत् भारतीयानामेकजातीयत्वमेव समर्थयते। ब्राह्मणादिसंज्ञा तु आढ्यदरिद्रादिसंज्ञावत् व्यक्तिस्वरूपपरिचायिकेति। ततश्च भवति ब्राह्मणपुत्रश्चाण्डालः, चाण्डालपुत्रश्च ब्राह्मणो वृत्त्यादिगुणभेदादिति हि तस्याः स्थितिः। ते इमे श्रेण्यौ स्पष्टलिङ्गे सर्वतः प्रसिद्धे भवतश्चान्यसनातनधर्मिभ्यः।

सनातनधर्मावलम्बिधौरेयै विद्वद्ब्राह्मणैरुपेक्षितायां राजनीतिचर्चायां कृतावधानयोरात्मनः प्रजासामान्यहितसाधनप्रवृत्तिमुदरम्भरिताफलामपि स्वार्थत्यागपरतया ख्यापयन्त्योरनयोश्च श्रेण्योरधुना राजकीयपरिषदि प्रतिपत्तिगौरवं दृश्यते। राजविधानप्रवर्तनेन सनातनधर्मत्रिप्लवसाधनं तन्मतमिति सोत्कण्ठमिदानीमुदीयते स्वाविवेकपरिणतिमाकलयद्भिः सनातनधर्मावलम्बिभिः। तथापि व्यक्तरूपत्वात् कथञ्चिदिमे प्रतिविधातुं शक्ये। एतदितरा च श्रेणिरतीवभीषणा, गूढाकारेङ्गिता, सनातनधर्मावलम्बिरीतिप्रसिद्धा, परमियमन्तरात्मना पूर्वोदीरितश्रेणिद्वयमनुसरति। विशेषस्त्वेतावान् यदियं मनसा श्रुतिस्मृत्यादिषु श्रद्धाविरहिताऽपि पानभोजनादौ यौने च संसर्गे सर्ववर्णानां समानामेव स्थितिं समर्थयमानाऽपि सोपानलम्भनन्यायमाश्रयते। मन्यते खल्वियं चिरन्तनकालप्रवृत्तेयं कुसंस्कारपरम्परा नैकदोन्मूलयितुं शक्या। विदिते हि सर्वोन्मूलनप्रयासे आपामरसाधारणो भविष्यत्येव विद्रोभः। नहि निरक्षरा वर्णरहिता वा वर्णाधमा वा ब्राह्मणीपरिणयं कल्याणकरं मन्यन्ते, प्रत्युत विचारयन्ति महदिदमनर्थकारणं भविष्यतीति। एवञ्च बहूनां यत्रानैक्यं, तन्मतवादिनी हि श्रेणिः पृथगेव भविष्यति, प्रागुक्तश्रेणिद्वयवत्। सति च

पार्थक्ये तस्याः प्रभावो न भविष्यतीत्यस्माद्धेतोर्निगूहनीयो मूलाभिप्रायः । म्लेच्छराजसंपर्काद्वा, वाष्पीययानादिसंस्काराद्वा, धर्मान्तरालम्बिनामसकृदाचरितात्क्षेपाद्वा यत्र यत्राचारे बहूनामादरलाघवमुदपादि, द्वेषोऽपि च भूयसाम्, तदुन्मूलनमल्पायाससाध्यमिति कृत्वा तद्भङ्ग एव प्रथमद्वारभङ्गः सदाचारदुर्गस्येति शास्त्रीयवचनमेवाऽपव्याख्यानकलङ्कितमालम्ब्य तत्र नितरां प्रयतते । सति च तत्प्रयत्नसाफल्ये प्रतिग्रहपङ्क्तिभोजनस्पृष्टभोजन पक्वान्नभोजनशुक्रशोणितशुद्धिजातिभेदनियमानां सोपानविलंघनं प्रमाणबलेन चिरात् साधयिष्यते । क्रमेण तत्तत्स्थितिभङ्गे च न भविष्यति साधारणो विक्षोभः । यथा हि पूर्वं माहम्मदीया हस्तयोरेकत्र करालकरवालमन्यत्र कोराणाभिधानस्वधर्मग्रन्थमुपादाय वित्रासनभूमानमादधानाः क्षोभगौरवहेतवो मरणमेव स्वधर्मत्यागाद्वरमिति प्रजानां विवेकमुद्रेचयामासुः । पूर्वोक्तं श्रेणिद्वयन्तु तथैव जनानां क्षोभहेतुभूतं स्वधर्म्मदृढ़तामेव जनयत् सम्भाव्यते । आङ्गलाश्च यथा शिक्षाशिल्पकौशलादिना सनातनधर्म्मिणामाचारशैथिल्यं शनैः सम्पादयन्तस्तथा दशामकार्षुः यया स्वधर्म्मरक्षणदार्ढ्यबुद्धिः क्रमेण विलीयते तेन चाप्रचलितपूर्वा वैदेशिकपण्यश्रेणिः कोटिकोटिरूप्यकविनिमयेन साग्रहं गृह्यते सनातनधर्मिभिः तथैव साम्प्रतं विक्षोभकृदाचारत्यागः पश्चात् साग्रहमेव करिष्यते यदि सर्वथा समुन्मूलनप्रयास इदानीमेव न प्रकाश्येत । इदानीं हि क्रियतामस्पृश्यस्पर्शः क्रियताञ्च शुद्धिः प्रमाणीक्रियताञ्च शास्त्रं तत्र यदपव्याख्यानं तदाश्रीयतां तस्य चोपादेयता समुद्घोष्यतां ये द्वे श्रेण्यौ पृथग्भूते ताभ्यां क्रियतां मैत्रीबन्धः ते तु नितरां सिद्धान्तमिमं समर्थयिष्येते इति हि तदभिसन्धिः । प्रायेण सर्वास्वेव जातिषु न्यूनाधिकभावेन प्रापिता वैदेशिकशिक्षा । तच्छिक्षाविकृतमतयो वर्णबाह्यतरुणास्तादृशैरेव ब्राह्मणादितरुणैः सह भुञ्जाना निरक्षरान् पित्रादीनतिशेरते । उद्रिक्तविद्यावुद्धयः पुत्रपौत्रादय

इति गर्वस्फीता अपि केचन स्थविरास्तद्वचसि सन्तिष्ठन्ते मनसापि पर्यालोचयन्ति वृद्धाः भवन्तु नाम ब्राह्मणा देवताः न च तेभ्योऽन्नमस्माभिः प्रदीयते नापि संसर्गान्तरं प्रार्थ्यते किन्तु छायास्पर्शमात्रेणापि तैर्वञ्चिता वयम् । वदन्ति च तदधिकसंयमविद्याचारित्रशीलौदार्या ब्राह्मणा एव वयमुत्कृष्टा एव स्पर्शयोग्याश्चेति यद्यपि चिरं विधेयभूता वयं तथापि अपरैर्विद्वद्ब्राह्मणैर्नानुगृह्यामहे इति महान् विद्वेषोऽस्मासु ब्राह्मणानामिति क्षोभभूयस्त्वे तृतीया श्रेणिः स्वाभिमतमस्पृश्यमल्पायासेन साधयितुम्प्रबुभूषुः स्वदौर्बल्यस्वकल्पितविरोधफलं नारीहरणमेव प्रदर्श्य शुद्धिमपि शास्त्रापव्याख्यया करणीयपक्षे तिष्ठापयिषुश्च तथा प्रवर्तते यथा फलसिद्धिरपि क्वचिद् क्वचिद् भवति । अत्र च यानि शास्त्रवचनानि तत्श्रेणिस्थविद्वन्मानिभिरुदाह्रियन्ते युक्तयश्चोपन्यस्यन्ते, तद्बलादेव सर्वमेव चिकीर्षितं सेत्स्यतीति गूढोऽभिसन्धिः तानि च वचनानि—किरातहूणान्ध्रपुलिन्दपुक्कसाः इत्यादि यन्नामधेयश्रवणानुकीर्तनात् इत्यादि चाण्डालोऽपि द्विजश्रेष्ठो हरिभक्तिपरायण इत्येवं जातीयकान्यर्थवादरूपाण्यपि स्वार्थे प्रमाणीक्रियन्ते । युक्तयश्च देशकालपात्रोपयोगित्वेन धर्म्मपरिवर्तनं विना धर्म्मस्थितिरेवं न सम्भवति परिबर्तनपरमानव समाजाश्रयत्वाद्धर्म्मस्येत्येवमाद्याः । अत्र मानञ्च एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः निवर्तितानि धर्म्माणि व्यवस्थापूर्वकं बुधैरिति । एतेन मनीषिणां कालविशेषोपयोगित्वेन वर्तत एव धर्म्मपरिवर्तनाधिकार इति तदाशयः । अतः क्वचिद्ग्रन्थे चाण्डालादीनामस्पृश्यत्वोक्तावपि तन्निवर्तनमन्येषाञ्च परधर्म्मवतां शुद्ध्या सनातनधर्म्मप्रवेशनमधुना करणीयं समाजस्थितिविदामिति पातनिकया परस्तात्सर्ववर्णानामन्योन्यं पानभोजनादौ यौने च संसर्गं शास्त्रोक्तबाधातिक्रमः सुकर एव भविष्यति । तथा चाद्ये श्रेण्यौ यथा इण्डियननेशनाख्यजातिविशेषसङ्घटनमन्तरेण नास्ति पारतन्त्र्योच्छेदोपाया-

न्तरमिति मन्येते, तथाऽन्तिमाऽपि श्रेणिः प्रत्येति । तदिष्टसिद्ध्युपायश्च लोकानां क्रमशो धर्माचारभङ्गः । सोढे च प्राथमिकभङ्गे द्वितीयभङ्ग-साधनप्रयासः । तत्साफल्ये चाऽनन्तरभङ्गः । परिणतौ च 'इण्डियन-नेशना' ख्यैकजातिसृष्टिः । यदि परमाभिप्रायः प्रकाश्येत साम्प्रतं सा श्रेणिरेव पूर्वश्रेणिद्वयवत् पृथगवस्थाप्येत । तच्च प्रतीपमभीष्टसिद्धौ, तस्माच्छिखातिलकयज्ञसूत्रादिकमुपादेयं, वेदादिशास्त्राणि वाऽध्यय-नीयानि दर्शनीयश्च शास्त्रादौ समादरः, परं विधेयस्तु निबन्धस्ते चाऽनादरः तेषां स्पष्टभाषणस्य कथञ्चिदप्याख्यानस्याऽसम्भवात् । पूर्वश्रेणिद्वयाकांक्षिते सनातनधर्मविरुद्धे क्वचित्संस्कारेऽनभिमतिप्रद-र्शनं जनसमक्षं बाह्यसदाचारनिष्ठा चेति कौशलं तृतीयश्रेण्याः, यथाहि ऋजवः सनातन धर्मावलम्बिनो विश्वस्युरियमपि श्रेणिः सनातन-धर्मानुबन्धिन्येव भवतीति ।

ऋजवः सनातनधर्मिणस्तु चेत्यन्ते मा तावदेषु विश्वासो भव-द्भिः स्थापनीयः । सनातनधर्ममूलोच्छेदाय प्रवृत्तेयं श्रेणिः सनात-नधर्मकञ्चुकावृता भवत्समाजाभ्यन्तरमेव दूषयति । यथाहि जिगीषू राजा परचक्रमविभावितस्वरूपेण स्वपुरुषेण चारयन्दूषयति तद्वत् । स्मरन्तु भवन्तो हितोपदेशस्य सुहृद्भेदकथायाः । विमृशन्तु चेदं देशकालादिस्थित्या परिहर्तुमशक्यो ह्यनाचारः प्रवर्तते प्रायेण, यथा क्वचिद्देशे मीनभोजनम्, क्वचिच्च पलाण्डुभोजनमिति न च तदर्थं शा-स्त्रस्याऽपव्याख्यानं तत्परिवर्तनं वा कदाचिदपि चिकीर्षितम् । ततश्च हेतोस्तत्र तत्रापि देशे केचिदनाचारमपि परिहरन्तो दृश्यन्ते तत्तद-नाचाराणां शास्त्रसम्मतत्वोपपादने च तत्परित्यागवार्ता दूरापेता स्या त् । एवञ्चा दर्शभङ्गः प्रसज्यत इति । किं च शास्त्रपरिवर्तनमृतेऽपि शा-स्त्रप्रतिषिद्धानां केषाञ्चित् भक्ष्यपानीयानामप्युपयोगो बहुभिः क्रियते । का कथा पुनरस्पृश्यस्पर्शवराकस्य । नच तन्निवर्तनं भवति । यद्येवं कश्च नाम तत्तदनाचारप्रवर्तनाय तावान्प्रयास इति । एवञ्च किं प्रा-

स्म् मनीषित्वेन कल्पितानां केषाञ्चित् धर्मपरिवर्तनाधिकारस्थापनमेव प्रयासफलमिति प्राप्तम्। केनापि मिषेण स्थापिते च तदधिकारे सनातनधर्मोच्छेदः सुकर एव भविष्यतीति महदाशास्थानं तृतीयश्रेण्याः। ता इमाः श्रेण्यः पृथक् पृथक् पन्थानमाश्रयन्त्यः बहिरन्तश्च सनातनधर्माचारमाक्रामन्ति। येनैवं विप्लवो दृश्यते। आसां वैदेशिकशिक्षणजनितबुद्धिर्हि सनातनो धर्म इत्यलीकं नाम, ब्राह्मण्यधर्मश्चायं-बौद्धधर्मसङ्घर्षानन्तरमस्य सङ्घटनम्-माहम्मदीयाधिकारावसरे च स्मृतिशास्त्रनिगडबन्धः। वैदिकसमयश्च बौद्धसमयात्प्राक्तनः तदानीं यादृगाचारादिकमासीत्तस्याद्य नामापि नास्ति। वेदाश्च द्राविडजातिभ्यो भारतमाच्छिन्दतां कृषीवलानां सरलविश्वासगर्भगाथा, तत्रेतरेषां जातीयेतिहासो निबद्धः, तदानीं यस्याः सभ्यतायाः सूत्रपातः तदभ्युदयो महाभारतादिषु दृश्यते। प्रथमं ब्राह्मणादिविभागो नासीत्, पश्चात् गुणकर्माधीनस्तद्विभागः संज्ञामात्रेण प्रवृत्तः। ततश्च जात्याऽयं कल्पितो ब्राह्मणैः। एवं परिवर्तनं दृश्यते। जैनबौद्धधर्माभ्युदयानन्तरं ब्राह्मणैः संस्क्रियमाणे स्वधर्माकारे पुनः परिवर्तनं न जातम्। स हि सङ्कोचः कलिवर्ज्यप्रकरणे पुराणविशेषे प्रदर्शितः। एवं बहुशः परिवर्तमानेष्वपि धर्माचारेषु यदयं सनातनत्वव्यपदेशोऽपरिवर्तनीयत्ववादश्च स खलु निर्युक्तिको हेयश्च। ब्राह्मणकल्पिते ब्राह्मण्यधर्म एव जातिभेदप्रतिष्ठा। तया तदानीं जातेऽपि कियति कल्याणे पश्चात् तेनैवाधः पातः समजनि। यत्स्वरूपमधुनाऽपि भुज्यते। तस्मात्कल्याणकामिभिरिदानीं ब्राह्मण्यधर्मो दूरमपास्य इति। इत्येवंबुद्धयस्तिस्रः श्रेणयो यथा प्रवृत्ताः प्रवर्तन्ते च तदुपदर्शितं प्राक्। न चैतासु काचिदपि श्रेणिः सनातन धर्मावलम्बिनी वस्तुतो भवितुमर्हति। तन्मते धर्मे सनातनत्वस्यैवासिद्धेः। अन्तिमायाः श्रेण्याः सनातनधर्मघटितनामकरणं रूढिमात्राभिप्रायेण। नतु तत्रास्त्यवयवार्थोपयोगः। ये त्ववयवार्थसद्भावमुखेन सनातनधर्मघटितनाम संचक्षते ते

रिदानी मवहितै र्भवितव्यम् । नहि नामसारूप्येन वस्तुसाम्यमिति नियमः, अक्षादिनामसु व्यभिचारात् । ये हि मन्यन्ते अस्य धर्मस्य मूलं वेदः, तद्विदाञ्च स्मृतिशीले, वेदस्यैव व्याख्यानं पुराणानि इन्द्रवज्राहतानां वेदशाखानां स्मरणमूला च महर्षीणां स्मृतिः । नहि स्मृतयो वा पुराणानि वा वेदमतिवर्त्तन्ते, येषु वेदविरोधः प्रतीयेत तत्रापि समाधानमस्ति । न ह्यसौ वास्तवो विरोधः पुरुषमतिदोषादविरोधोऽपि विरोधवत् प्रतीयमानश्चेत् तत्र वेदस्यैव वलीयस्त्वं ग्राह्यम्-एतावता वेदस्य निरपेक्षप्रामाण्यं स्मृतीनाञ्च वेदापेक्षमिति पर्यवस्यति । वेदोऽपि द्विविधः प्रत्यक्षश्च परोक्षश्च । परोक्ष वेदः स्मृत्यानुमीयते । एवञ्च परोक्षवेदादपि प्रत्यक्षवेदस्य वलवत्त्वमुपतिष्ठते । युगभेदकृतोऽस्ति धर्मभेदः । सोऽपि शास्त्रादवगम्यते तन्मूलमपि ऋक्संहितायां मन्त्रलिङ्गादवगम्यते—यथा आघाता गच्छानुत्तरायुगानि यत्र जामयः कृणवन्नजामि । इत्यादि (१०म०१०सूक्तम्) मन्त्रोऽयं कस्यचित् कलियुगस्यान्तिमभागालम्बनोऽर्थवादः अधर्मभूयिष्ठो हि स समयः यत्र स्वसुर्भ्रातरि वृषस्या, वेदस्य नित्यवाक्यत्वे सर्वकालव्यापित्वात् तदन्तर्गतकालविशेषाश्रयत्वं न विरुध्यते, सर्वज्ञस्य सतः पूर्वापरकालस्यापि वर्त्तमानमूर्त्तवदपरोक्षत्वात् । न च यस्य मन्त्रस्य यस्तावदृषिः स एव तस्य रचयिता, तेनैवच रचनाकालस्तदानीन्तनव्यवहारश्च निर्णीयत इति साम्प्रतम् । जालनद्धमत्स्यानाम् ऋग्वेदाष्टममण्डलीयसप्तषष्टितमसूक्तस्य ऋषित्वपक्षानुपपत्तेः तेषां रचयितृत्वासम्भवात् ।

मन्त्रार्थस्तु-यमः स्वसारं यमीमाह ता तानि उत्तराणि युगानि आगच्छान् आगमिष्यन्ति घेति यत्र जामयो भगिन्यः अजामि अभ्रातरं कृण्वन् पतिं करिष्यन्तीति । भ्रातरं पतिं न करिष्यन्तीत्यर्थः । सत्यत्रेताद्वापरयुगानां काला वर्णव्यवस्थादिप्रचलनकाला वाप्युत्तरत्वेन ग्रहणमित्यभिगम्यते । उत्तरं नाम उत्कृष्टं वा आगा-

मि वेत्यन्यदेतत् ।

यत्र यत्र युगे यो यो धर्म आचरणीयः प्राक् सिद्धादेव शास्त्रात् तत् प्रतिपादनेन धर्मस्यास्य सनातनत्वं प्रवाहाविच्छेदात् । यथाहि हिमवतः सागरपर्यन्तमभिद्रवन्ती भागीरथी क्वचित् पीना क्वचित् क्षीणाप्यविच्छिन्नप्रवाहा गण्यते, तथायं वेदमूलो धर्मः ब्रह्मनिःसृतः स्मृतिपुराणादिमार्गेण प्रवहमाणः कदाचित्पुनः क्षीणो वा कदाचिदाकल्पान्तं ब्राह्मणेष्ववतिष्ठते इत्यस्य सनातनत्वं, पैन्यं क्षैण्यञ्च प्रागेव परिज्ञायते शास्त्रात् । अद्यतनोऽपि विप्लवः प्राचीनशास्त्रादेवावगम्यते यो हि प्राक् शतवर्षेभ्योऽविचिन्तित आसीत् । तानि च शास्त्राणि प्राक् त्रिशतवर्षेभ्यो विन्यस्तलिपिष्वद्याप्युपलभ्यन्ते । शास्त्रमतिवर्त्तमानानां धनलिप्सया यशोलिप्सया प्रभुसन्तोषसिसाधयिषया वा स्वकल्पनामात्रेण धर्माचारपरिवर्त्तनं कर्त्तव्यत्वेनाघोषयतां नास्त्येव बुधत्वं वा मनीषित्वम् । ये हीह परत्र च तुल्यबुद्धय स्त एव बुधाः, या च कामक्रोधाद्यप्रतिहता वेदादिशास्त्रतत्त्वज्ञानोपहिता बुद्धिः सैव प्रशस्ता मनीषा, ये तु मनीषिणो बुधा स्ते धर्मविकल्पेऽन्यतरनियमं प्रभवन्ति कर्त्तुं परित्यागव्यवस्थां वा काम्यस्य कर्मविशेषस्य । न त्वन्ये, नाप्यन्यथा । तस्माज्जातिभेदोऽप्यनादिर्वेदमूलः, न ह्यस्य कदाचिदपि दृष्टो विच्छेदः, अस्य सनातनत्वेन एतदाश्रयधर्मस्यापि युक्तं सनातनत्वम् । न चायं धर्मोऽधः पातहेतुरस्माकम् । अस्त्रशस्त्रादिवलस्यानियततया तत्प्राबल्यसम्भूतप्रकर्षेभ्यो वैदेशिकेभ्यो जातेऽपि पराजये सत्यामपि भौमपराधीनतायामस्माकं तत् पारसीकादिजातिवन्नोच्छेदः प्रत्युत शास्त्रादितत्त्वालोचन प्रकर्षश्च तत्रायमेव धर्मो हेतुः। अयं हि जातिमर्मभेदिनां परास्त्राणां निवारणायाभेद्यवर्मवदलम्भवति । साम्प्रतं तदवहेलनमेव शिशुमरणाधिक्यसङ्ख्याह्रासादौ च कारणं प्रत्यक्षमुपलभ्यते ।

ते हि सनातनधर्मिणः प्रागुक्तरूढ्या सनातनधर्मशब्दं प्रयुञ्जानस्य

श्रेणिविशेषस्य स्वतो महद् वैलक्षण्यमवगच्छन्तः सावधाना भवन्तु, नहि तेष्वात्मसमर्पणं कर्त्तव्यम् । स्पष्टमेवोद्घोष्यताम्—

यथा काष्ठमयो हस्ती यथा काष्ठमयो मृगः ।
तथा सनातनो धर्म स्तेषां ये शुद्धिवादिनः ॥

अत इदमुच्यते—

यदि शास्त्रेषु विश्वासो खेदो वा धर्मविप्लवात् ।
स्वमन्तश्चरशत्रुभ्यः समाजं रक्षत द्विजाः ॥
श्रेणित्रयं विशेषेण भीषणां श्रेणिमुत्तराम् ।
विदित्वा शास्त्रमार्गेण सञ्चरध्वं हितार्थिनः ॥

---

# कलिवर्ज्ज्यविचारः ।

[ निबन्धकः—श्रीश्यामाचरण कविरत्नविधावारिधिः ]

सुमनोभिः सगन्धाभिः सुमनोभिः सदाऽर्चितम् ।
गजाननगुरुं वन्देऽगजाननमधुव्रतम् ॥

कृतयुगादारभ्य द्वापरावसानपर्य्यन्तं मानवानामाकृतिप्रकृत्यादिगतमुत्तरोत्तरमपकर्ष निपुणदृष्ट्या पर्य्यालोचयद्भिः कलियुगजनिष्यमाणानां नितरां कुप्रवृत्तिमसामर्थ्यादिकं च प्रागेव विनिश्चित्य तेषां संयतीकरणपूर्वकं सकललोकसंरक्षणार्थं मनीषिभिः साधुमहात्मभिः कानिचित् कार्य्याणि कलौ निषिद्धान्यासन् । वेदानिषिद्धान्यपि तानि, तेषां वचनं वेदवत् प्रमाणमुररीकृत्य मुनिभिः पुराणेष्वन्तर्निवेश्य शास्त्रानुशिष्टतामापादितानि । अतः सनातनधर्म्मावलम्बिभिः सर्वैस्तान्यवश्यमनुवर्त्तनीयान्येवेति ।

यदि तानि कलौ वर्जितानि नाभविष्यंस्तदाऽऽर्य्यसमाजस्य सुमहाननर्थोऽघटिष्यत । तत्रैकमुदाहरणं संक्षेपतः प्रदर्श्यते ।—

वेदेन यद् गोहननं गोमांसभक्षणं च विहितमस्ति, तत् केवलं

श्राद्धे गोयज्ञे मधुपर्के च ज्ञेयं, नान्यत्रेति परत्र प्रदर्शयिष्यामः।
अतएव मानवीये धर्म्मशास्त्रे—

"मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः॥"

इत्यनेन मधुपर्कादेरन्यत्र गवादिपशूनां हिंसनमपि निषिद्धं किं पुनर्भक्षणम्। अन्यत्राविहितत्वादेव ज्ञानाज्ञानकृते गोवधे गोमांसभक्षणे च सर्वेष्वेव युगेषु प्रायश्चित्तं विहितम्। तत्रापि वक्ष्यमाणैर्वचनैर्गोयज्ञो मधुपर्के पशुवधः श्राद्धे मांसभक्षणं च कलौ निषिद्धम्। एवं सर्वस्मिन् युगे मधुपर्कादेरन्यत्र विहितप्रायश्चित्तमपि, कलावभक्ष्यतया सर्वथा निषिद्धमपि गोमांसमिदानीमत्युपादेयतया कति कस्यार्यवंशावतंसा ह्युदरपूरं भुञ्जते, तेषां संख्या न शक्यते कर्त्तुम्। अप्रतिषिद्धे तावत् सर्वेषामार्य्यवंश्यानां म्लेच्छयवनादीनां च यथेच्छं युगपद् भक्षणे प्रचलिते गोजातेरुच्छेदो ह्यचिरादेव समपद्यत। तथा सति, यज्ञादिवार्त्ता दूरादपास्यतां, बालवृद्धातुराणां प्राणधारणं कृष्यादिकार्य्यनिर्वहणं च सुदुर्घटं समभवत्।

अतः शास्त्रमविगणय्य यथेच्छाचरणं सर्वथा महानिष्टकरमिति। पुराणमपि शास्त्रं धर्म्मस्थानं च। तथाहि विद्यापरनामधेयं शास्त्रमष्टादशविधमुक्तं विष्णुपुराणे—

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्म्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः॥

अपिच—

"पुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्दश॥"

साक्षाद् भगवताऽपि श्रुतिस्मृतिपुराणादीनि सर्वाण्येव शास्त्राण्य-

भिप्रेत्य गीतासु गीतम्—

"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥
तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहार्हसि ॥" इति ।

ये पुनः पाश्चात्यशिक्षादीक्षिता वेदज्ञानविरहिता अपि महापण्डितम्मन्याः केवलं वेदमेव प्रमाणयन्तः श्रीभगवच्छङ्कराचार्य्यपादादिभिरपि समूलतया समर्थितं स्मृतिपुराणादिकं शास्त्रजातं ( १ ) न गणयन्ति, ते कथं वेदनिषिद्धेऽपि प्रणवोच्चारणादौ ( २ ) शूद्रादीन् प्रवर्त्तयन्ति, वेदविहितमपि यज्ञादिकं नासाकुञ्चनेन दूरतः परिहरन्तीति न विद्मः । "मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिता"स्ते वत देवद्विजनिन्दका अपि

( १ ) शारीरकभाष्ये श्रीभगवत्पादैरुक्तम्—

"इतिहासपुराणमपि व्याख्यातेन मार्गेण सम्भवन्मन्त्रार्थवादमूलत्वात् प्रभवति देवताविग्रहादि साधयितुम् । ···ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम् । तस्मात् समूलमितिहासपुराणमिति" ।

( २ ) 'तेनेयं त्रयीविद्या वर्त्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ने'ति ( छा० १।१।९ )— "आचार्य्यकुलाद् वेदमधीत्य यथाविधान"मिति ( छा० ८।१५।१ )— "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त" इति ( तै० सं० ७।१।१६ )—"सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति । 'सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात् स्त्री शूद्रः स मृतोऽधो गच्छति तस्मात् सर्वथा नाचष्टे । स आचार्य्यस्तेनैव सह मृतोऽधो गच्छती"ति ( नृ० ता० पूर्व० १।३)—इत्यादिनोपनयनसंस्कारवर्जितस्य शूद्रस्य वेदत्रयसाधारणप्रणवोच्चारणं वेदेनैव निषिध्यते ।

देवानाम्प्रियाः शास्त्राविहितमहाऽनिष्टकरचरपणग्रहणहिन्दुमाहम्मद-विरोध-दुर्भिक्ष- जलकष्टनिवारणादिषु नितान्तावश्यकेष्वपि बहुषु कर्त्तव्येषु सत्सु समुदासीना बह्वनर्थोदर्कशास्त्रनिषिद्धविधवाविवाह-युवतीपरिणय-सधवाकर्तृकपतिपरित्यागपूर्वकपत्यन्तरग्रहण-शुद्धिविधानास्पृश्यजनजलग्रहणादिप्रवर्त्तनेन परकीयसमाजानुरूपं स्वसमाजं कर्त्तुं चेष्टन्ते चेति । सर्वमिदं तेषां सन्निपातिकं विकारलक्षणमनुमिमीमहे । ये च पुनस्ताननुकूलयितुं, तत्र तत्र सर्वान् प्रोत्साहयितुं च शास्त्राणामपव्याख्यानं कुर्वन्ति, गोच्छेदनप्रकारमपि वेदमुद्घाट्य (१) प्रदर्शयन्ति, मूर्त्तिमद्भिरद्वैतवादैरिव श्रीभगवदाचार्य्यपादैरपि गीताभाष्ये (४।१३) प्रमाणतयोपन्यस्तं (२) ब्राह्मणोऽस्य मुखमासी''दित्यादि वेदप्रवचनं प्रक्षिप्तं च वदन्ति ते नाम मनुजकुलकेतवोऽपि धूमकेतव इवोत्थिता मन्यन्ते ।

शास्त्रज्ञा ब्राह्मणाः साकल्येन शास्त्रोक्तधर्म्मान् नानुपालयन्ति, पुत्रादीनपि पाश्चात्यशिक्षायां प्रवर्त्तयन्तीति कृत्वा ये तान् निन्दन्ति, शास्त्रं चावजानन्ति, तान् प्रति वक्तव्यमेतद्--धर्म्माचरणे भवतां मतिश्चेत् संजाता, तदा शास्त्राणां सदर्थं स्वयमेवालोच्य, तदशक्तौ शास्त्रज्ञेभ्य एव सम्यक् परिज्ञाय, सदारापत्याः साकल्येन स्वधर्म्मानाचरन्तु भवन्तः, सकलसदाचारपालनेनाभिभवन्तु सर्वान्, परम-

---

(१) यज्ञादौ गोवधस्य विहितत्वात् तत्प्रकारं प्रदर्शयतो वेदस्य कथं स्वेच्छानुसारेण यत्र कुत्र चिद् गोच्छेदने गोमांसभक्षणे च प्रामाण्यं सिध्यतीति तान्येव पण्डितप्रकाण्डानि जानन्ति । यदि तत्र दोषाभाव एव तेषां निश्चयेन ज्ञातस्तदा परोपदेशे पाण्डित्यप्रकाशात् स्वयं तदनुष्ठानेनादर्शीभवनं श्रेयस्तरं मन्यामहे ।

(२) यथा कथं चिद् यत् स्वमतस्यानुकूलं, तदेव प्रकृतं; यद् यत् प्रतिकूलं, तत्सर्वं प्रक्षिप्तमिति ब्रुवतां आश्चर्य्यं पाण्डित्यप्रतिभाप्राखर्य्यम् ।

धार्म्मिकतया चार्जयन्तु लोके परां प्रतिष्ठाम् । किं परकुत्सनेन शास्त्रकदर्थनेन वेति । किञ्च येषां वचनैर्नर्त्त्यन्ते श्रीमन्तस्त एव किं शास्त्रोक्तान् धर्म्मान् स्वप्रवर्त्तितानुपधर्म्मान् वा साकल्येन स्वयमाचरन्ति ?

अपिच सर्वेषां हि सभ्यजातीयानां सन्त्येव धर्म्मशास्त्राणि । तदनुसारेणैव ते सर्व एवाचरन्ति सगुणं वा विगुणं वाऽपि स्वधर्म्मम्। गीतासूक्तं भगवता—

"श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् ।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः" ॥ इति ।

नृसिंहपुराणेऽप्युक्तम्—

"आहारनिद्राभयमैथुनादि
सामान्यमेतत् पशुभिर्नराणाम् ।
धर्म्मो हि तेषामधिको विशेषो
धर्म्मेण हीनाः पशुभिः समानाः" ॥ इति ।

अतो मनुष्यत्वमभीप्सुभिः सर्वैरेव स्वधर्म्मोऽनुष्ठेयः । अमुकामुका धर्म्मं नाचरन्तीति कृत्वा स्वधर्म्मत्यागः स्वधर्मावज्ञा वा न युज्यते कर्त्तुम् । न ह्यमुकामुकाश्चौरा इत्यस्माभिरपि चौरैर्भवितव्यमिति कश्चिदस्ति नियमः । ये तु ब्राह्मणपण्डिताः साकल्येन धर्म्मं नाचरन्ति, न ते शास्त्रकृतः । ते खलु शास्त्रव्यवसायिनः शास्त्रसंरक्षकाश्च केवलम् । तेषामपराधेन शास्त्रकृतामपराधो न जायेत । तेषां कदाचरणेन च शास्त्रकदर्थना न करणीया । शास्त्रकृतस्तु भ्रमप्रमादविप्रलिप्साकरणापाटवविरहिता आप्तपदवाच्यास्तपःसिद्धा ऋषयः सर्वलोकहितैषणया बहु विचार्य्य या या व्यवस्थाः कृतवन्तस्तासां व्यतिक्रमजन्यं कुफलमापाततो बोधागम्यमपि पश्चात्सन्तापकरं चैतन्यसम्पादकं च भविष्यतीत्येष निश्चयः । अतः शिक्षितैः सर्वैरेव युवभिः प्रौढैः स्थविरैश्चार्य्यवंशजैरापातमनोहारिभिः परकीयवचनैरमाद्यद्भिः कुतर्कं परिहाय, धर्म्मो धर्म्म एवेत्यवधार्य्य पूर्वपुरुषाणां पदाङ्कमनुसृत्य सर्वा-

श्मना शास्त्रवचनं परिपालनीयमित्याशास्महे। इदानीं प्रकृतमनुसरामः।

कलिवर्ज्यानि यथा बृहन्नारदीये—

"समुद्रयात्रास्वीकारः कमण्डलुविधारणम्।
द्विजानामसवर्णासु कन्यासूपयमस्तथा॥
देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः।
मांसादनं तथा श्राद्धे वानप्रस्थाश्रमस्तथा॥
दत्तायाश्चैव कन्यायाः पुनर्दानं परस्य च।
दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ॥
महाप्रस्थानगमनं गोमेधश्च तथा मखः।
इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः॥"

समुद्रयात्रास्वीकार इत्यत्र समुद्रयातुः स्वीकार इति दत्तायास्तथा इति च पाठः क्वचित् पुस्तकेषु दृश्यते।

तथैवादित्यपुराणे च—

"दीर्घकालं ब्रह्मचर्य्यं धारणं च कमण्डलोः।
देवराच्च सुतोत्पत्तिर्दत्ता कन्या प्रदीयते॥
कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः।
आततायिद्विजाग्र्याणां धर्म्मयुद्धेन हिंसनम्॥
वानप्रस्थाश्रमस्याऽपि प्रवेशो विधिचोदितः।
वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा॥
प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम्।
संसर्गदोषः पापेषु मधुपर्के पशोर्वधः॥
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।
शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम्।
भोज्यान्नता गृहस्थस्य तीर्थसेवाऽतिदूरतः॥
ब्राह्मणादिषु शूद्रस्य पचनादिक्रियाऽपि च।
भृग्वग्निपतनं चैव वृद्धादिमरणं तथा॥

गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया ।
पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम् ॥
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्त्तितानि कर्म्माणि व्यवस्थापूर्वकं बुधैः ॥
समयश्चापि साधूनां प्रमाणं वेदवद् भवेत् ॥

(वानप्रस्थाश्रमश्चाब्धिप्रवेशो विधिचोदित इत्यत्र विप्रस्याब्धौ तु नौयातुः शोधितस्यापि संग्रह इति पाठान्तरमपि क चिद् दृश्यते)

( १ ) तत्र बृहन्नारदीये समुद्रयात्रास्वीकार इति, समुद्रयातुः स्वीकार इति पाठान्तरं च दृष्ट्वा बहवः सुधियः येन केनापि प्रयोजनेन कलौ समुद्रयात्रा शास्त्रनिषिद्धतया पापजनिकेति वदन्ति, व्याचक्षते च—समुद्रयात्रायाः स्वीकारोऽङ्गीकरणं, समुद्रपथेन गमनमिति यावत् यद्वा समुद्रयात्रेति तृतीयान्तं पृथक् पदम् । समुद्रगमनकर्त्रा सह पानभोजनादिस्वीकरणम् । समुद्रयातुः स्वीकार इति पाठे स एवार्थः स्पष्ट इति ।

एतत्तु नास्माकं मनोरमम् । यतो विहितानामेव कर्म्मणां कतिपयानि बृहन्नारदीयाऽऽदित्यपुराणाभ्यां निषिद्धानीत्यवश्यमभ्युपगन्तव्यम् । येषां विधिरेव नास्ति, तेषां निषेधः कथं संगच्छते ? वाणिज्यार्थं वा विहारार्थं वा, देशान्तरगमनार्थं वा समुद्रयात्राया विधिः स्वल्पज्ञत्वादस्माभिः कुत्रापि न दृष्टः । सर्वशास्त्रपारदृश्वभिर्दृष्टो न वेति न विद्मः । दृष्टश्चेत् तदाऽऽस्माकमयं विचारः प्रत्याहरणीय एवेति । आपातत एतदेव मन्यामहे—वाणिज्याद्यर्थं कलौ कृतायां समुद्रयात्रायां न किंचिदपि पातकं सुतरां प्रायश्चित्ताभाव इति । गम्यते स्म हि कलावपि वाष्परथप्रचलनात् पूर्वं स्थलपथेन समुद्रपथेन च श्रीपुरुषोत्तमक्षेत्रादितीर्थं जातं लोकैः । न क्रियते स्म च तदर्थं प्रायश्चित्तमिति ।

किंविषयिकेयं तावत् समुद्रयात्रा कलौ निषिद्धेति विध्यादिप्रद-

र्शन पूर्वकं परस्मिन् खण्डे यथामति प्रतिपादयिष्यामः । तदनन्तरं च च कमण्डलुविधारणादीन्यन्यान्यपीति ।

---

# आर्य्याणां नाम नियमः ।

( निबन्धकः—श्रीसतीन्द्रचन्द्र व्याकरणतीर्थः )

भगवता प्रजासृजा संसृज्य स्वकीय-कायावयवविशेषेभ्य श्चतुरो वर्णान् प्रदाय च तेभ्यो वृत्तिविशेषं स्वस्वीयानुकूलं, मिथः सम्मेलनेन च निराबाधं संसाध्य च स्वकीयं सांसारिककर्म्मस्तोमं, परमपुरुषार्थलाभे ते यथा स्युः समर्थास्तादृशं परस्परं प्रति व्यवहारादिक मभिसंज्ञाप्य वेदवचसा पटीयसा धर्म्मसंरक्षणच्छद्मना विभिन्न कर्त्तव्यमुपदिशता वेश-भूषादिकमपि मिथो विलक्षणमेतेषां व्यधायि—

तथाहि—

> ऊद्ध्वर्ध्वपुण्ड्रं द्विजः कुर्य्यात्त्रिपुण्ड्रं क्षत्रियस्तथा ।
> वैश्यस्त्रिकोणमालेख्यं वर्त्तुलं शूद्रजातिभिः ॥ इति ।

तथात्व एव वेद-विहित-हित-वर्त्मना व्यवहारादिना भाल-स्थल-तिलक-विलोकनेनैव आरादेव स्फुटतरमवगम्यते जात्या कोऽयमिति । न तत्रैवमेवमाधुनिकानामिव यथारीतिव्यवहारविरहाद् वेषभूषादि-विन्यासपारिपाट्याद्वा जाति-निर्णयविधुराणामहरहो भवितु मर्हति विविदिषा "ननु भो महाशय ! जात्या भवान् कीदृशः क' इति-, अतश्च नमस्काराशीर्वादादिरूप-परस्पर-व्यवहारोऽचिरमेव समपद्यत यथाशास्त्रं सन्दर्शनमात्रादेव तदानीम् ।

तत्रापि वर्णानां नामादिनियमेनापि प्रायशोऽजायत एव परिचयः प्राचीन-नयवर्त्मना, ततएव च काचनाप्यसुविधा मुधा नासीत्तदानीं वर्ण-वृत्ति-व्यवहार-लक्षण-वेष-भूषा-नामादि-विभेदेनेत्यत्र संशय-लेशोऽपि न पदमादधाति-कस्यचनापि चेतोविवरे धर्म्मभीरोः ।

वयमद्य समुद्घाटयितुमेतस्य सूक्ष्मातिसूक्ष्मतमं किमपि रहस्य मार्य्या-णां नाम-विधान-नयमवलम्ब्य प्रयतामहे-तथाचात्र मनुः—

नामधेयं दशम्यान्तु द्वादश्यां वास्य कारयेत् ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥

"जातकर्म्मेति पूर्वश्लोके जन्मनः प्रस्तुतत्वात् जन्मापेक्षयैव दशमे द्वादशे वाऽहनि अस्य शिशोर्नामधेयं स्वयमसम्भवे कारयेत्-अथवा "अशौचे तु व्यतिक्रान्ते नामकर्म्म विधीयते" इति शङ्खवचना-द्दशमेऽहनि अतीते एकादशाहे इति व्याख्येयम् । तत्राप्यकरणे प्रशस्ते तिथौ प्रशस्त एव मुहूर्त्ते नक्षत्रे च गुणवत्येव ज्योतिषावगते कर्त्तव्य-मित्यादि तट्टीकाकारः ।

ज्योतिषे च

ध्रुवमृदुचरवर्गे वाजिहस्तासमेते
क्षणमुदयमथैषां सत्सु केन्द्रस्थितेषु ।
दिगविशिवशताहे तत्कुलाचारतो वा
शुभतिथिगुणयोगे नाम कुर्य्यात् प्रशस्तम् ॥ इति ।

उत्तरफल्गुन्युत्तराषाढोत्तरभाद्रपदरोहिणीचित्रानुराधा-मृगशि-रोरेवतीस्वातीपुनर्वसुश्रवणाधनिष्ठाशतभिषाश्विनीहस्तानक्षत्रान्यतमेषु ( मतान्तरे पुष्यानक्षत्रेऽपि ) केन्द्रसंस्थेषु च शुभग्रहेषु जननदिवसा-द्दशम-द्वादशैकादश-शततमदिवसान्यतमेषु-कुलाचारानुसारेण शुभ-तिथि-शुभयोग-करणेषु वालकानां प्रशस्तनामकरणं प्रशस्तम् ।

भणति चात्र ज्योतिर्विदामग्रणीराचार्य्यो गर्गमुनिरपि-यथा—

आदौ घोषवदक्षरं यरलवान् मध्ये पुनः स्थापयेत्
अन्ते दीर्घविसर्जनीयरहितं नाम प्रयत्नात् कृतम् ।
...........................................................
...........................शुभकृत् पुंसां समैरक्षरैः ॥

पुंसां नामनि आदौ घोषवदक्षरं ( गघङ, जझञ, डढण, दधन,

वभम, इत्याद्यन्यतमं ) प्रयोक्तव्यम् । मध्ये च "यरलवा"न्यतमम् । अन्ते च दीर्घाक्षरं ( आईऊ इत्याद्यन्यतमं ) विन्यस्तव्यम् । परन्तु विसर्गं वर्ज्जयेत् । तथाच पुरोधाय यत्नमेवम्विधमभिधानं विदधीत,- तद् यथा स्यात् शुभसंसूचकं समाक्षरं अन्ते च शर्म्मवर्म्माद्युपपद- बृंहितञ्चेति । तथाच--विष्णुपुराणमपि—

ततस्तु नाम कुर्वीत पितैव दशमेऽहनि ।
देवपूर्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम् ॥
शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंश्रयम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥
नार्थहीनं नचाशस्तं नापशब्दयुतं तथा ।
नामङ्गल्यं जुगुप्स्यं वा नाम कुर्य्यात् समाक्षरम् ॥
नातिदीर्घं नातिह्रस्वं नातिगुर्वक्षरान्वितम् ।
सुखोच्चार्य्याक्षरं नाम कुर्य्याच्च प्रवणाक्षरम् ॥ इति ॥

( विष्णु पुं ३ अंशे १० अः )

जात कर्म्म समनन्तरं समतीते जननाद्दशमे दिवसे ( मतान्तरे दशमे वा दिवसे ) हरि शिवेत्यादिकं अथवा स्वकीयकुलदेवतावाचकं शर्म्माद्यन्तं नाम विदध्यात्–तथाच श्रुत्यन्तरमपि "एकादशाहे पिता नाम कुर्य्यादिति । अत्र च तट्टीकाकारः श्रीधरस्वामी–"दशमेऽहनि अतीते इति शेषः तच्चाशौचान्तोपलक्षणम् । अत्रैव कालान्तरम- प्याह यथा—

नामधेयं दशम्याञ्च केचिदिच्छन्ति पार्थिव ।
दशम्यामथवा रात्र्यां मासे पूर्णे तथा परे ॥

अतएव चैतावता देवपूर्व मर्थात् कुलदेवतावाचकनामपुरःसरं "कुलदेवता सम्बद्धं नाम कुर्य्यादिति" शङ्खोक्तेः-शर्म्मवर्म्माद्यन्तं,- नराख्यं-पुरुषवाचकं तदिति-यथा 'हरिशर्म्मा' 'शिवशर्म्मा' 'नारा- यण शर्म्मा' राम शर्मेत्यादि सिद्ध्यति ।

अर्थहीनं 'अश्वडिम्ब' 'ब्राङ्क' फ्राङ्क-इत्यादिकं-अप्रशस्तं च 'काङ्गाल' 'राखाल'-प्रभृतिकं-अपशब्दयुतं 'गुह्यकेशा' दिकं, अमङ्गल-संसूचकं-'निर्वंश' 'वंशनाश' 'सर्वनाशेत्यादिकं'-जुगुप्स्यं -पूय-शोणित मलमूत्रादिवाचकं-इत्यादि नाम न कुर्य्यादित्यर्थः। परन्तु सःमाक्षरं निरुक्तदोषरहितं प्रागुक्तविधानानुसारि नाम विदध्यादिति भावः। अन्यच्च-अतिदीर्घं ( वृहत् ) 'शशधरशेखरेश्वर'-'पद्ममालयेश्वरी प्रसाद' प्रभृतिकं- तथात्यन्तक्षुद्रं-'क' 'सु' 'म' स दित्यादि, अतिगुर्व्वक्षरयुतं-'सर्वाणीस्वामी' 'रुद्राणी भर्त्ता' इत्यादिकं परिहेयाभिधानं सुखोच्चार्य्यं-सरलाक्षरं प्रवणाक्षरं ( गुरुक्रमेण लघूत्तराक्षरं ) देवतादिवाचकं नाम कुर्य्यादिति पर्य्यवसितम् ॥

इदमत्रावधेयम्-महामहोपाध्याय स्मार्त्ताचार्य रघुनन्दन भट्टाचार्य्यैः संस्कारतत्त्वे यम संहितायाः-

शर्म्मा देवश्च विप्रस्य वर्म्मा त्राता च भूभुजः।
भूतिर्गुप्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

इति वचन बलेन ब्राह्मणस्य 'देवशर्म्मा' क्षत्रियस्य "त्रातृवर्म्मा" वैश्यस्य "भूतिगुप्तः" शूद्रस्य 'दासः' इत्येवं नामान्ते योजनीयमिति सिद्धान्तितम्। तदनुसारेणैव बङ्गीया गौड़ाः नामान्ते देवशर्म्मेत्यादि प्रयुञ्जते।

किन्तु महामहोपाध्याय वाचस्पतिमिश्रपादाः एतद्वचनस्य व्याख्यान मन्यथैव विविधयुक्तितर्काद्यवतारणपुरःसरं द्वैतनिर्णयग्रन्थे समाललम्बिरे। एतन्मते नाम्नः पूर्वभागो देवादिवाचकः-उत्तरस्तु शर्म्माद्यन्तः। मिथिलादि प्रदेशेऽपि प्रायोव्यवहारोऽप्येवमेव।

एवञ्च निरुक्त-निखिल वचनानुसारेण एवमुपपन्नो नाम नामकरण नियमो यथा-वाचस्पतिमिश्रमते ब्राह्मणस्य 'सोमशर्म्मा' 'हरिशर्म्मा' 'शुभङ्करशर्म्मा' 'चिरञ्जीव शर्म्मा' 'वंशधरशर्म्मा' 'कुलचन्द्रशर्म्मा' 'रामशर्म्मा' 'जयचन्द्रशर्मा' इत्यादि-स्मार्त्तमते च तत्र देवशर्म्मान्ति

मिति विशेषः-क्षत्रस्य-'भीमवर्म्मा' 'युधिष्ठिरवर्म्मा' 'दशरथवर्म्मा' गौड़ीयमते भीमत्रातृवर्म्मा-इत्यादि-वैश्यस्य 'हरिगुप्तः' चन्द्रगुप्त इति गौड़ीय मते च 'हरिभूतिगुप्त' इत्यादि । शूद्रस्य 'हरिदासः' 'कृष्ण-चन्द्रदास' इत्यादि ।

अतएव मनुस्मृतिः—

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य वलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥
शर्म्मवद्ब्राह्मणस्य स्यात् क्षत्रियस्य वलान्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्य युक्तकम् ॥
(२अः-३१-३२)

अत्र च कुल्लुकभट्टः-"ब्राह्मणादीनां यथाक्रमं मङ्गल-वल-धन-निन्दा वाचकानि शुभ-वल-वसुदीनादीनि नामानि कर्त्तव्यानि ।३१। इदानीमुपपदनियमार्थमाह शर्म्मवद्ब्राह्मणस्येति,-एतेषां यथाक्रमं शर्म्म-रक्षा-पुष्टि-प्रैष्यवाचकानि कर्त्तव्यानि । शर्म्मभूतिदासादीनि उपपदानि कार्य्याणि उदाहरणानि तु शुभशर्म्मा, वलवर्म्मा, वसु-भूतिः, दीनदास इत्यादि" ।

तथा च मनुनयेऽपि ब्राह्मणस्य "हरिशर्म्मा," "रामशर्म्मा" हरिराम शर्म्मा"—क्षत्रियस्य "परन्तपवर्म्मा" "रणजिद्वर्म्मा" "शत्रु-जिद्वर्म्मा" "युधिष्ठिर वर्म्मा"- वैश्यस्य-"धनगुप्तः" "वसुभूतिः" शूद्रस्य "दीनदासः" "दुःखिदासः""किङ्करदासः" इत्यादि समायातम् ।

जीवतामभिधाने च श्रीपूर्वकत्वं यथा—

देवं गुरुं गुरुस्थानं क्षेत्र क्षेत्राधिपं तथा ।
सिद्धं सिद्धाधिकारांश्च श्रीपूर्व्वं समुदीरयेत् ॥

इति राघवभट्टधृतप्रयोगदर्शनात् स्वर्गकामित्वादिना सिद्धोऽधि-कारो येषां नराणामित्यनेन जीवतां श्रीशब्दादित्वं नाम्नो न मृताना-मिति शिष्टाचारः । प्रायश्चेत्थमखिलमाचारमार्य्याणां व्यवहारादि-

कञ्च शास्त्रमूलकमेवावलोकयामो वयमहर्निशमिति भारतविषयवासिनां प्रथितप्रथैव प्रमाणम् ।

इत्थमेव च नारीणामपि नामविधाने विशेषो यथा—

स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।
मङ्गल्यं दीर्घवर्णान्त माशीर्वादाभिधानवत् ॥

( मनुः २।३३— )

अयमाशयः—, स्त्रीनामकरणमेवं भवितव्यं यथा कार्कश्यं न तत्र प्रतीयेत, नवार्थहीनता । परन्तु उच्चारणमात्रेण सर्वेषामेव बोधविषयः अथच श्रुतिमधुरं चित्तविनोदकञ्च तदुपरि शुभसूचकं 'आ' 'ई' प्रभृति दीर्घवर्णान्तं आशीर्वाद वाचकञ्च यथास्यात्तथा रक्षणीयं नामेति । यथा "कुललक्ष्मीः" "श्रीसुन्दरी" "उमातारा" "तारासुन्दरी" "चन्द्रतारा" "शिवसुन्दरी" 'हरप्रिया' "रामप्रिया" गङ्गासुन्दरीत्यादि ।

गोभिलोऽपि "अयुग्मदान्तं तथा स्त्रीणां" अयुग्मं—अयुग्माक्षरं, दान्तं—दकारान्तं, यथा "यशोदा" "कुलदा" "शिवदा" सुखदा' इत्यादि।

यथा हि ब्राह्मणादीनां शर्म्माद्यन्तं नाम, तथा ब्राह्मण्यादीनामपि उपपद मेवं यथा—"देव्यन्ताश्च स्त्रियः सर्वाः-दास्यन्ताः शूद्रयोनयः" (कर्म्म विपाके)—एतद्वचनानुसारेणैव प्राचामाचिरकालं प्रचारो नाम्नामन्ते ब्राह्मण-क्षत्रिय वैश्यस्त्रीणां देवीति-शूद्रनारीणाञ्च दासीति भूरि दरीदृश्यते ।

किन्तु हन्त !! इदानीन्तनाश्चार्वाचीना विजातीयभाषाऽभ्यासरुचिकाः विजातीयधर्म्मकर्म्मानुकरणपरायणाः हिन्दुव्रुवाः परिहाय सुरनिकर-परिगृहीत-सुमनोमनोहर-प्रचुरतर माहात्म्यसात्मीकृतं देवीत्युपपदं तत् परिवर्तें च नराणामिव-भट्टाचार्य्य मुखोपाध्याय वन्द्योपाध्यायोपाध्यायभादुड़ीसेनगुप्तवसुघोष शास्त्रीत्यादिपद मादाय अनुपदमदः स्वच्छन्द मनुसन्दधति चाभिधानं रमणीनामभिनवमवनीतले प्रत्यक्षमभीक्ष्णं कारयन्ति च कति कत्यद्भुतानीति ।

अपिच—

नर्क्षवृक्षनदीनाम्नीं, न च भीषणनामिकाम् ।
पक्ष्यहि प्रैष्यनाम्नीं च नच पर्वतनामिकाम् ॥

नक्षत्रनामयथा—अश्विनी भरणीत्यादि । वृक्षनाम तरुभूरुहहरि-तकी द्रुमशाल्मलीत्यादि । नदीनाम यथा-( गङ्गा यमुने विना ) स-रयू गोदावरी कावेरीत्यादि । भयङ्कर-नाम यथा—रौद्री, भीमा भैरवी चामुण्डेत्यादि । पक्षिनाम यथा-काकी शुकी वकी कुररीत्यादि । स-र्पनाम यथा वासुकी अनन्ता पन्नगी भुजगीत्यादि । प्रैष्यनामयथा दासी किङ्करी भृतकीत्यादि । पर्वतनाम यथा—गिरि मेरु सुमेरुशैली नगीत्यादि । तथा च निरुक्त नक्षत्रादिवाचक नाम न कुर्य्यादित्यर्थः ।

हाहाहन्त ! उच्चैरयं प्राच्यां नयो नार्वाचीनाना मिदानीं रुचिकरः परिवर्त्तिनि संसारे प्रभावाच्च कालस्य सर्वमेव प्रायो विपरिणमते अन्यथा, साम्प्रतं नाम ब्राह्मणाना मपि प्यारिचाँद माखनलाल दुलाल जहरलाल ( असंस्कृतं ) राखालदासेत्याद्यभिधानं शूद्रस्यापि भूदेव द्विजेन्द्रादिकं अन्धस्य पद्मलोचन नामवत्सुमनसामुपहास-रोष विस्मयादिजनक मनारतं दरीदृश्यते ।

प्रागितो मुनिजननयवर्त्मानुसारेण देवादिनाम करणे तु स्वेच्छया-निच्छया वा तनयादीना माह्वाने अन्ततः पञ्चकृत्वः सप्तकृत्वो वा भगव-न्नामकरणं भवति, भवति च तेनापि पुण्यार्ज्जनं, अन्तिमे च समुप-स्थिते काले कृतान्ते दुर्द्दान्ते चोपगते ममतया वा मायया वा स्नेह-वात्सल्याद्यातिशय्याद्वा देवनामोच्चारणेच्छया वा प्रायश एव वृद्धाः पुत्र माह्वयन्ति नामग्राहमतिकरुणं मरणविधुरा भीरवो नामोच्चारण-माहात्म्यात्तत एव च-शिव विष्णु ब्रह्मादि लोक मध्यासते विहाया-शुचिप्रायं पाञ्चभौतिकं कायम् । श्रीमद्भागवतीय मनाचाररतस्य दस्यो र्दुष्टस्य पापीयसो रहस्य भजामिलस्योपाख्यानं सहावधान म-वधीयताम्-सहि दस्यु रासन्नसमये 'नारायणाभिधान मात्मजं ना-

रायण ! नारायण ! नारायणेति नामग्राह माहूतवानित्यन्तिमे काले नारायण नामोच्चारण-प्रभावात् वैकुण्ठलोक मध्युवासेत्येवं पुराणादिषु वहुतर मनु सन्धीयतामिति ।

द्व्यक्षरं चतुरक्षरं वा नामेति गोभिलानुशासनं नातिदीर्घमित्यादिव्यासशासनञ्चापास्य अप्रसिद्धाप्रशस्ताभिनवसार्थानर्थवाग्विघटितं, दीर्घदीर्घं, देवादिवाचकवाग्विरहितं क्वचन वा तत्सनाथीकृतमपि शास्त्रानभिप्रेतं ये नाम सांप्रतमसाम्प्रतमेव विदधति नाम नराणां निःशंकं "शशाङ्कशेखरेश्वर" "कमलेश्वरीप्रसाद" 'खगेन्द्र' 'नगेन्द्र' 'रमणीरञ्जन', "मोहिनीमोहन" प्रमदाचरणेत्यादिक-मभिधानम्, नारीणामपि तथैव मयीवालाद्यन्तं मोहमयी कुसुममयी दलमयी, सरुवाला' 'यतिवाला' 'किरणवाला' अनिला वाला' 'कुन्तलवाला' इत्येवं, यथातथा भवतु शब्दः अन्ते च वालां 'संयोज्य यथेच्छमाचरन्ति नाम नामकरणे, परन्तु 'निस्तारिणी' 'जगदम्बा' 'हरिप्रिया' 'रामप्रिया' 'हरसुन्दरी' 'शिवसुन्दरी' 'गङ्गा सुन्दरी' 'अन्नपूर्णा' 'सुभद्रा' 'सावित्री' सत्यवतीत्यादि नाम नीरसं दुःश्राव्यं निष्प्रेम अमनोहरं वृद्धाप्राप्य मिति मन्यमाना निन्दन्ति मन्दा निःसन्देहं दुरन्ताः शास्त्रकारान्-विकाश्य च दशनश्रेणीः व्यवहरन्ति च नितान्तं तान् प्रति क्रूरं-किं नाम तान् वय मभिदधामः ? "अहोरे ! गरीयान् कालः समायातः यदश्रुतमपि श्रावयति अदृष्टमपि दर्शयति—नह्ययं दर्पणस्यापराधो यदन्धो न पश्यति" नह्यरुण-किरणाना मयमपराधो यज्जीवलोकमुलूको नावेक्षत" इत्यादिकमेव नः समाश्वसनमिदानीम्। अत एव पुरा केनचनेद माद्दिष्टम्—

"कस्मै तत् कथयामि को ममकथा मामूलतः श्रोष्यतीति शम् ॥

---

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

वाराणस्या मागामिकार्त्तिककृष्णनवमीतो दिनत्रयभाविनि निखिलभारतवर्षीयब्राह्मणमहासम्मेलने सनातनधर्मप्राणभूतानां चिरप्रसिद्धानां विभिन्नानां सम्प्रदायाचार्यमहोदयानां यानि सहानुभूतिसूचकानि प्रतिष्ठापत्राण्यस्माभिः समासादितानि तेषु कानिचित् पाठकानां कौतूहलविनोदाय प्रकाश्यन्ते । एतदवलोकयतां न खल्वेतदविदितं स्थास्यति यत् तत्तत्पीठाधीश्वरैः पूज्यचरणैराचार्यवरैः सम्मेलनस्यास्य निर्विघ्नतासम्पत्तये कियन्त आशीर्वादाः प्रदत्ताः कियान् प्रमोदः कियान् वा उत्साहः प्रकटित इति ।

---

[ १ ]

श्रीचन्द्रमौलीश्वर ॥

### ( मुद्राचिह्नम् )

स्वस्ति श्रीमदखिलभूमण्डलालंकार त्रयस्त्रिंशत्कोटिदेवतासेवितश्रीकामाक्षीदेवीसनाथश्रीमदेकाम्रनाथश्रीमहादेवीसनाथश्रीहस्तिगिरिनाथसाक्षात्कारपरमाधिष्ठानसत्यव्रतनामांकितकाञ्चीदिव्यक्षेत्रशारदामठसुस्थितानाम् अतुलितसुधारसमाधुर्यकमलासनकामिनीधम्मिल्लसम्फुल्लमल्लिकामालिकानिष्यन्दमकरन्दझरीसौवस्तिकवाङ्निगुम्भविजृम्भणानन्दतुन्दिलितमनीषिमण्डलानाम् अनवरताद्वैतविद्याविनोदरसिकानाम् निरन्तरालंकृतीकृतशान्तिदान्तिभूम्नाम् सकलभुवनचक्रप्रतिष्ठाविख्यातयशोऽलंकृतानाम् निखिलपाषण्डषण्डकण्टकोद्घाटनेन विशदीकृतवेदवेदान्तमार्गषण्मतप्रतिष्ठापकाचार्याणां श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीजगद्गुरुश्रीमच्छंकरभगवत्पादाचार्याणाम् अधिष्ठाने सिंहासनाभिषिक्तश्रीमन्महादेवेन्द्रसरस्वतीसंय-

मीन्द्राणाम् अन्तेवासिवर्यश्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्रीपादैः—

श्रीमत्समस्तसद्गुणमणिगणालंकृतानां निगमोक्ताचारनिरतानां श्रीसाम्बसदाशिवचरणारविन्दसपर्यापरिलब्धकमलाकटाक्षवीक्षणालंकृतानां पण्डितप्रवरश्रीपञ्चाननतर्करत्न महामहोपाध्याय श्रीवामाचरणन्यायाचार्य, महामहोपाध्याय श्रीलक्ष्मणशास्त्रिद्राविड़, महामहोपाध्याय पण्डितश्रीमदनन्तकृष्णशास्त्रिणां सर्वाभीष्टसिद्धये क्रियते नारायणस्मृतिः ।

भवन्तः सर्वेऽपि श्रीकाश्यां ब्राह्मणमहासम्मेलनमेकं श्रीदुर्गापूजावसरे संघटयिष्यन्तीति श्रुत्वा नितरामेव सन्तुष्यामः । अधर्मसमुन्मेषप्रचुरेऽस्मिन् समये भवतामुद्योगं धर्मनिर्णयार्थं च समुचितमुपायमनुमन्यामहे । विश्वसिमः सर्वेऽप्यास्तिका ब्राह्मणमहासम्मेलनेऽत्र समुचितसहयोगप्रदानेन सफलोद्यमान् भवतः करिष्यन्तीति । आशास्महे श्रीचन्द्रमौलीश्वरप्रसादेन सफलप्रयत्ना भवन्तः श्रेयांसि भूयांसि समश्नुवीरन्निति ॥

मुखाम्—आलप्पुला
विभव सं० चैत्रकृ० ॥ १३ ॥ } नारायणस्मृतिः ।

---

[ २ ]

संख्या ३०४ श्रीचन्द्रमौलीश्वर ।

श्री विद्यशङ्करः प्रसन्नः ।

## ( मुद्राचिह्नम् )

श्रीमत्परमहंसपरिव्राजकाचार्यपदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाध्यष्टाङ्गयोगानुष्ठाननिष्ठागरिष्ठतपश्चक्रवर्त्यनाद्यविच्छिन्नगुरुपरम्पराप्राप्तसाम्प्रदायकषण्मतस्थापनाचार्यव्याख्यानसिंहासनाधीश्वरसकलवेदार्थप्रकाशकसा-

ङ्ख्यत्रयीप्रतिपालकसकलनिगमागमसारहृदयवैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादिराजधानीविद्यानगरमहाराजधानीकर्णाटकसिंहासनप्रतिष्ठापनाचार्यश्रीमद्राजाधिराजमहाराजगुरुमण्डलाचार्यतुङ्गभद्रातीरवासऋष्यशृङ्गगिरिपुराधीश्वरश्रीशृङ्गगिरिश्रीविरूपाक्षपिनाकिनीतीरवासश्रीपुष्पगिरिश्रीशैलश्रीअलंपूर्यादिसमस्तपीठाधीश्वरश्रीमदभिनवोद्दंडविद्यनृसिंहभारतीगुरुपादपद्माराधकश्रीमदभिनवोद्दंडविद्याशंकरभारतीकरकमलसंजातश्रीमदभिनवोद्दंडविद्यानृसिंहभारतीस्वामिनाम्—

अस्मदत्यन्तप्रियशिष्येषु सद्धर्मरक्षणबद्धश्रद्धेषु महामहोपाध्यायविरुदाङ्कितेषु श्रीपञ्चाननतर्करत्नभट्टाचार्यवामाचरणभट्टाचार्यद्राविडलक्ष्मणशास्त्रिद्राविडपण्डितानन्तकृष्णशास्त्रिषु विषये नारायणस्मरणपूर्विका आशिषस्समुल्लसन्तुतराम् ।

भवद्भिः प्रवर्तिष्यमाणां ब्राह्मणमहासम्मेलनात्मिकां सभां श्रुत्वा नितरामानन्दाब्धिनिमग्नस्वान्तास्स्मः ।

सर्वतः प्रसृतेऽधर्मसमुन्मेषे तच्छमनाय क्रियमाणस्यास्योद्यमस्य समुचितं साहाय्यं क्रियासुः सनातनधर्माभिमानिनस्सत्पुरुषाः । धर्मरक्षणबद्धादराणां भवतामुद्योगं निर्विघ्नं सफलयतु श्रीभगवान् सर्वज्ञस्सर्वशक्तिस्सपरिवारोऽस्मदिष्टदेवश्रीचन्द्रमौलीश्वर इति चाशास्महे ।

निवासस्थलम् मानकोंडूरु<br>
करीनगरं जिला नजां<br>
विभवसंवत्सरे अधिकश्रावणशुक्लसप्तमी भौमवासरः } इति नारायणस्मृतिः

---

( २ )

## मुद्राचिह्नादिकम् ।

स्वस्ति श्रीमत्परमहंस परिव्राजकाचार्यवर्यत्वाद्यनेक गुणसंपन्न पदवाक्यप्रमाण–पारावार–पारंगतसर्वतन्त्र–स्वतन्त्र–यमनियमासन–

प्राणायाम प्रत्याहार ध्यानधारण समाध्यष्टांगयोगनिरत श्रीभैष्मीसत्यासमेत श्रीकालीयमथनश्रीकृष्णपदपद्माराधक श्रीमदानंदतीर्थाचार्य शुभसंप्रदायप्रवर्तक श्रीनृसिंहतीर्थीयवंशपरंपराप्राप्त श्रीविबुधाधिराज तीर्थंकर कमलसंजात श्रीविबुधप्रियतीर्थ श्रीमच्चरणैः—

अस्मत्संस्थानोपरि मुख्याभिमानि श्रीमदनन्तकृष्णशास्त्रिषु कृता हरिस्मृतयो लसंत्वतितराम् । अद्य विभवसंवत्सरीयाषाढ़शुक्ल दशमी पर्यंतं श्रीकृष्णपूजा जपव्याख्यानादि कर्मकुर्वंतो वयं श्रीघटिकाचलस्थाः कुशलिनः—युष्मदीय कुशलावेदकपत्रप्रेषणेन संतोषणीया वयम् । सांप्रतं—भवद्भिरुपक्षिप्तां काशीब्राह्मणमहासम्मेलनवार्तामुपश्रुत्यातीव सतुष्टान्तरङ्गा वयं प्रकृतमहासम्मेलनकार्यसिद्धये सर्वदा साभिनन्दनं शुभाशीर्वादान् वितरामः । सम्मेलनावसरेऽस्मन्मठात् द्वौ पण्डितौ द्विशतरूप्याणि च प्रेषयिष्यन्ते इत्यनेकश्रीमन्नारायणस्मरणानि ।

 

## अखिलभारतवर्षीयब्राह्मणमहासम्मेलनम्—

श्रीकाश्यामद्य कार्यनिर्वाहकसमित्येदमस्ति निर्धारितम्—यत् समालोच्येषु शुद्धि-विवाहजातिपरिवृत्त्यादिषु एका प्रश्नावली श्रीमतां पण्डितप्रवराणां सविध उपस्थापनीया यस्या उत्तराणि समालोचयितुं तत्तद्देशीयानां विशिष्टानां पण्डितानामुपसमितिरेकाऽचिरेण संघटयिष्यते ।

उपसमितिश्चेयं सम्मेलनात्पूर्वं कार्तिककृष्णप्रतिपदमारभ्य २७-१०-२८ कार्तिककृष्णाष्टमीपर्य्यन्तं सर्वेषामुत्तराणां सप्रमाणं विचारविनिमयेन तत्त्वविनिर्णयबुद्ध्या विमर्शनेन प्रारप्स्यतीत्यपि कार्यनिर्वाहकसमित्याश्रयोपदिप्यते । आशास्यते पण्डितप्रवराः सर्वेऽप्याश्विनकृष्णाष्टमीतः पूर्वम् ( ६-१०-१९२८ ) स्वीयानामुक्तप्रश्नावल्युत्तराणां सदयं प्रेषणेनानुग्रहीष्यन्तीति । अन्ते पुनरिदं सप्रश्रयं प्रार्थ्यते—

यदुत्तरसंग्रहावसरे निबन्धकाराद्दृतमीमांसापद्धतिरेव यद्यवलम्ब्यते, तर्हि महाननुग्रहः स्यात् ।

प्रश्नावल्या अस्याः समालोचनं ये कुर्वन्ति ये च न तेषां सर्वेषां महासम्मेलनावसरे विचारसभावसरे वा समुपस्थाय कार्येषु सहयोगं दित्सवः तत्तत्सभाद्वारा तत्तद्विद्यालयद्वारा, तत्तत्संस्थानद्वारा, स्वयं वा स्वनामधामाद्यचिरेण प्रेषयन्त्विति सप्रश्रयमभ्यर्थ्यते ।

प्रश्नाः—

१ः—स्त्रीणां पुंसां वा विवाहकालः कियदवधि कुत आरभ्य शास्त्रसम्मतः ?

२ः—तत्र वर्तमानपरिस्थित्यनुसारेण शास्त्रानुसारेण च नियमनं कियदवधि योग्यम् ?

३ः—रजःप्रवृत्त्यनन्तरं विवाहस्य मुख्यत्वमुत गौणत्वमाहोस्वित् आपत्कल्पत्वम् ?

४ः—ऋतुदर्शने वृषलीत्वबोधकानां वचनानां तात्पर्यं किम् ?

५ः—ब्राह्मणादिजातिषु अवान्तरश्रेणीनां परस्परं विवाहसम्बन्धः शास्त्रसम्मतो न वा ?

६ः—धर्मज्ञाः के वा कीदृशं वा धर्मपरिवर्तनं कर्तुमर्हन्ति ? किं सङ्कोचनाख्यम् ( उत प्रवर्तनाख्यं धर्मपरिवर्तनम् ) ।

७ः—विधवाविवाहो दम्पत्योर्विवाहमोक्षश्च शास्त्रदृष्ट्या योग्यः, उत वा विरुद्ध आहो निन्द्यः ?

८ः—अस्पृश्यानामस्पृश्यत्वं जातितो वा कर्मतो वा ?

९ः—म्लेच्छानामन्त्यजानां च स्पर्शविषये सभाप्रवेशविषये कूपोदकग्रहणविषये देवालयप्रवेशविषये चान्येभ्यः तारतम्यरक्षणं योग्यं न वा ? यदि योग्यं तदा कीदृशं तारतम्यं रक्षणीयम् ?

१०ः—भागवतधर्मदीक्षा जात्युत्कर्षप्रापिका वा नवा ?

११ः—यवनादिजातिः किं कर्मकृता, उत जन्मसिद्धा ?

१२ः—भागवतधर्मदीक्षायां जातिविशेषः प्रतिबन्धको वा न वा ?

१३ः—देवलस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यं किमङ्गीकरणीयमुत न ?

१४ः—कियदवधि म्लेच्छसंसर्गेण प्रायश्चित्तीयता ?

१५ः—संवत्सरपर्य्यन्तं म्लेच्छसंसर्गिणां तदधिककालं यावत् म्लेच्छसंसर्गिणाश्च प्रायश्चित्तविषये व्यवहार्यताविषये च किमैकरूप्यमुत वैरूप्यम् ?

१६ः—व्रात्यसंस्कारः कियत्परम्परापर्यन्तं शास्त्रसिद्धः ?

१७ः—जातिसामान्यमैहिककर्मकृतमव्यवस्थितमुत जन्मकृतं व्यवस्थितं च ?

 

गणेशोत्सवः—आगामि भाद्रशुक्लतृतीयां सोमवासरमारभ्य भाद्रशुक्लसप्तमीं शुक्रवासरं यावत् काशीस्थ श्रीवल्लभराम शालिग्राम साङ्गवेदविद्यालये तत्रत्यै रध्यापकै रन्तेवासिभिश्च गणेशोत्सवः करिष्यते । उत्सवोऽयं प्रतिवर्षं महताडम्बरेण सम्पाद्यते । विशेषस्त्वयमुत्सवस्य यदत्र प्रधानतया काशीस्थाखिलसंस्कृतविद्यार्थिनां स्वाधीत विषयमवलम्ब्य शास्त्रार्थो भवति । मध्यस्था स्तत्रभवन्तः सर्वे काशिकविद्वांसो भवन्ति । ये तु छात्रास्तत्र समधिकयोग्यता मात्मनः प्रकटयन्ति ते सम्यक् पुरस्कृता भवन्ति ।

एवमेव गणेशोत्सवं विदधता विद्यालयपरिचालकवर्गेण न केवलं धर्मो रक्ष्यते शास्त्राण्यपि रक्ष्यन्त इति कृतमुक्तेन ।

एवम्भूतस्यादर्शविद्यालयस्य पक्षपातिनो वयमस्य संस्थापकेभ्योऽनन्तान्धन्य वादान् प्रयच्छन्तोऽपि तत्र भवतां महामहोपाध्यायानां श्रीमल्लक्ष्मण शास्त्रि चरणानां तमुद्योग मेव सन्तत मर्चयामो येन खलु सांगवेदविद्यालयस्याद्य लोकेषु प्रकाश एतावांश्च प्रतिष्ठाविभवः समजनि ।

नमो ब्रह्मण्यदेवाय ।

# ब्राह्मणमहासम्मेलनम्

## ( मासिकं संस्कृतपत्रम् )

"न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् ) ।

प्रथम वर्षे ] सौर आश्विनः शकाब्दाः १८५० [ षष्ठ संख्या ।

## श्रीदुर्गास्तुतिगीती ।

[ निबन्धकः—श्रीश्यामाचरणकविरत्न विद्यावारिधिः ]

( स्तुतिः )

दुर्गे त्वं भववारिणि ( १ ) प्रणमतां सर्वार्त्तिसंहारिणी,
दुर्गेऽहं भववारिणि ( २ ) प्रपतितः सीदामि सर्वात्मना ।
मातस्त्वं भववारिणि ( ३ ) प्रतिरुधो नेत्राणि कालोऽन्तिके
मातर्मं भववारिणि ( ४ ) प्रकुरुते शार्दूलविक्रीड़ितम् ॥

( गीतिः )

जय दुर्गे दुर्गतिहारिणि ।
प्रणमामि तव पदे ( ५ ) अधमतारिणि ॥

( १ ) भवं शिवं वृणुते पतित्त्वेनेति ।
( २ ) दुर्गे दुर्गमे भववारिणि संसारसलिले ।
( ३ ) मा अत इति छेदः। भवं मङ्गलं वारयति संभाजयति भक्तानिति ।
( ४ ) भवं संसारं वारयतीति । ( ५ ) पदे चरणौ ।

पद्मालया-सरस्वती-कार्त्तिकेय-गणपति-
समन्विते भगवति
नानाऽस्त्रधारिणि ।
दुर्भिक्षजलप्लावन— पीड़ितमनुजगण—
मनुगृहाण सान्त्वन—
कटाक्षकारिणि ॥
सृष्टिस्थितिविनाशने शक्तिभूते स्मितानने
भक्तिपरायणजने
शक्तिसञ्चारिणि ।
नवीनदानवभय— मुपनतमपनय
जय दुर्गे जय जय
दनुजदारिणि ॥

---

# ब्राह्मणमहासमेलनम् ।

सनातनधर्मं हि केचन प्रकटभावेन, गुप्तभावेन स्निग्धभावाभिनयेन, प्रतारणया, वैयक्तिकयत्किञ्चिद्दृष्टदोषादिकल्पनया च बाधन्त इति नायमिदानीन्तन एव समुदाचारः, किन्तु कृतयुगमारभ्यायं सञ्चरतीति तत्तद्युगचरितानि तत्तत्पुराणेतिहासादिभ्योऽवगच्छन्तः के वा न जानन्ति । कृतयुगेऽपि, यत्र चतुष्पादो धर्मः, तत्रापि हि धार्मिकाणामसुरेभ्यो राक्षसेभ्यो मनुष्येभ्योऽपि नास्तिकेभ्यो निरङ्कुशा बाधा स्म जागर्तीति खलु पुराणादयोऽवगमयन्ति । त्रेतायुगे तपस्विवरस्य कर्तुमकर्तुमन्यथाकर्तुं शक्तस्य विश्वामित्रस्यापि हि यागो मारीचादिभिरमेध्यवस्तुक्षेपणेन रक्तस्रावणादिना स्वयमागत्यर्त्विजां ताड़नेन मारणेन च कथमपि न समाप्तिं प्राप्तुमवसर मलभत, सत्यामपि श्रद्धायामिति को

वा न जानाति । इयती खल्ववस्था बौद्धादिसमये, माहम्मदाद्याध्यत्त्य-काले, वेनादिराज्यकाले वा कलावपि न नासीत् । किं सत्यामपि धर्मा-नुष्ठानप्रतिकूलायामेव परिस्थितौ, यागो न धर्मः पातिव्रत्यं न धर्मः, भगवन्नामस्मरणमधर्म इति सिद्धान्तो विश्वामित्रादिभिः, भगवत्या रा-वणवन्दीकृतयाऽयोनिजयाऽपि, असुरयोनिनापि भक्ताग्रगण्येन प्रह्ला-देन समवलम्बितः ? किं विश्वामित्रादीनां धर्मनिष्ठा, पातिव्रत्यनिष्ठा भगवदेकशरण्यता च तेषा मुदर्कनिःश्रेयसाय नावाकल्प्यत ? किमि-दानीं कोऽपि यथेच्छव्यभिचारेण भगवन्नामविद्वेषादिनापि परमधार्मि-कत्वं परमभागवतत्वं वा मन्यते ? इदानीं तु न वयं तादृशीं कृतादियुगे-ष्विव सत्यामपि श्रद्धायां स्वधर्मानुष्ठाने बाधां कामपि समुपलभामहे । दत्तं खलु स्वाराज्यं धर्मराज्ये सर्वेषामपि राजकीयैरपीति परिस्थिति-नामोपन्ह्नेपेण धर्मपरिवर्तनवाद इदानीन्तनः कियदवधि समादरणीय इति सर्व एव नाम समालोचयन्तु, इदमेवात्र भारतीयानां महदानन्द-स्थानम् ,-यद्' भगवान् केनापि रूपेण, केनापि वा, नाम्ना प्रेम्णाऽनुस-न्धातुं शक्यते, शक्तिभेदेनावस्थाभेदेन जातिभेदेन रुचिभेदेन च व्यवस्थि-तास्ते ते धर्माश्च शास्त्रत उपलभ्यन्ते । किमियं सम्भवति काचन व्यव-स्था, यदेकमेव नाम भगवतः सङ्कीर्त्यमानम् एकमेव रूपं भगवतोऽनुस-न्धीयमानम् एक एव सदाचारः सर्वैराद्रियमाणश्च नियमयति भारती-यानां भारतीयत्वमिति ? उदारोऽयं भारतीयानां धर्ममार्गः—यत्रान्त्य-जपर्यन्तं पतितसाधारणमपि तत्तादृशाः श्रुतिस्मृतिपुराणेतिहासधर्मशा-स्त्रसिद्धा धर्मा वर्तन्ते । हिन्दुत्वं हि वयं न सनातनधर्मश्रद्धालूनामेव, सदाचाराणामेव, वर्णानामेव परिशुद्धानामेव धनमिति वदामः, किन्तु पतितसाधारणमन्त्यजादिसाधारणमपि तदिति । इदन्तु वयं सुधीरं वक्तुमीश्महे यत् विनान्ततो गत्वा तन्त्रशास्त्रपर्यन्तमधिकारस्वीकरणम् , तन्त्रपर्यन्तधर्मग्रन्थाप्रामाण्योद्घोषणेन तत्स्वीकरणेन च धर्मान्तरस्वी-करणमपि न पातित्येऽपि हिन्दुत्वपरिचायकमिति । तत इदमेवात्रानु-

सन्धातव्यम्-यथासम्भवं तत्तज्जातिभेदधर्मभेदाधिकारिभेदादिव्यवस्था-परिपालनपूर्वकं सङ्घटनमेव हिन्दुसङ्घटनं यथार्थसङ्घटनम्, नान्यप्रकारकम् । को हि नामेदानीमपि पूर्वमपि वा तत्तत्समाजविशेषाणामवान्तरविभागानां तत्तद्व्यक्तीनां वा स्वीयेन प्रतिभूत्वेन यथेच्छाचारस्य विरुन्धानो वर्त्ततेऽवर्तत चेति, स्वपितृपितामहपरम्पराप्राप्तधर्मविश्वासम्, तदनुष्ठानव्यवस्थाविशेषांश्च प्राचीनमतावलम्बिनोऽपि यदि सङ्घटनेन व्यवस्थापयन्ति, तर्हि का वा विपत्तिः सुधारकाणां मार्गं समापतति ? किमयं सुधारकाणामपि धर्मः? यत् अन्येषां प्राचीनधर्मविश्वासादिस्वातन्त्र्यविघातः । इदमेवात्र वयं पृच्छामः—यत् प्रचार्यन्तां नाम स्वीया उपदेशाः स्वीयाः समुदाचाराश्च स्वीये समाजे, किमिति वा हस्तः समाजान्तराधिकारेषु निक्षिप्यते इति ।

ब्राह्मणमहासम्मेलनं हि श्रीकाश्यां प्राचीनमतावलम्बिनां सङ्घटनार्थमेव प्रवर्त्यते स्वीयसमाजाधिकारस्य स्वायत्तीकरणार्थम्, न तु वैयक्तिकस्य भावस्य मतान्तरस्य वा निरासार्थम् । सत्यं हठात् मतान्तरनिरासोऽप्यनुषङ्गतोऽत्र समापतति, कथमन्यथा स्वावयवानां मनःसन्तोषणं स्यात् ? परन्तु नायमस्माकमपराधः—यतोऽन्य एवाक्रमणेनास्मानेवमवस्थान् कुर्वन्ति । शास्त्रपरिवर्तनवादाः, धर्मपरिवर्तनवादाः, शास्त्राप्रामाण्यवादाः, अर्थशास्त्रप्राधान्यवादाः, प्राचीनमतावलम्बिनां निन्दावादा वा न केऽपि भारतीयानां नूतना इतीदमेव सूच्यते—यत् स्वपितृपितामहादिपरम्पराप्राप्त एव सदाचारः समवलम्बनीयः, नान्यः कोऽपि । मांसं रक्तं वसादिकं शरीरावयवाः, गृहं धनं नामादिकं सर्वं पितृपरम्पराप्राप्तमेव रक्षणीयम्, धर्मः परं विना स्वार्थबुद्धिं पित्रादिभिः परिपालितः कथं परिवर्तनीयः ?

स्थितायामपि विपत्तौ बौद्धादिसमये भगवत्कुमारिलपादादिभिः श्रीवैष्णवमतप्रवर्तकै र्भागवतदीक्षापरमाचार्यै र्भगवद्रामानुजाचार्यश्रीमद्भगवद्वल्लभाचार्यश्रीचैतन्यभगवत्पादादिभिश्च किं जातिधर्मं आश्रमधर्मो

वा कैरपि परिवर्तितः ? किमिदानीं भगवद्रामानुजाद्यपेक्षयाऽपि समुत्कृष्टः परमैकान्ती स्वार्थबुद्धिनिरपेक्षः नाम्ना शरीरेण, भावेन समुदाचारेण वैकरूपः कोऽपि वैष्णवाभिमानी धर्मपरिवर्तनवादिष्वपि कोऽपि समस्ति ? नाम्ना भूतनाथः, व्यवहारतो वैष्णव इति कीदृशमिदं वैष्णवत्वम् । मन्यामहे केवलं शिवद्रोह एवेदं तात्पर्यमिति । सत्यामपि स्वीयभावपरिस्थितिविरुद्धायां नामपरिस्थितौ किं नामपरिवर्तनायामपि कोऽपि यतते ? इदमेवात्र चित्रम्—यत् व्यक्तिविशेषविद्वेषेण व्यक्तिविशेषगतयाऽसहिष्णुतया साम्प्रतं तत्र तत्र पण्डितप्रवरैरपि धर्मपरिवर्तनवादाः प्राचीनधर्माचार्यनिन्दावादाः धर्मग्रन्थानामपि स्वाशयविरुद्धानामप्रामाण्यवादाश्च समाद्रियन्ते ।

दृष्टं खलु बहुश एव केचन पण्डितप्रवराः पूर्वं धर्मापरिवर्तनवादमात्रपक्षपातिन आसन्, इदानीं तत्परिवर्तनवादपक्षपातिनः इति कस्य वा पामरस्यापि नायं संशयस्समुदेति—किमेतेषां पूर्वतन उपदेशः प्रमाणमुतेदानीन्तनः समुपदेश इति । न हि वयमिदानीन्तनानां वृद्धाविव चरित इव समुदाचार इव वा शास्त्रेषु धर्मप्राणेषु कमपि परिवर्तं पश्याम इति धर्मनिर्णयावसरे कथं वा वैयक्तिकं मतं समादतुं शक्नुमः इति सर्वे एव समालोचयन्तु, धर्मानुष्ठानं हि श्रद्धैकजीवितम्, भगवदाम्नायादिपरतन्त्रतामात्रनिबन्धनम्, स्वार्थनिरपेक्षादक्षिणोपदेशमात्रनिदानं चैव परमपुरुषार्थाय कल्पते नान्यदिति, परिस्थितिपक्षपातिनामपि न शास्त्रं नामाप्रमाणयितव्यम् । सत्यं सुधारणं धर्माणां सम्यगेवेदानीं वयमप्यपेक्षामहे परन्त्विदमेवात्र समालोच्यताम्—किं प्रवाहानुगुणं धावनं सुधारणम्, उत तदभिमुखं धावनमिति । वयन्तु मन्यामहे—प्रवाहानुगुणं धावनं प्रवाहगौरवमेव समाधत्ते, न स्वबुद्धिगौरवम्, स्वधीरताविभवम्, स्वीयपौरुषप्रभावं वेति स्वाभाविकाधर्मप्रवृत्तितः स्वीयेन्द्रियाणां स्वीयान्तरभावविशेषाणां च परिवर्तनेन चानादिसम्प्रदायसिद्धभगवदाम्नायादिसमधिगतधर्माभिमुख्येन प्रवर्तनमेव सुधारणम्, न विपरीतम् ।

नहि नाम तत्सुधारणम्, किन्तु सुपातनमित्येव सुधियो मन्यन्ते । ततश्चेदमेवात्र सर्वैरपि सुधारकैरालोचनीयम्—यत् परिवर्तनस्वभावचञ्चलप्रकृतिस्वबुद्धिपरिवर्तनं किं सुधारणमुतापरिवर्तनशीलधर्मपरिवर्तनं सुधारणमिति जानन्त्येव सर्वे लोकतन्त्रनिष्णाताः, किं बहुना सर्व एवाबालगोपालम्-यत् परेषां स्वभेदनोपदेशपराङ्मुखतैव प्रथमः सोपानः सङ्घटनस्य, समभावेन वैयक्तिकद्वेषादिपरित्यागेन कार्यक्षेत्रे समागमादिस्तु द्वितीयादिः सोपानपरम्परेति दूरतोऽवस्थाप्य भेदोपदेशनाः कार्याभिमुखं सत्सम्प्रदायसदाचारभगवदाम्नायादिपरतन्त्रतया लघुप्रवर्तनमेव सुधीरतायाः, पौरुषस्य किं बहुना नरत्वस्य लक्षणम् ? तदिदं महात्मनः सुभाषितम्—

"शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति वै नराः ।
मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः ॥" इति ।

ते हि नाम सुधीराः—ये खलु न स्वकार्यविमुखाः कदापि विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमानाः इति नेदं विस्मरणीयम् ।

ब्राह्मणमहासम्मेलनं हि सर्वेषां ब्राह्मणानां किं बहुना सर्वेषां सनातनधर्मावलम्बिनां धनमिति को हि नाम सनातनधर्मावलम्बी ब्राह्मणो नाम तद्विरोधनमेव परमकर्तव्यं मन्येत स्वकर्तव्याकर्तव्यविवेकदक्ष इति, कथमपि सङ्घटनोपायानेव मार्गान् सर्वेऽपि द्विजाश्चत्वारो वर्णा अपि यथायोगं सभानियमाविरोधेन स्वीयशिष्टसमुदाचाररक्षणेन च प्रार्थयामहे समलम्बन्तामिति ॥

---

# किं कर्त्तव्यम् ।

( निबन्धकः—पञ्चतीर्थश्रीसुरेन्द्रमोहनवेदान्तशास्त्री )

भारतीयसर्वप्रदेशाधिष्ठितविप्रवर्याणामेकत्र सम्मेलनं साम्प्रतिकमपि सुखकरमुन्नतिकरञ्च भवेदिति जानतामस्माकं मनसि वङ्गीयब्राह्मणानामन्योन्यम् असम्मेलनं स्मृत्वा तेषां चिरसम्मेलनं कथं स्यादिति चिन्ता अन्तरान्तरा समुदेति । भारतवर्षेऽस्मिन् विशेषतो वङ्गदेशे यथा ब्राह्मणेतरेषु सम्प्रदायेषु विविधाः श्रेण्यः परिलक्ष्यन्ते तथा ब्राह्मणेष्वऽपि। ज्ञायते हि मद्रदेशे शैववैष्णवमाध्वगौड़ीयसौरगाणपतादिषु किल शैववैष्णवयोः पृथगुपास्यत्वेऽपि तयोः समाजवन्धने भोजनादिव्यापारे यौनसम्बन्धे चैक्यमेव परिलक्ष्यते ।

सामग्‌यजुषां वेदानां पृथक्‌क्रियत्वेऽपि तदाश्रितानां ब्राह्मणानां वैवाहिको व्यापारोऽस्वतन्त्र एव । तथाच वेदानां सामवेदोऽस्मीति भगवदुक्तेः सामवेदस्य प्राधान्येऽङ्गीकृतेऽपि सामवेदीया कन्या यजुर्वेदीयाय वराय निर्विवादं प्रदीयते तथा यजुर्वेदीया सामवेदीयायेत्यादि । विना त्वेतद्, गौड़ीयब्राह्मणेषु (वङ्गेषु) दृश्यन्ते राढ़ीया वारेन्द्रा वैदिकाश्चेति त्रिविधो मुख्यसम्प्रदायः । तत्र पुनः राढ़ीयेषु कौलीन्याकौलीन्यभेदाद् विविधो भेदः, मुख्यकुलीनगौणकुलीनभङ्गवंशजाः, शुद्धश्रोत्रियाः कष्टश्रोत्रियाः सप्तशतीचेति किं पल्लवितेन । एषु तावत्परस्परमाहारोपासनादिकाः क्रिया न विरुध्यन्ते यौनसम्बन्धस्तु विरुध्यत एव ।

राढ़ीयवारेन्द्रवैदिकानां मध्ये यदा धर्म्मनिष्ठत्वमेकदेवोपासकत्वमेकत्रप्राशनञ्च निर्विवादमेव वर्त्तते तदा तेषामन्योन्यं वैवाहिकी क्रिया कथं न निष्पत्स्यते इत्यत्रास्ति तर्कावसरः । अथ क्वचिद् राढ़ीयानां प्राधान्यं, क्वचिद् वारेन्द्राणां, क्वचिच्च वैदिकानामिति चेत्तथाप्यनेकेषामेव सुधियां सामाज़िकानामन्योन्यसम्मेलनेन साधारणप्राधान्यप्रतिष्ठा-

पनाय "वसुधैव कुटुम्बक"मिति साग्रहा सम्मतिरनुभूयते । तेषामेव हार्द्दिकः प्रश्नो राढ़ीयवंशधरेण मया विनीतेन ब्राह्मणमहासम्मेलनपत्रिकायां सानुरागं प्रकाश्यते सुधियां विचारार्थम् ।

पाश्चात्त्यविद्यालयपद्धतिमवलम्ब्याधुना तावद् वङ्गेषु सर्वे वर्णा वर्णसङ्कराश्च शिक्षामाप्तास्तेषु ब्राह्मणानां संख्या नितरां नगण्येत्यतो नास्माकमस्त्याक्षेपलेशः किन्तु ब्राह्मणजाते र्विशिष्टशिक्षायां संस्कृतशिक्षायां यदौदासीन्यं परिदृश्यते भूसुराणां तदेव नो दुःखयति । अपरमिदमतिदुःखकारणं ब्राह्मणाः सर्वास्वेव शिक्षासु साम्प्रतमौदासीन्यं प्रदर्शयन्तोऽपरेषां वर्णानां वर्णसङ्कराणाञ्च पृष्ठतो गच्छन्ति । अग्रजन्मानोऽन्या नाग्रतो गच्छन्तीति विचित्रम् । न केवलमधुनातनीषु शिक्षासु ते मन्दगतयः संस्कृतशिक्षास्वपि किं बहुनाऽशिक्षायामपि । नहीदं ब्राह्मणानामुपेक्षणीयतया द्रष्टव्यम् । सुशिक्षामन्तरेण केन तावत् श्रेष्ठगुणेन ब्राह्मणो वर्णोऽपरेषां वर्णानां सम्मानभाग् भवेत् ?

विस्मयमिदमतीवावहति यदधुनाऽनेके ब्राह्मणयुवान आंगलविद्यालये समुत्तीर्णप्रवेशिकाद्वारा अपि, प्राप्तोपाधिका अपि दास्यप्राप्तेरभावादालस्येन कालं नयन्तः पैतृकमन्नं ह्रासयन्ति, तथापि न पठन्ति गृहेषु परभविकाशधूतानिव शास्त्रग्रन्थान् विना वर्त्तनम् । तादृशाः केचिच्छून्यकर्माणः पापधर्माणो मनुस्मृतेर्गङ्गाम्भसि विसर्जनं श्रेयो मन्यन्ते । इदानीन्तन्या धर्मविहीनशिक्षाया एतदेव सुफलं कुफलं वा ।

ब्राह्मणानां शिक्षौदासीन्यं प्रतीदमेवास्माभिः कारणतया मन्यते यद्यपि गौणतया । दृश्यन्ते हि बहुषु ग्रामेषु ब्राह्मणाः पैतृकसम्पत्तेरधिकारिणः । सा च सम्पत्तिः ब्रह्मोत्तरदेवोत्तरभोगोत्तरादिसत्ताका करं विनैव भुज्यते विप्रसन्तानै रुत्तराधिकारसूत्रेण प्राप्ता । पूर्वपुरुषपरमपुण्योपार्जितवित्तभाजो ब्राह्मणतनया अधुना पुण्यहीना इव श्रमसाध्यां विद्यामर्जयितुं न यतन्ते, पादोपरि पादान् संस्थापयन्तो वसुमतीप्रसादाद् वसु भुञ्जते, न गणयन्ति हि विद्योदधिसमुद्भूतपीयूषरसम् । के-

यत्तु विप्रभूम्यधिकारिणो राजानो महाराजाश्च पाश्चात्त्यविद्यायां सुशिक्षिताः स्वल्पशिक्षिता वा समुद्रमार्गेण पाश्चात्यप्रदेशेषु पदं कुर्वाणा भ्रष्टधर्माणो नष्टाचाराश्च सम्मानयन्ति विजातीयं धर्मं द्वेषयन्ति च स्वकीयम् । स्थाने खलु केषाञ्चित् कृतधियां धनिनां स्वदेशानुरागः शास्त्रधर्मप्रीतिश्च ।

अत्रावसरे विचार्यमिदं विदुषां वङ्गदेशात्तथा भारतवर्षादाङ्गलविद्यालयानां समूलकाषं कषणं कथं कथमप्यसम्भाव्यमेव मन्यते कैश्चित् सूक्ष्मदृष्टिभिः कोविदैर्यावत्पाश्चात्त्यशासनमनुवर्त्तते देशे, अतस्तेषामांगलविद्यालयानां संहाराय मतिमकृत्वा संस्काराय मनो दीयेत किं वा नवा ब्राह्मणैः ? याऽधुना धर्मविहीना शिक्षा शिक्ष्यते छात्रैः सा यदि ब्राह्मणानां समवेतानां प्रचेष्टातो धर्मोपेता भवेद्राजकीयसम्मतिमाकृष्य, तदैवाभीष्टसिद्धिरन्यथा आंगलविद्यालयानामेकान्तत उच्छेदासम्भवात् संस्कृतविद्यालयानां च प्रकामं वृद्धेरसम्भवाद् ब्राह्मणानां पुरतोऽशिक्षाराक्षसी नितरामेव नरीनर्त्तिष्यते । सर्वेषामेव ब्राह्मणतनयानांजातीयशिक्षा ( संस्कृतशिक्षा ) सर्वैरेव सान्तःकरणं काम्यते । आंगलविद्याशिक्षायां यतमानानामपि यथा सर्वेषामग्रजन्मनां संस्कृतशिक्षा बाध्यतामूलिका भवेत्तथा किं सम्मतं न भवेद् ब्राह्मणसम्मेलनस्य ?

अपरमत्र प्राप्तावसरं निवेद्यते—वङ्गेषु ये केचन दृश्यन्ते संस्कृतपाठार्थिनश्छात्रास्तेषामनेक एव व्याकरणसाहित्यमात्रमधीयाना न जानन्ति धर्मशास्त्राणां दर्शनशास्त्राणां बाह्यमपि तत्त्वं, किमुताभ्यन्तरम् । न्यायस्मृतिपुराणदर्शनपाठिन स्त्वल्पा एव । वेदाध्यायिनस्तु विरलतमाः । ये पुनर्वेदविद्यां पिपठिषवस्ते कलिकातासंस्कृतपरीक्षासमितौ प्रथमपरीक्षायां द्वितीयपरीक्षायां वा समुत्तीर्णा ग्रन्थाभावाद् अर्थाभावाच्च केषाञ्चिद्ग्रन्थानां बहुमूल्यत्वाच्च वेदशास्त्रीयोपाधिपरीक्षां यावदग्रेसरा भवितुं नार्हन्ति, समग्रवेदशास्त्राध्ययने च सुतरामेवासमर्थाः । ब्राह्मणसम्मेलनस्यानुकूल्येन यथा बङ्गीया अवङ्गीया या छात्रा मूल्यं

विनैव वेदग्रन्थान् प्राप्नुयुस्तथा कश्चित्प्रस्तावः समीचीनो भवेत् प्रस्तावानुरूपं कार्यञ्च सुतरामेव सुखकरं स्यादिति नास्ति कस्यापि वैमत्यम् । वङ्गेषु निखिलवेदग्रन्थानां प्रचुरतया प्रचारः प्रकामं काम्यः । बङ्गवासीनामकसाप्ताहिकसंवादपत्रपरिचालकानामानुकूल्येन यथा बहूनि पुराणानि प्रचारितानि तथा किं वेदग्रन्थानां प्रचलनं न सम्भवेत् ? तत्र सन्ति बहवो ब्राह्मणा मुद्राकरा मुद्राध्यक्षाश्च ।

दृश्यन्ते हि साम्प्रतमनेके ब्राह्मणा निरग्निकाः । तेषां मध्ये यथा बहवः साग्निका भवेयु स्तथाविधाः प्रचेष्टा ब्राह्मणाः सम्मेलनं विनाऽपि कर्त्तुमर्हन्ति । धनवतां वर्णानामर्थसाहाय्यमत्रावश्यकम् । अग्निमुपासमानानां विप्राणामग्निसमां प्रभां निरीक्ष्यापरे वर्णाः सुतरामेव भीतिमाप्स्यन्ति, ब्राह्मणा अपि पुनरुन्नतिपदवीमधिरोक्ष्यन्ति ।

कन्यानां विवाहवयोनिरूपणार्थं यत् कैश्चन पाश्चात्त्यविद्यावद्भिर्भारतीयै र्भारतशासनपरिषदि विधिप्रणयनं समीचीनं मन्यते तत्रानास्थाज्ञापनं सम्मेलनस्य कर्त्तव्यम्; भारतसम्राट्प्रतिनिधिसकाशेऽपि प्रेषणीया सम्मेलनस्य प्रतिकूलमतिः । भारतशासनपरिषत्सदस्या न सर्वेषां हिन्दूपदवाच्यानां साकल्येन प्रतिनिधयः अतस्तेषामेव प्रस्तावः कथं कथमपि निरपेक्षैर्महानुभावैः शासकवरैर्न ग्राह्यः । वराणां वयोनिर्द्धारणे ब्राह्मणसम्मेलनस्याभिप्रायश्चेत्तदा कन्यानां परिणयवयोनिर्द्धारणं सुकरं मन्यते । "अष्टवर्षा भवेद् गौरी"त्यादि वचनाद् गौरीरोहिणीप्रभृतिकन्यादानस्य फलोक्तेश्चाष्टमवर्षात् प्राक् कन्याया विवाहप्रदानं दण्डनीयं भवेदिति विधानं किमस्माभिरेव न पार्यते कर्त्तुम् ? तथा सति दातुर्ग्रहीतुश्च विवाहसहायकस्य च यथा राजकीयो दण्डः सामाजिकश्च शासनं भवेत्तथा कश्चित्प्रस्तावः करणीयः प्रेषणीयश्च भारतशासनपरिषदि ।

संस्कारकनामधेयानामस्पृश्यताप्रकारो नावबुध्यतेऽस्माभिर्भगवच्चरणारविन्दाधिगतये सन्ततं तन्नाम कीर्त्तयन्तस्ते परिपालयन्ति स्वजन्मोचिताः शास्त्रक्रियाः, शास्त्रमाश्रित्यैव तेषामतिवर्त्तते जीवनयात्रा । तेषामस्ति

देवतापूजाविधिः, पूजागृहञ्च स्वतन्त्रम् वङ्गेषु वहुषु ग्रामेषु परिलक्ष्यते नानावर्णजातिभिः सम्पादिता—"पञ्चायती"पूजापद्धतिः। केचित् पुष्पाणि समाहरन्ति, केचिद् गङ्गोदकं केचित् पद्मान्यपराणि च कुसुमानि, केचन समिधं, केचन च घृतं तैलं तिलान् यवान् समाहरन्त आत्मनः कृतार्थान् मन्यन्ते। केचिद् वस्त्रादिदानेन, देवताप्रणिपातेन लब्धप्रसादेन च कृतार्थतामात्मनो गणयन्ति।

शास्त्रेषु मन्दधियां केषाञ्चित् संस्कारकाणां वाग्विलासेन केचित् सरलप्रकृतयो वर्णसङ्कराः स्वकीयं शास्त्रं धर्ममाचारं च यदा परिहरेयुस्तदैव किं ते स्पृश्या भवेयुः? अन्योन्येषामन्नभक्षणमुदकपानञ्च यद्यस्पृश्यतापरिहारलक्षणं पुनस्तदेव यदि सख्यशान्त्योर्निदानं तदा पारावारपरपारेऽस्याव्याप्तिः तत्रान्योन्यमुदकादिपानवतामपि सख्यशान्त्योरभावात्।

किं वहुना वङ्गेषु बहवो ब्राह्मणेतरेऽपि हिन्दूनामधेयाः सम्प्रदायाः स्वधर्मनिष्ठा वर्त्तन्ते तेषामात्मनिवेशने स्थितानां कूपानामुदकं स्वभवनस्यैव रजस्वलाऽरजस्वला वा रमणी न स्पृशति, विधवानां व्यवहारार्थं हि ते कूपाः। यदि सा रमणी तस्या विधवायाः पुत्रवधूरपि भवेत्तथापि तस्यास्तत्कूपोदकस्पर्शने वर्त्तते प्रतिबन्धकता। अपरञ्च तद्भवनस्था युवानोऽपि पुत्रादयो नैशवासो वसानास्तदुदकं स्प्रष्टुं न क्षमन्ते। स्पृश्यते चेत्तज्जलं समन्त्रकपञ्चगव्यादिभिः पुनः शुद्धिमेति। एतेन किमयमर्थः समापतति यत् स्वभवनस्थाः पुत्राः पुत्रवध्वश्च पितुः श्वशुरस्य वाऽस्पृश्या इति?

---

श्रीरामः शरणम् ।

# ब्राह्मणमहासम्मेलनस्येतिवृत्तम् ।

( पूर्व्वतोऽनुवृत्तम् )

( निबन्धकः—श्रीश्रीजीवन्यायतीर्थः )

तस्य च कालीघट्टमहापीठप्रकटविशेषस्य द्वितीयब्राह्मणमहासम्मेलनस्य प्रारम्भ एव विद्यासम्भारभासुराणां भूसुराणां पक्षप्रतिपक्षभूतानां वादसम्वादरुचिरा काचिदारचिता विचारपरिषत्, यत्र दिनद्वयं यावत् समुद्रयात्राम्लेच्छदेशगमनाभक्ष्यभक्षणजातिसमुत्कर्षादिविषयकाः प्रश्नविशेषाः सम्यगालोचिताः सिद्धान्तिताश्च ।

तदानीं जीवतां जीवनिभानां महामहोपाध्यायराखालदासन्यायरत्न-शिवकुमारशास्त्रि-शिवचन्द्रसार्व्वभौम-यादवेश्वरतर्करत्नमहाशयानां तथा पण्डितप्रकाण्डानां दुर्गासुन्दरकृतिरत्न-शशधरतर्कचूड़ामणि-गुरुचरणविद्याभूषणमहोदयानां महामहोपाध्यायानां तत्रभवतां श्रीमतां लक्ष्मणशास्त्रिद्राविड़ानां शशिभूषणस्मृतिरत्नानां च केचन विचारपरिषदि मध्यस्थपदमलङ्कुर्य्युरिति शास्त्रज्ञपरिषदा विशदाशयैरन्यैश्च सदस्यैर्निर्णीतमासीत् विचारसदसि समालोचिताः केचन प्रश्नाः निर्णयाश्च तावदत्र वर्ण्यन्ते । समुद्रयानाभोज्यभोजनादिकर्त्तुः कृतप्रायश्चित्तस्य व्यवहार्य्यत्वमव्यवहार्य्यत्वं वा ? प्रायश्चित्तैरपैत्येन इत्यादिवचने कामतो व्यवहार्य्यः अव्यवहार्य्य इति चानयोः कतरः पाठः साधीयान् ? कामतो व्यवहार्य्य इति पाठमङ्गीकर्त्तुमिताक्षरानिर्म्मातुर्व्यवहार्य्यत्वं कीदृशमभिप्रेतमित्येवमादिप्रश्नभूयिष्ठा गरिष्ठा विषया विचारपदवीमधिरूढ़ाः ।

पञ्च व्यवहार्य्यतावादिनः प्रायस्त्रिशतमव्यवहार्य्यतापक्षपातिनो नव मध्यस्थाश्च विपश्चितः सभाशोभामभिवर्द्धयामासुः । तेषु च स्वनामधन्याः किल मूर्द्धन्यासनमलङ्कुर्वाणाः साम्प्रतं शिवभूताः शिवकुमार-

मिश्रचरणाः पक्षयोरुभयोरपक्षपातेन वादवचनान्याकर्ण्य विजयगौरवम-व्यवहार्य्यतापक्ष एव न्यक्षिपन् । विचारसभापतयस्ते विचारफलञ्च समुच्चस्वरमुद्घोषयामासुः सभायां तथाहि समुद्रयात्रादिकृतः कृतप्रायश्चित्तस्यापि नैव व्यवहार्य्यत्वम् । कामतोऽव्यवहार्य्य इति पाठस्य बहु-सम्मततया साधीयस्त्वम् । मिताक्षराकृन्मतेऽपि क्रयविक्रयादिरूपलघु-संसर्ग एव व्यवहारपदेनावधारणीयो न तु कश्चिदपि गुरुसंसर्गः । भग-वच्चण्डिकायाः पुरस्तात्प्रस्फुरितेऽस्मिन् नयनार्चिषीव शास्त्रसिद्धान्ते मुहुर्निरस्तसंशयध्वान्तराशिरासीत् शास्त्रसारवुभूत्सूनामन्तःकरणभूमिः । ततश्च पण्डितप्रवरश्रीयुतपञ्चाननतर्करत्नचरणैरुत्थाय कोविदेभ्यः साग्र-हमावेदितं यदिदानीं कायस्थादिजातीयेषु केचनोपवीतदिधीर्षवो दृश्यन्ते वर्णस्तु तेषां यथैवास्तु वस्तुस्थित्या गणनातीतपुरुषपरम्परातो द्विज-संस्कारराहित्येनैव न तेषां केनापि शास्त्रेण तावदुपनयनार्हत्वं शक्यं समर्थयितुम् । आपस्तम्बवचनं च यस्य प्रपितामहादि नानुस्मर्य्यत उपनयनमित्यादि प्रमाणमत्रोपन्यस्यते । ब्राह्मणानामपि त्रैपुरुषसंस्कार-रहितानां नोपनयनयोग्यत्वमिति शास्त्रसिद्धान्तः किं पुनरन्येषाम् । यः कोऽपि प्रतिवदितुकामः काममुत्तिष्ठेत विचारायेत्याहूतोऽपि न सज्जीभूतो विपक्ष एकोऽपि, परन्तु स एव चरमः सिद्धान्त इति सर्व्वैरभ्यनुज्ञातः ।

ततश्च सभापतिमहोदयानां कार्य्यान्तरोपरोधादन्यत्र गमनानन्तरं स्मार्त्त-केशरिण इदानीं स्वर्गस्था दुर्गासुन्दरकृतिरत्नमहोदयाः सभाप-तिपदमध्यतिष्ठत् ।

समुद्रयात्राम्लेच्छदेशगमनयथेच्छभोजनादिकर्त्तुः सवर्णापरिणयोत्-पन्नानां पुत्रपौत्रादीनामव्यवहार्य्यत्वं व्यवहार्य्यत्वं वेति विचारः प्रववृते । सभापतिपादैरुभयोः पक्षयोर्वादार्थमपक्षपातमाकर्ण्य तेषां व्यवहार्य्यत्वम् एव निरणायि । परन्तु यदि ते मूलपातकिसंसर्गत्यागपूर्व्वकमापञ्चमाद् वर्षाद् यथोचितं प्रायश्चित्तं संस्कारादिकं च लभमानाः सदाचारसरणि-मालम्बेरं स्तदेव व्यवहार्य्यत्वम् ।

जातावसाने च विचारसभाधिवेशने महाधिष्ठानं किल ब्राह्मणमहा-सम्मेलनस्य दिनत्रयं यावदत्र प्रक्रान्तम् । ग्रामोपमण्डलमण्डलप्रदेशेभ्यः सङ्गताः कति नाम वङ्गीयाः पण्डितास्तथा रूढनामानः कतिराढीयवा-रेन्द्रवैदिकमध्यश्रेणीमणीभूताः सामाजिकाग्रजन्मानः सदसि समवेयुः, काशीमद्रासोत्कलवासिनोऽपि विशिष्टाः कति सभ्याः समभ्यागताः, तत्र नरशिरःसागरतरङ्गाणां को नामान्तं गच्छतु । अनुष्ठानसभाध्यक्षेण राजश्रीयुतशशिशेखरेश्वररायमहोदयेनाभ्यर्थितः सम्प्रति स्वर्गं गतः सुषङ्गाधिपतिर्महाराजकुमुदचन्द्रसिंहमहोदय स्तावदेतदधिवेशनाधिप-त्यमङ्गीचकार । ततश्च विशिष्टशिष्टानां वहूनां वक्तॄणां व्याख्यानरसो-ज्ज्वला परिषत् श्रोतृजनमनोहारिणी मुहुर्विपुलानन्दनिदानमभवत् । ततः पूर्व्वनिर्वृत्तविचारसिद्धान्तानेकैकशः समुदीरयन् सदःपतिमहोदयः सहृ-दयहृदयगुहाशयसंशयतमांस्युदस्य तथा सदसि सदाचारकुलपरिचय-गोजातिरक्षणादीनि सर्व्ववर्णोपकारकाणि भुवनमङ्गलधारणानि निर्द्धार-णान्युद्घोष्य सुतरामेव सभाशोभामादधौ । अतः परं च राढीयवारेन्द्र-समाजयोर्वैवाहिकप्रथासंस्कारकर्म्मणि तत्तत्समाजपतयः साग्रहं मनो-ऽभिनिवेश्य विषमश्रेणीसमीकरणादिकमाचरन्तः सतां सन्तोषमुद्दीपया-मासुः । ततश्च धार्म्मिकगौरवगौरीपुराधिपतिदानवीरश्रीयुक्तव्रजेन्द्र-किशोररायचतुर्धुरीणानां ब्राह्मणमङ्गलाय लक्षमुद्रादानवार्त्ता तथा भूस्वा-मिन इन्द्रनाथतनूजन्मनः सम्प्रत्येव स्मर्त्तव्यशेषतां गतस्य सतीन्द्रनाथव-न्द्योपाध्यायस्य सहस्रमुद्रादानवार्त्ता परःसहस्रसहर्षकण्ठकलरवात्तामपि मुहूर्त्तमुत्तरलीकृतसदस्यावयवां सभासुन्दरीं सानन्दावसानां चकार ।

अथ सम्वत्सरेऽतीते तृतीयमधिवेशनं किल ब्राह्मणसम्मेलनस्य वङ्गान्तर्गतवीरभूमिप्रदेशे मधुमासे प्राप्तावकाशमशेषधर्म्मधीमण्डितप-ण्डितचूड़ामणिस्वर्गतशशधरतर्कचूड़ामणिपादानां सभापतित्वेन सम्यङ् निष्पन्नम् । तत्र षट्सहस्राधिकजनसमागमस्तथा सभापतिमहोदयाना-मनन्यसाधारणमतिमधुरं परिणयपणग्रहणप्रथाविरोधि व्याख्यानमद्यापि

श्रोतॄणां स्मृतिसरणिमुज्ज्वलयति । अनन्तरमष्टत्रिंशदधिकाष्टादशशततमे शाकाब्दे मेषराशिवासिनि विभावसौ वङ्गदेशाधीनमुर्शिदाबादाख्यमण्डले ब्राह्मणमहासम्मेलनस्य चतुर्थमधिवेशनं महताडम्बरेण सम्वृत्तमासीत् । विचारकचराणां रायवाहादुरोपाधिधारिणां धर्म्मप्रवणानां प्रवीणानां गोपालचन्द्रवन्द्योपाध्यायानामाध्यक्ष्येण सभाकार्य्यमतिसौकर्य्येणानुष्ठितमासीत् । अहो विनयमाधुर्य्यमद्यापि न विस्मर्य्यते धार्म्मिकमणिमहाराजश्रीयुतमणीन्द्रचन्द्रनन्दिमहोदयस्य, यः किल सम्मेलनातिथिभूतानां भूदेवानां सेवाविधानाय सन्नद्धः सावधानः सप्रश्रयमध्यास्ते स्म सभाप्रान्तम् ।

अतीते च तस्मिन् हायने समायाते च माधवे मासि वङ्गान्तःपातिफरिदपुराख्यमण्डलान्तर्वर्त्तिमादारीपुरपत्तने पञ्चमं ब्राह्मणमहासम्मेलनं श्रीदुर्गामन्दिरविशालप्राङ्गणसङ्गतं जनगणोत्साहेन महता निर्व्वाहितम् महामहोपाध्याय श्रीयुतपञ्चाननतर्करत्नचरणानां सभापतित्वेन तत्रत्यानां सामाजिकानां दूरागतानां विदुषां च भूयसामाग्रहेण सुसम्पादितमिदमद्यापि विद्यतेऽस्मन्मनसि जागरूकम् । तत्र चाभाषणमेतेषां भूषणमिव श्रुतिलोभनीयमभवत् सभास्थानाम् ।

तदनन्तरमुपगते शकनरपतेरेकचत्वारिंशदधिकाष्टादशशततमे वर्षे वृषराशिभास्वरे च भास्करे द्वारवङ्गाधिप–महाराजाधिराजश्रीयुतरमेश्वरसिंहमहोदयानां सभापतित्वेन भूस्वामिगणभूषिते वङ्गदेशधनगौरव–धामनि मैमन्सिंहनगरे षष्ठं ब्राह्मणमहासम्मेलनाधिवेशनमशेषकल्याणाय प्रावर्त्तत । अस्मिंश्च महानुष्ठाने भूयसां भूस्वामिनां भूसुराणां तथा भूरिविद्यानां सूरिरत्नानां साग्रहसमागमादपूर्व्वः शोभाविभवो निखिलभाविश्रभशंसी वभूव ।

इतः पूर्व्वं पञ्चमे संवत्सरे सुरधुनीतरङ्गधौतपङ्के शास्त्राध्ययनाध्यापनपवित्राङ्के वङ्गभूमेरधीने भट्टपल्लीस्थाने सप्तममधिवेशनं ब्राह्मणमहासम्मेलनस्य समजनि । तत्र सभापतित्वमङ्गीकुर्व्वता ब्राह्मणो-

ज्ज्वलसौम्याकृतीनां कृतिनां महामहोपाध्यायानां श्रीयुतवामाचरणन्याया-
याचार्य्यचरणानां काशीवासिनामग्निहोत्रिणां सदुपदेशपीयूषधारया
परितृप्ताः सर्व्वं एव सभाभाजः । तत्रानुष्ठानसमितिपतित्वं च
वर्षिष्ठेषु वाशिष्ठेषु स्मार्त्तधुरन्धरेषु परिडतवरेषु श्रीयुतवीरेश्वरस्मृति-
तीर्थचरणेषु समर्पितम् । पूतचरितानामनल्पकल्याणकल्पपादपानां
सुब्राह्मणानां समागमसौभाग्यात् सभाकर्म्मणः सुसम्पादनादनु व्ययो-
द्वृत्तवित्तैर्भागीरथीतीर्थसोपानसंस्कारः सर्व्वलोकोपकारकश्चिराय लो-
चनगोचरीभावमापद्यते ।

ततश्चाष्टममधिवेशनं वङ्गदेशान्तर्गते विश्रुते वर्द्धमाननगरे जनगणो-
त्साहभरेण निर्व्यूढ़म् । तत्र प्रसिद्धव्यवहारजीविश्रीहर्षमुखोपाध्याय-
महोदयस्य हृदयभूतमिदमधिवेशनं सुप्रथित-राज-श्रीमत्प्रमथनाथमा-
लियामहाशयानां स्वागतसभापतीनां तथा राजश्रीयुतशशिशेखरेश्वर-
रायमहोदयानां सभापतीनां महिमातिशयेन सिद्धिमाससाद । अहो म-
हानुत्साहः सदस्यानाम्! येन धर्म्मप्राणः श्रीमानुमेशचन्द्रवन्ध्योपाध्या-
यमहाशयः पञ्चसहस्रत्रिवेदीयसन्ध्यापद्धतीर्मुद्रापयित्वा वितरिष्यतीति
प्रतिश्रुतवान् । समागतानां भूदेवतानां सत्कारादिव्यवस्था च सतां
सन्तोषमुदपादयत् ।

---

# परीक्षारहस्यम् ।

( निबन्धकः श्रीज्योतिषचन्द्रकाव्यतीर्थः )

नमामि नारायणमप्रमेयं
नमामि धर्म्मं श्रुतिरूढ़मूलम् ।
नार्थं न कामं परिचिन्तयामि
बिभेम्यधर्म्माददरः कुतः स्याम् ॥

काशीविश्वविद्यालयप्राच्यविद्याविभागधर्मशास्त्राध्यापक—श्रीयुत-राधाप्रसादशास्त्रिमहोदयैः पूज्यपादमहामहोपाध्यायश्रीयुतपञ्चाननतर्क-रत्नमहोदयकृतमन्त्रमहिमरहस्यस्य खण्डनार्थं रहस्यपरीक्षा कृता । तस्याः परीक्षाया मङ्गलाचरणश्लोकमारभ्यान्तपर्य्यन्तं प्रायेण मिथ्या-ज्ञानविजृम्भितम् । तत्प्रदर्शनार्थं परीक्षारहस्यमिदमुच्यते । "तथा-हि तन्मङ्गलाचरणश्लोकः—

मिथ्याज्ञानविजृम्भितस्य जगतः संहाररक्षाजनीः
संसाध्याखिलमेतदेतदमलं सर्वं विशन्तं विभुम् ॥
संसेव्याद्य विचारभेदपिहितं स्वान्तप्रबोधोज्वलं
धर्म्मं तं श्रुतिमूलमर्थमदरं स्मार्त्तं परं चिन्तये ॥

अस्यार्थः । श्रुतिमूलं श्रवणमात्रप्रमाकं न तु प्रत्यक्षं प्राप्तं स्मार्तं यद्धि श्रुतं तदिदानीं स्मृत्या स्मरणेन विषयीकृतं परं केवलं अर्थं चिन्तये । एतन्मतं यदि समर्थ्येत इयन्तमर्थं दास्यामीति प्रभुणा प्रतिश्रु-तं ननु तदर्थप्रदर्शनमपि तदा कृतं तदिदानीं स्मृतिगोचरीभूतं नत्व-द्यापि हस्तगतं अर्थं धनं केवलं चिन्तयामि । हा प्रतिश्रुतधन कथं त्वां लप्स्ये इति केवलं चिन्तयामि । ननु कथं प्रतिश्रुतार्थो नाधिगत इत्या-शङ्क्याह संसेव्याद्यविचारभेदपिहितमिति । संसेव्यस्य प्रभोः आद्यो यो विचारः मन्त्रमहिमाख्यः प्रबन्धः तस्यभेदो विदारणं खण्डनं तेन

पिहितं संवृतं प्रतिरुद्धं प्रतिश्रुतमप्यदत्तमिति यावत् । ननु धर्म्मस्य प्राधान्यात् तमपहाय कथमर्थचिन्तनमित्यत आह धर्म्मं तमिति । योऽर्थः स एव धर्म्मो नतु धर्म्मो नाम कश्चिदन्योऽस्ति अप्रत्यक्षत्वात् । अपि च अर्थं एवैको दरहारी भयार्थो दरशब्द इति केवलस्यार्थस्य चिन्तने हेतुरुक्तः स चार्थः कीदृशः स्वान्तप्रबोधोंज्ज्वलः स्वान्तस्य मनसो यः प्रबोधः प्रबोधनं दुःखदूरीकरणाय सान्त्वनं तेन उज्ज्वलः प्रकाशमानः तथाविधं प्रथमार्द्धे अर्थस्यैव विशेषणत्रयं तस्य श्रेष्ठत्वसूचकं येन मङ्गलाचरणे तस्यैव ग्रहणं न त्वन्यस्येति प्रतीयते । मिथ्याज्ञानविजृम्भितस्य मिथ्या निरर्थकं ज्ञानविजृम्भितं ज्ञानविलसितं यत्र तस्य जगतः संहाररक्षाजनयो येन सम्पाद्यन्ते सर्वं शून्यं दरिद्रस्येति न्यायात् । यच्छून्यतया जगत् शून्यात्मनाऽवभासते । तदवस्था हि संहारः यस्य पूर्णतया जगतः पूर्णत्वं रक्षेति व्यपदिष्टं यस्य च प्रथमागमो जगतो नवीकारहेतुः यो हि नवीकारो जनिरित्युच्यते । एत देतदिति प्रत्येकमखिलं कृत्स्नश्च विशन्तं सर्वमेव वसुजातं धनसाधनतया धनस्वरूपं यत्प्रवेशेन भवति । अत एव विभुं सर्वकार्यसाधनसमर्थमिति वा । तथा अमलं अधारणीयं मलमल्लधारणे इति धातोर्मलशब्दः सिद्धः नह्यर्थश्चिरं धारयितं शक्यते चलस्वभावत्वात् । अथ च जगत इति विश्ववाचिजगच्छब्दप्रयोगः विश्वशब्दश्च विश्वविद्यालयनाम्न एकदेशः भीमो भीमसेन इतिवत् । स एव विश्वविद्यालयप्रतिपादकः तस्य संहारः संयमनं रक्षण मुत्पत्तिश्चार्थेनैव साधितानि सर्वेषु विभागेषु स एव प्रविष्टः अर्थागमार्थं सर्वाणि कार्याणि तत्र भवन्तीति भावः । अर्थान्तरमपि तत्र भवति, अत्र पद्ये अन्त्यचरणं पूर्ववदर्थकं विभुं प्रभुं मालवीयमहोदयं संसेव्य अर्थं चिन्तये इति । संसेव्यार्थं चिन्तय इति भ्रणत्कृत्य पततीतित्वत्प्रयोगः । विभुं कीदृशं मिथ्याज्ञानविजृम्भितस्य मिथ्याज्ञानस्य मिथ्यादृष्टेर्नास्तिकताया विजृम्भितं विस्तारो यत्र तस्य जगतो विश्वविद्यालयस्य संहाररक्षाजनीः संहारः संयमनं रक्षा जनिश्च संहाराद् विनाशाद् विविधा

रत्ता जनिश्चेति वा ताः संसाध्य एतदेतदितिकृत्वा अखिलं प्रतिब-न्धरहितं यथास्यात्तथा सर्वं सर्वविभागं विशन्तम्। अमलं स्वच्छं वर्णं अथवा अमौ अकारमकारौ राति ददाति सर्वेभ्यः रेफस्य लकारादेशात् अमलः तम्। अकारमकारावित्यादिमान्तिमवर्णग्रहणेन सन्दंशन्यायान्मध्यपातिन उकारस्य लाभः तेन सर्वेभ्यः प्रण-वमन्त्रदातारमित्यर्थः। पुनः किम्भूतं आद्यविचारभेदपिहितं आद्यो यो विचारः मन्त्रमहिमकथनं तस्य भेदेन परकृतखण्डनेनाच्छादितं तिरस्कृ-तगर्वमिति यावत्। पुनः किम्भूतं स्वान्तप्रबोधोज्वलं स्वेषां स्वसजाती-यानां अन्तः नाशः तत्र प्रकृष्टो बाधाहीनो बोधो यस्य सः अतएवोज्ज्व-लः। कलियुगेऽस्मिन् प्रभावशाली स च विशेषणसमासः तम्।

यदि च मायाकल्पितस्य जगतः संहारादिविक्रियाः सम्पाद्य सर्वं विशन्तं विभुमीश्वरं संसेव्य श्रुतिमूलं तं धर्मं स्मा-र्तञ्च परमर्थं चिन्तय इत्यर्थः क्रियेत तदा बहुवक्तव्यमस्ति। न हि जगतः संहारादिका विक्रियाः प्रसिद्धाः किं तर्हि जन्मादिकाः यतो वा इमानि भूतानि जायन्त इति श्रुतेः जन्माद्यस्य यस्य यत इति स्मृतिन्यायाभ्याञ्च। नापि विशन्तमिति वर्तमानप्रयोगो घटते तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः। सम्बन्धिबोधकपदानभिहितान्वयार्थशब्दस्या-भिधेयपरत्वस्यायुक्तत्वात् विशेषणानर्थक्याच्च। निबन्धः सत्यपि प्रकृ-तार्थनिह्नवाभिलाषे वागूदेवतैव सत्यमाविश्चकारेति परीक्षाया आद्यं रहस्यम्। परमत्र चिन्तय इत्यात्मनेपदमुदीरयन् शास्त्रिमहोदयः स्पृहणी-यदर्शनो जात इति द्वितीयरहस्यम्। अनन्तरं संविद्धर्म इत्यादिकः सन्दर्भः, अस्य भावस्तु श्रीयुक्ततर्करत्नपादैः संविद्धर्म्मं उक्तः मालवी-यमहोदयैस्तु स्मार्तधर्म्मं उक्तः न हि संविद्धर्म्मव्यतिक्रमेण धर्म्मभूमेर-पसरणं भवति मालवीयमहोदयानां स्मार्तधर्मस्थितानां यद्धर्म्मभूम्यप-सरणमुक्तं तदयुक्तम् इति। तत्रोत्तरम्-न हि वृद्धहारीतोक्तवैष्णवधर्म्मः संविद्धर्म्मः गणादिसंस्थापितमर्यादाया एव संविद्धर्म्मत्वात्। प्राकृयवि-

भागधर्मशास्त्राध्यापकस्य संविद्धर्म्मज्ञानं नास्तीति न चिन्तयितुं शक्यते किन्त्वत्रापि रहस्यं वर्तते कस्त्वमित्युक्ते खस्त्वमितिवत् किमपि वाच्य-मन्यथा अविदिततत्त्वानां चक्षुषि धूलिनिःक्षेपः कथं स्यादिति । अत्र च मालवीयमहोदयस्योपमानं शास्त्रिवर्येण स्वयम्प्रतिभातधर्ममुनिवदित्य-नेनोक्तं तदर्थस्तु स्वयं प्रतिभातधर्म्मा यो मुनिस्तद्वत् न ह्यस्माकमुप-देष्टा कोपि मुनिः स्वयम्प्रतिभातधर्म्मा, किं तर्हि ? वेदप्रतिभातधर्मा वेदो धर्म्ममूलं तद्विदाञ्च स्मृतिशीले इति स्मरणात् । यदि मुनिशब्दो बुद्धवा-ची मुनीन्द्रः श्रीघनः शास्ता मुनिरित्यमरकोषात्तदा भवत्यसौ स्वयम्प्र-तिभातधर्म्मा मालवीयमहोदयस्तद्वच्चेद्धर्म्ममुपदिशति धर्म्मभूमेरपा-सरदित्युक्तिरेव समीचीना तस्मात्परीक्षापुस्तिकेयं मालवीयमतोपहा-साय कृतेति रहस्यमुद्घाटितं भवति । अनन्तरमेव कोनु इत्यादिकः सन्दर्भः अत्र वृद्धहारीतस्मृतेः प्रामाण्यं नाभ्युपगतं कथञ्चित्प्रामाण्या-भ्युपगमे तु तद्घोरवैष्णवपरमित्युक्तम् । अत्र ब्रूमः यदि वृद्धहारीतस्मृ-तिरप्रमाणं कथं तत्प्रमाणमुपन्यस्य मालवीयमहोदयैर्लोकमोहनं कृतं यदि घोरवैष्णवेषु तत्प्रामाण्यं तथापि सर्वत्र तत्प्रमाणवचनप्रदर्शनमपि व्यामोहनमात्रम् । अथ येन मालवीयमहोदयानामिष्टसिद्धिस्तत्रैव तत्प्रा-माण्यमन्यत्र त्वप्रामाण्यमितिशास्त्रिणां वचनोपन्यासस्य परं रहस्यं सु-धियो विदांकुर्वन्तु । अनन्तरञ्च वृद्धहारीतस्मृतेः प्रामाण्यमभ्युपगम्यै-वेति सावधारणं पण्डितवरस्य वचो न युज्यते इत्यादिसन्दर्भः तस्य भावो ग्रन्थान्तरप्रामाण्यमपि मालवीयमहोदयैः स्वीकृतं तत् सावधार-णवचनं न युक्तमिति । अत्र ब्रूमः तर्करत्नपादानामभ्युपगम्यैवेत्युक्तिः सर्वथा समीचीना नह्यनेनावधारणेन ग्रन्थान्तरप्रामाण्याभ्युपगमो व्या-वर्त्यते तद्व्यावर्तनं यदि श्रीचरणानामभिमतमभविष्यत् वृद्धहारीत-स्मृतेरेव प्रामाण्यमित्येव सावधारणप्रयोगोऽकरिष्यत् । अभ्युपगम्यैवे-त्यवधारणेन तु तदभ्युपगमानन्तर्याभावो व्यावर्त्यते किं सा व्यावृत्तिरपि नाङ्गीक्रियते शास्त्रिणा तदेतद्रहस्यान्तरम् ।

अनन्तरं यद्यदुक्तं तेषां रहस्यं संक्षिप्य निवेद्यते नतु कूटकौशल्येनो-पन्यस्तानीत्युक्तन्तत्रोत्तरं–यदि हारीतवचनानां कानिचिदन्यपराणि स्वा-भिमतसिद्धये परत्र संगमय्य तेषु च मन्त्रान्तरपरत्वबोधकानि स्फुटव-चनानि परित्यज्योत्तरवर्तिनि पुनरुपादाय स्वमतं मालवीयमहोदयैः समर्थितमिदमपि न कूटकौशलञ्चेत् किमपरं कूटकौशलं स्यात् । पञ्च-दैवतोपासकानां प्रमाणभूता न वृद्धहारीतस्मृतिः तस्याः प्रामाण्योद्घो-षणं मालवीयमहोदयैः कृतं शास्त्रिणा च तत्प्रामाण्यं नाङ्गीक्रियते एवञ्च शास्त्रिणैव स्वयं मालवीयमतं खण्डितमिति महद्रहस्यम् । अपि च प्रभूणां मालवीयमहोदयानां कूटकौशलशैली श्रीमतानुजीविना शास्त्रिणा सविशेषमनुसृता । यतो मन्त्रमहिमप्रबन्धे यस्या एव वृद्धहारीतस्मृते-र्वचनानि प्रथमं भित्तिभूमीकृत्याष्टाक्षरमन्त्रस्य शूद्रादिग्राह्यत्वं मालवी-यैस्तत्रत्यान्तरालिकवचननिष्कासनेन समर्थितं सा वृद्धहारीतस्मृतिरु-पष्टम्भकतया मालवीयमहोदयैर्गृहीतेति शास्त्रिणा स्पष्टमुक्तं न च तस्मा-दपत्रपालेशोऽपि इति वयं चित्रीयामहे । नचैवं कपटोपन्यस्तवचनवर्जं शूद्रादीनां तदधिकारबोधकस्पष्टवचनमन्यत्रोपलभ्यते । अथ किं नाम मन्त्रग्रहणं का तस्य परिपाटी परीक्षाकृतः शास्त्रिणो यदि तत्र परिज्ञानं स्यान्नैवमुच्येत मया तु दिङ्मात्रेणोच्यते देवपूजादिसामान्यो धर्म्मः पौरा-णिके हि तत्र सर्वेषामेवाधिकारः मन्त्रग्रहणं नाम दीक्षा सा च संस्कार-रूपा शूद्रादीनाम्प्रणववर्जमितिविशेषः पौराणिके च पञ्चदेवोपासने न तदपेक्षास्ति यस्य कस्यचित्प्रधानमन्त्रस्य ग्रहणेनैव च दीक्षासंस्कारः सम्पद्यते न हि तत्र देवतान्तरमन्त्रग्रहणस्यास्त्युपयोगः या तु तान्त्रिकी पञ्चायतनी दीक्षा या च हरिहरमन्त्रदीक्षा सातु पृथगेव । तत्र दे-वतामन्त्रादिव्यवस्थापि शास्त्रतो लभ्यते न तु मालवीयमहोदय-मतवत् काल्पनिकीति स्पष्टमुद्घोषयामः । अत्र प्रमाणं कृष्णानन्द-राघवभट्टीयनिबन्धयोः प्रपञ्चसारादितन्त्रग्रन्थेषु च द्रष्टव्यं वि-ष्णुसंहितादिषु च्चेति । वैदिकः प्रणवः तत्र स्मार्तधर्मो व्यपदिष्टः

वैदिकनिषेधेन स्मार्तधर्मवन्मन्त्रस्य प्रतिषेधो न युज्यते इत्यर्थकं यदुक्तं शास्त्रिणा तदसङ्गतं 'अनुमतोऽस्य नमस्कारो मन्त्रः इति गौतमस्मृत्यादिभिः स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः । शूद्रो निरयमाप्नोति ब्राह्मणः शूद्रतामियादित्यादिमन्त्रमहिमरहस्यधृतस्मृत्यादिनानावचनैरपि प्रणवस्य शूद्रादिषु प्रतिषेधावगमात् । उच्चैर्ऋचा उपांशु यजुषेति यथा यजुष्युच्चैष्ट्वं शास्त्रतो व्यावर्त्यते नैवं प्रणवे वेदत्वं केनापि वचनेन व्यावर्त्यते विवरणावसरे प्रणवस्य वेदादित्वं हारीतेन दर्शितं तत्प्रमाणमपि मन्त्रमहिमरहस्ये ( ८पृ० ) समुद्धृतम् । श्रीरामाय नमः इति मन्त्रवत् प्रणवादिकमन्त्रा अपि स्त्रीशूद्रैर्ग्राह्या विनिगमनाविरहात् इत्यर्थकं किञ्चिदुक्तं तदपि निःसारं प्रणवनिषेधकवचनस्यैव जागरूकत्वात् पञ्चसंस्कारसम्पन्ना इत्युक्तत्वाच्च । पुराणपाठवर्जनन्तु शूद्रस्य शास्त्रसिद्धमेव श्रोतव्यमिहशूद्रेण नाध्येतव्यं कदाचनेति भविष्यपुराणवचनेन निषेधात् । अपशूद्राधिकरणन्यायेन शूद्रस्य प्रणवानधिकार इति तर्करत्नपादानामुक्तौ शास्त्रिणा प्रतिपादितं प्रणवानधिकारोऽपि ब्रह्मविद्यायामनधिकारे भवितुमर्हतीति तन्न युक्तं प्रणवस्यैव ब्रह्मविद्यात्वात् यया तदक्षरमधिगम्यते सा हि ब्रह्मविद्या। प्रणवस्याक्षरप्राप्तिहेतुत्वं कठमाण्डुक्यछान्दोग्याद्युपनिषत्सु प्रसिद्धमेवेति । यदि इत्यनेन तर्हि इत्यस्याक्षेपो भवति नतु तथापीत्यस्येति चिन्तयित्वा यदुक्तं शास्त्रिणा तदप्यसत् यदिशब्देनापि तथापि शब्दाक्षेपस्य जागदीश्यां दृष्टचरत्वात् उत्तरवचने तुकारस्य सत्तया तदर्थप्रतीतेरुक्तत्वात् मालवीयचातुर्यप्रदर्शनावसरे तन्निह्नुतश्लोकोद्धारे तदर्थस्य स्वयं परिहाराच्च । अष्टाक्षरेण मनुना मन्त्ररत्नेन वा यजेदित्युपन्यस्य मन्त्ररत्नवदष्टाक्षरमन्त्रोऽपि सर्वसाधारण इति प्रतिपादितं शास्त्रिणा तदपि प्रभोरनुवर्तनमात्रं, मालवीयमहोदयेन हि यथा मन्त्ररत्नपरवचनानां अष्टाक्षरपरत्वं लोकमोहनायोक्तं तथैव शास्त्रिणापि यजेदिति क्रियायाः प्रक्रान्तं कर्तृपदमपह्नुत्य लोकमोहनाय सर्वसाधारणत्वमुक्तं प्रक्रान्तकर्तृ-

पदं हि द्विज इति । तथाच सपवित्रकरेणैव आचामेत् प्रयतो द्विज इति । एवञ्च स्वयमेव शास्त्री विषयेऽस्मिन् कूटकौशली भवन् मालवीयमहोदयस्यात्रापि कूटकौशलं प्रकाशयति ब्रूते तु न कूटकौशलीति । इदन्तु वचनं मम माता बन्ध्येतिवत् किं नामातः परं रहस्यम् । अस्पृश्यस्पर्शे नास्ति मालवीयमहोदयानां मतमिति शास्त्रिवचो यदि सत्यं तन्मुखे पुष्पचन्दनवृष्टिर्भूयात् । अथ तर्करत्नपादानां शास्त्रानुगतं वचनं यदि मालवीयमहोदयैरप्यङ्गीकृतं तेन च भवन्नप्युभयोः संवादो न कस्यापि खेदाय भवितुं युक्त इति शम् ।

---

## ब्राह्मणयुवकस्य प्राणोत्सर्गः ।

( निबन्धकः म० म० श्रीपद्मनाथविद्याविनोदः )

दधीचिः प्रददे देहं देवैरभ्यर्थितः किल ।
अयाचितस्त्वयं प्राणानबलानां कृते ददौ ॥

अस्ति कामरूपप्रदेशे ब्रह्मपुत्रोपकण्ठे कश्चिद् ब्राह्मणाद्यध्युषितो जनपदः । तत्र तरुणः प्रियदर्शनश्च प्रियनाथगोस्वामीतिनामधेय आसीत् कोऽपि ब्राह्मणनन्दनः । चैत्रमासीय शुक्लाष्टम्यामशोकाष्टमीति ख्यातायां ब्रह्मपुत्रस्नाने ब्रह्मपदप्राप्तिर्भवतीति तस्माद् जनपदात् लौहित्यापरनामके ब्रह्मपुत्रनदे गतवत्यः काश्चित् योषितः स्नानार्थम् । अन्तरा खलु तन्नदं जनपदं च वर्त्तते । वर्त्म वितस्तिमात्रप्रशस्तं कथमपि पादचारणाय नदावगाहनार्थं जिगमिषूणां जनानां परितस्तु तस्य अनुच्चमपि गहनं काशवनं यत्र जनपदवासिनां गोमहिषाश्चरन्ति ।

अथोलुलुध्वनिना गीतेन च तद्वनस्थलीं मुखरयन्त्यस्ता योषितः

स्वैरं नदाभिमुखं तद्वर्त्मनो यदार्द्धमतिक्रान्ता स्तदा कश्चिन्महिषस्तासां गीतादिशब्देन लोहितादिवसनदर्शनेन वा सञ्जातरोषः शिरः समवनमय्य तदभिमुखं दुद्राव । आरादेव समवलोक्य समापतन्तं कृतान्तमिव द्वितीयं तं कृतान्तवाहनं सञ्जातसम्भ्रमास्ताः कान्दिग्भूता उच्चैश्चुक्रुशुः हंता वयं हता वयमिति ब्रुवाणाः परस्परधृतकन्धरा नार्यः । दृष्ट्वा दूरादेवैतासां निःसहायामवस्थां मा भैष्ट मातरः अयमहं रक्षामि वः पलायध्वमनेनैव वर्त्मना वसतिं प्रति सत्वरं सत्वरमिति ब्रुवन् तासां महिषस्य चान्तरे स्थापयामासात्मानं क्षणेन च विदारितो विषाणाभ्यां निष्पिष्टश्च पादैरिभोपमस्य सैरिभस्य तस्य निश्छिन्नप्रायोसौ नामशेषः सञ्जातः ।

सप्त अष्टौ वा संवत्सराः अस्य ब्राह्मणयुवकस्य प्राणोत्सर्गस्य—न जाने कालेनेयता महाप्राणस्यास्य जन्मभूमिनिवासिन तत्पुण्यस्मृतिरक्षणाय किंविधः कृतः प्रयत्नः । प्राग्ज्योतिषस्थमहाविद्यालयाध्यापकेन केनचित् प्रोत्साहिता आसन् कतिचिदन्तेवासिनस्तस्य स्मारकस्तम्भस्थापनाय तत्र प्राणोत्सर्गस्थल्यां प्रियनाथस्य ते च तदर्थं अर्थमपि कियन्तं समाहृतवन्तः । परन्तु न खल्ववगच्छामि किमवसानोऽयमपि संकल्पः । स्वार्थान्धा हि मानवाः विशेषतः पराधीनेऽस्मिन् देशे कालेऽस्मिन् कलौ च । अत इदमस्य चरितं परार्थे प्राणानप्युत्सृजतः न खलु विस्मरणार्हम् अपितु सर्वेषामेव सर्वदा सम्मुखे संस्थापनीयम् इति मत्वा समग्रेऽस्मिन् भारते वर्षे लब्धप्रसारायास्मै ब्राह्मणसम्मेलनपत्रार्थं तत् सादरमुपहृतमिति शिवम् ।

---

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

ब्राह्मणमहासम्मेलनं सनातनधर्मावलम्बिनां प्राचीनसदाचाररक्षण-पराणां चिरान्मनीषितं परमानन्दप्रदमुत्साहवर्द्धकमपि वहूनामेव विजातीयशिक्षाकलुषितदृष्टीनामापातमधुरवैदेशिकभावविमोहितान्तःकरणानां तैस्तैः प्रोत्साहितानां केषाञ्चित्पण्डितानामपि समधिकमप्रीतिनिदानं भीतिकरं किं वहुना हृदयविदारकञ्चेति न वयं न जानीमः किन्तु का गतिः । पितृपितामहादिक्रमेण समुपासितः अस्माभिरपि आशैशवं समाश्रितः स खलु शास्त्रानुमोदित आचारो वाङ्मात्रेण द्वित्रैर्दिनैः कथं कारं त्यज्यताम् । ये खलु विद्वन्मानिनो गुरोः पितुः स्ववंशस्य वा सदाचारमनायासेनैव परित्यक्तुमर्हन्ति सर्वतन्त्रस्वतन्त्रास्ते महात्मान स्तान् प्रति किमपि न ब्रूमः । ये तु तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिवन्तीत्यादि निन्दावचनमनाकर्णयन्तस्तत्रैव समधिक-श्रद्धावन्त स्तातस्य कूपं न त्यजन्ति मा त्यजन्तु नाम? कात्र वो हानिः? तान् त्याजयितुं कोऽयं युष्माकमाग्रहः? स्वमतरक्षणे यूयमपि किं शिथिलाः । तत्कथं तएवापराद्धाः? नैषो-पराधः शर्कराया यत् पित्तदूषितायां रसनायां सा तिक्तायत इति ।

* * *

कर्णाकर्णिकया श्रुतमस्माभिः यदनेके संशेरते ब्राह्मणमहासम्मेलन-मिदं पञ्चषाणां सपुत्रभ्रातृकाणां पण्डितानां व्यक्तिगतं धनम् । तेषामेवेच्छानुसारेण सर्वं कृत्यं सम्पद्यते । नात्रापरेषां प्रवेशः । तेऽपि स्वं स्वमर्थं सिषाधयिषवो वा स्वस्वमाहात्म्यं प्रकटीकर्त्तुमिच्छवो वाऽस्मिन् कर्म्मणि प्रवृत्ता इति । परमत्र ते न मनागपि विचारयन्ति यद्यु ये खलु महापुरुषधौरेया विश्वविख्यातवैदुषीविभवाः स्वकीयममूल्यं समयं यापयन्तो मस्तिष्कमालोडयन्तः शरीरमपि शोषयन्तो महासम्मेलनमिदं प्रावर्त्तयन् किमेतेन महासम्मेलन सम्पादनेन तेषा मधिका विख्यातिर्भविष्यति? यदर्थं गृहान्नं भक्षयित्वा आरण्यकान् महिषान् ताड़यितुं प्रवृ-

च्चिर्भविष्यति ? सर्वथा निर्मूलक स्तेषां संशयः । ये चात्र संशयालव स्ते दयालवो दयालवं विधाय समागच्छन्तु पश्यन्तु च केऽत्र सम्मिलिताः किं किं कुर्वन्तीति । नैतत्सम्मेलनं कस्यापि व्यक्तिविशेषस्य समाजविशेषस्य सम्प्रदायविशेषस्य वा, किन्तु सर्वेषामेव प्राचीनमतानुसारिणां सनातनधर्म्मावलम्बिनाम् इति तु शतकृत्वः स्मारयामः । एतादृशि बहुजनसाध्ये कर्मणि त्रुटिः सम्भवत्येव । अनिच्छाकृतां त्रुटि मविगणय्य परमोदाराशयैः सम्मेलनमिदमात्मीयं विधातव्य मित्येषाऽस्माकं साञ्जलि विज्ञप्तिः । महासम्मेलनविषये केषामपि संशयलेशो माभूदिति सम्मेलनस्यामूलात्कार्यविवृतिरग्रतः प्रकाशिताऽस्ति कृपया सर्वैं रवलोकनीया ।

* * *

श्रूयते साम्प्रतं शवरमत्याख्ये प्रसिद्धे आश्रमे सुप्रथितनामधेयेन गान्धीमहोदयेन, असाध्येन व्याधिनाक्रान्तः कश्चिद् गोवत्सः चिकित्सकसम्मत्या तीव्रविषप्रयोगेण घातित इति । महात्मपदवीमध्यारूढस्य गान्धीमहोदयस्य कृत्यमेतत् स्मरतामस्माकं लेखनी सापत्रपेव वेपते नाग्रेसरति च । किं श्राविता वयं कालहतकेन ! का कथा साधारणमानवानां ये खलु अतीतानागतादिज्ञानवन्तः ये च कर्त्तु मकर्त्तुमन्यथाकर्त्तुमीशा स्तेषामपि महायोगिना मेतादृशमाचरणं न श्रूयते नवा स्मर्यते । चिकित्सकानां वचनमेव यदि प्रमाणत्वेन गृहीतं तदपि किं नाज्ञानविलसितम् ? किं तेनापि महात्मना बहुशो न दृष्टं यत् दुःसाध्येनामयेन जीवनमात्रशेषतां नीताः चिकित्सकैः परित्यक्ता बान्धवैरपि गङ्गातीरं पितृवनं वा प्रापिता नराः पुनरुज्जीविता इति । तर्हि कथंकारं वक्तुं शक्यते अयं मरिष्यतीति ? एवं चेत् जन्मवतां मरणमवश्यम्भावीति कृत्वा जराजीर्णवपुः पिता वा माता वा भ्राता वा तथावस्थोऽन्यो वा यः कश्चन हन्यतां नाम ? पाश्चात्त्येषु वृद्धस्य रुग्णस्य पित्रादेर्नालीकास्त्रेण हननरीति रासीदिति किंवदन्ती । परमेतदस्माकं बुद्धिविषयतां नावगाहते । कृतकर्म्मणां भोगादेव क्षयः । कर्मफलदाता चेश्वर एव

नान्यः सिद्धान्तमिम मननुसरतां तथाचरणं नासद्दृशम् । वयं तु वद्या-मो न केवल मार्त्तानां दुःखमोचनमेव गान्धीमहोदयस्य तथा प्रवृत्तेर्नि-दान मपि तु आत्माभिमानो नास्तिक्यबुद्धिश्चेति । महात्मनो भक्तैस्तस्य माहात्म्यं प्रत्यक्षीकृतं भविष्यतीति साम्प्रत मेतदेव बहुमन्यामहे ।

* * *

अहो काल माहात्म्यम् ! सर्वत्रैव प्रभवति भगवान् यथेच्छाचारः । यस्य मनसि यदेवाविर्भवति तत्क्षणादेव तत्कर्त्तुं स धर्मं वा समाजं वा कुलमर्यादां पदमर्यादां वा नीतिं वा किमपि न गणयति । यथेच्छमा-चरणमेवास्मिन् युगे परमः पुरुषार्थः । नियन्तु रभावात् क्षीरकण्ठा अपि वालाः महामान्यान् विदुषः समाक्षेप्तुं स्पर्द्धन्ते । दर्शं दर्शं सज्ज-नाः किं कर्त्तव्यताविमूढ़ाः सञ्जाताः । अयि भोः पाठकाः, वक्तुमपि रस-ना स्तम्भमनुभवति यत् केषुचित् संवादपत्रेषु केचन अप्रकाशितनामधेयाः पूज्यपादान् महामहोपाध्यायान् श्रीपञ्चाननतर्करत्नमहोदयान् केचन च तत्र भवतो महामहोपाध्यायान् श्रीलक्ष्मणशास्त्रिचरणान् अतथ्यैरश्रा-व्यैराक्षेपवचनैस्तिरस्कुर्वन्ति । यदेते महासम्मेलनं संघटयितुं नेतृत्वं कुर्वन्ति स एषोऽमीषामपराधः । वयन्तु उपेक्षाबुद्ध्या तान् प्रति किमपि न वदामः । न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पाप-भाक् । सूक्तमेतदनुसृत्य तत्तत्पत्राणामवलोकनमेव परित्यक्तमस्माभिः । येन खलु महापुरुषेण भ्रूसंज्ञामात्रेण राजकीयामुन्नतिशीलां समुच्चपदवीं तृणवत्परित्यज्य देशस्य पण्डितसमाजस्य च महते कल्याणाय स्वकीयं सर्वमेव जीवनमतिवाहितम्–येन च वङ्गराजधान्यां कलिकातानगर्यां शिवकुमारभवनप्रतिष्ठया–काश्यां च सांगवेदविद्यालयाद्यनेक पाठशा-लासंस्थापनेन शास्त्रस्य धर्मस्य पण्डितानां च रक्षा कृता, परमोदार-पूतचरितैस्तैः शास्त्रिवर्यैः साकं नामप्रकाशेऽपि भीरोरविदितपरि-चयस्य कस्यचित्कलह इति यत्सत्यं–"घटानां निर्मातुस्त्रिभुवनविधा-तुश्च कलहः । "



* * * *

# अखिलभारतवर्षीयब्राह्मणमहासम्मेलनकार्यविवृतिः।

समयः—कार्त्तिककृष्णनवमीं (सौरकार्त्तिकस्य विंश दिवसं नवेम्बर मासस्य षष्ठदिवसं) मंगलवासरमारभ्य कार्त्तिककृष्णैकादशीं गुरुवासरं यावद्दिनत्रयं महासम्मेलनस्य समयः।

स्थानम्—वाराणसीनगरस्य मध्यदेशे गङ्गातीरतो विश्वनाथादिमन्दिरेभ्यानतिदूरे शकटाद्यवतरणयोग्ये सर्वथा मनोरमे भूभागेसम्मेलनस्थानं कल्पितमस्ति। स्थानस्य सम्यक् परिचयो निमन्त्रणपत्रादवगन्तव्यः।

सभापतयः—पूज्यपादाः १०८ श्रीमच्छङ्कराचार्याः १०८ श्रीमद्रामानुजसम्प्रदायाचार्याः १०८ श्रीमन्माध्वसम्प्रदायाचार्याः १०८ श्रीमद्वल्लभसम्प्रदायाचार्यादयः स्वतः सिद्धाः सभापतयः। सम्मेलननियामकाः सभापतयश्च तत्र भवन्तो द्वारवङ्गाधीश्वरा-महाराजाधिराजाः श्रीमन्तो रमेश्वरसिंहशर्ममहोदयाः।

स्वतःसिद्धाः सभापतयः सम्प्रदायाचार्याः आशीर्वादादिकं सभारम्भं विधायान्तिमदिने विचारसभासु निर्णीतान् शास्त्रसिद्धान्तान् सर्वेषां पुरतः समुद्घोषयिष्यन्ति। अन्यत्कृत्यजातं नियामकसभापतयः सम्पादयिष्यन्ति।

स्वागतसभाध्यक्षाः—काशीमहाराजा विविधविरुदावलीमण्डिताः श्रीमन्तः प्रभुनारायणसिंहशर्म महोदयाः।

प्रबन्धकारिणीसमिति सभापतयः—सुविश्रुतयशसो महामहोपाध्यायाः श्रीमन्तः पञ्चाननतर्करत्नभट्टाचार्यमहोदयाः।

सहकारिसभापतयः—तत्रभवन्तो महामहोपाध्यायाः श्रीमन्तो लक्ष्मणशास्त्रिद्रविड़महोदयाः, महामहोपाध्यायाः श्रीमन्तो वामाचरणभट्टाचार्य महोदयाः, काशीस्थ राजकीय विद्यामन्दिरान्यतमाध्यापकाः श्रीमन्तो रामभवनोपाध्यायमहोदयाश्च।

सम्पादकाः—महामहोपाध्यायाः श्रीयुक्ता अनन्तकृष्णशास्त्रिमहोदयाः, न्यायाचार्य श्रीराजेश्वरशास्त्रिद्रविड़ महोदयाः, न्यायतीर्थश्रीश्रीजीवभट्टाचार्य ( एम० ए ) महोदयाः, श्रीताराचरणभट्टाचार्यमहोदयाश्च।

पृष्ठपोषकाः—शास्त्रैकजीविताः सर्वे धर्माचार्याः।
वङ्गीयब्राह्मणसभा।
राजश्रीशशिशेखरेश्वरराय वहादुरमहोदयाः ताहेरपुराधिपतयः।
सुप्रथितभूम्यधिकारिणः श्रीव्रजेन्द्रकिशोररायचतुर्धुरीणाः।
कलकत्ता सनातनधर्ममण्डलप्रवर्त्तको मारवाड़ीसमाजः।
रायवहादुर श्रीरामेश्वरनाथानी (ढुढ्वेवाला) महोदयाश्च।

विचारसभा—सम्मेलनात्पूर्वं कार्त्तिककृष्णप्रतिपदं ( सौरकार्त्तिकस्य द्वादशदिवसं नवेम्बर मासस्य च ऊनत्रिंश दिनं ) सोमवासरमारभ्य कार्त्तिककृष्णाष्टमी पर्यन्तं देशान्तरतः समागतानां प्रश्नावल्युत्तराणां विनिर्णयार्थमेका विचारसभा भविष्यति। तत्र पञ्चसंख्यकाः सर्वेषां सम्मत्या निर्वाचिताः सुप्रसिद्धा विद्वांसो मध्यस्था भविष्यन्ति।

प्रातः—अष्टघटिका वादनसमयतो दशघटिका वादन पर्यन्तं, अपराह्णे च द्विघटिका वादनसमयात् पञ्चघटिकावादनपर्यन्तं विचार सभायाः समयो निर्द्धारितः। अस्याश्च सभायां सनातनधर्मानुयायिनो विद्वांसः सम्भूय ये खलु प्रश्नाः सम्मेलननेतृभिरद्य यावत्समुपस्थापिताः प्रेषिताश्च विविधदेशीयानां विबुधानां समीपे ये वाग्रतो विषयनिर्वाचनसमित्या समुपस्थापयिष्यन्ते, तान् प्रश्नानवलम्ब्य तत्त्वविनिर्णयबुद्ध्या विचारं कर्त्तुमर्हन्ति विचारे च निबन्धकाराद्वतपद्धतिरेव सर्वैरवलम्बनीया भविष्यति। उभयोः पक्षयो र्वादविवादा लिपिबद्धा भविष्यन्ति तेषु च वादिप्रतिवादिनो र्मध्यस्थानामपि हस्ताक्षराणि स्थास्यन्ति। सनातनधर्मावलम्बिनो ब्राह्मणा पण्डिता एव प्रतिनिधयो विचारकाश्च भवि-

तुमर्हन्ति-दर्शकपदन्तु चत्वारोऽपि वर्णाः अधिगमिष्यन्ति । अस्या विचार सभाया नियन्त्रका निर्णायकाश्च मध्यस्था एव, तेषा माज्ञया वाद्-विवादा लिपिबद्धा भविष्यन्ति । विचारसभामुपस्थाय शास्त्रानुसारेण स्वस्वमतं प्रकटीकर्त्तुं काशीस्था देशान्तरीया च विद्वन्मण्डली प्रार्थिता । अस्याञ्च विचारपरिषदि अनुकूलानि प्रतिकूलानि वा मतानि प्रकटीकर्त्तुं सर्वेषा मधिकारोऽस्ति । अत्र विनिर्णीतानां शास्त्रसिद्धान्तानां घोषणा सम्मेलने देशान्तरेभ्यः समागतै धर्माचार्यैः करिष्यते । घोषणानन्तरं निर्णीतविषयमवलम्ब्य वाद्विवादयोः अनुकूलप्रतिकूलमत-प्रकटीकरणे च केषामपि अधिकारो न दास्यते ।

मङ्गलानुष्ठानम्—सम्मेलनस्य निर्विघ्नतासम्पत्तये सम्मेलन मण्डपे सहस्रसंख्यकाः सप्तशतीस्तोत्रपाठा यागादयोऽपि अनुष्ठिता भविष्यन्ति ।

सम्मेलनकृत्यम्—प्रथमदिवसे कार्त्तिककृष्णनवम्यां मंगलवासरे मध्याह्ने द्वादशघटिकावादनादनन्तरं सम्मेलनस्य कार्यारम्भो भविष्यति ।

मङ्गलाचरणं, स्वागताध्यक्षाणां काशीमहाराजानां भाषणम्, देशान्तरेभ्यः समागतानां सहानुभूतिसूचकानां पत्राणां वाचनम् । प्रबन्धकारिणीसमिति सभापतीनां म० म० श्रीपञ्चाननतर्करत्नमहोदयानामभिभाषणञ्चैतानि कार्याणि क्रमशोऽनुष्ठेयानि । तदनन्तरञ्च देशान्तरसमागता माननीया धर्माचार्या विचारपरिषदा निर्णीतान् शास्त्रसिद्धान्तानुद्घोष्य आशीर्वादान् प्रदास्यन्ति । अन्ते च पुन मङ्गलाचरणं कृत्वा प्रथमदिनकृत्यं समाप्तं भविष्यति ।

द्वितीय दिवसे कार्त्तिककृष्णदशम्यां बुधवासरे मध्याह्ने एकादश घटिकावादनसमये सम्मेलनकार्यारम्भः । सम्मेलनाध्यक्षाणां द्वारवङ्गाधीश्वराणा मभिभाषणानन्तरं प्रस्तावा ग्रहीष्यन्ते तदनन्तरं च देशान्तरेभ्यः समागतानां विदुषां धर्मविषयकाणि व्याख्यानानि भविष्यन्ति ।

तृतीय दिवसे—कार्त्तिककृष्णैकादश्यां बृहस्पतिवासरे मध्याह्ने एकादश घटिकासमये द्वितीयदिवसोपस्थापितानामवशिष्टानां प्रस्तावानां ग्रहणं, देशान्तरसमागतानां विदुषां धर्मव्याख्यानानि, समारब्धानां यागादिकर्मणां पूर्णाहुतिः सदस्येभ्यो धन्यवादप्रदानञ्च तृतीयदिनकृत्यम् । अनन्तरं सभाविसर्ज्जनम् ।

पूर्वोक्तानां सम्मेलनकृत्यानामावश्यकानुसारेण परिवर्त्तनं परिवर्द्धनञ्च भवितुमर्हति ।

प्रवेशपत्रं विना केषामपि सभायां प्रवेशो न भविष्यति ।

प्रवेशपत्राणि तु वाराणस्यां समागतेभ्यः सर्वेभ्यः प्रदास्यन्ते । विचारसभायामागतानां विदुषां सम्मेलने समुपस्थितानां प्रतिनिधीनां निमन्त्रितानामन्येषाञ्च स्थानभोजनादिव्यवस्था कार्यनिर्वाहकसमित्या करिष्यते । पाथेयव्ययादिकन्तु सभया न प्रदास्यते ।

सम्मेलनकार्यनिर्वाहार्थं धर्मैकप्राणाः सदाचाररक्षणपरायणाः सुप्रथितनामधेयाः काशीस्था ब्राह्मणविद्वांसोऽन्ये च चत्वारो वर्णाः बद्धपरिकराः सम्मिलिताः सन्ति । यावच्छक्यं योग्येष्वेव तत्तत्कार्यभारो न्यस्तः । सर्व एव ते धार्मिकधुरन्धराः सर्वविधं साहाय्यं वितरितुं दत्तचित्ता वर्त्तन्ते—मन्यामहे किमपि परिहीणं न भविष्यति—अग्रे विश्वनाथः शरणम् ।

---

## सम्मेलन कार्य निर्वाहकाः—

| | |
|---|---|
| म० म० श्री पञ्चाननतर्करत्नः | म० म० श्री लक्ष्मणशास्त्री |
| म० म० ,, वामाचरणभट्टाचार्य | म० म० ,, प्रभुदत्तअग्निहोत्री |
| म० म० ,, पद्मनाथविद्याविनोदः | म० म० ,, अनन्तकृष्णशास्त्री |
| पं० ,, रामभवनोपाध्यायः | पं० ,, गणपतिशास्त्रीमुकाटे |

| | | | | | |
|---|---|---|---|---|---|
| पं० | ,, | रामयशत्रिपाठी | पं० | ,, | हाराणचन्द्रशास्त्री |
| ,, | ,, | भगवानदत्तअग्निहोत्री | ,, | ,, | देवकीनन्दनशास्त्री |
| ,, | ,, | विद्याधरशास्त्री | ,, | ,, | गुलावझा |
| स्वामी | ,, | दयानन्दजी | ,, | ,, | धर्मदत्तवेदशास्त्री |
| पं० | ,, | धूमावतीपाण्डेयः | ,, | ,, | राजेश्वरशास्त्री |
| ,, | ,, | कमलकृष्णस्मृतितीर्थः | बाबू | ,, | कवीन्द्रनारायणसिंहः |
| बाबू | ,, | मंगलाप्रसादसिंह | राजा | ,, | मोतीचन्द साहबः |
| रायवहादुर | | वटुकप्रसादखत्री | राय | | रामरतनदास साहबः |
| बाबू | ,, | गौरीशङ्कर गोयन्का | पं० | ,, | मुरलीधर चौधरी |
| कविराज | | विश्वेश्वरप्रसाद सांख्यतीर्थः | कविराज | | शरच्चन्द्रसांख्यतीर्थः |
| | | | ,, | ,, | ज्योतिषचन्द्रकाव्यतीर्थः |
| पं० | ,, | नवकुमारशास्त्री | पं० | ,, | शिवदत्तशास्त्री |
| ,, | ,, | गौरीनाथपाठकः | वा० | ,, | नीलरतनवन्द्योपाध्यायः |
| वा० | ,, | कालीपदवन्द्योपाध्यायः | | | एम० ए० बी० एल० |
| पं० | ,, | दुर्गादत्तवैद्यशास्त्री | पं० | ,, | अनन्तरामडोंगरा |
| वा० | श्री | हृषीकेशवन्द्योपाध्यायः | पं० | ,, | महेशचन्द्रविद्याविनोदः |
| | | | ,, | ,, | रामरञ्जनतत्त्वनिधि |
| पं० | ,, | शारदानन्द ब्रह्मचारी | ,, | ,, | राधाकृष्ण वैद्यः |
| | | | | | श्री जानकीशरणत्रिपाठी च |

श्रीभारतधर्ममहामण्डल नेतारो माननीयाः श्रीज्ञानानन्दस्वामिवर्याः श्रीदयानन्दस्वामिमहोदयाश्च उचितैरुपदेशैः कार्यभारग्रहणेन च सर्वथा सम्मेलनस्य साहाय्यं कुर्वन्तीति परं हर्षस्थानम् ।

---

* नमो ब्रह्मण्यदेवाय *

# ब्राह्मणमहासम्मेलनम्

( मासिकं संस्कृतपत्रम् )

———***———

"न जातु कामान्न भयान्न लोभाद्
धर्मं त्यजेज्जीवितस्यापि हेतोः ।" ( महाभारतम् )

प्रथम वर्षे } सौर कार्त्तिकः शकाब्दाः १८५० { सप्तम संख्या ।

## अखिलभारतवर्षीयब्राह्मणमहासम्मेलनस्य संक्षेपतःकार्यविवरणम् ।

आनन्दकन्दभगवत्परमात्मकृपया ब्राह्मणमहासम्मेलनकार्यक्रमा यथानिर्देशं कार्तिककृष्णप्रतिपदि उपक्रान्ताः सुरुचिरं स्वरूपमलभन्तेति वस्तुस्थितिकथनमिदम् ।

तत्तद्देशेभ्यो मार्कि सार्धत्रिसहस्रं प्रतिनिधयः स्वव्ययेन समागत्य महासम्मेलनशोभामकुर्वतेति महासम्मेलनमिदं सर्वेषां तत्तद्देशस्थानां पण्डितधौरेयाणामधमर्णमेव ।

जगद्गुरुपूज्यपादश्रीकरवीरसङ्केश्वरपीठाधिपतयः श्री १०८ शङ्कराचार्यचरणाः, यतिराजयदुगिरिमठाधिपतयः श्री १०८ संपत्कुमारमुनिचरणाश्चाश्विनशुद्धपूर्णिमायां चतुर्थघटिकायां यथाक्रमं मुम्बईनगरात् रीवानगराच्च मोटारशकटेन समागता ध्रुवेश्वरस्थानात् सगजपदातिभक्तवर्गैर्नगरप्रवेशोत्सवादिना सह भोसलामन्दिरं श्रीकैलासभवनं च स्वावासस्थानं प्रति सपुष्पवृष्टिशिविकया कार्यनिर्वाहकसमितिसदस्यैः सर्वैरपि सपुरस्कारं प्रापिताः ।

अनन्तरमेव च स्पेशलशकटेन श्रीनाथद्वाराधीश्वराणां श्री १०८ दामोदरलालगोस्वामिमहोदयानां श्रीकांकरोलीसंस्थानाधीश श्री १०८ व्रजभूषणलालगोस्वामिमहोदयानां श्रीमथुरासंस्थानाधीश श्री १०८ विट्ठलनाथगोस्वामिमहोदयानां च काशीं प्रति रात्रौ सार्धनवमघटिकायां समागमवृत्तं तन्त्रीद्वारा समधिगम्य सर्वैर्वैष्णवैर्भक्तवर्गैर्महासम्मेलनकार्यनिर्वाहकसदस्यैः गण्यमान्यनागरिकवर्यैश्च यथा समयं सवाद्यघोषदीपप्रबन्धचतुरश्वशकटादिभिश्च सह धूमशकटस्थानं प्राप्य सनातनधर्मजयोद्घोषणेन सपुष्पवृष्टिस्वागताभिनन्दनेन यथायोग्यमभ्युत्थानादिभिः सनतितति सादरं च प्रतिगृहीताः पूज्यपादश्रीनाथद्वाराधीशाः श्रीकांकरोलीसंस्थानाधीशाः श्रीमथुरासंस्थानाधीशाश्च श्रीकाशीनिवासिगोपालमन्दिराध्यक्षगोस्वामिश्रीमुरलीधरजीमहाराजादिभिःसाकं साडम्बरं गोपालमन्दिरं प्रापिताः स्वागताभिनन्दनादिना सद्क्रियन्त ।

कार्तिककृष्णप्रतिपदि पूर्वाण्हे पूर्वनिर्दिष्टैः सर्वैरेव धर्माचार्यैर्यथासमयं समागत्य विचारसभामण्डपः स्वस्वासनग्रहणेन विचारसभोद्घाटनेन महत्या शोभया समलमकारि ।

प्रास्ताविकभाषणानि यानि मुद्रापितान्यन्यत्र संगृहीतानि तैस्तैराचार्यवर्यैर्वाचितानि, विचारसभानियमाश्च सम्पादकेन वाचिताः सर्वैरपि सदस्यैराचार्यैश्च सादरं गृहीताः, धन्यवादाश्च सर्वेषां सदस्यानामाचार्यवर्याणां च दत्ता इति प्रथमदिनकृत्यमिदमेतावतैव सुष्ठु संपन्नम् ।

कार्तिककृष्णद्वितीयायां च श्रीधर्माचार्याणामनुमत्या एते पण्डिता मध्यस्था निर्वाचिताः—

महामहोपाध्याय पण्डित श्रीचण्डीदासन्यायतर्कतीर्थाः ।
महामहोपाध्याय पण्डित श्रीविरूपाक्षशास्त्रिणः ।
महामहोपाध्याय पण्डित श्रीशशिनाथझा महोदयाः ।
श्रीनाथद्वारपण्डित भट्ट श्रीनन्दकिशोरशास्त्रिणः ।

मैसूरमहाराजप्रतिनिधि पण्डित श्रीश्रीनिवासाचार्याः ।
पण्डितप्रवर श्रीरामानुजाचार्याः ।
पण्डितप्रवर श्रीरामभद्रनोपाध्यायमहोदयाः ।

महामहोपाध्याय पं० श्रीअनन्तकृष्णशास्त्रिणां नियामकत्वेन विवाहकालविचारोऽलभतोपक्रमावसरम् ।

विषयेऽस्मिन् , दिनद्वयं विचारिते पण्डित श्रीहाराणचन्द्रशास्त्रिणः, पं० श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः, न्यायाचार्य श्रीराजेश्वरशास्त्रिणः, महामहोपाध्याय श्रीतातसुब्बरायशास्त्रिणः, पं० श्रीमदाञ्जनेयशास्त्रिणः, श्रीवेङ्कटेश्वरदीक्षिताः, पं० श्रीप्रियनाथ साङ्ख्यतीर्थाः, पं० श्रीशशिभूषणस्मृतितीर्थाः, पं० श्रीनारायणचन्द्र विद्यारत्नाश्च विशेषतो विचारकपदस्वीकरणेन विचारसभाविशिष्टशोभां प्रापयन्निति सर्व एवेदमुपस्थिता जानन्त्येव ।

अष्टमवयसः पूर्वं स्त्रीणां विवाहनिषेधनियमनं योग्यं वेति, दशमवयसः पूर्वं तन्निषेधनियमनं योग्यं वेति, ऋतोरनन्तरं विवाहाभ्यनुज्ञानं योग्यं वेति, पुंसां विवाहकालः षोडशवयसः पूर्वं न योग्य इति नियमनं योग्यं वेति, पञ्चाशद्वयसोऽनन्तरं विवाहनिषेधनियमनं योग्यं वेति, विषया विचारार्थं गृहीताः ।

सर्वानुमत्या मुख्यकाले उत्कृष्टवरालाभसम्भावनाव्याजेन क्रियमाणस्य कन्याया विवाहस्याष्टमवयसः पूर्वं, पुंसां च पञ्चाशद्वत्सरानन्तरं विवाहस्य शास्त्रदृष्ट्याऽसिद्धत्वाभावेऽपि विवाहनिषेधनियमनं तत्तत्समाजहितदृष्ट्या क्रियमाणमनुमोदनार्हमिति समालोच्य रजोऽनन्तरविवाहविषये ब्राह्मणस्त्रीविषये प्रायश्चित्तानन्तरमपि न कर्माधिकार इति मतं कर्माधिकारयोग्यतेति मतं च समालोच्य मध्यस्थानां सविधे स्वाशयाविष्करणार्थं दत्वाऽवान्तरश्रेणीविवाहचर्चा समुपक्रान्ता ।

तत्राकोलापरिषन्निर्णयो बहूनां महाराष्ट्रीयाणामनुमत्या दिवेकर श्रीमहादेवशास्त्रिणां वांईस्थ तर्कतीर्थश्रीलक्ष्मणशास्त्रिणां च सह्याद्रि-

खण्डाप्रामाण्यवादेन बौधायनरहस्याप्रामाण्यवादेन चावान्तरश्रेणीनियमत्यागसिद्धान्तोऽन्येषामपि सर्वेषां सनातनधर्मावलम्बिनामनुमत्या च निरासमर्हतीति व्यवस्थापितो मध्यस्थानां सविधे विचारार्थमुपक्षिप्त इति द्वितीयतृतीयदिनकार्यक्रमः ।

तृतीयदिन एव विवाहविचारसमाप्त्यनन्तरं—
महामहोपाध्याय पं० श्रीविरूपाक्षशास्त्रिणाम्
महामहोपाध्याय पं० श्रीतातसुब्बरायशास्त्रिणाम्
महामहोपाध्याय पं० श्रीफणिभूषणतर्कवागीशमहोदयानाम्
श्रीवल्लभकुलभूषण पं० श्रीबलभद्रशर्ममहोदयानाम्
दर्शनालङ्कार पं० श्रीदेवकीनन्दनशास्त्रिणाम्
पण्डितप्रवर श्रीरामभवनोपाध्यायानाम्
माध्यस्थ्येन मन्त्रदीक्षाविषये विचारोऽवसरमलभत ।

तत्र भागवतधर्मदीक्षायां न जातिविशेषः प्रतिबन्धकः, सर्वसाधारणस्तत्राधिकारः, यवनादिजातिर्जन्मसिद्धाऽनादिः, कर्मकृतापि काचन तत्साम्यापत्तिरूपेत्यत्र सर्वेषामैकमत्यमासीत् ।

ॐकारसहिताष्टाक्षराद्युपदेशः शूद्रादीनामपि भवति वा नवेति विषयोऽनन्तरं विचारार्थमुपक्षिप्तः सम्पादकेन म० म० पण्डित श्रीमदनन्तकृष्णशास्त्रिणा ।

नियामकपदं महामहोपाध्याय श्रीयुक्त पण्डितप्रवर श्रीपञ्चाननतर्करत्नभट्टाचार्यमहोदयाः समलमकुर्वन् ।

श्रीरामप्रपन्नाचार्याः, न्यायाचार्य श्रीराजेश्वरशास्त्रिणः, म० म० पं० श्रीअनन्तकृष्णशास्त्रिणः, श्रीतातदेशिक ताताचार्याः, श्रीरामानुजाचार्याः नेने श्रीगोपालशास्त्रिणश्चात्र विशिष्टं विचारकपदमगृह्णन् ।

अत्राष्टाक्षरमन्त्रे तेङ्गलसंप्रदायानुसारेणापि जपे नाधिकारः, अर्थानुसंधाने परमधिकारो वर्त्तत इति श्रीरामानुजाचार्याः,श्रीतातदेशिकाचार्याः श्रीवैष्णवसम्प्रदाये अं नमोनारायणायेत्येव पाठः द्राविडप्रवरधररहस्य-

सारादिनिबन्धसिद्ध इति, औंनमः शिवायेति म० म० पं० आशुतोष-शास्त्रिणः, श्रीबलदेवमिश्रमहोदयाः ॐकारेण साकं मन्त्रजपे न शूद्राणा-मधिकारः इत्यत्र बहुप्रमाणव्याकोपापत्तिनिरूपणपूर्वकमौं नमः शिवायेत्येव पाठोयुक्त इति, पञ्चाक्षरे न केवलं ॐकार राहित्यं शूद्रविषये किन्तु शिवाय नमः इत्येव पाठ इति सर्वेऽप्यान्ध्रपण्डिता अन्ये च निरूपयन्ति स्म । श्रीरामप्रपन्नाचार्यास्तु वैष्णसंस्कारसंस्कृतशूद्रविषये नोक्त-निषेधप्रवृत्तिरिति वदन्ति स्म । एतेषामभिमतं वैष्णवसंस्कारसंस्कृतानां शूद्राणामपि भक्तानां न शूद्रजातित्वमिति सिद्धान्तं सर्वैरपि सदस्यैरैक-कण्ठ्येन सुदूरं निरसितुं प्रयतितं चापि नियामकानामाज्ञया मध्यस्थानां सविधे विचारार्थं विषयमिममुपस्थाप्य चतुर्थदिनेऽपराह्णे पतितपरावर्तन-विषयो विचारार्थं सम्पादकेनोपक्षिप्तः । यत्र—

महामहोपाध्यायः पं० श्रीहाथीभाईशास्त्रिणः ।

महामहोपाध्याय पं० श्रीदुर्गाचरणसाङ्ख्यवेदान्ततीर्थमहोदयाः ।

पण्डित श्रीमार्कण्डेयशर्माणः ।

शुद्धाद्वैतभूषण पं० भट्ट श्रीरमानाथशास्त्रिणः ।

तर्कालङ्कार पं० श्रीनागेशशास्त्रिणश्च मध्यस्थपदमलमकुर्वन् ।

श्रीदयानन्द स्वामिनः (भारतधर्ममहामण्डलप्रधानभूता) नियाम-कपदमलमकुर्वन् ।

अत्र म्लेच्छानां चण्डालानां च तारतम्यचर्चा प्रथममुपक्रान्ता । तत्र वङ्गीयानामन्येषांच केषां म्लेच्छाश्चंडालापेक्षयोत्कृष्टा जन्मत इति, द्राविडानान्तु जातितो यवनानामुत्कृष्टत्वमेव, कर्मणा तु क्रौर्यादिना नीचत्वमिति मतमासीत् । इदमेव मतमुज्जयिनीप्रतिनिधीनामप्यासीत् । अत्र श्रीराजेश्वरशास्त्रिणो न्यायाचार्याः, नेनेगोपालशास्त्रिणः वङ्गीयाःसर्व-एव वांईस्थतर्कतीर्थलक्ष्मणशास्त्रिणश्च विचारकपदं विशिष्टं समगृह्णन् । चतुर्थदिनशेषे देवलस्मृतिप्रामाण्यविषयिणी चर्चा समुपक्रान्ता, यत्र सर्वेषां शूलपाण्यादिनिबन्धानुसारेण प्रामाण्ये न विप्रतिपत्तिलेशोऽप्यासीत्

पञ्चमदिने च पतितोत्पन्नशोधनविषये महती विप्रतिपत्तिरासीत् । तत्र वांई लक्ष्मणशास्त्रिणः न्यायाचार्य श्रीराजेश्वरशास्त्रिणश्च विशिष्टा विचारका आसन् । वांई लक्ष्मणशास्त्रिणः—पतितोत्पन्नानां पतितोत्पत्तिप्रयुक्तं पुत्राणां पातित्यमस्त्येव, कन्यानां तु नोत्पत्तिप्रयुक्तं, संसर्गकृतं तु पातित्यं यथावसरं भवत्येव, कृतप्रायश्चित्तानामपि पतितानामव्यवहार्याणां पृथक्संस्थैवेत्यादि वदन्ति स्म । श्रीराजेश्वरशास्त्रिणामपि प्रायेणैकमत्यमेवासीत् । संवत्सरानन्तरं पतितसंसर्गे पृथक् संस्थेति श्रीराजेश्वरशास्त्रिणो वदन्ति स्म । वांई लक्ष्मणशास्त्रिणां तु वैमत्यमत्रासीत् । मध्यस्थानां सविधे निर्णयार्थममुं विषयमुपक्षिप्य स्पर्शास्पर्शविचारो विचारार्थं गृहीतः, यत्र मध्यस्थाः—

महामहोपाध्याय पं० श्रीकमलकृष्णस्मृतितीर्थमहोदयाः ।
पण्डितप्रवरश्रीकालीकिशोरदेवशर्माणः ।
पण्डितप्रवरश्रीआशुतोष स्मृतिरत्नमहोदयाः ।
पण्डितप्रवरभट्टश्रीबालशास्त्रिणः ।
पण्डितप्रवर रेड्डिश्रीरङ्गाचार्यमहोदयाः ।
पण्डितप्रवरमल्लादि श्रीरामकृष्णशास्त्रिणो महाग्निचितः ।
पण्डितप्रवर श्री श्रीशङ्करभट्टाचार्य महोदयाः ।

अत्र चण्डालानां देवालयप्रवेशविषये सर्वेषां न प्रवेशो योग्य इत्यत्रैकमत्यमासीत् । कूपोदकग्रहणविषयेऽपि प्रायेण न तद्ग्रहणं योग्यमित्यत्रैकमत्यमासीत् । इयान् विशेषः—यत् चतुर्हस्ताधिकपरिमाणकूपोदकग्रहणे तु न दोष इति वङ्गीयानां मतमासीत् । म० म० पं० श्रीदुर्गाचरण साङ्ख्यवेदान्ततीर्थमहोदयैर्वङ्गीयानां मतमुपक्षिप्तम् । म० म० श्रीअनन्तकृष्णशास्त्रिणः—आसमन्ताच्चतुर्हस्तो जलाशयो भवेद्यदि । इति श्लोके अन्त्यजपदमेव वर्तते न चण्डालपदम्, अतश्चण्डालभाण्डसंसृष्टमितिश्लोकस्य विशेषविषयस्य नानेन बाधो युक्त इति रजकादिस्पर्श एव चतुर्हस्ता-

धिककूपरयादूषणत्वम् । न तु चण्डालस्पर्शेपीति वदन्ति स्म । विचारार्थं च मध्यस्थानां सविधेऽयं विषय उपक्षिप्तः ।

अनन्तरं षष्ठदिने व्रात्यसंस्कारविषये विधवाविवाहविषये चातुर्वर्ण्यस्य जन्मसिद्धत्वमित्येतद्विषये च धर्मज्ञानां धर्मपरिवर्तनाधिकारविषये च चर्चा समासीत् ।

वांई लक्ष्मणशास्त्रिणस्तदनुयायिनश्च परम्परागणनं नापेक्षितमिति सर्वेषां व्रात्यानां संस्कारयोग्यतेति वदन्ति स्म । श्री म० म० पं० अनन्तकृष्णशास्त्रिप्रभृतयस्तु परम्परात्रयपर्यन्तमनुपनीतत्व एव व्रात्यसंस्कारयोग्यतेति । पं० श्रीअमृतलालशास्त्रिणोऽपि वांई लक्ष्मणशास्त्रिणामेव मतं वदन्ति स्म । एते तु–यस्य प्रपितामहादि इत्यत्राऽऽदिशब्देन प्रप्रपितामहादीनां ग्रहणमिति वदन्ति स्म । अत्र च महामहोपाध्याय श्रीअनन्तकृष्णशास्त्रिणोऽवदन्–यत् यद्येवम्, पितृपितामहयोर्व्रात्यसंस्कारानन्तरमपि प्रपितामहमारभ्यानुपनयनेन व्रात्यसंस्कारापत्तिरिति प्रपितामहपितामहपितॄणामेव प्रपितामहादीत्यादिपदेन ग्रहणमिति ।

विधवाविवाहे तु सर्वानुमत्या निन्द्यत्वमनुमतमासीत्, परंतु गिरिजाकान्तरायेन केनचन विधवाविवाहपौरोहित्यमाचरता, पौनर्भवेन भर्त्रा सेति मनुवचनेन शास्त्रीयत्वव्यवस्थापनार्थं प्रवृत्तम्, महामहोपाध्याय श्रीअनन्तकृष्णशास्त्रिभिरत्रवाक्ये–पौनर्भवेन विधवापुत्रेण भर्त्रैव खलु विवाहो निर्दिष्ट इति कृते प्रश्ने—पौनर्भवेन विधिनेत्यन्वयः विधिना पदाध्याहारेण तेनोपक्षिप्तः ; अध्याहारे किं प्रमाणम्? कथं पौनर्भवेनेत्यस्य श्रूयमाणेन भर्त्रेत्यनेन नान्वय इति पृष्टे तूष्णींभावोऽवलम्बितः । सर्वानुमत्याऽनन्तरं तन्निन्द्यत्वं स्थिरीकृतम् ।

जातिर्जन्मसिद्धा, परिवर्तने न धर्मज्ञानामधिकार इत्यत्र चैकमत्यमेवासीत् ।

अनन्तरं कृष्णसप्तम्यां सायमुपस्थितानां सर्वेषां पण्डितानां सर्वेषां धर्माचार्याणां प्रतिनिधिप्रेषणेन सह योगदातॄणां धर्माचार्याणां तत्तद्धर्म-

संस्थाप्रवर्तकानामपेक्षितबहुव्ययदानेनोपकृतानां कलकत्तानिवासिनां श्रीरायबहादुर बाबू रामेश्वर नाथाजी दूदवेवाला महोदयानां, श्री सर ओंकारमल जटिया महोदयानां, श्रीसाधुराम तुलाराम गोएनका महोदयानां, शिवबक्षबागडी, कृष्णगोपालबागडी, लक्ष्मीनारायणडागा, श्रीरामकुमार झुन्झुनवालाप्रभृतीनां च धन्यवादप्रदानपुरस्सरं मेदिनीपुरवास्तव्यानां श्रीपण्डितरजनीकान्त विद्यारत्नमहोदयानामाकस्मिककाशीवासनिमित्तं शोकप्रकाशेन, तत्परिवारार्थं कलकत्ता निवासि लालाश्रीदामोदरदास खन्नामहोदयानां २०१) रूप्योपकारप्रतिज्ञोद्घोषणपुरस्सरमुपस्थितानां सर्वेषां पुरतोऽष्टम्यां भाविनि नगरप्रवेशे सहयोगप्रार्थनापुरस्सरं च विचारसभाविसर्जनं श्रीधर्माचार्याणामनुमत्या संजातम् ।

कार्तिक कृष्णषष्ठ्यां द्वारकानगरीतः समागताः श्रीशारदापीठाधीश्वराः पूज्यपादश्रीमज्जगद्गुरु श्री १०८ शङ्कराचार्यचरणाः, सप्तम्यां च मारवाडदेशात्समागताः श्रीप्रतिवादिभयङ्करश्री १०८ मदनन्ताचार्यस्वामिचरणाः अपि स्वागताभिनन्दनादिभिः प्रतिगृहीताः । एते चाऽस्वास्थ्यवशान्नगरप्रवेशे न भागमगृण्हन् ।

अष्टम्यां च चण्डीयागोपक्रमः प्रातः, मध्यान्हे द्वितीयघटिकायामेकादशगजैः, २० अश्वैस्तत्तादृशैरसाधारणैर्वाद्यविशेषैर्धर्माचार्याणां विरुदजातैश्च साकं सर्वेषामुपस्थितानां धर्माचार्याणां भगवतो वेदस्य नगरयात्रोत्सव उपक्रान्तः। यत्र कृष्णगढमहाराजः स्वयं श्रीनाथद्वाराधीशानां शिबिकां स्कन्धेन सत्रै वैष्णवैः सहोवाह । यत्र परस्सहस्रं जनास्तत्र तत्र पुष्पवृष्ट्यादिभिः पूजनादिभिः सनातनधर्मजयोद्घोषणेन श्रीहरिनामसङ्कीर्तनेन तत्र तत्र रथ्यायां प्रासादेषु गृहवेदिकासु च मिलिताः सोत्साहमदृश्यन्त सर्वैरेव । एतादृशी शोभायात्रा न कदापि बभूवेति वृद्धाः कथयन्ति स्म ।

कार्तिककृष्णनवमीमारभ्यैकादशीपर्यन्तं महासम्मेलनं महताडम्ब-

रेण प्रायेण दशसहस्रजनानामुपस्थित्या प्रथमदिने श्रीधर्माचार्याणां द्वितीयदिने महाराजाधिराजश्रीमिथिलेशानां, प्रबन्धकारिणीसभासभापतीनां महामहोपाध्याय पण्डितप्रवरश्रीयुक्त पञ्चाननतर्करत्नभट्टाचार्यमहोदयानां, स्वागताध्यक्षाणां श्रीमन्महाराजश्रीकाशीनरेशानां च तत्तादृशानिभाषणानि यथावसरं तैस्तैर्वाचितानि । अस्वास्थ्यवशात्तु श्रीकाशीनरेशानामनुरूपतत्पुत्राणां श्रीमद्राजकुमाराणामुपस्थितौ पं० लक्ष्मणझा महोदयेन वाचितम् ,तथा श्रीश्रीजीवन्यायतीर्थेनानुरूपेण पुत्रेण म० म० पं० पञ्चाननतर्करत्नभट्टाचार्याणामुपस्थितौ वाचितानि भाषणानि मुद्राप्यात्रैव पुस्तके योजितानीति तत एव सर्वाण्यवगन्तव्यानि ।

द्वितीयतृतीयदिनयोर्येये प्रस्तावा गृहीतास्ते सर्वेऽपि यथानदन्ते योजिता एवेति नाधिकमत्र लिख्यते ।

संस्कृत विश्वविद्यालयप्रस्तावे, जाङ्गिडजातिप्रभृतीनां ब्राह्मणत्वाद्यवलम्बननिन्दाप्रस्तावे, महाराजाधिराजश्रीमिथिलेशानां विश्वविद्यालयार्थं पञ्चलक्षरूप्याणां प्रदानप्रतिज्ञाश्रावणे, श्रीनाथद्वाराधीशानां लक्ष्यरूप्यवृत्तिरूपपञ्चसहस्ररूप्याणां प्रतिसंवत्सरमुपक्रमावसरेऽधिकस्यैकादशसहस्ररूप्याणां श्रीकांकरोलीसंस्थानाधीशानां द्विसहस्ररूप्याणां च वितरणप्रतिज्ञासन्देशश्रवणेन च जनतायां यादृशः समुत्साहः स दरीदृश्यते । सत्यमयं मनोवाचामगोचर एव ।

महासम्मेलनविरोधनमेव काशीस्थसनातनधर्मपण्डितसभया बहुभिरधिवेशनैर्बहुविधैश्च प्रकारैः स्वकर्तव्यं मतमपि भगवतः श्रीविश्वनाथस्य श्रीअन्नपूर्णाम्बायाः श्रीवेणीमाधवस्य श्रीदुर्गायाः सर्वासामपि देवतानां चानुग्रहेणाऽस्माकं यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितमिति न्यायेन प्रणवदीक्षाविषये सनातनधर्मपण्डितसभायामप्यस्मदीयस्यैव सिद्धान्तव्यवस्थापनेन न मात्रयाप्यवसरमलभतेति प्रत्यक्षीकृतमिदं तत्त्वं "धर्मो रक्षति रक्षितः ।

सर्वथा तु भगवत्कृपया विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमानमपि महासम्मेलनमुपस्थितानां सर्वेषामनुपस्थितानां सहयोगिनां विशिष्य च भारतधर्ममहामण्डलस्य, कलकत्ता सनातनधर्ममण्डलस्य, श्रीरामेश्वरनाथानीप्रभृतीनां सर्वेषामनुपस्थितानां प्रतिनिधिप्रेषणादिना सहयोगिनां च धन्यवादपुरस्सरं सशान्ति ससनातनधर्मजयोद्घोषणं सानन्दं श्रीपूज्यपादानां धर्माचार्याणामाशीर्वादपुरस्सरं सोत्साहं च समाप्तिमलभत । आयव्ययादिनिर्देशोऽन्त एव समुपलभ्येत ।

विश्वसिमो यथावसरं तत्तदुपसमित्यादिसंघटनेन यथा महासम्मेलनमिदमुत्तरोत्तरं समुन्नतिं गच्छेत्तथा क्रियेतेति श्रीविश्वनाथः शरणम् ।

कार्तिक कृष्ण १२ भृगुवासरे<br>सं० १९८५ } अनन्तकृष्णशास्त्री<br>( संपादकः )

श्रीरामः शरणम् ।

भागवतधर्मं दीक्षायां जातिविशेषः प्रतिबंधको नवेति विप्रतिपत्तिः—

( निबन्धकः—म० म० पं० श्रीतात सुब्बराय शास्त्री, विजयनगरम् )

अत्र वाक्ये धर्मः कीदृश इति निर्णयमंतरा निरुक्तायां विप्रतिपत्तौ एकतरकोटिः निश्चेतुं नैव शक्यते । धर्मशब्दार्थस्तु तत्र तत्र विभिन्नतया परिदृश्यते । तथापि मुख्योऽर्थः श्रौतः स्मार्तश्च, आगमिकस्तु गौणः । अत एव जैमिनिः "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रे वैदिकस्यैव धर्मशब्दार्थत्वं प्रतिपादयामास । स्मार्तोऽपि धर्मः स्मृतीनां वेदमूलकत्वात् वैदिकत्वमुपगच्छन्मुख्यएव भवितुमीष्टे । आगमिकेषु धर्माभासेषु प्रयुज्यमानाः धर्मशब्दा गौणा इति ते गौणा एव भवन्ति । तदुक्तं सूतसंहितायां यज्ञवैभवखण्डे,

चोदनालक्षणो धर्मो धर्मः साक्षान्निरूपणे ।
इतरो व्यवहारे तु धर्म इत्यभिशब्द्यते ॥
आस्तिक्यान्वयमात्रेण धर्माभासेऽपि सुव्रताः ।
प्रयुक्तो धर्मशब्दस्तु मुख्यो धर्मस्तु वेदजः ॥" इति ।"

यथा श्रौतधर्मेष्वास्तिक्यं तथैव तदितरधर्माभासेष्वपि तद्दर्शनात् तत्र धर्मशब्दप्रयोगो गौण इत्यर्थः इति माधवाचार्यो व्याचख्यौ । एवं सति विप्रतिपत्तिवाक्ये यदि धर्मशब्दः वैदिकमपि धर्ममभिदधाति तदा तत्र धर्मे द्विजानामेवाधिकारस्यान्यत्र सिद्धांतिततया तदर्थयागदीक्षासु शूद्रत्वजातीनां प्रतिबंधकत्वं दुरपह्नमेव । यत्र द्विजातिष्वपि ब्राह्मणानां राजसूयादौ, क्षत्रियादेर्बृहस्पतिसवादावनधिकारस्य अन्यत्र सिद्धांतिततया तत्तद्दीक्षासु तत्तदितरजातेः प्रतिबंधकत्वमपि ।

अथ यदि विप्रतिपत्तिवाक्ये धर्मे भागवतत्वविशेषणदानेन वैदिकेतरमंत्रदीक्षा विवक्ष्यते, तदा सर्वेष्वपि मंत्रेषु सर्वेषामनधिकारात्

येषु मंत्रेषु यद्यज्जातिविशिष्टस्याधिकारः पुराणादौ प्रसिद्धः तत्तन्मंत्र-दीक्षायां तत्तज्जातिविशिष्टस्यैव योग्यत्वेन इतरजातेस्तत्रापि प्रतिबंधक-त्वमभ्युपगन्तव्यम् । अतः कुत्र केषामधिकारः कुत्र नेत्यमुमंशमधिकृत्य किंचित् विमृश्यते ।

शूद्राणां वैदिके धर्मे नाधिकारः किंतु पौराणिक एवेति सर्वेषां विदितचरमेव । यद्यपि द्विजेतराणां केषांचित् निषादस्थपत्यादीनां क्वचित् वैदिके धर्मे अधिकारः श्रूयते, तथापि तेषां तद्यागमात्रोपयोगि-वेदाध्ययनस्य तद्विधिबलादाक्षेपेण तावन्मात्रेऽधिकाराङ्गीकारेऽपि अन्यत्राध्ययनाभावादनधिकारएव । एवमेव पत्नीकर्तृकमंत्रपठनादाव-प्यूह्यम् । शूद्राणां तु उपनयनाभावेनाध्ययनाभावात् वैदिकधर्मान-धिकारेण तद्दीक्षायां शूद्रत्वजातिः प्रतिबन्धिकैव । तेषां तु पुराणै रेव प्रसिद्धिः ।

> विशेषतस्तु शूद्राणां पावनानि मनीषिभिः ।
> अष्टादश पुराणानि चरितं राघवस्य च ॥" इति
> शूद्रकमलाकरे भविष्योक्तेः ॥

पौराणिकधर्माधिकारिशूद्रविषये निबंधकाराणां विप्रतिपत्तिर्दृश्यते । केचन निबंधकर्तारः शूद्राणां पुराणश्रवण एवाधिकारः । न तु पठनेपीति वदन्ति । उदाहरन्ति च स्वस्वमतोपष्टंभकतया कानिचिद्वचनानि । "पठन्द्विज" इति रामायणश्लोके चतुर्थपादे स्वस्वमतानुकूलं पाठभेद-मपि कल्पयन्ति ॥ तत्र निबंधनकारेषु केषां मतं प्रमितं केषां नेति विचारस्य तु नायमवसरः । परं तु ये तु श्रवणमात्रेऽधिकारमभ्युपग-च्छन्ति तेऽपि तस्मादेव तदर्थज्ञानमप्यभ्युपगच्छन्ति । सूतसंहि-तायामपि ।

> अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनमि"ति ।
> पुराणैर्वेदनं प्रतिपाद्यते ॥

तच्चार्थज्ञानं "उच्चारित एव प्रत्यायको नानुच्चारितः" इति पतं-

त्युक्तदिशा स्वोयसूक्ष्मोच्चारणमंतरा न संभवतीति सूक्ष्मोच्चारणरूप-पठनं तैरप्यङ्गीकृतप्रायमेव ।

अथ तत्र तत्र पुराणेतिहासादिषु श्रौतवाक्यानां प्रणवस्य अन्येषां च वहूनां मंत्राणां घटकतया तद्घटकानां श्रुतिवाक्यानां प्रणवस्य तत्तन्मंत्राणां च मतभेदेन पठने श्रवणे वा शूद्राणामधिकारोऽर्थसिद्धः । तद्बलात्तन्निषेधबोधकवचनानां तदतिरिक्तपरत्वमवश्यं कल्पनीयम् ॥ एवं च सर्वथा शूद्राणां वेदमंत्रेष्वनधिकार इति वक्तुं न युज्यते । इति चेन्न ॥ पुराणेषु प्रणवश्रुतिवाक्यसमानाकारतया केषांचिद्दर्शनेऽपि तेषां श्रुतिवाक्यत्वानभ्युपगमात् । अन्यथा लौकिकशब्दानां वहूनां श्रुति-घटकतया तदुच्चारणेऽपि अनधिकारप्रसंगेन शूद्रविषये शास्त्रोक्तधर्मवि-लयप्रसंगात् । अत एव वार्तिककारेण ।

"तानेव वैदिकान्मंत्रान्भारतादिनिवेशितान् ।
विहाय मंत्रनियमं लोक बुध्याप्रयुंजत ॥" इति ।

पुराणघटकानां लौकिकत्वप्रतिपादनं संगच्छते ॥

एतत्तुल्यन्यायेन पुराणघटकानामितरेषामपि तत्तन्मंत्रसमानाका-राणां वाक्यानां लौकिकत्वमेव । अतएवोपदेशाभावेन तत्तन्मंत्रजपा-दावनधिकारिणां द्विजातीनां तत्तन्मंत्रघटितपुराणादिपठनं साधु संगच्छते । एवं च तत्तत्पुराणादावधिकृतानां तद्घटकमंत्रेषु सर्वेष्व-प्यधिकारोऽर्थसिद्ध इति कथनं मीमांसावार्तिकविरोधादनुभवविरोधा-द्युक्तिविरोधादुपेक्ष्यमेव । तर्हि कतिषुचिन्मंत्रेषु अनुभवगोचरः शूद्राणा-मधिकारः किंप्रमाणक इति चेत् तेषां तत्तन्मंत्रजपादावधिकारबोधक पुराणागमादि वचनमूलक इति मंतव्यम् ॥ तानि वचनानि दिङ्मात्र मत्रोदाह्रियन्ते । मन्त्र महोदधौ चतुर्विंशे तरङ्गे "त्र्यर्णमेकाक्षरोनु-ष्टुप् त्रिविधोनरकेसरी" त्यादिना कांश्चनमंत्रन् परिगण्य "वर्णत्रयाय दातव्या एते शूद्राय नो वुधैः" इत्यादिना तत्तद्वर्णविशेषे-णाधिकारं, शूद्रस्यानधिकारं च प्रदर्श्य "छिन्नमस्तां च मातङ्गी

त्रिपुरा कालिका शिवः। लघुश्यामा कालरात्रिः गोपालोजानकीपतिः॥ उग्रतारा भैरवश्च देयावर्णचतुष्टये। मृगीदृशां विशेषेण मन्त्र एते सुसिद्धिदाः॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा नार्योऽधिकारिणः" इति स्त्रीशूद्रयोरप्यधिकारः प्रदर्शितः केषुचन मंत्रेषु॥

न चैवं शिवमंत्रे राममंत्रे च शूद्राणामधिकारस्य निरुक्तवचनाल्लाभेन वैदिके शिवषडक्षरे रामषडक्षरे च शूद्राणामधिकार इति शंक्यम्। तद्विषये विशेषस्यान्यत्र प्रदर्शितत्वात्। तथाहि "सूतसंहितायां," "नमोंतेन शिवेनैव स्त्रीणां पूजा विधीयते। विरक्तानां च शूद्राणामेवं पूजात्रकीर्तिता॥" इति॥ तद्व्याख्याने वशिष्ठः "ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः। सदोंनमश्शिवायेति शिवमंत्रं समाश्रयेत्। पंचाक्षरस्सप्रणवो द्विजराज्ञो विधीयते। विट्शूद्रजन्मनां वापि स्त्रीणां निर्बीज एव हि॥ सबीजः सस्वरः साम्यो विप्रक्षात्रतयोर्द्वयोः। नेतरेषामितीशानः स्वयमेवाह शंकरः॥ दुर्वृत्तो वृत्तिहीनो वा पतितोऽप्यंत्यजोऽपि वा। जपेत्पंचाक्षरीं विद्यां जपेनैवाप्नुयाच्छिवम्" इति शैवपुराणे शिवोऽप्याह "समंत्रकं तु पतितोऽह्यर्चयेद्यदि पद्मजा नारकी स्यान्न संदेहो मम पञ्चाक्षरं विना। मयोक्तमेतद्धि पुरा पवित्रं पञ्चाक्षरं मंत्रमिदं शिवायै। साधारणं पद्मज वेदसारं ममाज्ञया सर्वमिदं सुरेश" इति॥ नंदीश्वरोऽपि "शृणुष्वातिरहस्यं ते वदामि मुनिपुंगव। हिताय सर्वलोकानां पतितानां विशेषतः। समंत्रकं सकृद्वापि पतितः पूजयेद्यदि। नारकी स्यान्न संदेहः शैवं पंचाक्षरं विना" इति॥

एतद्वचनजालपर्यालोचनया शूद्राधिकृतः शिवपंचाक्षरः नवैदिक इति स्पष्टमवगम्यते॥ तत्र वैदिक मंत्रा युत सिद्धिस्वरादेः शूद्रविषये निषेधात्, नमश्शब्दव्युत्क्रमकथनाच्च॥ अत्र "नमोन्तेन" त्यनेन शिवायनमइति विवक्षित मिति केचित्। नमश्शिवायनम इत्यपरे॥ एवं अगस्त्य संहितायां "शुचिव्रततमाः शूद्राः धार्मिका द्विजसेवकाः। स्त्रियः पतिव्रताश्चान्ये प्रतिलोमानुलोमजाः। लोकाश्चंडालपर्यंतं सर्वेप्य

त्राधिकारिणः ॥ अत्र राममंत्रे । तथा श्लोकः "श्रुतिर्ब्रह्माह षड्वर्णं स्मृतिर्वर्णद्वयात्मकं । षड्वर्णं ब्राह्मणादीनां त्रयाणां यद्द्विवर्णकम् ॥ तदन्येषां दैशिकेन वक्तव्यं तारकं परं । तत्रैव श्लो० "मंत्रोऽय मुपदेष्टव्यो ब्राह्मणाद्यनुरूपतः :" इति एतद्ग्रंथपर्यालोचनया द्व्यक्षरे पौराणिके राममंत्र एव शूद्राणामधिकारः न तु वैदिके षडक्षर इति स्फुटमवगम्यते एवं पुराणागमादिषु यद्यन्मंत्रजपादौ शूद्रस्याधिकारः उपलभ्यते, तत्त-न्मंत्रजपादावेव तेषामधिकारः न तु पुराणागमादिघटकयावन्मंत्रजपा-दाविति स्थितम् । एवं च तदनधिकृततत्तन्मंत्रदीक्षायां शूद्रत्वजातिः प्रतिबंधिकैव ॥

अथ च स्त्रीशूद्रयोः गुरूपदेश एव दीक्षा नत्वन्या । अत एव शूद्र-कमलाकरे ब्रह्मोत्तरखंडे स्त्रीशूद्रयोः पंचाक्षराधिकारमुक्त्वा ।

"नास्य दीक्षा न होमश्च न संस्कारो न तर्पणम् ।
नकाल नियमश्चात्र जप्यस्सर्वैरयं मनुः ।"

इत्यनेन दीक्षाया अनावश्यकता प्रतिपादिता । यदि विशेषाकारेण तत्तन्मंत्रविषये तेषां दीक्षा प्रमाणसिद्धा तदा साप्यस्तु तदुक्त-मार्गेण । एवं संकीर्णजातीनामपि प्रातिस्विकरूपेण यद्यन्मंत्रेऽधिकारः शास्त्रसिद्धः यथा द्व्यक्षरे राममंत्रे,तत्तन्मंत्रोपासनेनैव तेषां धर्मसिद्धिः इतरमंत्रदीक्षादिषु तत्तज्जातिः प्रतिबंधिकैव एवं जैनानां बौद्धानां च तत्तदागमोक्तधर्म एव तेषामधिकारः, नेतरत्र, तत्रापि नेतरेषामिति स्पष्टमन्यत्र ।

अथ—

"शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजा स्मृताः" इति ॥

मनुवचनेन शूद्राणां यत्र यत्र यावनाधिकारः शास्त्रसिद्धः, तत्र तावानधिकारः संकीर्णजातीनामप्यतिदिष्ट इति धर्मविषये सर्व संकीर्णजातीनां शूद्रादविशेष इति चेदत्रोच्यते । अस्य वचनस्योपनय-नाभावमात्रातिदेशपरतया सर्वव्याख्यातृभिर्योजितत्वेनान्यधर्मातिदेशकत्वे

मानाभावात् । उत्तरत्र चंडालस्य सर्वधर्मबहिष्कृतत्वोक्तेबाधकस्य सत्वाच्च । वस्तुतस्त्वेतद्वचनसंदर्भपर्यालोचनायामत्रत्यापध्वंसजपदेन न सर्वेषां संकरजातीयानां बोधनम् । अपि तु वैश्यादितः प्रातिलोम्येनोत्पन्नानां त्रयाणामेवेत्यवगम्यते । तथा हि । अध्यायोपक्रमे वर्णचतुष्टयमुपक्रम्य. आद्यवर्णत्रयस्योपनयनसद्भावेन द्विजातित्वमुपपाद्य, शूद्रस्योपनयनाभावादेकजातित्वमुक्त्वा नास्ति पंचमो वर्ण इति प्रतिपादितम् । अनंतरं च वर्णचतुष्टयस्वरूपं निरूप्य, संकरजातीः प्रदर्श्य, इदं वचनमारब्धम् । अस्मिन्वचने पूर्वार्धे षट्सुतानां द्विजधर्मित्वमुक्तम् । ते च स्वसजातीययोनिषु जाताः त्रयः, अनंतरासुजाताः त्रय इति संकलनया षट् । तत्र आद्यानां त्रयाणां ब्राह्मणत्वादेस्सत्वादयमतिदेशोऽनर्थकः । इतरेषु वर्णत्वाभावादप्राप्तोपनयनप्रापकतया अस्य वचनस्य सार्थक्यं वर्णनीयम् । एवं तर्हि षट्त्वकथन मसंगतं स्यादिति न शंकनीयम् । तत्कथनस्य यथा स्वस्वयोनिषूत्पन्नानानुपनयनं तथा अनंतरासूत्पन्नानामपीति दृष्टांतप्रदर्शनपरत्वात् । न चैवं शूद्रायामुत्पन्नपारशवादीनामप्युपनयनातिदेशः स्यादिति वाच्यम् । उपदर्शितसंख्याविरोधेन तेषामग्रहणात् । तदग्रहणायात्र सादृश्यं द्विजस्त्रीषु द्विजोत्पन्नत्वेन ग्राह्यम् । एवं च तेन धर्मेण द्विजसदृशेषु मूर्धावसिक्तादिषु त्रिषु वर्णत्वाभावेऽपि द्विजधर्मोपनयनमनेनातिदिश्यत इति वचनपूर्वार्धस्य आशयः ।

नन्वेवमुक्तसादृश्येन द्विजस्त्रीषु द्विजैः प्रातिलोम्येनोत्पन्नेष्वपि उपनयनप्रसंग इत्यत आह "शूद्राणां त्वित्यादि"। पूर्वोक्तसादृश्यबलात्प्राप्तं प्रतिलोमजानामुपनयनं शूद्रसाधर्म्यातिदेशान्निवर्त्यते । एवं चात्र वचनेऽपध्वंसजाः द्विजस्त्रीषु द्विजोत्पन्नाः प्रतिलोमजाः त्रय एव ग्राह्याः नान्ये । तेषामुपनयनप्रापकाभावेन निषेधागोचरत्वात् । ये पुनरन्ये द्विजात्युत्पन्ना अपि सूतादयः प्रतिलोमजाः ते शूद्रधर्माणो नैषामुपनयनमस्तीति कुल्लूकभट्टग्रन्थोऽपि अमुमेवार्थं दृढयतीति सुधी-

भिराकलनीयम् । यदि च सामान्यतोऽतिदेश इत्यभिनिवेशस्तथापि मनुप्रकरणोपस्थितशुश्रूषारूपधर्म एव ग्राह्यः, नान्यः, अनुपस्थितत्वात् । सापि तत्तज्जातिविषये उत्तरत्र प्रतिपाद्यमानतत्तत्कर्मविशेषरूपैव । नान्यादृशी । अत एव सूतसंहितायां-शूद्राणां पुराणैर्वेदनमुपपाद्य हीन-जातीनां पुराणेप्यनधिकारात्तेषां कथं मुक्तिरित्याशङ्क्य—

"अन्येषामपि सर्वेषां ज्ञानाभ्यासो विधीयते ।
भाषांतरेण कालेन तेषां सोऽप्युपकारकः ॥"

इत्यनेन शूद्राधिकृतपुराणेऽनधिकारः, भाषांतरेण ज्ञानाभ्यासश्च प्रतिपादितस्संगच्छते । यदि पूर्वोक्तमनुवचनेन शूद्राणां यादृशो धर्मा-धिकारस्तादृश एव यदि हीनजातीनां विवक्षितस्तदा एतद्विभेदकवचनं कथं वा संगतं स्यादित्यलं पल्लवितेन ॥

अत्रायं निर्गलितोऽर्थः । तत्तज्जातिस्तत्तदुचितधर्मातिरिक्तधर्म-दीक्षायां प्रतिबन्धिका । यथा ब्राह्मणत्वं राजसूयादौ, क्षत्रियत्वादिकं बृहस्पतिसवादौ । एवं शूद्रत्वादि वैदिकधर्मदीक्षायाम् । एवमेव जैनत्वबौ-द्धत्वादितत्तदागमोक्तधर्मदीक्षासु च । एवं संकीर्णजातिश्च तत्तज्जा-त्युचितमंत्रातिरिक्तमंत्रदीक्षासु च । नास्तिकजातयश्च सर्वधर्मदीक्षासु च प्रतिबंधिका इति दिक् । इदं तु सर्वथा स्मर्तव्यम् ।

"स्वधर्मो विगुणः श्रेयान् परधर्मात्स्वनुष्ठितात् ।
स्वजात्युक्तं यथाशक्ति कुरुते कर्म यः पुमान् ॥
मुक्तिस्तस्यैव संसारादिति वेदानुशासनम् ।"

इत्यादीनि सूक्तानि संस्मृत्य धर्ममेवानुतिष्ठन्तु । यदि परधर्ममनुतिष्ठे-युस्तदा तत्फलं न प्राप्नुवन्ति । प्रत्युतानर्थोऽप्युत्पद्येत ।

अतः श्रद्धालवः स्वे स्वे धर्मे धर्माकरभारतभूमौ यथाशक्ति धर्मवि-प्लवनिरोधं कुर्वन्तो धर्ममूलकत्वेन लब्धां भारतवर्षोन्नतिं रक्षन्तु सर्वे, भगवांस्तथैव तथाविधान्प्रेरयन्तु ।

इदं तु समालोचनीयम् । भारतवर्षीयाद्भुतधर्ममार्गाः सर्वांस्तारयितुं प्रवृत्ताः । परं तु यस्मिन्मार्गे यस्याधिकारस्स एव मार्गस्तस्य तारको भवति नान्यः । अत एवाधिकारिभेदेन भिन्नभिन्नधर्ममार्गप्रतिपादनं संगच्छते । ये तु सर्वथा भारतधर्ममतिलंघ्य प्रवर्तन्ते यथा परलोकमनभ्युपगच्छन्तो लौकायतिका अन्ये च परलोकमभ्युपगच्छन्तोऽपि भारतधर्मस्याप्रामाणिकत्वमनुपायत्वं मार्गांतरस्योपायत्वं चाभ्युपगच्छन्ति ते सर्वेऽपि यदा भारतधर्ममार्गस्य मुख्योपायत्वमभ्युपेत्य आस्तिक्यमभ्युपगम्य भारतधर्ममधिगंतुमभिलषन्ति तेषां सर्वेषामपि तदधिकारानुरोधेन तरणोपायतया भारतधर्मः प्रदर्शयितुं शक्यते पतितचण्डालादीनां सर्वेषामपि कुत्रचिन्मंत्रेष्वधिकारप्रतिपादकवचनपर्यालोचनया । हीनजातीयानां भाषान्तरेण वेदनप्रतिपादिका सूतसंहितापि सर्वेषामपि भारतधर्ममार्गेण तरणं प्रतिपादयति । अतस्सत्यास्तिक्ये न कोऽपि भारतधर्मेण तर्तुमनधिकारी भविष्यति । परं तु तत्तद्धर्ममार्गेणैव तैश्श्रेयस्संपादनीयं न तु मार्गान्तरप्रवृत्त्याशा कार्या । अनधिकृतमार्गानुसरणे घोरनरकपातस्य पूर्वमुपपादितत्वात् । अतस्सर्वोऽपि जनः स्वाधिकारयोग्यं धर्ममार्गमाश्रित्यानधिकृतमार्गमनभिलषन्भारतवर्षीयाद्भुतं धर्मफलं प्राप्नुयात् । परमकारुणिकः परमेश्वरश्च तत्तदधिकारयोग्यमार्गेष्वेव तेषां बुद्धिमुत्पाद्य सर्वान्जनान् रक्षतादिति शिवम् ।

---

* श्रीविश्वेश्वरः शरणम् *

अखिलभारतवर्षीय-

# ब्राह्मणमहासम्मेलने

## विचारसभायां मध्यस्थानां निर्णयाः ।

कार्तिक कृष्ण ११ गुरौ सम्वत् १६८५

### प्रथमो विषयः ।

—:*:—

१ अष्टमवयसः पूर्वमेवोत्कृष्टवरलाभे विवाहो नासिद्धः, परन्तु समाजहितदृष्ट्या समाजेन तत्तत्समाजविषये यदि विवाहोऽष्टमवयसः पूर्वं न कर्त्तव्य इति नियम्यते, तर्हि शास्त्राविरोधादनुमोदनमर्हति, इति महासम्मेलनविचारसभायां सर्वानुमतः प्रस्तावोऽस्माभिरप्यनुमन्यते ।

२ विवाहो ह्यष्टवर्षायाः कन्यायाश्च प्रशस्यते । सर्वेषामेव दानानामेकजन्मानुगं फलम् । हाटकगृहगौरीणां सप्तजन्मानुगं फलम् । अष्टवर्षा भवेद्गौरी—इत्यादिप्रमाणानुसारेण अष्टमवर्षे कन्यादानस्य विशिष्टफलाम्नानात् स्त्रीणां विवाहस्य उपनयनस्थानापन्नत्वेन उपनयने ब्राह्मणानामष्टमवर्षस्यैव मुख्यकालत्वस्मरणाच्च ब्राह्मणकन्यानां दशमवयसः पूर्वं विवाहो न कर्त्तव्य इति नियमनं नास्माकमभिमतं, अत ऊर्ध्वं रजस्वलेति वचनेन सर्ववर्णेषु दशमवयसोऽनन्तरं विवाहस्य मुख्यकालत्वनिषेधात् । क्षत्रियादीनां दशमवयसः पूर्वं उपनयनकालाभावेन समाजहितदृष्ट्या विवाहनियमनं तत्तत्समाजेन क्रियमाणं न विरुद्धमिति अस्माभिर्मन्यते । शूद्रविषयेपीयमेव व्यवस्था ।

३ उत्तरावधिविषये कुत्रचित् द्वादशी वृषली स्मृतेति वचनेन द्वादशवय-

स्यैव वृषलीत्वबोधनेऽपि रजोदर्शनस्यैव वृषलीत्वप्रयोजकत्वात् दशमवयसोऽनन्तरं ऋतुदर्शनात्पूर्वं मुख्यकालोल्लङ्घनप्रयुक्तप्रायश्चित्तानुष्ठानपूर्वकं आपदि विवाहः कार्यः।

४ रजोदर्शनानन्तरमपि अविवाहितानां ब्राह्मणस्त्रीणां कृतप्रायश्चित्तानामपि अव्यवहार्यतेति श्रीराजेश्वरशास्त्रिप्रभृतीनां मतं, तत्र वर्षत्रयमध्ये कृतप्रायश्चित्तानामप्यव्यवहार्यतेत्येकं मतं श्रीमल्लादिरामकृष्णशास्त्रिप्रभृतीनां, श्रीराजेश्वरशास्त्रिप्रभृतीनां तु वर्षत्रयमध्ये पित्रा दित्सितापि या विवाहं नेच्छति तस्याः कृतप्रायश्चित्ताया अपि अव्यवहार्यत्वं, पितृदोषेणाविवाहितायास्तु पापमात्रं न वृषलीत्वं, वर्षत्रयानन्तरमप्यविवाहितायास्तु न वृषलीत्वस्य प्रायश्चित्तेन निवृत्तिरिति मतम्। वङ्गीयास्तु पितृदोषेणाविवाहितायाः साधारणं पापं, साहसेनाविवाहितायास्तु वृषलीत्वं यद्यपि भवति, तथापि कृतप्रायश्चित्ताया व्यवहार्यत्वं, परित्यागविधिस्तु सर्वथा विवाहविमुखकन्यापर इति वदन्ति। महामहोपाध्यायानां तातसुब्रायशास्त्रिणां विन्ध्येश्वरीप्रसादशास्त्रिणामपि इदमेव सम्मतम्। प्रायश्चित्ते गुरुलघुव्यवस्थाऽपि सुब्रायशास्त्रिभिरङ्गीक्रियते। क्षत्रियविषये तु स्वयंवरस्याभ्यनुज्ञानात् कृतप्रायश्चित्तानां ऋतुदर्शनप्रयुक्तवृषलीत्वस्य निवृत्त्या व्यवहार्यत्वमिति सर्वसंमतः पक्षः।

उपदर्शितान् पक्षान् सम्यगालोच्य अस्माभिरित्थं निर्णीयते— धर्मशास्त्रेषु ऋतुमतीविवाहः सर्वात्मना निन्दितः, क्वचित् महत्यामापदि प्रायश्चित्तविधिपूर्वकं तादृश्या अपि विवाहोऽभ्यनुज्ञायते, एवमपि इदमेव व्याजीकृत्य मुख्यकल्पानुष्ठानसमर्थैरपि अयं पक्षो नावलम्बनीयः, अस्य पक्षस्यात्यन्तिकापद्विषयत्वात्, आपदि अल्पत्वमहत्त्वनिर्णयस्तु तत्तत्समाजेनैव करणीयः। व्यवहार्यत्वविषये तत्तत्कुलाचारः प्रमाणम्। ऋतुदर्शनानन्तरं सर्वथा साहसेन विवाहविमुखकन्यायास्तु परित्याग एव।

५ अवान्तरश्रेणीषु विवाहविषये विवाहे कुलपरीक्षणस्यावश्यकत्वात् सह्याद्रिखण्डादौ स्कान्दान्तर्गते अवान्तरजातिरक्षणस्यावश्यकत्वप्रतिपादनात् सह्याद्रिखण्डाप्रामाण्यवादस्यायुक्तत्वान्नागरखण्डे बलीवर्दसमानोऽपि नागर एव ग्रहीतव्य इति व्यवस्थापनाच्च गत्यन्तराभावस्य समाजानुमतत्वे सन्निकृष्टतमसमानाचारशीलावान्तरश्रेणीपरिग्रहस्य कर्त्तव्यत्वेऽपि सत्यां गतौ तत्तच्छ्रेणीसम्बन्धनियमपरित्यागो गत्यन्तराभावेपि विप्रकृष्टश्रेण्यन्तरपरिग्रहश्च शास्त्राचारोभयाननुमत एवेति मन्यते ।

४।११।२८,

विरूपाक्षशास्त्री, श्रीचण्डीदास तर्कतीर्थः,
डि० श्रीनिवासाचारु, देवशिखामणि रामानुजाचार्यः
श्रीशशिनाथ झा, पूर्वोत्तरमीमांसाभूषणः ।

आदितः पञ्चसु प्रश्नेषु मह्यं विचाराय दत्तेषु प्रथमचतुर्थौ विना यथानिर्णयमभिमताः । प्रथमे तु अष्टमवर्षमारभ्य ऋतुसम्भावनातः पूर्वं कन्याविवाहो युक्तः, चतुर्थप्रश्ने तु वृषल्याः प्रायश्चित्तानन्तरं व्यवहार्य्यता अस्त्येव ।

द० पं० नन्दकिशोरः ।

## त्रयोदशप्रश्नविषये मध्यस्थानामभिप्रायः ।

१ आनन्दाश्रममुद्रिता देवलस्मृतिः सम्पूर्णा त्रुटिता वेति सन्दिग्धत्वाच्छूलपाणिनिबन्धव्यवस्थया प्रामाण्यं स्वीक्रियते ।

## चतुर्दशप्रश्नविषये मध्यस्थानां आशयः ।

२ अष्टाचत्वारिंशद्वारं अकामत एकामत्रभोजनादिरूपगुरुतरसंसर्गे कृतेऽपि प्रायश्चित्ते न व्यवहार्यता, कामतस्तु उक्तविषये चतुर्विंशतिवाराभ्यासे तथात्वम् । एकपङ्क्त्युपविष्टभोजनादिरूपलघुभोजनसं-

सर्गादकामतः वत्सरेण, कामतस्तु वत्सरार्धेन अव्यवहार्यता इति भोजनादौ व्यवस्था । तत्स्त्रीगमने तु अकामतः वारद्वयाभ्यासेन, कामतस्तु सकृदेव कृते अव्यवहार्यता । बलात्कारितम्लेच्छदास्यादिस्थले तु शूलपाण्युद्धृतदेवलवचनानां व्यवस्था स्मार्तभट्टाचार्यैरनुपनीताष्टवर्षानधिकवयस्कबालकविषयतया कृता । तत्रापि संवत्सरचतुष्टयानंतरं म्लेच्छसंसर्गे अव्यवहार्यतैव पूर्णा । इदमपि 'तत्स्त्रीणां च तथा सङ्ग'इत्यत्र सङ्गपदेन संलापादिलघुसंसर्ग एव विवक्षितः इत्यभ्युपगम्य । तत्स्त्रीगमने तु 'सवर्णान्यांगतादुष्टैः संसर्गः शोधितैरपि' इति कलिवर्ज्यप्रकरणानुसारेण ततः पूर्वमपि अव्यवहार्यतैव । अथ वा 'संवत्सरेण पतती'त्यनुसारेण बलात्कारितस्थले मयूखादिनिबन्धकारसंमताकामकृतप्रायश्चित्तयोजनेन संवत्सरपर्यन्तं बलात् म्लेच्छदास्ये कारिते द्वादशाब्दं प्रायश्चित्तं, व्यवहार्यता च पूर्णा । संवत्सरद्वयातिक्रमे तु चतुर्विंशतिवार्षिकं प्रायश्चित्तम्, 'अथ पतिताः समवसाय धर्मांश्चरेयु'रित्यादिबौधायनसूत्रस्य नन्दपण्डिताद्युक्तव्यवस्थानुसारेण पृथक्संस्थया स्वधर्मानुष्ठानाधिकारश्च । वत्सरचतुष्टयातिक्रमे तु संवसरैश्चतुर्भिश्च तद्भावं सोऽधिगच्छति । ह्रासो न विद्यते तस्य प्रायश्चित्तैर्दुरात्मनः॥' इति देवलवचनानुसारेण न प्रायश्चित्तं, नतरां व्यवहार्यता, नतमां च पृथक्संस्थयाऽपि स्वधर्माधिकारिता । भागवतादिधर्मानुष्ठानं तु अनुमन्यत एव । 'चतुर्थे नास्ति निष्कृति' रिति वचनमत्र व्यवस्थायामुपोद्बलकम् । यत्तु विंशतिवत्सरम्लेच्छसंसर्गानंतरं चान्द्रायणद्वयं प्रायश्चित्तमुक्तम्, तत्तु 'म्लेच्छैः सहोषित' इत्युपक्रमात् केवलसहवासपरम् । यत्तु स्त्रीणां विषये देवलेन गर्भोत्पत्त्यनंतरमपि प्रायश्चित्तेन व्यवहार्यत्वमुक्तम्, तत्तु बलाद्दासीकृतनारीरेव उपक्रम्य हेमाद्युद्धृतमार्कण्डेयवचने गर्भे स्त्रीणां परित्यागस्यैवोक्तत्वात् वैकल्पिकम् । विकल्पे च 'बलात्कारादिदुष्टस्त्रीसंग्रहो विधिनोदितः' इति कलिव-

र्ज्यप्रकरणे पाठात् देवलोक्ता गर्भोत्पत्त्यनंतरमपि स्त्रीणां व्यवहार्यता कलिभिन्नविषय एव इति सिद्धान्तः ।

पञ्चदशप्रश्नविषये मध्यस्थानां अभिप्रायः ।

३ वैरूप्यमेव ।

शास्त्री हाथीभाई हरिशङ्करात्मजः । महामहोपाध्यायः ।

दुर्गाचरण सांख्यवेदान्ततीर्थः महामहोपाध्यायः ।

मैथिल मार्कण्डेय मिश्रः ।

भट्ट रमानाथ देवर्षिः शुद्धाद्वैतभूषणः ।

नागेशशास्त्री धारवाड,तर्कविद्वान् , विद्यालङ्कारश्च ।

अधोनिर्दिष्टानां विषयाणां विमर्शे साधकबाधकानि वचनानि युक्तयश्च सावधानतयाऽऽलोचिताः,अनुकूलप्रतिकूलवक्तृणां चाशयो-ऽपि सम्यगवधारितः । ततः परं सर्वेषां ऐकमत्येन यत् सिद्धान्तितं तदधस्तान्निवेश्य ततः स्वसम्मतिविषये नामानि निर्दिष्टानि ।

श्रीकालीकिशोरदेवशर्मा स्मृतिरत्नः ।

श्रीआशुतोषदेवशर्मा स्मृतिरत्नोपाधिकः ।

श्रीकमलकृष्णस्मृतितीर्थः ।

बालशास्त्री हरिशास्त्री भट्टः ।

रंगाचार्य बालकृष्णाचार्य रङ्गी ।

मल्लादि रामकृष्णशास्त्री महाग्निचित् ।

चण्डालविषये विचारे तु ते अस्पृश्या देवालयादिषु अप्रवेश्या इति स्मृतिवचनैर्निश्चीयते । तथा ते म्लेच्छयवनाद्यपेक्षया निकृष्टा इति प्रमाणैरेव नास्माभिरङ्गीक्रियते ।

अत्रार्थे संमतयः—

बालशास्त्री हरिशास्त्री भट्टः ।

सम्मतिरत्र श्रीमुक्तिनाथमिश्रस्य ।

रङ्गीत्युपाव्हो रङ्गाचार्यः ।

श्रीआशुतोषदेवशर्मा स्मृतिरत्नः।

श्रीकमलकृष्ण स्मृतितीर्थः।

चण्डालानां ग्रामान्तर्निवासः देवालयप्रवेशः स्पर्शश्च शास्त्रेण निषिध्यते। म्लेच्छा यद्यपि गुणतो धर्मतश्च चण्डालतो निकृष्टाः, तथापि महाभाष्ये अनिरवसितशूद्रेषु परिगणनात् आगमेषु चण्डालापेक्षया देवालयप्राकारेषु सन्निकृष्टकक्ष्याप्रवेशाभ्यनुज्ञानाच्च चण्डालापेक्षया तेषां किञ्चित्तारतम्यं वर्तत इति ममाशयः।

मल्लादि रामकृष्णशास्त्री महाग्निचित्

अधुनातनेषु यवनेषु के वा चाण्डालादिषु उत्पन्नाः के वा शुद्धयवना इति न ज्ञातुं शक्यते, यदि तदीयसङ्करो ज्ञायेत, तदा पूर्वजात्यनुरूपैव व्यवस्था अङ्गीकरणीया।

मल्लादि रामकृष्णशास्त्री।

१ सावित्रीभ्रष्टानां चतुर्थपुरुषपर्यन्तमेव व्रात्यस्तोमेन शुद्धिः, नाग्रपुरुषाणाम्।

१ विधवाविवाहस्तु सर्वथा धर्मशास्त्रविरुद्धः।

१ म्लेच्छचाण्डालादीनां कूपे अल्पजलाशयादिषु जलग्रहणादिषु नाधिकारोस्ति।

१ श्रुतिस्मृत्यनुसारिभिर्न कैरपि स्वयं धर्मपरिवर्तनं कर्तुं शक्यते।

बालशास्त्री हरिशास्त्री भट्टः।

रङ्गाचार्य रङ्गीत्युपाह्वः।

सम्मतिरत्र श्रीमुक्तिनाथमिश्रस्य।

मल्लादिरामकृष्णशास्त्री महाग्निचित्।

१० दशमः प्रश्नः, भागवतधर्मदीक्षा जात्युत्कर्षप्रापिका न वा इति!

अस्योत्तरम्।

भागवतधर्मदीक्षया जात्युत्कर्षो न भवति, अपि तु भावोत्कर्षः।

११ यवनादिजातिः कर्मकृता उत जन्मसिद्धा ।

अस्योत्तरम् ।

जन्मसिद्धैव यवनादिजातिः ।

१२ भागवतधर्मदीक्षायां जातिविशेषः प्रतिबन्धको वा न वा ।

अस्योत्तरम् ।

कुत्रचिद्दीक्षायां प्रतिबन्धिका जातिः कुत्रचिन्न । तथाहि ।

मन्त्रमहोदधौ चतुर्विंशतरङ्गे-त्र्यर्णमेकाक्षरोऽनुष्टुप् त्रिविधो नरकेसरी ॥ इत्यादिना कांश्चिदेव मन्त्रान् परिगणय्य 'वर्णत्रयाय दातव्या एते शूद्राय नो बुधैः' इत्यादिना तत्तद्वर्णविशेषे अधिकारानधिकारौ प्रदर्श्य-छिन्नमस्ता च मातंगी त्रिपुरा कालिका शिवः । लघुश्यामा कालरात्रिर्गोपालो जानकीपतिः । उग्रतारा भैरवश्च देया वर्णचतुष्टये । मृगीदृशां विशेषेण मन्त्रा एते सुसिद्धिदाः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा नार्योऽधिकारिण इति स्त्रीशूद्रयोरपि केषुचिन्मन्त्रेषु अधिकारः प्रदर्शितः ।

स्त्रीशूद्रयोः शिवमन्त्ररामममन्त्रविषये तु विशेषः—सूतसंहितायां नमोंतेन शिवेनैव स्त्रीणां पूजा विधीयते । विरक्तानां च शूद्राणां एवं पूजा प्रकीर्त्तिता । इति । तद्व्याख्याने माधवीये वसिष्ठः-ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । सदों नमः शिवायेति शिवमंत्रं समाश्रयेत् । पंचाक्षरः सप्रणवो द्विजराशेर्विधीयते । विट्शूद्रजन्मनां वापि स्त्रीणां निर्बीज एव हि । सबीजः सस्वरः साम्यो विप्रक्षत्रिययोर्द्वयोः । नेतरेषामितीशानः स्वयमेवाह शङ्करः । दुर्वृत्तो वृत्तिहीनो वा पतितोऽथान्त्यजोऽपि वा । जपेत्पञ्चाक्षरीं विद्यां जपेनैवाप्नुयाच्छिवम् । इत्यादीनि वचनानि । रामन्त्रविषये तु शूद्रकमलाकरे 'अगस्त्यसंहितायां-श्रुतिर्ब्रह्माह षड्वर्णं स्मृतिर्वर्णद्वयात्मकम् । षड्वर्णं ब्राह्मणादीनां त्रयाणां यद्द्विवर्णकम् । तदन्येषां देशिकेन वक्तव्यं तारकं परम् । शुचिव्रततमाःशूद्रा धार्मिका द्विजसेवकाः । स्त्रियः पति-

व्रताश्चान्ये प्रतिलोमानुलोमजाः । लोकाश्चण्डालपर्यन्तं सर्वेऽप्यत्राधिकारिणः । अत्र रामेतिमन्त्रे ।' इत्यादिग्रन्थपर्यालोचनया शूद्रादीनां प्रणवरहितेष्वेव मन्त्रेषु नारायणाष्टाक्षरादिषु केषुचित् अधिकारः ।

| | |
|---|---|
| १ विरूपाक्षशास्त्री, | २ तात सुब्बरायशास्त्री, |
| ३ देवकीनन्दनशास्त्री, | ४ श्रीनीलाम्बर झा, |
| दर्शनालङ्कारः । | तर्कतीर्थः । |

---

अखिल भारतवर्षीय ब्राह्मणमहासम्मेलनेव

स्वी कृताः प्रस्तावाः ।

प्रथमः प्रस्तावः—

१ गोरक्षणं सनातनधर्मीयाणां मातृपालनमिव परमं कर्तव्यमिति सर्वैरपि सनातनधर्मीयैस्तदर्थं बद्धपरिकरैर्भाव्यमितीयं सभा साभिनिवेशं सूचयति ।

प्रस्तावकाः— १ पं० अखिलानन्द कविरत्नः ।

अनुमोदकाः—२ म० म०पं० विरूपाक्षशास्त्रिणः ।

३ म० म० पं०दुर्गाचरणसांख्यवेदान्ततीर्थाः ।

द्वितीयः प्रस्तावः—

२ इदानीं किल व्यवस्थापकजानपदसभायां "शारदा बिल्" इति यः प्रस्तावो वर्तते, तस्य सनातनधर्ममर्मोच्छेदकत्वेन सनातनधर्मीयमानसमर्मविदारकत्वादियं सभा सुतीव्रं तं निषेधति । जाघुष्यते च महाराज्ञीव्हिक्टोरियादत्ताभिवचनानुसारेणायं प्रस्तावः सम्राट्प्रतिनिधिमहोदयैर्जानपदसभायां स्वाधिकारेण निरोद्धव्य इति । एतदर्थं च ब्राम्हणमहासम्मेलनेनानेन यथाशक्ति सर्वात्मना प्रयतितव्यं स्यात् । एतदुपायगवेषणाय कार्यकरणाय चोपसमितिरेका नियोज्यते—

(१) म० म० पं० गिरिधरशर्माणः (राजपुताना)
(२) म० म० पं० अनन्तकृष्णशास्त्रिणः (संपादकः)
(३) शरच्चन्द्रसांख्यतीर्थमहाशयाः (बङ्गाल)
(४) एन० जी० सावरकर (अकोला, महाराष्ट्र)
(५) कनपर्त्ति मार्कण्डेयशर्मा (मद्रास)

प्रस्तावकाः—१ म० म० पं० गिरिधर शर्माणः।
अनुमोदकः—२ मं० म० पं० हाथीभाई शास्त्रिणः।
३ म० म० पं० तात सुब्बरायशास्त्रिणः।
४ दर्शनालङ्कार पं० देवकीनन्दन शास्त्रिणः।

## तृतीयः प्रस्तावः—

३ एतद्ब्राह्मणसम्मेलनं भारतीयव्यवस्थापकसभां प्रादेशिकसभां च सनिर्बन्धं विज्ञापयति यथा व्यवस्थापकसभायां नगरपरिष्कारकसभायां च ये भारतीयवर्णाश्रमसनातनधर्मविरुद्धास्तत्तत्समाजव्यवस्थाविघातकाः प्रस्तावा उपस्थाप्यन्ते, तैर्भारतीयजनताया महान् व्याकोपो भवति, समाजधर्महानिश्च भवति। ततश्च ते तत्र कदाचन स्थानं न लभेरन्, तथा व्यवस्थापनीयम्। यदि तथाप्युपस्थापयिष्यन्ते, तर्हि भारतीयब्राह्मणैस्ते न स्वीकरिष्यन्ते, विरोधश्च करिष्यते।

प्रस्तावकाः—(१) पं० रमानाथमिश्राः।
अनुमोदकाः—(२) „ काशीनाथशास्त्रिणः।
(३) „ वामनदास विद्यासागराः।

## चतुर्थः प्रस्तावः—

४ इदं महासम्मेलनं तत्तद्देशीयानां सर्वभूतानां सर्वदेशीयानां च सन्दिग्धानां जटिलानां च समस्यानां निर्णयार्थं प्रतिप्रान्तं दशानां पण्डितानां धर्मपरिषद्घटनमावश्यकं मन्यते। तत्तत्प्रान्तीयानां सविधे प्रार्थ्यते—यत्तत्तत्संस्थाद्वारा स्वीयानि सूचनानि देयानि।

प्रस्तावकाः—(१) पं० गङ्गाविष्णुशर्माणः ।

अनुमोदकाः—(२) „ कालूरामशास्त्रिणः ।

(३) „ भगीरथ गोस्वामिनः ।

(४) „ खगेन्द्रनाथशास्त्रिणः ।

(५) „ माधवराव दाणीशर्माणः ।

(६) „ रामभवनोपाध्यायाः ।

## पञ्चमः प्रस्तावः—

५ सनातनधर्मप्रदीपग्रन्थस्य पुनःसंस्कारार्थमागतानां समालोचनानामापावोद्वापेन समीकरणार्थं चाधोनिर्दिष्टप्रकारेणोपसमितिरेका घटनीया, यया संवत्सरमध्ये तत्प्रकाशनार्थं समुचितः प्रबन्धः क्रियेत ।

१ म० म० पं० श्रीपञ्चाननतर्करत्नभट्टाचार्यः ।

२ „ „ „ श्रीलक्ष्मणशास्त्रिणो द्राविडाः ।

३ „ „ „ वामाचरण भट्टाचार्य महोदयाः ।

४ „ „ „ श्रीविरूपाक्षशास्त्रिणः ।

५ „ „ „ प्रभुदत्तशास्त्रिणोऽग्निहोत्रिणः ।

६ „ „ „ पद्मनाथ विद्याविनोद भट्टाचार्याः ।

७ „ „ „ हाथीभाई शास्त्रिणः ।

८ „ „ „ शशिनाथ झा महोदयाः ।

९ „ „ „ हरिहरकृपालुशर्म महोदयाः ।

१० „ „ „ दुर्गाचरण साङ्ख्यवेदान्ततीर्थ महोदयाः ।

११ „ „ „ श्रीअनन्तकृष्णशास्त्रिणः ।

१२ „ „ „ गिरिधरशर्माणः ।

१३ पं० नागेशशास्त्रिणः ।

१४ पं० श्रीराजेश्वरशास्त्रिणो न्यायाचार्याः ।

१५ शुद्धाद्वैतभूषण पं० श्रीरमानाथ देवर्षिः ।

१६ पं० रेड्डी रङ्गाचार्यमहोदयः ।

१७ पं० शशिभूषण स्मृतितीर्थः।

१८ पं० पूर्णचन्द्राचार्यः।

१९ पं० भगवानदत्तशर्माणोऽग्निहोत्रिणः।

२० पं० अखिलानन्द शर्मा कविरत्नः।

२१ पं० माधवरावदाणी महोदयः।

२२ पं० मल्लादि श्रीरामकृष्णशास्त्रिणो महाग्निचितः।

२३ पं० गणपतिशास्त्री मोकाटे महोदयः।

२४ पं० गुलाबझा महोदयः।

२५ पं० ताराचरणभट्टाचार्यः।

२६ पं० हाराणचन्द्रशास्त्री।

२७ पं० श्रीश्रीजीवन्यायतीर्थ एम्० ए०।

२८ पं० रामभवनोपाध्यायाः।

२९ पं० देवकृष्णशास्त्रिणः।

३० पं० दर्शनालङ्कार देवकीनन्दनशास्त्रिणः।

३१ पं० कृष्णमाचार्य महोदयः।

३२ पं० रमापति मिश्रः।

३३ पं० ढण्ढराधाकृष्ण मिश्रः।

तत्तत्सनातनधर्मसंस्था संपादकाः।

धर्माचार्याणां द्वौ द्वौ प्रतिनिधी।

प्रस्तावकाः—१ पं० श्रीछोटु महाराजाः।

अनुमोदकाः—२ पं० वागीभूषण श्रीनन्दकिशोर शर्माणः।

३ पं० श्रीश्रीजीवन्यायतीर्थाः।

४ पं० श्रीदेवकृष्णशास्त्रिणः।

५ पं० तेयूर सुब्रह्मण्यशास्त्रिणः।

षष्ठः प्रस्तावः—

( ६ ) महासम्मेलनमिदं संस्कृतविश्वविद्यालयस्यैकस्य स्थापनमत्या-

वश्यकं मन्यते, तदर्थं धनसंग्रणार्थमधोनिर्दिष्टानां महाशयानां नामनि निरुच्यन्ते—

सर्वे धर्माचार्याः ।

१ श्रीमन्महाराजाधिराज दरभङ्गानरेशः ।
२ म० म० पं० श्रीलक्ष्मणशास्त्रिणो द्राविडाः ।
३ म० म० पं० वामाचरणभट्टाचार्याः ।
४ म० म० पं० गिरिधरशर्माणः ।
५ म० म० पं० श्रीअनन्तकृष्णशास्त्रिणः ।
६ कलकत्तापञ्चायतसभा ।
७ राजाशशिशेखरेश्वरराय महोदयः ।
८ श्रीसाधुराम तुलाराम गोएनका ।
९ श्रीव्रजेन्द्रकिशोररायचौधरी ।
१० सर ओंकारमल जटिया ।
११ राजामोतीचन्द महोदयः, इत्यादयः ।

प्रस्तावकाः—१ म० म० पं० श्रीअनन्तकृष्णशास्त्रिणः ।
अनुमोदकाः—२ म० म० पं० श्रीलक्ष्मणशास्त्रिणो द्राविडाः ।
३ पं० मदनमोहनशास्त्रिणः ।
४ पं० गोपीनाथशर्माणः बी० ए० ।
५ पं० रमापतिमिश्राः ।
६ श्रीमन्महाराजदरभङ्गानरेशः ।

सप्तमः प्रस्तावः—

अतः परं सर्वेऽपि प्रस्तावाः स्वयं सभापतेरभ्यनुज्ञया श्रीअनन्तकृष्णशास्त्रिभिरेवोपन्यस्ताः ऐकमत्येन स्वीकृताश्च ।

(७) जानपदशासनसभायाः सभास्तारनिर्वाचनावसरे सर्वैरपि सनातनधर्मिभिः स्वीयं मतं तेभ्य एव प्रदातव्यम्, ये किल सनातनधर्मश्रद्धालवः शास्त्रैकशरणाः कदाचिदपि धर्मघातकप्रस्तावं स्वयं नोपन्य-

सिष्यन्ति वा नानुमोदिष्यन्ते जानपदशासनसभायां प्रादेशिकशासन-, सभायां चेतीयं सभा साग्रहं सूचयति।

अष्टमः प्रस्तावः—

(८) जानपदशासनसभायाः प्रादेशिकशासनसभायाश्च सभासदां-निर्वाचने धर्माचार्याणां विशेषाधिकारस्तथा संस्कृतविद्यालयाधिगतो-पाधीनां सर्वेषां शास्त्रिणां पंडितानां च स्वीयमतदानाधिकारश्चाविलम्बे-नैव प्रदेय इत्यपीयं सभा सूचयति साग्रहम्।

नवमः प्रस्तावः—

(९) अखिलभारतीयब्राह्मणमहासम्मेलनकार्यकारिसमितिरेका श्री-काशीधामनि तत्तद्देशीयानां समसंख्यानां प्रतिनिधीनां कार्यनिर्वाहक-सदस्यानां निर्वाचनेन घटनीयेति मन्यते।

सभापतिः—१ महाराजाधिराज श्रीदरभङ्गानरेशः।

सहकारिसभापतिः—२ म० म० श्रीयुक्त पं० पञ्चाननतर्करत्नभट्टाचार्यः।

सदस्याः—३ म० म० पं० वामाचरण भट्टाचार्याः।

४ म० म० पं० गिरिधरशर्माणः

५ म० म० पं० हाथीभाई शास्त्रिणः।

६ म० म० पं० पञ्चनायविद्याविनोद भट्टाचार्याः।

७ म० म० पं० श्रीविरूपाक्ष शास्त्रिणः।

८ म० म० पं० श्रीतात सुब्बरायशास्त्रिणः।

९ म० म० पं० वेङ्कटरावतारहन महोदयाः।

१० म० म० पं० अभ्यङ्कर श्री वासुदेवशास्त्रिणः।

११ म० म० पं० प्रभुदत्तशास्त्रिणोऽग्निहोत्रिणः।

१२ म० म० पं० शशिनाथ झा महोदयाः।

१३ म० म० पं० हरिहरकृपालुशर्म महोदयाः।

१४ म० म० पं० हरिनारायणशास्त्रिणः।

१५ म० म० पं० दुर्गाचरणसाङ्ख्यवेदान्ततीर्थ महोदयाः ।
१६ म० म० पं० श्रीलक्ष्मणशास्त्रिणो द्राविडाः ।
१७ म० म० पं० यादवजी त्रिकमजी आचार्य महोदयाः ।
१८ पण्डित श्रीरामभवनोपाध्यायमहोदयाः ।
१९ „ दर्शनालङ्कार श्रीदेवकीनन्दशास्त्रिणः ।
२० „ पूर्णचन्द्राचार्यः ।
२१ „ अखिलानन्दशर्माणः ।
२२ „ भगवानदत्त शर्माणोऽग्निहोत्रिणः ।
२३ „ भट्टश्रीनन्दकिशोरशास्त्रिणः ।
२४ „ तर्कविद्वान् श्रीनागेशशास्त्रिणः ।
२५ „ मल्लादि श्रीरामकृष्णशास्त्रिणो महाग्निचितः ।
२६ „ शास्त्ररत्नाकर श्रीकृष्णशास्त्रिणः ।
२७ „ गणपतिशास्त्री मोकाटेमहोदयः ।
२८ „ गुलाबझा महोदयाः ।
२९ „ शरच्चन्द्र साङ्ख्यतीर्थः ।
३० „ माधवराव रामचन्द्रदाणी महोदयः एम्० ए० काव्यतीर्थश्च ।
३१ „ गणेशचन्द्रजी काव्यतीर्थः ( चुरू )
३२ „ रङ्गो रङ्गाचार्य महोदयः ।
३३ „ वद्रीदासपुरोहितः ।
३४ „ देवदत्तमिश्र महोदयः ।

सम्पादकः—३५ म० म० पं० श्रीअनन्तकृष्णशास्त्रिणो वेदान्तविशारदाः ।
सहकारिसंपादका—३६ पं० ताराचरण भट्टाचार्यः ।
३७ „ श्रीराजेश्वरशास्त्रि द्राविडो न्यायाचार्यः ।
३८ „ श्रीहाराणचन्द्रशास्त्री ।
३९ „ श्रीश्रीजीवन्यायतीर्थः एम्० ए० ।

## दशमः प्रस्तावः—

(१०) सर्वेषां भारतवर्षीयाणां ब्राह्मणानां सङ्घटनार्थं च तत्तद्देशीयैः सर्वैरपि ब्राह्मणैः स्वस्वदेशे सम्मेलनस्य शाखासमितयः संस्थापनीयाः। यत्र च प्रदेशे पूर्वमेव ब्राह्मणसभा वर्तन्ते ताभिश्च शाखासमितित्वमवश्यमेव स्वीकर्तव्यम्।

## एकादशः प्रस्तावः—

(११) तत्तज्जातिभिः स्वयं समुत्कृष्टजात्यन्तरभावावलम्बनेन तत्र तत्र समाजे इदानीं विशेषत आचाराः क्रियमाणा अत्यन्तमेव शास्त्रदृष्ट्या समाजदृष्ट्या चायोग्याः। यथा खाती, जाङ्गडाः, वैद्याः, सुवर्णवणिजः, तक्षाः, कायस्थाः, माहिष्याः, कम्मरेड्डि, तन्तुवाय, कैवर्तप्रभृतयः।

## द्वादशः प्रस्तावः—

(१८) उत्तरस्मिन् प्रदेशे श्रीमद्भगवत्पादशङ्कराचार्यस्थापितज्योतिर्मठस्य पुनश्च जीर्णोद्धारः कर्तव्य इतीयं सभा साभिनिवेशं सूचयति।

## त्रयोदशः प्रस्तावः—

(१३) त्रैलोक्यपावनश्रीभागीरथीप्रवाहः कुत्रापि न रोद्धव्यः, तथा मलमूत्रवाहकनलिकास्तत्र प्रवाहे नोत्सर्जनीयाः। तथा कृते धर्मनिष्ठानामस्माकं महती पीडा स्यात्, धर्महानिश्च भवति। इतीयं सभा सूचयति।

---

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

भगवतश्चन्द्राद्धर्धचूडामणेर्विश्वनाथस्य प्रसादेन ब्रह्मण्यदेवस्य परमेणानुग्रहेण, भूदेवानां शुभाशीर्वादेन च सनातनधर्माभ्युदयमभिलषतां बहूनामेव चिराकांक्षितमखिलभारतवर्षीयब्राह्मणमहासम्मेलनं विगतकार्तिककृष्णनवमीतः कार्त्तिककृष्णैकादशीपर्यन्तं दिवसत्रयं वाराणस्यां तथैव सम्पन्नं यथा केनापि मनसापि न परिकल्पितं, न च कस्यापि श्रुतचरं न वा दृष्टपूर्वम् । यैर्नावलोकितमेतत् तान् बोधयितुं वयमेव न समर्थाः, कथम्पुनरस्माकं लेखनी तत्र शक्तिमती स्यात्? एतदपि स्पष्टं वक्तुं प्रभवामो यन्महासम्मेलननेतृभिः पूर्वं यत् परिकल्पितं ततोऽपि सुमहदधिकं किमपि संजातमिति । महासम्मेलनात् पूर्वं कार्तिककृष्णप्रतिपदमारभ्य कार्त्तिककृष्णसप्तमीं यावत् काचन विचारसभा प्रावर्त्तिष्ट, यत्र देशान्तरागतैस्तत्रत्यैश्च सार्द्धत्रसहस्राधिकैर्विद्वद्भिः सम्भूय जगद्गुरुपूज्यपाद १०८ श्रीसङ्केश्वरकरवीरपीठाधिपशङ्कराचार्यचरणानां, १०८श्रीद्वारकापीठाधिपश्रीमज्जगद्गुरुशङ्कराचार्य श्रीराजराजेश्वराश्रमस्वामिचरणानां,यदुगिरियतिराजमठाधिपानां श्री१०८संपत्कुमारमुनिचरणानां, श्रीनाथद्वाराधिपानां श्री १०८ दामोदरलालगोस्वामिपादानां, कांकरोलीसंस्थानाधिपानां श्री १०८ व्रजभूषणलालगोस्वामिमहोदयानां, श्रीमथुरासंस्थानाधिपानां श्री १०८ विट्ठलनाथगोस्वामिमहोदयानां, श्रीकाशीगोपालमन्दिराध्यक्षगोस्वामिश्री १०८ मुरलीधरजीमहाराजानाञ्चाध्यक्ष्येण प्रागुपक्षिप्तान् प्रश्नानधिकृत्य परमया शान्त्या शास्त्रार्थविचारः कृतः। तत्र शास्त्रार्थविचारे सर्वेषामैकमत्येन ये ये सिद्धान्ताः कृतास्तेषामुद्घोषणं महासम्मेलने धर्माचार्यैः कृतम् । पत्रिकापाठकानां कौतूहलविनोदाय महासम्मेलनस्य संक्षिप्तो वृत्तान्तः पत्रिकायामन्यत्र प्रकाशितः । महासम्मेलनस्य सुविशदो वृत्तान्तः, धर्माचार्याणामभिभाषणानि, स्वागताध्यक्षाणामभिभाषणं, सभापतेरभिभाषणं, प्रबन्धकारिणीसभापतेरभि-

भाषणं, निर्णयादयश्च सर्वे विषयाः धर्माचार्यादीनां सर्वेषां चित्रैः सुशोभिताः सत्वरमेव विशिष्टाङ्करूपेण मुद्राप्य प्रकाशयिष्यन्ते । स तु विशिष्टाङ्कः एतत्पत्रिकाग्राहकेभ्यो विना मूल्यं प्रदास्यते । प्रतिनिधिपण्डितैरर्द्धमूल्यं तदितरैस्तु निर्दिष्टमूल्यं प्रदेयं भविष्यति । विशिष्टाङ्कदर्शनेन ब्राह्मणमहासम्मेलनस्यामूलवृत्तं प्रत्यक्षायमाणं भविष्यति पाठकानामिति कृतमुक्तेन ।

महासम्मेलनकार्यव्यग्रैरस्माभिर्न पारितं यथासमयं पत्रिकायाः सप्तमीं संख्यां प्रकाशयितुमिति सनिर्बन्धं सविनयञ्च प्रार्थ्यन्ते ग्राहकमहोदया यत्ते कृपया अनिच्छाकृतामस्माकमेतां त्रुटिमवश्यं क्षाम्यन्त्विति ।

* * *

नितान्तं दुःखितान्तःकरणैरस्माभिरावेद्यते यदस्मिन् महासम्मेलने निखिलं कृत्यं महतानन्देनैव समपत्स्यत यदि नाम कृतान्तहतकस्तत्र स्वप्रभुत्वं नादर्शयिष्यत् । महासम्मेलनावसरे समुपस्थितानां वङ्गीयप्रतिनिधीनां मध्ये त्रयो महाभागा दुश्चिकित्स्येन विसूचिकामयेनाक्रान्ता हन्त अकाल एव महाकालोदरं प्रविष्टाः । तेष्वेको वङ्गदेशान्तर्गतमैमनसिंहनिवासी पण्डितरजनीकान्तविद्यारत्ननामा, द्वितीयो मेदिनीपुरनिवासी भास्करानन्दस्मृतितीर्थाभिधानस्तृतीयश्च वर्द्धमाननगराभिजनो रथीन्द्रनाथमुखोपाध्यायमहोदयः । एतेषु प्रथमद्वितीयौ महात्मानौ न तथास्माकं परिचितौ अतो दुःखसंवेदनमन्तरेण नान्यत्किमपि वक्तुं शक्यते—परन्तु अन्तिमस्य महाभागरथीन्द्रनाथस्य विषये बहु वक्तव्यमवशिष्यते । एष खलु महात्मा प्रातःस्मरणीयस्य इन्द्रनाथबन्द्योपाध्यायमहाशयस्य भागिनेयः स्वयमपि वर्धमाननगरे समनुष्ठितस्य वंगीयब्राह्मणसम्मेलनस्यान्यतमनेतृत्वं विदधानो ब्राह्मणसमाजस्य बहूपकुर्वाणश्च सनातनधर्माभ्युदयकामानां सर्वेषां प्रशंसाभाजनं समजनि । महापुरुषमेनं बलादपहरता दैवेन न केवलं ब्राह्मणसमाजस्यापि तु सनातनधर्मस्य सुमहदपकृतम् । यथा वास्तु—सर्वे एवैते पुरुषधौरेया अविमुक्तक्षेत्रमिद-

मासाद्य सापायकायविनिमयेन सुरैरप्याकांक्षणीयां दिव्यां गतिमासादितवन्त इति यद्यपि नात्र दुःखलेशस्यावकाशस्तथापि समयेऽस्मिन् तादृशानां स्वधर्मनिष्ठानां पुरुषाणामभावोऽस्माभिः प्रतिपदमनुभूयेतैतदेव परं शोकस्थानम् । शान्तिमयो भगवानस्माभिः प्रार्थ्यते—स खल्वेतेषां चिराय परित्यक्तानां पुत्रकलत्रादीनां शान्तिं विदध्यादिति ।

* * *

वाराणस्यामेकस्य संस्कृतविश्वविद्यालयस्य प्रतिष्ठा कर्त्तव्येति ब्राह्मणमहासम्मेलनस्यान्यतमः प्रस्तावः सर्वैः सोत्साहं सहर्षं च परिगृहीत इति सर्वेषां विदितमेव । तत्र प्रथमतस्तदर्थं पञ्चाशल्लक्षपरिमितं धनमपेक्षितं वर्तते । महाराजाधिराजद्वारवंगाधीश्वरेण पञ्चलक्षाणि रूप्यकाणां दातुमङ्गीकृतमित्यपि विदितचरमेव । अवशिष्टं चतुश्चत्वारिंशल्लक्षपरिमितं धनमस्माभिः संग्राह्यं वर्तते । प्रतिगृहमेकैकं रूप्यकमपि यदि गृह्यते तथापि नैतदतिदुष्करं भविष्यति । परमत्र सर्वेषां वर्णाश्रमधर्मावलम्बिनां साहाय्यमपेक्ष्यते ।

* * *

श्रीमन्मालवीयमहोदयानां श्रीमन्महामहोपाध्यायप्रमथनाथतर्कभूषणमहाशयानाञ्च निर्बन्धातिशयप्रसूताऽखिलभारतवर्षीयसनातनधर्ममहासभा केवलं ब्राम्हणमहासम्मेलनस्य विरोधायैवात्मानं प्राकाशयदुतासीत्किमपि प्रयोजनान्तरं तस्या इति वयं निश्चेतुं न प्रभवामः । यद्यत्तेषां संकलिपतमासीन्न तस्यैकस्यापि प्रतिपादनं सभया कृतम् । मालवीयमहोदयानां क्व गतः सः स्त्रीशूद्रान्त्यजानां सप्रणवमन्त्रोच्चारणाधिकारप्रस्तावः ? क्व वा गतस्तर्कभूषणमहाशयानां शुद्धिविधवाविवाहादिसमर्थकः सिद्धान्त इति चित्रं प्रतिभाति । एतावता प्रबन्धेन यन्मतं तत्र भवद्भिः प्रकटीकृतम् तदेव चेन्मनीषितमपि तर्हि किमपराद्धं ब्राह्मणमहासम्मेलनेन, वयमेतत्प्रष्टुमपि किं न शक्नुमो यत्कथं तैर्ब्राह्मणमहासम्मेलनं दूरतः परिहृतम ? किमिति वा ब्राह्मणमहासम्मेलननेतृभिस्तत्तद्गृहं गत्वा सविनयं सविश्रम्भं सनिर्बन्धञ्च प्रार्थिता अपि ते न केवलं ब्राह्मणमहासम्मेलनेनासहयोगं

कृतवन्तः प्रत्युत विरोधमाचरितुं बहु प्रयतितवन्तः, किमत्र व्यक्तिगतवि-द्वेष एव कारणमुतान्यत्किमपि ? न खल्वेकः क्षीरकण्ठो बालोऽप्येतत्प्र-त्येति यन्मालवीयसदृशाः कर्मवीरा महाभागा अपि व्यक्तिगतेन विद्वेषे-णैवं कर्त्तुमर्हन्तीति । न च मालवीयमहोदयानां ब्राह्मणमहासम्मेलनेन साकं विरोधो नासीदित्यपि वक्तुं शक्यम्, यतस्तत्र सनातनधर्मोदयस्त-त्क्रोड़पत्राणि च प्रत्यक्षं प्रमाणम् । श्रीमन्मालवीयमहोदयाः श्रीमत्प्रमथना-थतर्कभूषणमहोदयाश्च सर्वसमर्था देशपूज्या वृद्धाश्चातो न विचारणीय-चरिताः, तान् प्रति न किमपि वक्तव्यम्—किन्तु मदोन्मत्ताः प्रमथनाथा-नुचरा भूतप्रेताः अस्मिन् काशीक्षेत्रेऽप्युत्पातं जनयन्ति यदेतदेव विस्मय-करम् । तदपसारणाय सर्षपाणामपि प्रयोजनं भविष्यति किम् ?

* * *

श्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालयस्य श्रीकाश्यां रामघट्टे प्रति-ष्ठापितस्य प्रतिष्ठाता श्रीमान् पं० मेहताकिशोरीलालमहोदयः, पं० मेहता मुरारिलालमहोदयश्चानेकधन्यवादार्हः, आभ्यां सपरिवाराभ्यां कलिका-तानगरीतः समागत्य ब्राह्मणमहासम्मेलने समागतानां सर्वेषां धर्माचा-र्याणां विद्यालयभवने समभ्यर्थनं महतोत्साहेन कृतम् । प्रथमं जगद्गुरु-संकेश्वरपीठाधिपतयः श्रीशङ्कराचार्यचरणाः महत्या श्रद्धया सम्पूजिताः । पूजासमये विशिष्टा विद्वांसोपि विदेशीय दक्षिणाभिः सम्पूजिताः । एवमेव प्रतिदिनं प्रत्येकं धर्माचार्याः श्रीयतुगिरियतिराजमठाधिपतिश्रीसंपत्कु-मारमुनिचरणाः, श्रीशारदामठाधीश्वरजगद्गुरुश्रीशङ्कराचार्य श्रीराजरा-जेश्वराश्रमस्वामिचरणाः, श्रीनाथद्वाराधिपतिश्रीगोस्वामिकुलतिलक-दामोदरलालमहाराजाः, कांकरोलीसंस्थानाधिपतिश्रीगोस्वामिव्रजभूषण-लालमहाराजाः, मथुरासंस्थानाधिपतिश्रीगोस्वामिविट्ठलनाथमहाराजाः, काशीगोपालमन्दिराध्यक्षश्रीगोस्वामिमुरलीधरमहाराजाः षोडशोपचार-सहितपूजाभिः सत्कृताः, वाद्यघोषैः समं स्वस्वस्थानं प्रापिताः । सर्वेऽप्येते मेहता पं० किशोरीलालमुरारीलालशर्मणोः भक्तिश्रद्धादिकं विलोक्याऽ-

तीव समतुष्यन् । श्रीनाथद्वाराधिपतिमहाराजैः वेदविद्यालयस्य साहाय्यार्थं पञ्चशतरूप्यकाणि देयत्वेन प्रतिज्ञातानि । व्याख्यानमपि सुललितं कृतमिति उपस्थिता विद्वांसः अनेकान् धन्यवादान् प्रददुः ।

श्रीकाञ्चीप्रतिवादिभयङ्करमठाधीश्वरश्रीअनन्ताचार्यस्वामिचरणाः, गोवर्धनमठाधीश्वरजगद्गुरुश्रीशङ्कराचार्यश्रीभारतीकृष्णतीर्थस्वामिचरणाश्च विद्यालयं स्वागमनेन पावयन्तिस्म । एषामपि महतोत्साहेन पूजनमकारि । श्रीशङ्कराचार्यचरणैरेवं व्याख्यानं प्रदत्तं यच्छ्रवणेन श्रोतारः सर्वेऽपि चित्रार्पिता इवाऽवतस्थिरे ।

श्रीसनातनधर्मोज्जीविनीसभायाः प्रवर्तकाः कुक्कुरमुंडासंस्थानाधिपतयः हरिभक्तिपरायणश्रीसन्तोजीमहाराजा अपि स्वागताभिनन्दनादिना दक्षिणयाच सह सदक्रियन्त ।

पूजासमारम्भार्थं सहस्रत्रयं रूप्यकाणां व्ययीकृतमिति सर्वेऽपि मेहतामहोदयं प्रसशन्ति स्म ।

* * *

सम्मेलनस्य पञ्चमदिने सभास्थान एव रात्रौ काशीस्थैश्छात्रैः संस्कृताध्येतृभिः समागतविद्वज्जनमनस्तोषाय मध्यमव्यायोगनामकस्य नाटकस्याऽभिनयः कृतः । म० म० पं० श्रीअनन्तकृष्णशास्त्रिमहोदयैः सन्तुष्टैरेकं स्वर्णपदकं विशिष्टाभिनेत्रे समर्पितम् ।

* * *

श्रीनाथद्वाराधिपतिभिः काशीस्थानां देशान्तरागतानां वैदिकानां पंडितानां च श्रीकाशीगोपालमन्दिरे एका सभा समाहूता, यत्र सार्धत्रिशतं विद्वांसः प्रत्येकं मिष्टान्नेन सह पञ्चरूप्यकदक्षिणाभिः सम्पूजिताः गोस्वामिवर्याणां महतीं प्रशंसामकुर्वन् ।

* * *

संकेश्वरपीठाधिपतिश्रीमज्जगद्गुरुशङ्कराचार्यचरणैस्तथा शारदापीठाधीश्वरश्रीमज्जगद्गुरुशङ्कराचार्यचरणैश्च काशीस्थानां सर्वेषां द-

ण्डिनां वैदिकानां ब्राह्मणानां विद्यार्थिनां च भोजनप्रदानादिना वस्त्रदानादिना च एवं त्रिशतं विदुषां वैदिकानां दक्षिणादानपूर्वकं सभाकरणेन च सत्कारः कृतः। यत्र त्रिसहस्राधिकरूप्यव्ययः सञ्जातः। एवं व्ययकरणेन धर्मरक्षार्थंबद्धपरिकरत्वमेभिः प्रदर्शितमिति नास्ति सन्देहः । दूरदेशादेतावन्तं श्रमं धनव्ययं च स्वीकृत्य यदागमनं न तद्दृष्टार्थं कथमपि भवितुमर्हति । केवलं धर्मरक्षैव उद्देश्यमिति तदर्थमेतेभ्यो यावन्तो धन्यवादाः प्रदेयास्तेऽल्पा एव । सम्मेलनमेतेषां सर्वदाऽधमर्णमेव ।

* * *

सम्मेलनसमाप्त्यनन्तरं यद्यपि अमदावादसंस्थानाधिपश्रीगोस्वामिवर्यमधुसूदनलालजीमहाराजाः श्रीकाश्यां समायातास्तथापि सम्मेलनार्थमेव निर्गता अपि आवश्यककार्यवशेन यथासमयं सम्मेलने समुपस्थातुं नापारयन्निति महान्तं खेदं प्रादर्शयन्। सम्मेलनस्य सर्वात्मना साफल्यं कामयमानाः स्वस्य धर्माचार्यैरुद्घोषितानां निर्णयानां विषये सम्मतिं मुखेन प्रकाशयन्तो भाविनो विशुद्धसंस्कृतविश्वविद्यालयस्य साहाय्यमवश्यं करिष्यत इति प्रतिज्ञातमिति वयं सहस्रशो धन्यवादान् वितरामः ।

* * *

॥ श्रीचन्द्रमौलीश्वर ॥

( मुद्राचिन्हम् )

स्वस्ति श्रीमदखिलभूमण्डलालंकारत्रयस्त्रिंशत्कोटिदेवतासेवितश्रीकामाक्षीदेवीसनाथ श्रीमदेकाम्रनाथ श्रीमहादेवीसनाथ श्रीहस्तिगिरिनाथसाक्षात्कारपरमाधिष्ठानसत्यव्रतनामांकितकाञ्चीदिव्यक्षेत्रे शारदामठसुस्थितानाम्, अतुलितसुधारसमाधुर्यकमलासनकामिनीधम्मिल्लसम्फुल्लमल्लिकामालिकानिष्यन्दमकरन्दझरीसौवस्तिकवाङ्निगुम्भविजृंभणानन्दतुन्दिलितमनीषिमण्डलानाम् , अनवरताद्वैतविद्याविनोदरसिकानाम्, निरंतरालंकृतीकृतशान्तिदान्तिभूम्नाम्, सकलभुवनचक्रप्रतिष्ठापकश्रीचक्र-

प्रतिष्ठाविख्यातयशोऽलंकृताताम्, निखिलपाषण्डषण्डकण्टकोद्धाटनेन विशदीकृतवेदवेदान्तमार्गषण्मतप्रतिष्ठापकाचार्याणां, श्रीमत्परमहंसपरिव्राजकाचार्यश्रीजगद्गुरुश्रीमच्छंकरभगवत्पादाचार्याणाम्, अधिष्ठाने सिंहासनाभिषिक्तश्रीमन्महादेवेंद्रसरस्वतीसंयमीन्द्राणाम्, अन्तेवासिवर्यश्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्रीपादैः,

श्रीमत्सुगुणमणिगणमण्डितानां, यथावदधीतसाङ्गश्रुतिस्मृतीतिहासशास्त्राध्ययनतदर्थज्ञानस्वःसाधारणसकलसद्धर्माचरणप्रचारणबद्धश्रद्धानां दुराग्रहग्रहगृहीतसमस्तनास्तिकजल्पाकवैतण्डतुण्डखण्डनकण्ठीरवाणां, सन्मतप्रतिष्ठापनैकतानमानसानां "अखिलभारतीयब्राह्मणमहासम्मेलनसभासदां, साध्यक्षाणां सर्वाभीष्टसिध्यै क्रियते नारायणस्मृतिः—

"ब्राह्मण्ये हि रक्षिते रक्षितस्स्याद्वैदिको धर्मः । तदधीनत्वाद्वर्णाश्रमधर्माणां," इति भगवद्गीतोपोद्धातभाष्यानुसारेण, प्रबलकलिमलमलीमसमानसजनतोद्धरणब्राह्मण्यसंरक्षणसत्पथप्रवर्तनदक्षां दुराचारदूरीकरणव्यग्रां भवदीयामिमां सत्प्रवृत्तिं भक्तिभरिताभ्यर्थनां च समीक्ष्याविन्दामामन्दमानन्दम्॥ इतः प्रभृति भवदीया सत्प्रवृत्तिरीदृशी सर्वापि श्रीत्रिपुरसुन्दरीसनाथश्रीमच्चन्द्रमौलीश्वरपरमकरुणया उत्तरोत्तराभिवृद्धा, निरतिशयश्रेयस्संदायिनो च भवतां भूयादिति सानुग्रहमाशास्महे ।

मुखाम्—दिण्डुकल्<br>
विभवः सं० आश्विनशुक्लैकादश्याम् । } नारायणस्मृतिः

---

* नमो ब्रह्मण्यदेवाय *

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )

—:***:—

" न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् )

प्रथम वर्षे } मार्गशीर्षः शकाब्दाः १८५० { अष्टम संख्या ।

## विप्रपादाब्जवन्दनम् ।

[ निबन्धकः—श्रीनित्यगोपाल विद्याविनोदः । ]

—***—

गङ्गाजन्मभुवा सुरेण महता यत्नेन शुश्रूषितम्,
पद्माधिष्ठितविष्णुवक्षसि लसद्धूलीकदम्बांशुकम् ।
आधिव्याधिविनाशसाधनविधौ सञ्जीवनी सोदरं,
वन्दे भूसुरपादपद्ममनिशं भोगापवर्गप्रदम् ॥ १ ॥

लोके सर्वसुपर्वमूर्त्तिसदृशं सर्वैः समर्च्यं सदा,
श्रौतस्मार्त्तविधानसम्मतकृतिप्रस्थाननिर्णायकम् ।
धर्मस्थापनयत्नचिन्तनपरं धर्मार्थकामाङ्कुरं,
वन्दे भूसुरपादपद्ममनिशं भोगापवर्गप्रदम् ॥ २ ॥

अज्ञानान्ध्यनिवर्त्तनार्यमकरं ज्ञानामृतांशूदयं,
सान्द्रानन्दकदम्बसंभृतरसं प्रेमाम्बुवर्षाम्बुदम् ।

शोकाघातकिणाङ्कनिर्वृतिकरं निर्वाणनित्यालयं,
वन्दे भूसुरपादपद्ममनिशं भोगापवर्गप्रदम् ॥ ३ ॥

भोगासक्तिनिवृत्तकारणमहो कैवल्यवर्त्मोत्तमं,
नानादुःखविपत्तिसङ्कुलजगत्यानन्दकन्दाकरम् ।
संसाराध्वगतागतिश्रमहरं सच्चित्सुखाम्भोधरं,
वन्दे भूसुरपादपद्ममनिशं भोगापवर्गप्रदम् ॥ ४ ॥

भ्रान्त्या दुर्गममार्गसंचरणतो लोकान् भृशं दुःखितान्,
उद्धर्तुं भुवनैकमात्रशरणं सृष्टं जगत्तारकम् ।
भूमौ दिव्यमहार्घरत्नमतुलं पाषण्डिनां दुर्लभं,
वन्दे भूसुरपादपद्ममनिशं भोगापवर्गप्रदम् ॥ ५ ॥

इष्टापूर्त्तफलाप्तिसाधनवरं निष्कामकर्मर्त्विजं,
ज्ञानाज्ञानकृतात्मदुष्कृतिहरं सत्कर्मबीजाङ्कुरम् ।
ब्रह्मज्ञानविबोधसाधनमहामोहैकदावानलं,
वन्दे भूसुरपादपद्ममनिशं भोगापवर्गप्रदम् ॥ ६ ॥

आजन्मामृतलाभयोगनिरतं संत्यक्तभोगालयं,
लोकानिष्टनिवृत्तिवृत्तिकुशलं संशान्तकामानलम् ।
धर्मालोकवितानतिग्मकिरणं कल्याणकृन्युन्मुखं,
वन्दे भूसुरपादपद्ममनिशं भोगापवर्गप्रदम् ॥ ७ ॥

वाञ्छाकल्पमहीरुहं सुरनरैर्वन्द्यं समं सर्वदं,
वेदान्तार्थमनीषितं मुनिमनोवेद्यं तपःसिद्धिदम् ।
संसारार्णवमग्नदुर्गतजनोद्धारोडुपं सुन्दरं,
वन्दे भूसुरपादपद्ममनिशं भोगापवर्गप्रदम् ॥ ८ ॥

---

## जातिमर्यादा परिपालनीया।

[ निबन्धकः—श्रीकृष्णशास्त्री वेदान्तशिरोमणिः, पालघाट। ]

——:***:——

सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम्।
तथात्मानं समादध्याद्भ्रश्यते न पुनर्यथा॥
यस्य नोत्क्रामति मतिः स्वर्गमार्गानुसारिणी।
तमाहुः पुण्यकर्माणमशोच्यं पुत्रबान्धवैः॥

( १ ) अहो! कर्मक्षेत्रमिदं भारतमधिवसतां नैकविधजन्मार्जितपुण्यपुञ्जपरिपाकविशेषेण समवाप्तनरशरीराणां जीवनिकायानामतिनिर्भरप्रेमपरिपूरितान्तःकरणस्य परमेश्वरस्य कटाक्षविलासपरम्पराभिर्गोचरीकृतानां भारतीयानामयं महिमा निग्रहानुग्रहप्रवीणैर्वृन्दारकवृन्दैरप्यमन्दानन्दतुन्दिलतया, अतिमानासूयाकलङ्कितहृदयतया वा नितरां स्तूयत इति महदिदमस्माकं कृतकृत्यानामामोदस्थानम्। कामं खलु वयं साक्षात्कुर्मो बह्वीर्नदीर्दर्शनमात्रेण पुनन्तीर्नदांश्चार्षश्लाघाविषयीभूतान्क्षेत्रविशेषांश्च मनसाप्यचिन्त्यरचनान्युगपदेवेन्द्रियगणानामत्यानन्दमादधानानिति। सेयमस्माकं धन्यता नूनं वाङ्मनसी अतीत्य चकास्ति। न हि स्वकीय उत्कर्षः स्वकीयामेव श्लाघामर्हतीति सर्वज्ञो भगवान्बादरायणस्त्रिदशानामेवेमान् श्लोकानुदाजहार—

"अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः।
यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः॥
किं दुष्करैर्नः क्रतुभिस्तपोव्रतैर्दानादिभिर्वा द्युजयेन फल्गुना।
न यत्र नारायणपादपङ्कजस्मृतिः प्रमुष्टातिशयेन्द्रियोत्सवात्॥
कल्पायुषां स्थानजयात्पुनर्भवात्क्षणायुषां भारतभूजयो वरम्।
क्षणेन मर्त्येन कृतं मनस्विनः संन्यस्य संयान्त्यभयं पदं हरेः॥

न यत्र वैकुण्ठकथासुधापगा न साधवो भागवतास्तदाश्रयाः ।
न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वा स सेव्यताम् ॥
प्राप्ता नृजातिन्त्विह ये च जन्तवो ज्ञानक्रियाद्रव्यकलापसंभृताम् ।
न वै यतेरन्नपुनर्भवाय ते भूयो वनौका इव यान्ति बन्धनम् ॥
यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनम् ।
तेनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्यद्भजतां शं तनोति ॥

(२) तदेवं समुद्घोषितसर्वातिशयविलासिनि भारते समवाप्तमानुष-जनुर्भिर्विशिष्याधिगतद्विजवपुर्भिः स्वीयवर्णाश्रमधर्ममर्यादापरिपालनमवश्यमनुष्ठेयमिति नेदं परकीयं शासनमपेक्षते । यावता स्वकीयानाचारान्नोल्लङ्घेमहि तावतैव हि वयमुत्कृष्टजीविताः सम्पद्येमहि । न खलूत्कृष्टवस्त्वधिगममात्रेण पुरुषकारः पुरुषस्याभिनन्द्यते; अपित्वधिगतस्य तत्तादृशस्य वस्तुनो यथोचितं परिपालनेनैव । तथा चातीतानेकजनुः सम्पादितसुकृतविशेषैः सम्पन्नमानुष्यकस्तत्रापि द्विजातिविशेषशालिनो मा खलु निजवर्णाश्रमधर्मपथमुल्लङ्घ्य स्वैरवर्तिनः परकीयधर्माचरणेनाधः पतेम, परन्त्वितोऽप्युन्नतां पदवीमधिरोहेमेतीयं चेन्मनीषा विश्वेषां मनसो न दूरादपेयात्, ततो न वयं व्यर्थयेमेदं जनुः । न चात्र विशयलेशः । अन्यच्चेदमाकलनीयं श्रेयस्कामैः—यत् वयमिवास्मद्वंशपरम्पराऽप्यवदाता सर्वथा परिपूततरा चाचन्द्रतारकं समुल्लसतुतमामिति । परानुग्रहकातरता हि निसर्गो महतां वदान्यानाम् । न चोच्छास्त्रमाचरतां दूरीकृतनिजधर्माणामूरीकृतपरधर्माणां त्रैवर्णिकानामथवा चातुर्वर्णिकानामर्वाचीना वंशपरम्परा धर्मपरतन्त्रा संचकास्त्विवति प्रत्याशा फलमश्नुवीत । न वा धर्मोच्छेदे लोकयात्रापि सुखतरा सम्पद्येत । अतो भावुकैरैहिकामुष्मिकश्रेयः समधिगमाय स्वस्वधर्ममर्यादापरिपालने दत्तावधानैर्भवितव्यमित्ययं न हि निगूढो विषयः ।

(३) धर्ममूला हि लोकस्थितिः । धर्मश्च जातितन्त्र एवोरीकर्तव्यो निजोदरकुटुम्बपरिपालनादिषु व्यापृतैः सरसहृदयैः । न हि कुटुम्ब-

परिपालनादिषु व्यापृतचित्तैः जीवनिकायैः जात्यादिमर्यादामतीत्य क्रियमाणा व्यवहाराः सामञ्जस्यमश्नुवीरन् । न चातीतलोकव्यवहाराणां पारमहंस्यं पदमधिरूढानां सुखदुःखादिभिरविहतान्तःकरणानां जातिपरिवर्तनादिकानुच्छास्त्रान्विषयानवलोक्य लोकहिताहितयोः प्रवृत्तिः साहंकारा पदमादधीत । अतश्च लौकिकव्यवहारेषु बद्धमनस्कता जातिपरिवर्तनादिव्यवहारेषु बद्धकङ्कणता चैकत्र संविशन्त्यौ नाल्पीयसेऽनर्थाय लोकानां संपद्यत इत्यहो! अत्यन्तशोचनीयेयं दशा आपतिता भारतीयानां प्रजानाम् । न हि सालोक्यादिष्वन्यतमां मोक्षपदवीमधिरूढैश्चातुर्वर्णिकैरितरैर्वा जातिपरिवर्तनादिषु दत्ताभिनिवेशैस्तत्र तत्र कृताग्वाग्विलासान्प्रमाणैरुपलभामहे । प्रत्युत तत्तज्जात्यादिमर्यादापरिपालनपुरःसरमेव तांस्तान्निःश्रेयसमधिरूढाञ्जानीमहे । अथ यदि तेऽपि जातिपरिवर्तनादिव्यवहारेष्वभिनिविष्टचित्ता इत्याग्रहः, कुतस्तर्हि तेषां भक्तिमार्गे ज्ञानोपाये वा निरर्गला प्रवृत्तिः सम्पद्येत । यत् इदमेव तेषां मनसः सार्वकालिकं विक्षेपं जनयज्जागृयात्–"अद्यैतस्मिन् समाजे प्रविश्य "जातिरवश्यं परिवर्तनीये" त्युपन्यासः करणीयः, तत्कृते च ग्रन्था आलोचनीयाः, अथवा किमिति ग्रन्थानामालोचनेन, स्वयं युक्त्यैव सामाजिकानां मन आवर्जयेम । श्वश्चान्यत्र गत्वा "विवाहमधिकृत्यो" पन्यसिष्यामः । परस्मिंश्च दिवसेऽन्यत्र गत्वा "ऽन्यं विषयमधिकृत्ये"ति" तदेवं विधाभिर्वह्वीभिर्विकल्पनाभिर्नक्तंदिवं दूयमानान्तःकरणाः कथंकारं ध्याननिष्ठायाम्, ज्ञानोपाये, भक्तिमार्गे वा लब्धक्षणाः श्रेयः समधिगन्तुमीशीरन् । इममेव खल्वभिप्रायं मनसिकृत्य भगवान्बादरायण उदाजहार—

"विप्राद्‌द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचने हितार्थप्राणं पुनाति सकुलं न तु भूरिमानः॥" इति

जातिव्यवस्थामवलम्ब्येदं वचनं प्रवृत्तमिति न भव्यहृदयानां सविधे विज्ञापनीयं भवति । मा च शङ्कि जात्या श्वपचो वरीयानिति । यत ईश्वरार्पितसर्वेन्द्रियप्राणादिवृत्तिमत्त्वेनैव तस्य श्रैष्ठ्यमभिप्रैति भग-

वानाचार्यः । भक्तपराधीनतां भगवत उपपादयन्हि भक्ताग्रणीःप्रह्लादो भक्तिविरहितं सत्यदयादिशालिनमपि द्विजमनुशोचन्नित्थमुदाजहार, "भक्त्या तुतोष भगवान्गजयूथपाये"ति पूर्वतनश्लोकार्थोपष्टंभकता यस्य प्रवृत्तेः । न हि निन्दा निन्दितुं प्रवृत्ता परन्तु स्तुत्यं स्तोतुमि"ति न्यायेन भक्ताग्रेसरः सर्वथा ज्यायानिति पर्यवस्यति; न तु शरीराद्यनुबद्धान्विषयविशेषान्भुञ्जान उत्कर्षापकर्षयोर्दत्तमना भक्तिविधानकारिषु व्यवहारेषु व्यापृण्वानस्तथेति ।

(४) किं च,

"विद्या प्रणष्टा पुनरभ्युपैति जातिप्रणाशेत्विह सर्वनाशः ।
कुलापदेशेन यथाभिपूज्या तस्मात्कुलीनां स्त्रियमुद्वहेत ॥ इति

इत्यभियुक्तोक्तिमनुसन्दधानैर्नियमेन निजधर्मपरिपालनेन, यथोचितं कुलकन्योद्वहनादिना जातिः सुष्ठु संरक्षणीया भवति यदि तु स्वेच्छानुसारं प्रवृत्तिरेव धर्म्या सार्वजनीना चाभविष्यत् तदा नैव प्रावर्तयिष्यन्त महर्षिभिर्विविधानि स्मृतीतिहासपुराणादीनि, गीताशास्त्रं च । स्वजनवधाद्विमुखो धनञ्जयः करुणया नु, पापभीरुतया वा अधर्म्य एव भैक्षाचरणे प्रवर्तिष्यमाणः क्षात्रोचितं धर्म्यं युद्धं नूनं परित्यक्ष्यति. तथा च विपरीतधर्माचरणेन जातिमर्यादोच्छिद्येतेति धर्मसंरक्षणाय कृतमानुषशरीरपरिग्रहो भगवांस्तं स्वकीय एव धर्मे प्रवर्तयामास किमेतावता स भगवानकरुण उत्प्रेक्ष्येत उताहो ! जीवनिकायेषु सौभ्रात्रमभिनयन्तः शास्त्रसम्प्रदायम्, लोकमर्यादाम्, वंशाचारपद्धतिं चोच्छेदयितुं कृतावताराः स्वमतिप्रभवा बह्वीः कुयुक्तीरुद्भावयन्तोऽर्वाचीनाः कतिपय एव करुणापारावारा उल्लिख्येरन् । कामं न वा स भगवांस्तादृशेषु दयेत योऽर्जुनेऽतिमात्रां कृपामाविरचीकरत् । अथवा मन्यामहे, अर्जुनाच्छतगुणं महामोहपिशाचिकया ग्रस्तानिमानालक्ष्य नूनमात्मानमपीयं बाधिष्यत इति शङ्कया स भगवान्न स्वकीयं रूपममीषां पुरत आविष्करोति हन्त ! सर्वथाप्ययं शास्त्रीयः पन्थाः बहुतरदुराक्षेपोज्जृंभणमहान्धकारे

नष्टप्रचारः कदा कथमिव वा प्रकाशं गमितः श्रेय आधास्यतीति चिरतरमुत्कण्ठिताः स्मो वयम्।

(५) "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते" इति गौतमीयं धर्मसूत्रमपि स्वान्स्वान्वर्णधर्मानाश्रमधर्मांश्चानुतिष्ठतां महान्त्याशास्यानि फलान्यावेदयति। "विष्वञ्चो विपरीता नश्यन्ति" इति समनन्तरं च सूत्रं विपरीतमाचरता तिर्यगादिषु योनिषु जन्मफलमावेदयति।

> शुभैर्भवति देवत्वं व्यामिश्रैर्जन्म मानुषम्।
> अशुभैश्चाप्यधो जन्म कर्मभिर्लभते नरः॥

इतीदमपि वचनमिममर्थमुपोद्बलयति। धर्मतत्वविचिकित्सायां च निर्णयोपायं स एव भगवान्गौतमोऽनुशास्ति—"विप्रत्तिपत्तौ त्रैविद्यवृद्धेभ्यः प्रत्यवहृत्य निष्ठां गमयेत्" इति। त्रैविद्यवृद्धग्रहणं ह्याम्नायाविरुद्धानां धर्माणामधिगममावेदयितुम्। नह्यर्थज्ञानमन्तराऽक्षरग्रहमात्रेण धर्मतत्वं समधिगच्छन्ति; येन परोपदेशे प्रभवेयुः। न वा स्मृतीतिहासपुराणादिष्वकृतपरिचयो निष्कृष्य धर्माधर्मौ विवेचयितुमलम्। मीमांसा हि न्यायनिर्धारणद्वारा तान्प्रकाशं प्रापयति। न हि सर्वेऽपि धर्मा वेदैः साक्षाद्बोध्यन्तेऽधर्मा वा। अथ तथाङ्गीकारेऽपि सकला अप्यागमा न प्रत्यक्षत उपलभ्यन्ते धार्यन्ते वा पटुतमैरप्याधुनिकैः कैश्चित्।" तं ह त्रीन्गिरिरूपानविज्ञातानिव दर्शयाञ्चकार। तेषां हैकैकस्मान्मुष्टिनाददे। स होवाच। भरद्वाजेत्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ न इतरदननूक्तमेव" इत्याम्नानात्। "अथातः सामयाचारिकान्धर्मान्व्याख्यास्यामः। धर्मज्ञसमयः प्रमाणम्, वेदाश्चे" त्यादीन्यार्षाणि सूत्राणि शिष्टानां मन्वादीनां समयान्धर्माधर्मयोः प्रमाणमभ्युपयन्ति। यथा हि महर्षय ईश्वरानुगृहीताः सर्वान्वेदान्साक्षात्कुर्वन्ते, न तथाऽस्मादृशाः। "तेषामुत्सन्नाः

पाठाः प्रयोगादनुमीयन्ते" इति वचनात्स्मृत्याचारादीनामपि श्रुतिकल्पकत्वमुपपाद्यन्ते । न चानुमानकुशलैर्बहुधाऽनुमीयेतेत्यव्यवस्था स्यादिति शङ्कनीयम् । "विप्रतिपत्तौ त्रैविद्यवृद्धेभ्य" इति पूर्वमेवोदाहरणात् । नह्याप्ताः साधवो निरपेक्षा आगममर्यादामतिक्रमेयुः । अत एवाम्नायते—"अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः ।" इत्यादि । इममेव च राजमार्गं कुरुपितामहोऽजातशत्रुं प्रत्याह शान्तिपर्वणि महाभारते—

य: कश्चिन्न्याय्य आचारः सर्वशास्त्रमिति श्रुतिः ।
यदन्यायमशास्त्रं तदित्येषा श्रूयते श्रुतिः ॥
न प्रवृत्तिर्ऋते शास्त्रात्काचिदस्तीति निश्चयः ।
यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः ॥ इति ।

(६) किं च, "नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मामामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादाम्" इत्येवमभ्यर्थना श्रूयते ।

युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥

इति वचनेन कल्पादावीश्वरानुग्रहेण महर्षयो विनैव महान्तमायासं वेदमुपलब्धवन्त इति गम्यते । तदेवमुपलब्धवेदास्तपःप्रभावेण मन्त्रद्रष्टारो महर्षयो मन्त्रकृच्छब्देनाभिधीयन्ते । न केवलं दर्शनमात्रेण समापितकृत्या अभूवंस्ते; अपि तु तांस्तान्मंत्रविशेषान्पुरश्चरणाध्यापनादिभिः सम्यगजूगुपन् । अतो मन्त्रपतय इति च व्यवह्रियन्ते । ईदृक्प्रभावास्ते ऋषयो मां मा पराडुः, मय्यवज्ञां मा कार्षुः । अहमपि तान्मा परादाम् । नावजानामीति श्रौताक्षरार्थः । यथा पित्राऽतिकृच्छ्रेणार्जितं वित्तं धर्मार्थमनुप्रयुञ्जन्नमार्गे व्ययमापादयंश्च तनूजः "अहो ! दुराचारोऽयं पित्र्यं पन्थानमुल्लङ्घयन् पितुरेवावज्ञामातनुते स्वीयचारित्रदोषेणे" त्याक्रुश्य-

ते लोकैः, एवं लोकहितार्थं महता प्रयत्नेन सुष्ठु संरक्ष्य शिष्यप्रशिष्यपरम्परयाऽस्मासु महर्षिभिः करुणानिधिभिर्वितीर्णं वेदजातात्मकं धनं तेषां समयमतिलङ्घ्य स्वैरमपात्रादिषु विनियुञ्जानो मन्त्रपतीनामवज्ञां करोतीति न कोऽप्यत्रसन्देहः। तदेवमवज्ञाते महर्षयो दिव्यशरीराः काममस्मानप्यत्रजानन्ति। "हन्त ? भ्रष्टाचारो दुष्टचारितोऽयमस्माभिश्चिरकालं संभृतेन तपसा साधु रक्षितमात्मज्ञानौपयिकमखिलमपि मन्त्रजालं दुर्व्ययीकरोति। सोऽयं श्रीविरहितो दुःखपरम्पराभिर्नितरामुपद्रुतो नीचां गतिमाप्नोतु, मा चायमुत्तमे कुले जनिं लभतामि"ति विषण्णहृदयाः शापास्त्राणि प्रयुञ्जीरन्। न च श्रीविरहितो निर्धनः केवलमिति शंक्यताम्। "ऋचः सामानि यजूंषि। सा हि श्रीरमृता सताम्" इति श्रुत्युक्तश्रीपदस्यात्राभिप्रेतत्वात्। तथा च निःश्रेयससाधनीभूतात्मविद्याधिगमेऽधिकारालाभादसकृदावर्तीनि जननमरणादीनि दुःखान्यनुभवन्न क्वापि विश्रान्तिमुपेयादिति फलति। तदेवमनर्थपरम्परा मूलभूताया महर्षीणामवज्ञायाः पात्रं नैव भूयासमितीयं प्रार्थना तदैव फलमुत्पादयेत्, यदि वयं स्वीयामाचारमर्यादां साधु पालयेम। सोऽयमर्थोऽन्यत्राम्नायते—"योऽहमस्मि स सन् यजे। यस्यास्मि न तमन्तरेमि। स्वं म इष्टं स्वं दत्तम्। स्वं पूर्तं स्वं श्रान्तम्। तस्य मेऽग्निरुपद्रष्टा" । इत्यारभ्य "य एवास्मि स सन् यजे" इत्येतदन्तेन सन्दर्भेण। स्वबुद्धिविजृंभितानामेव चेद्वाग्विलासादीनां जात्याचारादिषु नियामकत्वम्, तदा कीदृशी गतिः कल्पनीया भवेदागमानाम्। न ह्यागमाः प्रमाणमिति वदतां वा वचनानि प्रमाणमभ्युपैमः। अथ न श्रुतिर्जात्यादिव्यवस्थां विधत्ते किन्तु स्मृत्यादिकमेवेति मतम्; तर्हि किं नश्छिन्नम् ? महर्षयो हि श्रुत्यर्थं लोकहिताय स्मरन्ति; स्मृत्वा चोपदिशन्ति। स्मृतीनां प्रामाण्यमपलपन्तो हि मोपादेयवाचो भवेयुः। ये त्वर्वाचीनास्तेषामप्रामाण्यं प्रतिजानन्ति, तत उत्पद्यमाना उत्पत्स्यमाना वा पुत्रादयस्तेषामेव वचनमप्रमाणं कल्पयेयुरित्यश्रद्धेयवचनतैव तेषामापतति। अनिवार्या हि कालगतिः या खलु सिद्धमेव स्मृत्यादिप्रामा-

पयमपह्नोतुं जनान्विक्षिप्तचित्तानाकलयति स्म । सैव पुत्रादीनां पित्रादिषु प्रामाण्यबुद्धिं नापन्होतुमीष्ट इति वक्तुं न पारयामः । सोऽयं कालकृतोऽन्यथा परिणामः कालान्तकेनैव परिहरणीय इत्याश्वस्तचित्ता वयं तमेव भगवन्तमभ्यर्थयामहे—यत्, प्रचुरप्रचारतामापद्यमाना आपन्ना वोच्छृंखलिता बहुप्रकाराः स्वमतिविलसिता वादा यतः स्वसंनिधावेवाकलिताः, तस्मादेतदन्ताः सन्तिष्ठन्तामिति शिवम् ।

---

॥ श्रीविश्वेश्वरः शरणम् ॥

## अखिलभारतवर्षीयब्राह्मणमहासम्मेलने उपस्थितानां सर्वेषां

# धर्माचार्याणां निर्णयाः ।

अति हि नाम प्रमोदतेऽन्तरङ्गमस्माकं निष्प्रत्यूहं प्रचलितां अखिलभारतवर्षीयब्राह्मणमहासम्मेलनविचारसभां निरीक्षितवताम् । विरलः खल्वेवंविधस्तत्तत्तन्त्रनदीष्णानां विदुषामेकत्र समागमः, विरलतरा च प्राच्यां मर्यादामाश्रित्य क्रियमाणा धार्मिकी चर्चा, विशेषतश्च सौहार्देन । सर्वथा तु भगवतः परेशितुः कृपया सानन्दं निर्वर्तिता विचारसभा । एतत्पुनर्महान्तमानन्दमुपजनयत्यस्माकं यदत्र धर्मपीठगुरूणामेकत्रावस्थानं संपन्नम् । मन्यामहे सोऽयं नव्य एव प्रसङ्ग इति । अतः परं परिचाल्यमाना तु महासम्मेलनपरिषदपि सर्वैः सगुणयं निरुह्येत, प्रकटीक्रियेत च वास्तवं धर्मतत्त्वं, संपाद्येत च ततः सर्वेषां चिरवधिकं श्रेय इत्याशीर्भिरभिनन्दयन्तः स्वं निर्णयमधस्तात्प्रदर्शयामः ।

### निर्णयाः—

१, २, स्त्रीणां विवाहे गर्भतोऽष्टमवर्षो मुख्यः कालः, नवमदशमौ मध्यमौ, तदूर्ध्वं यावदृतुदर्शनं गौणः कालः, ऋतुदर्शनोर्ध्वं तु सर्वथा निन्द्यः ।

२ अष्टमवर्षात्प्रभृति यावदृतुदर्शनं परिस्थित्यनुसारेणाऽपि विवाहनिषेधनियमनं सर्वथाऽयोग्यम्।

४ वृषलीत्वबोधकवचनानां धर्मकार्यानर्हत्वे तात्पर्यम्।

५. अवान्तरश्रेणीषु परस्परं विवाहो निन्द्यः।

६ धर्मज्ञा मन्वादयः, तेऽपि स्वातन्त्र्येण किमपि धर्मपरिवर्तनं कर्तुं न प्रभवन्ति।

७ त्रैवर्णिकविधवाविवाहः, दम्पत्योर्विवाहमोक्षश्च सर्वथा निषिद्धः।*

८ म्लेच्छचाण्डालादीनामस्पृश्यत्वं जातितः, तद्भावापन्नानां च कर्मतः।

९ धार्मिकदृष्ट्या इदानींतनम्लेच्छानां चाण्डालानां चास्पृश्यत्वं देवालयसभादिप्रवेशानर्हत्वं तद्भाण्डसंस्पृष्टकूपोदकग्रहणस्यायोग्यत्वञ्च सर्वथा शास्त्रेणानुशिष्यते, तत्तु रक्षणीयमेव।

१० मन्त्रग्रहणादिरूपभागवतधर्मदीक्षा एतस्मिन् जन्मनि उत्कृष्टजातिप्रापिका न भवति।

११ यवनादिजातिर्जन्मसिद्धैव।

१२ प्रणवरहितेषु केषुचिन्नाममन्त्रेषु जातिविशेषो न प्रतिबन्धकः (सर्वे धर्माचार्याः)। विशिष्टविधिविषयान्मन्त्रानुक्त्वा अन्यत्र प्रतिबन्धक एव (तेङ्गलेसम्प्रदायिनः श्रीवैष्णवाः)।

१३ शूलपाण्याद्युक्तव्यवस्थानुसारेण देवलस्मृतेः प्रामाण्ये न किञ्चिद्बाधकम्।

१४ बलाद्दासीकृतस्य म्लेच्छादिसंसर्गे त्रिवर्षपर्यन्तं मन्वाद्युक्तव्यवस्थाऽविरोधेन प्रायश्चित्तेन शुद्धिः सर्वनिबन्धकारसम्मता। कामतो म्लेच्छस्त्रीगमने सकृत्कृतेऽपि पातित्यम्। एकामत्रभोजनरूपगुरुतत-

* सर्वथा निषिद्ध इत्यनेन शूद्रेष्वपि विधवाविवाहस्य निन्द्यत्वं बोधितमिति सम्मेलन प्रबोधोपितमपि।

संसर्गे कामतश्चतुर्विंशतिवाराभ्यस्तेऽपि पातित्यमेव । एकपंक्त्युपविष्टभोजनादौ तु कामतः कृते संवत्सरेण पतति ।

१५ पूर्वोक्तस्थलेषु निर्दिष्टतत्तदत्यधुत्तरं तु कृतेऽपि प्रायश्चित्तेऽव्यवहार्यतैव । तथा विदेश ( विलायत ) प्रत्यागतेष्वपि ।

१६ व्रात्यसंस्कारस्त्रिपुरुषपर्यन्तं प्रशस्तः ।

१७ चातुर्वर्ण्यं जन्मसिद्धमेव, न तु तज्जन्मीयकर्मकृतम् ।

सर्वेषां धर्माचार्याणामेतद्विषयाणि महानुशासनपत्राणि परस्तात्प्रकाशयिष्यन्ते ।

---

## भारतीयकुमाराः कथं सनातनधर्मादर्शरूपा भवेयुः ।

[ निबन्धकः—पं० श्रीगोपालभट्टभट्टः, न्यायशास्त्री । ]

( साङ्गवेदविद्यालयाध्यापकः । )

साम्प्रतं भारतवर्षे संस्कृतभाषाया महनीयता बहुनांऽशेन लुप्तप्राया दृश्यते। यथा यथा आंग्लविद्याया उन्नतिस्तथा तथा संस्कृतविद्याया अवनतिरनुभूयते, अस्या अवनतौ च भारतीयो जनसमाज एव भूयस्तया कारणत्वमभ्युपपन्न इव प्रतिभाति मे, तत्कया रीत्या-इति तु-अग्रे विशदीक्रियते एव,प्रथमं तावत् भारतीया बालकाः कां रीतिमनुसृत्य किं शिक्षणीयाः ? तेषां मनःसु स्थैर्यौदार्यधैर्यश्रद्धाप्रभृतयः पुरुषस्यात्यावश्यकगुणाः कथमुत्पाद्याः ? तेषां देशाभिमानो भाषाभिमानश्च कथमुत्तेजनीयः ? कथं शिक्षितास्तेऽस्मद्देशालङ्काररूपा भवेयुः" इत्यादेर्विषयस्य विवेचनाऽऽवश्यकत्वमापन्ना। ततस्तयारीत्या सकृत्परिश्रमे विफलतां गतेप्यनुत्साहशून्यैर्दीर्घोद्योगः कर्तव्य इति द्वितीयं विधेयमिदम्, आधुनिकाः कुमारा उपनीता एवाल्पीयसा श्रमेण बहुफललाभलोलुपैः पालकैरांग्लविद्याभ्यासे प्रायो नियुज्यन्ते. तत्र प्राथमिकशिक्षणार्थं नियमितेषु पुस्तकेषु न कापि चेतसो महत्वसम्पादयित्री चर्चा, न वा परमेश्वरे दृढप्रत्ययोत्पादकत्वं, न वा भक्तिर-

स्रोतः प्रवर्तयित्री काऽपि सत्पुरुषाणां कथा, न वा तेजस्फूर्तिदायिनी शूराणामाख्यायिका, न वा धर्मास्तित्वप्रतिपादकः कश्चित् सन्दर्भः, केवलं कुक्कुराकुचटकलावकादीनां श्वमूषकमार्जारादीनामेव वृत्तान्ते जातोऽस्ति, आर्द्रा मृत्पिण्डाद्यथा कुलालस्येच्छानुसारं घटशरावादयो विविधा आकृतयः सम्पद्यन्ते, एवमार्द्रावस्थायामाकारपरिवर्तनमपि सम्पद्यते, आर्द्रः शरावः पिष्ट्वा घटरूपमापादयितुं यथा सुकरस्तथा शुष्को न, तदवयवानां परमाणूनां तस्मिन्नेव रूपे दृढीभावात् । तथा बाल्ये वयसि यस्य संस्कारस्य दृढानुभूतिः स एव संस्कारो वयसि परिणतेऽपि पुंसो हृदये पूर्णतया परिणमते । तस्मिन्संस्कारे दृढिमानमापन्ने तस्य प्रतीकारोऽशक्यएव । एवंभारतीयकुमाराणां बाल्यादांग्लविद्याभ्यासात् तत्सम्बन्धिनामेव संस्कारविशेषाणां यावाननुभवस्तेषां हृदयेषु तावाननुभवोऽस्मदीयशास्त्रजन्यसंस्कारविशेषाणां नैव, तेषु संस्कारेषु दृढेषु तन्मतानुसारिणी बुद्धिर्व्यासादिप्रणीतानां पुराणादीनां वेदशास्त्रादीनां च समालोचनं नैव सहते, बुद्धौ तन्मतमनुसरन्त्यां प्रायः कर्मापि तदनुसार्येव, कदाचित्पित्रादेः प्रतिबन्धकतया कर्मणःसाक्षात्तन्मतानुसरणेऽपि कालक्रमेण प्रतिबन्धकराहित्ये पुरुषो धर्मेण सह जातिमप्यपहायांग्लत्वमङ्गीकुरुते । स त्वप्येतादृशा भारतहितैषिणो ब्राह्मणत्वादांग्लत्वं गता भारतीयानां परिष्कारार्थं सदैव जागरूका बहवो महानुभावा ये किलास्मत्सदृशामपरिष्कृतानां परिष्कारार्थं यूरोपदेशं गत्वा स्वकीयं ब्राह्मणत्वं स्वदेशाभिमानञ्च त्यक्त्वाऽभक्ष्यं भुक्त्वाऽपेयं पीत्वास्माकं मातृभूतां भारतभूमिं पावयन्तीति विषादास्पदमेतत् । आंग्लविद्यामभ्यस्यतां पुंसां समवायस्य बहुतया वेदशास्त्राण्यधीयानानां संख्यायाः स्वल्पतयांग्लविद्यार्थिषु संस्कृतविद्यार्थी हीन इव सावज्ञमवलोक्यते परिहस्यते च । संस्कृतग्रन्थेषु भूयाननादर आंग्लाभिज्ञानाम्, एतावता संस्कृतग्रन्थानां का नाम हानिः, कस्याऽपि वस्तुनः साधुता दुष्टता वा तदा ज्ञायते यदा तुल्याकारमेव वस्तुद्वयं आलोकितं चेत्तयोरन्यतरस्य साधुता दुष्टता वा निर्णीयते । यद्वस्तु प्रथममेवावलोक्यते तत्प्रायः साध्वेव प्रति-

भाति, एवमाङ्ग्लविद्यायां संस्कृतविद्यायाश्चालोचितायां तयोस्तारतम्यं स्फुटीभवति । समालोचनस्य प्रवृत्तिरावश्यकी, सत्यामपीच्छायां प्रवृत्तिं विना कार्यानुत्पादनात् प्रवृत्तिश्चेष्टसाधनज्ञानाधीना इष्टसाधनताज्ञानाभावे प्रवृत्त्यभावात्, शास्त्रेष्वनिष्टसाधनत्वाभावेऽपीष्टसाधनत्वं न विद्यते यत्र पुंसो हृदयेषूद्भूतानां विकाराणां सुखाभिलाषायाश्च कयापि रीत्याप्रतीबन्धो नाऽस्ति तत्रैव तेषां मतेनेष्टसाधनत्वम्, अस्मदीयधर्मशास्त्रादिग्रन्थेषु ब्रह्मक्षत्रियविट्शूद्राणां वर्णव्यवस्था पृथक्तया तत्रापि आश्रमविशेषास्तेष्वपि पृथक् पृथक् आचारनिर्बन्धः स्वेच्छावर्तनं सुखाभिलाषाश्च प्रतिबध्नाति तेषां मते तु परिणीताया जीवत्पतिकाया अपि द्वितीयेन पुंसा अभियोगे नानौचित्यमापादयाति, अस्मात्परः को विषयस्तेषामनभिमतः यत्र द्वितीयायां द्वितीयगामिन्यामपि धर्मशास्त्राणां सम्मतिरेव तत्रेतरेषां धर्मविशेषाणां का कथा, नातिस्थिरचेतसः पुंसः पुरो दृश्यमाना सुखानुभवसामग्री चेतसश्चाञ्चल्यमुत्पादयति । चेतसि तारल्यमुपगते विवेकार्गलामाच्छिद्येन्द्रियग्रामः सत्वरमुज्जृम्भते, विकारेषु चोन्मदत्वमुपगतेषु धर्मबन्धनं भङ्क्त्वा स्वेच्छाचारो नियतमेव पुंसि सम्भवति, अस्मदीयशास्त्रेषु वेदेषु च "अहरहःसन्ध्यामुपासीत" इत्यादिर्महान् निर्बन्धो यदृच्छाचारं नानुमन्यते, अतस्तैरस्मदीयग्रन्थानामिष्टसाधनत्वाभावः एवंरीत्या अभ्युपगम्यते, परमिदं तेषां मोहविलसितम्, रक्तवर्णेनोपनेत्रेण सर्वं पदार्थजातं रक्तं दृश्यते, नीलवर्णेन च सर्वं नीलवर्णमनुभूयते, उपनेत्ररहितया दृशा अवलोकनेन च सर्वं स्वस्मिन्नेव वर्णेऽधिष्ठितं दृश्यते, तत्किं पुंसः उपनेत्रधारणसमये वस्तुजातस्य तत्तद्वर्णविपर्यासः? उपनेत्रधारणस्य फलं वा तत्? उत द्रष्टुर्दोषः? न तावत् द्रष्टुर्दोषः, वस्तूनां वर्णविपर्यासोऽपि न भवति तस्मिन्समये किन्तूपनेत्रस्य गुणो रक्तत्वेन नीलत्वेन च वस्तुषु परिणमते, एवमांग्लविद्याध्ययनात्तत्र विद्यमानानां वेदशास्त्रविरोधिनां नियमानां चेतसि दृढरूपेण परिणततया वेदशास्त्रेष्वरुचिरुत्पद्यते। अतः प्रथमं भारतीयानामध्ययनक्रमः परिवर्तितव्यः, भारतीयाः ब्राह्मण-

कुमाराः प्रथमं वेदशास्त्रेषु परं नैपुण्यं लम्भनीयाः एवं। भारतीयान्यबालका अपि प्रथमं तत्तद्वर्णाश्रमविहितकर्मसु परं नैपुण्यं लम्भनीयाः,बाल्येवयस्य-धीतानां वेदशास्त्राणां अधिकारिभेदेन तत्तद्विहितकर्मणां संस्कारे दृढता-मुपगते तस्य परिणामः सनातनधर्मस्यानुकूल एव भविष्यति, तथाभूताः सन्तोऽवश्यमेवास्मद्देशालङ्काररूपा भवेयुरिति निर्विचिकित्सकमिदम्। शा-स्त्राध्ययनस्य संस्कृतभाषामूलत्वात्तदध्ययनकामैः प्रथमं संस्कृतभाषायां पटुताऽर्जनीया तदर्थमेव वल्लभरामशालिग्रामसाङ्गवेदविद्यालये म०म० पं० श्रीलक्ष्मणशास्त्रिप्रभृतिमहोदयैरेका गीर्वाणवाग्वर्द्धिनी सभा स्थापिता, या च प्रतिपौर्णिमायां गीर्वाणभाषाया प्रथमायां हिन्दीभाषायां प्रचलति। आशास्यते च यत् इतः परमपि पण्डिताश्छात्रा अस्याः परिषद उद्देश-साधने यतिष्यन्ते इति शिवम्।

---

## लोचनप्रार्थना।

[ निबन्धकः—न्यायाचार्य श्रीपद्मप्रसादोपाध्यायः। ]

अयि माननीयाः! पाठकमहोदयाः? चतुरुदधिवेलावलयितायामस्या-मिलायां साम्प्रतं प्रायशः सर्वा अपि प्रजा विशेषतो भारतीयास्तत्राप्यति-शयेन द्विजाः तेष्वपि अत्यतिशयेन ब्राह्मणपदभाज एव स्वस्वधर्मे शिथिल-समादरा दरीदृश्यन्ते। तत्र कृतायां साधनगवेषणायां पाश्चात्यविद्यैव प्रधा-नतमं कारणमिति वयं निश्चिनुमः, तथाहि अन्यास्तिष्ठन्तु नाम यथा तथा, श्रुतिस्मृतीतिहासपुराणप्रतिपादितधर्मानुवर्तिन्योऽस्मदीया एव प्रजाः पाश्चात्यविद्याविषवल्लीसंपृक्तपवनस्पर्शत एव विकृतमतयो हिताऽहित-विपर्यस्ताः अनुपमानन्ताऽशाकल्लोलपरम्पराभिरुह्यमाना नितरां नानाविधं दुःखजातमनुभवन्ति। पूर्वं यस्या विद्याया उपार्जनायाऽनेकसंवत्सरं

ब्रह्मचर्यं चरित्वा नानाविधान् दुःशकानपि नियमान् व्यदधुः, उपार्ज्य च नैकविधमैहिकं सुखमुपभुज्याऽन्ते स्वर्गीयं सुखं मोक्षसुखं चाऽन्वभूवन्, सांप्रतं सर्वसुखशेवधिरूपायास्तस्या एव विद्यायाः प्रभावं प्रयोजनं च निखिलमपि गगनकुसुमायमानं मत्वा पितृपितामहप्रपितामहप्रभृतिभिर्महताऽऽयासेनोपार्जितं रक्षितं च सकलं धनं, गृहं, क्षेत्रं, किं वहुना स्वकीयं शरीरमपि विक्रीयाऽऽङ्ग्लविद्यामधीयते, यया च वर्णपरिचयसमनन्तरमेव वारुण्येव विह्वलीक्रियन्ते, वेश्ययेव वशीक्रियन्ते, पिशाच्येव पिशाचभावं प्राप्यन्ते दुराचारया विलासिन्येव धर्माऽऽचारान्निवर्त्यन्ते, हन्त! चार्वाका इव शिश्नोदरपूरणपरायणाः संपादिताः, वौद्धा इव द्वादशायतनपूजायां नियोजिताः, जैना इव जातिविरोधिनो विहिताः, जैमिनीया इव धर्माऽधर्मविचारचातुर्यं लम्भिताः, साङ्ख्या इव निरीश्वरवादिनः सज्जीकृताः, पातञ्जला इव समाधिमन्तो व्यधायिषत, वेदान्तिन इव वेदान्ते दीक्षिताः, नैयायिका इव प्रामाण्याप्रामाण्यमीमांसाप्रावीण्यं प्रापिताः, वैशेषिका इव विशेषद्रष्टारो रचिताः, किं वहुना अनयाऽविद्ययाऽऽत्मानं विद्यावन्तं निखिलागममर्मज्ञं च मन्यमानाः स्वयंकृतरवनामधेया इत एव सुधारकाभिमानिनो भासा इव रटन्ति, अविद्वांसो विदितशास्त्रसारा इव उपदिशन्ति, अन्धा दिव्यचक्षुष इव लोकयात्रापदवीं प्रदर्शयन्ति, अविदितपरलोकगतयः परलोकपरावृत्ता इवाऽऽमुष्मिकस्य लोकस्य किंवदन्तीं व्याहरन्ति, कृताशेषकुकृत्या अनवाप्तद्विजार्हणाः सुकृत्या इव दयापरायणा इव लोचनगोचरीकृतधर्मतत्त्वा मुनय इवाऽनधिकृतानां शूद्रान्त्यजप्रभृतीनां मन्त्राद्युपदेशादिना गुरुतां समीहन्ते, वञ्चनापरैश्चाटूक्तिशतैः कृतधार्मिकधनिकप्रतारणाः प्रच्छन्नपाटच्चराः परद्रविणत इतस्ततः सङ्गृहीतत्रिचतुरवावदूका आत्मानं कुलपतिमेवाऽभिमन्यन्ते।

पश्यन्ति च पितरं पामरतया, पामरं सर्वज्ञतया, सर्वज्ञं मूर्खतया, मूर्खं विद्वत्तया, विद्वांसं कूपमण्डूकभावेन, कूपमण्डूकं चाऽस्मानं त्रिभुवनवृत्तान्तज्ञम्, धर्मपराङ्मुखानामेषां को धर्मः पालनीयः, को वा जनोऽस्पृश्यः,

को वा संभाष्यः, को वाऽपाङ्क्तेयः, का वा मर्यादा गोपनीया, का वा जातिः परिरक्षणीया, का वा स्त्री अपरिणेया अभोग्या वा, किं वा तेषा मभक्ष्यमभोज्यमपेयमलेह्यमचोष्यं वाऽवशिष्टम्, किं वा कुकृत्यमकृत्यम्, येषां वायस्कोपादौ गौरमूर्त्तिदर्शनमेव देवदर्शनम्, तेषामाचारानुवर्तनमेव सदाचारानुवर्तनम्; लण्डनादियात्रैव चतुर्धामादितीर्थयात्रा, त्रिलोकार्चितसुरमन्दिरादौ चाण्डालादिप्रवेशनोद्योग एव देवमन्दिरपरिरक्षणोद्योगः, वैदेशिकानां शुनां स्नापनमेव सुमनःस्नापनम्, सलीलं कृत्रिमहिमादिसलिलाशनमेव शालिग्रामपानीयपानम्, वैदेशिकधूमपानाय शलाकानिघर्षणमेवाग्निहोत्रायाऽरणिनिर्मन्थनम्, चुरोटबिड़िकादौ धूमोत्पादनमेव धूपदानम्, शलाकाप्रज्वालनमेव दीपप्रज्वालनम्, सनातनधर्मीयाणां जनानां विशेषतो विदुषामाक्षेप एव स्वाध्यायः, सनातनधर्मनाशकोपायचिन्तनमेव, ब्रह्मचिन्तनम् । अहह ! एभिः पाखण्डैः केषां बुद्धिविपर्यासो न संपादितः, दृश्यताम् इदानीं कैः परमविद्वद्भिर्विप्रवर्यैरेव स्वसन्ततयः पितॄणां श्राद्धतर्पणाद्युच्छेत्तारो न निर्मिताः, कैर्वा धार्मिकैर्मतिमद्भिर्नृपतिभिरेव प्रतिसंवत्सरं परःसहस्राणां दीनाराणां व्ययेन स्वकीया एव प्रजाः स्वकीयराज्योन्मूलनाय न सज्जीकृताः, कैर्वा धनिकैः स्वधनव्ययेनैव धर्मधनध्वंसकाः पाटच्चरा न परिपालिताः, कैर्वा वैश्यैः वेश्यापतयो न समुच्चिताः, कैर्वा शूद्रैरन्त्यजैस्तदन्यैश्च स्वनिपातखातो नाऽखानि, कैर्नानुमोदितो सवर्णापरिणयप्रपञ्चः, कैर्नश्लाघितः पुष्पवतीविवाहोद्योगः, कैर्नावधारितं परस्परप्रेमनिदानं सहभोजनादिकमेव मुख्यतमं साधनम्, कैर्वा न कृता उन्मत्तशेमुषी सन्तत्यनुसारिणी स्वमतिः, कैर्वा नवीनपरिपाट्यां पादो नारोपितः, कैर्वा धर्मतत्त्वं नावोधि, कैर्वा धर्मोपदेशकैर्नाभावि, कैर्वा गृहीतोपकार्योपकारकभावस्याऽनुपमप्रेमसाधनता ।

अहो ? आङ्ग्लविद्यायाः प्रभावः, यामधीत्य स्वपोषकस्य रक्षकस्य सहायकस्य राज्ञ एवोन्मूलने मतिः प्रादुर्भवति, तदुन्मूलनोपायाः परिस्फु-

-रन्ति, तद्दोषा विदिता भवन्ति, तस्य निष्प्रयोजनकत्वं निश्चीयते, राज निरपे-क्षाभिः प्रजाभिरेव राज्यव्यवस्था कर्तव्येति अभिनवा प्रतिभा प्रतिभासते, नचेदेवं के इदानीं, आङ्ग्लशिक्षिताः प्रजाः संस्कृतविद्वांस इव राजानं कामयन्ते, राजानं देवांशं मन्यन्ते, तद्दर्शनं देवदर्शनमिव स्वकल्याणनिदानं निश्चिन्वन्ति, के वा सर्वदा सर्वतोभावेन तस्यैहिकमामुष्मिकं च माङ्गल्यं समीहन्ते, के वा राजानं स्वपितृनिर्विशेषं मन्यन्ते, के वा स्वजनकमिव परलोकाधिष्ठितमपि राजानं तिलोदकैः प्रतिदिनं तर्पयन्ति। आश्चर्यं पुनरेतदेव, तानेव प्रागुक्तान् द्वेषणान् राजानोऽतिशयेनाऽऽद्रियन्त इति।

पण्डितैः सकरुणमीक्षिता अपि करालकलिकालसमुद्भूताङ्ग्ल-विद्याचारविलासिन्यास्तैस्तैर्भावैर्मोहितान्तःकरणाः केचिन्नरपतयो वि-स्मृतस्वस्वरूपा म्लेच्छराज्यतो धर्माचारभूयिष्ठमपि स्वराज्यमधर्मभूयिष्ठ-मिति परिकल्पयन्तः, अनादिना भगवता वेदेनोपदिष्टं सर्वज्ञैर्मन्वादिभि-र्मुनिभिरनूदितं स्वदेशकुलाचारपरम्पराप्राप्तं समाचारं केनचित् कालि-केन कल्पितं गीतमिव मन्यमानाः श्रुतिस्मृतीतिहासपुराणादिकं गर्हयन्तः स्वमनसैव समीचीनतया प्रमितं म्लेच्छाचारमेव प्रथयितुमुत्सहन्ते, कियद्भिश्च गूढनास्तिकभावैः कियन्तो धर्माचारा नामशेषतां प्रापिताः। हन्त ! आशापरस्परोत्सङ्गशायिनामेषां बुद्धेर्वैभवं प्रतिभाशालित्वं स्तन-न्धयक्रीडाप्रतिमं कृत्यं साहसं च स्मारं स्मारं केषां विचक्षणानां मनसि क्षोभो न संभवेत् ऐहिकेभ्यः पारलौकिकेभ्यश्च सुखेभ्यो वञ्चितान् मदिरामत्तकौशानिव चञ्चलवृत्तीन् एतानालोक्य दयापरवशानां लोका-नुद्दिधीर्षूणां ब्रह्मनिष्ठानां विदुषां समुद्भवति कोऽपि दयामयो भावश्चेतसि, परन्तु तेषांवचसि न विश्वासः, तेषां कृत्ये न दृष्टिः, तेषामाचारे न धर्म-त्वबुद्धिः, तेषां दुरूहे विचारे न ग्राह्यताबुद्धिरिति नव्यशिक्षितानां नवीनमतेः परावर्तनं स्खलद्गिरिशिखरसलिलसन्ततेरिव दुःशकं साधारणै-रुपायैरिति असहायानामकिञ्चनानामस्माकं धार्मिकेषु जगत्पूज्येषु विप्रेषु प्रार्थना यदि धर्मे विश्वासः, प्राचीनपद्धतिषु श्रेयःसाधनताविनि-

श्रयः, मुनिवाक्येषु श्रद्धा, परलोकादिषु प्रामाण्यधीः, अदृष्टाधीना लोकयात्रा तर्हि स्वसंततयः सनातनधर्मप्रतिष्ठायै श्रुतिस्मृत्याद्यध्ययने नियोज्यन्ताम्, कुलपरंपराप्राप्तैः सदाचारैर्विभूष्यन्ताम् दुराचारैर्वियोज्यन्ताम् "विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेहमस्मि। असूयकायानृजवे जडाय न मां ब्रूयाः अवीर्यवती तथा स्याम्" इत्यादिश्रुतिस्मृतयःस्मर्यन्ताम्, येन प्रमाणसमनन्तरं स्वपितृपितामहप्रपितामहप्रभृतिभिरिव युष्माभिरपि निवापाञ्जयः प्राप्येरन्।

वीर्यसर्वस्वेषु धर्मप्राणेषु जगद्रक्षणबद्धपरिकरेषु राजन्यवर्गेषु विज्ञापना—यदि प्रजापालनभारो ब्रह्मणा भवत्सु निक्षिप्तः, प्रजापालनमेव च भवतां प्रधानतमो धर्मः यदि भवतां हस्ते धर्मपालो जागरूकः, निवारयत कुकर्मण उत्पथप्रवृत्ताः प्रजाः; भवत दूरदर्शिनः स्वराज्यरक्षणाय, परित्यजत बुद्धेः परप्रत्ययनेयताम्। क्रियन्तां स्वपूर्वजा एव आदर्शाः, रक्ष्यन्तां शास्त्रनिष्णाता विद्वांसः, सज्जीक्रियन्ताम् राजभक्ताः प्रजाः, परित्यज्यन्तां राजविद्रोहकाः विपर्यस्ता वाचाटाः, नियोज्यन्तां शूद्रा द्विजशुश्रूषायाम्। स्मर्यताम् स्वपूर्वजानां भीष्मार्जुनप्रभृतीनां वीरता धर्मनिष्ठता च।

वैश्येषु उपदेशः, विधीयतां सरलभावेन क्रयविक्रयादिना धनसञ्चयः, पाल्यन्तां गोब्राह्मणादयः, सहक्रियन्तां धनेन राजन्यवीराः।

शूद्रेषु नियोगः, कुरुत श्रद्धया गवां द्विजानां च शुश्रूषां, यथा ऐहिकं पारलौकिकं च सुखं प्राप्स्यथ, इदानीं हि परकीयैःस्वकीयैश्च नानाविधकण्टकाच्छादितः सनातनधर्ममार्गो नैकेन परिशोधयितुं शक्य इति स्वसन्ततीनां स्वस्वधर्मानुष्ठापने स्वयं च तदनुयाने बद्धपरिकरा वयं चत्वारएव वर्णा भविष्यन्तं कृत्यजातमिदानीमेवाऽऽलोचयितुं पाखण्डविस्तृतानां क्षुद्रक्षुद्रतरक्षुद्रतमकण्टकानां समूलदाहं दग्धुं च प्रार्थयामहे भगवन्तं भूतभावनं परमात्मानं तार्तीयिकलोचनमीत शम्।

## प्रदीपकनिर्वापकम् ।

( निबन्धकः—म० म० पं० श्रीपञ्चाननतर्करत्न भट्टाचार्यः । )

नमः सर्वात्मभूताय सर्वकल्याणहेतवे ।
चिदचिच्छक्तिरूपैकवामार्द्धवृषकेतवे ॥ १ ॥

प्रायेण जायते लोकः प्रमाणपुरुषानुगः ।
प्रामाण्यं चाधुना भाति भ्रमेणानृतचारिषु ॥ २ ॥

कर्मणा मालवीयानां व्यथितेन पुरा मया ।
तन्मन्त्रमहिमग्रन्थरहस्यं संप्रकाशितम् ॥ ३ ॥

यत्प्रमाणमुपश्रित्य तैस्तु स्वमतमाहितम् ।
तेनैव तन्मतं सर्वं खण्डितं कौशलाश्रितम् ॥ ४ ॥

कियन्ति वचनान्युक्ता मुक्त्वा चान्यानि कानिचित् ।
स्वमतप्रतिकूलानि यत्कृतं तैः प्रवञ्चनम् ॥ ५ ॥

तद्दर्शितं मया पूर्वं तन्नेहात्र प्रतन्यते ।
नवस्यान्यप्रबन्धस्य दुरुक्तिः प्रतिषिध्यते ॥ ६ ॥ ( युग्मकम् )

स खलु सनातनधर्मप्रदीपकाख्यां बिभर्ति सत्यार्थाम् ।
लङ्काप्रदीपकाख्यां हनुमान्वधादिवुङ्गभाम् ॥ ७ ॥

पुरुषेच्छातन्त्रोऽसौ परिचयपद्ये निरूपितोऽर्थोऽयम् ।
सत्याधारः ज्ञानेत्यादौ—सन्धेरनाख्यानात् ॥ ८ ॥*

---

*'सत्याधारः ज्ञानतैलः श्रद्धावर्त्तिसमन्वितः । प्रदीपकः भक्तिशिखः धर्म्यं मार्गं प्रदर्शयेत्' इत्याकारं परिचयपद्यम् । तत्र विसर्गस्य प्राप्तमुत्त्वं न कृतं, सन्धिस्तु पुरुषेच्छयेति युक्तेः, तेनास्य प्रकृतं प्रबन्धस्य पुरुषेच्छातन्त्रत्वं सूचितम्, न शास्त्रतन्त्रत्वमिति ।

'धर्म्यं मार्गं' तस्मिन् पदद्वये कर्म्मणी स्थिते दर्शः ।
धर्मानपेतपुरुषं मलरन्ध्रं दर्शयेत् स इति ॥ ९ ॥*

तन्मतस्प्रथमं वक्ष्ये विवृण्वानस्तदाशयम् ।
पश्चाच्च खण्डनं तस्य यथाबुद्धि यथाश्रुतम् ॥ १० ॥

"पुराणभारतादीनां पाठः सर्वाधिकारिकः ।
शूद्रादिभिरसौ कार्यो द्विजा वेदाधिकारिणः ॥ ११ ॥

सर्वे च ते महाग्रन्थाः संयुताः प्रणवादिभिः ।
तत्रत्यास्ते च शूद्रादिपाठ्या मन्त्रा इति स्फुटम् ॥ १२ ॥

अष्टाक्षरादिमन्त्राश्च तत्रोक्ताः प्रणवान्विताः ।
ते तु शूद्रादिभिर्ग्राह्याश्चातुर्वर्ण्यहितप्रदाः ॥ १३ ॥

शैवः पञ्चाक्षरो मन्त्रो ग्राह्यः शूद्रान्त्यजादिभिः ।
य ओं नमः शिवायेति सोऽपि पञ्चाक्षरः स्मृतः ॥ १४ ॥

पञ्चाक्षरप्रकरणे पठितो हि षडक्षरः ।
एककार्यत्वयोगेन तयोरैक्यस्प्रकीर्तितम् ॥ १५ ॥

पञ्चाक्षरेऽधिकारी यः स एव स्यात् षडक्षरे ।
पञ्चाक्षराधिकारश्च स्त्रीशूद्रादिषु दर्श्यते ॥ १६ ॥

"तस्मात्सर्वप्रदो मन्त्रः सोऽयं पञ्चाक्षरः स्मृतः ।
स्त्रीभिः शूद्रैश्च सङ्कीर्णैर्धार्यते मोक्षकाङ्क्षिभिः ॥ १७ ॥"

( मालवीयरचितःसनातनधर्म्मप्रदीपक धृतम् )

पुराणान्तर्गतो वेदमन्त्रोऽपि स्वरवर्जितः ।
लौकिको भवतीत्यत्र शूद्रस्याप्यधिकारिता ॥ १८ ॥

---

*तत्रैव श्लोके चतुर्थचरणं दृश्यतां तदर्थश्चात्र बोध्यः, धर्म्मादनपेतः पुरुषः अनेन मालवीयप्रवरेण मलकृतं मार्गमिति इति ।

"शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः"। (मालवीयधृतम्)
इत्युक्त्या मनुनादिष्टाऽन्त्यजानां शूद्रधर्मता ॥ १९ ॥
यत्र शूद्राधिकारोऽस्ति तत्र तेऽप्यधिकारिणः ।
तस्मात्सर्वैः समुच्चार्यः प्रणवो यः पुराणगः ॥ २० ॥"
अत्र प्रमाणं यत्प्रोक्तं मालवीयमहोदयैः ।
पश्चाद्विचारयिष्यामि तत्सर्वं शास्त्रविप्लवम् ॥ २१ ॥
साम्प्रतं वच्मि शास्त्रीयप्रमाणे दृढनिश्चयः ।
मालवीयोक्तमग्राह्यं सर्वं विषयुतान्नवत् ॥ २२ ॥
भगवच्छङ्कराचार्यपादाद्यङ्गीकृतार्थकम् ।
पुराणमधिकृत्योक्तं भविष्ये तत्त्वकृद्वृते ॥ २३ ॥*
"अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना ।
श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन" ॥ २४ ॥
इदं निषेधवाक्यं हि स्वार्थे मानमसंशयम् ।
अर्थवादस्य नैतेन विरोधान्मानतेष्यते ॥ २५ ॥
अविरुद्धोऽर्थवादो यस्तत्र मानोपयोगिता ।
संक्षिप्तोक्तिरसौ पश्चात्प्रकाशमुपयास्तति ॥ २६ ॥
मालवीयधृतोऽप्यस्यि श्लोको भागवताश्रितः ।
"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ।" (भागवतम्)

---

* तथा हि भगवच्छङ्कराचार्याः—विष्णुसहस्रनामस्तोत्रभाष्ये शूद्रः सुखमवाप्नुयात् श्रवणेनैव नतु जपज्ञेन । तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति श्रुतेः"'यः शद्रः शृणुयात्स इति व्यवहितेन सम्बन्धः त्रैवर्णिकानां कीर्त्तयेदित्यनेन ।

अय्या निषिद्धं श्रवणं ततश्चेद्भारतं कृतम् ।
श्रवणार्थं हि तन्नैव पाठार्थमुपपद्यते ॥ २८ ॥

यादृग्जातीयनिषेधः तादृग्जातीयविधिरिति न्यायात् ।
'सुगतिमियाच्छ्रवणा'च्चेत्यपि हरिवंशोदितं घटते ॥ २९ ॥*

धृतराष्ट्राय वेदार्थं यमुवाच सनातनः ।
साक्षाद्वेदान्यमपि तं शौद्रयान्न विदुरोऽवदत् ॥ ३० ॥

पौराणमपि वेदार्थं शूद्रो न वदितुं क्षमः ।
'शूद्रयोनावहं जात इति' भारतभाषणात् ॥ ३१ ॥†

सत्स्वप्यश्रौतमन्त्रेषु शूद्रे योगीश्वरोऽवदत् ।
'नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्' ॥ ३२ ॥

नमस्कारोऽस्यानुमतो मन्त्र इत्याह गौतमः । ("अनुमतोऽस्य नमस्कारो मन्त्र" इति गौतमसंहिता)
पुराणपाठप्राप्तौ तु तन्मन्त्रः कथमौज्झताम् ॥ ३३ ॥

तस्मात् पुराणपाठेऽपि न शूद्रस्याधिकारिता ।
नापि रामायणादीनां पाठे तत्तुल्यधर्मणाम् ॥ ३४ ॥

'पठन् द्विजो वागृषभत्वमीयात्' 'जनश्च शूद्रोऽपि महत्त्वमीयात् ।'
रामायणाध्यायमुखान्त्यपद्ये स्थितोऽर्थवादो न च तत्परोऽसौ ॥ ३५ ॥

वेदस्यापौरुषेयत्वे यच्चाधिकरणं स्थितम् । ‡
जैमिनीयतर्कपादे तद्भाष्यार्थोऽत्र मन्यताम् ॥ ३६ ॥

वेदोऽप्रमाणमुन्मत्तबालवाक्यसदृक्तया ।
वनस्पतीनां सर्पाणां यत्र सत्रासनं स्थितम् ॥ ३७ ॥

---

* सुगतिमियात् श्रवणाच्च शूद्रयोनिः इति हरिवंशवचनम् ।

† शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे । उद्योगपर्वणि विदुरवाक्ये ।

‡ 'जैमिनीय [illegible]'

परात्क्षेपमिमं भाष्यकारः खण्डितवान् स्फुटम् ।
स्वार्थतात्पर्यकं नेदमिति स्तुतिपरं हि तत् ॥ ३८ ॥

अवश्यकार्यं विद्वद्भिर्ब्राह्मणैः सत्रमित्यदः ।
बोधयन्नाह वेदोऽयं वनस्पत्यादिकल्पनाम् ॥ ३९ ॥

न चरन्ति मृगाः सायं किं पुनर्ब्राह्मणा इति ।
लोकोक्तिवदिदं वाक्यं न विधिः क्वास्त्यसङ्गतिः ॥ ४० ॥

यत्राधिकारहीनस्य पाठेऽपि गुणवर्णना ।
तस्याधिकारिविप्राणां पाठोऽवश्यं विधीयते ॥ ४१ ॥

वनस्पतीनां नो सत्रमसामर्थ्याद्धयथा तथा ।
शास्त्रबाधादसामर्थ्यं पाठे शूद्रस्य वर्तते ॥ ४२ ॥

एतेन मालवीयोक्ताः शूद्रगर्भार्थवादकाः ।
सर्वे श्लोकाः प्रतिक्षिप्ताः परमन्यच्च कथ्यते ॥ ४३ ॥

पूर्तकर्मणि शूद्रस्याधिकारे शास्त्रनिश्चिते ।
वेदमन्त्रस्य पाठ्यस्य पाठो विप्रेण कार्यते ॥ ४४ ॥

यजमानस्य शूद्रस्य नमो मन्त्रेण तत्फलम् ।
निषिद्धपाठे सर्वत्र तथैव विधिरिष्यते ॥ ४५ ॥

अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ।
इति स्मृतिप्रमाणेन मीमांस्या पाठपद्धतिः ॥ ४६ ॥

यच्च यो नर इत्यादिसामान्यग्राहकं वचः ।
उदाहृतं मालवीयैस्तच्च तेषां विडम्बनम् ॥ ४७ ॥

यतः सामान्यवचनमधिकारिसमाश्रयम् ।
इति तैरपि मन्तव्यं दीक्षा स्य।न्निष्फलान्यथा ॥ ४८ ॥

अदीक्षितस्य शौचादिवर्जितस्य च नो भवेत् ।
जपपाठाद्यधीकार इति तन्मानसाधितम् ॥ ४९ ॥

"तत्रादौ सम्प्रवक्ष्यामि मन्त्रसंग्रहणं शुभम् ।
यद्विना निष्फलं जाप्यं येन वा सफलम्भवेत्" ॥ ५० ॥

सप्ताशीतद्दलादेवं द्रष्टव्यं तत्प्रदीपके ।
तत्सर्वेषां नृणाम्पाठे जपे वा नाधिकारिता ॥ ५१ ॥

सोऽयं विशेषः शास्त्रैक्यमयः शास्त्रश्च दर्शितम् ।
पुराणपाठे शूद्रस्य नाधिकार इति स्फुटम् ॥ ५२ ॥

सामान्यतो य इत्युक्तिरश्वमेधफलश्रुतौ ।
सत्यप्यस्त्यधिकारीयशास्त्रात् क्षत्रियगामिनी ॥ ५३ ॥

एवं य इति वा जन्तुर्वेति सामान्यभाषणम् ।
अधिकारपराच्छास्त्राद्विशेषे पर्यवस्यति ॥ ५४ ॥

स्त्रीशूद्रादीक्षिताशौचयुक्तादिभ्योऽन्य एव हि ।
तत्राधिकारवांस्तेन कर्मणा लभते फलम् ॥ ५५ ॥

अष्टाक्षरश्च यो मन्त्रो नारायणसमाश्रयः ।
सप्ताक्षरोऽपि तत्कार्यकृत्त्वादष्टाक्षरो मतः ॥ ५६ ॥

आद्यो द्विजातिभिर्ग्राह्यः परः शूद्रादिभिस्तथा ।
अष्टो व्याप्तोऽऽक्षरो यत्रेत्युत्त्याष्टाक्षरताऽथवा ॥ ५७ ॥

सहस्रनामस्तोत्रान्ते ओंकारो द्विजगोचरः ।
आद्यन्तयोः स च स्थाप्यो नाद्विजेन कदाचन ॥ ५८ ॥

नारायणीयकल्पस्य प्रमाणं तन्त्रसारगम् ।
"अष्टाक्षरो महामन्त्रः सप्तार्णः शूद्रयोषितोः" ॥ ५९ ॥

नारदीये पञ्चरात्रे स्पष्टमुक्तं महर्षिणा ।
अष्टाक्षरः सप्रणवो न श्राव्यः शूद्रयोनिना ॥ ६० ॥

अत एव नृसिंहाख्यपुराणे परदर्शिते ।

अष्टाक्षरप्रसङ्गेन* प्रोक्तः सप्ताक्षरो मनुः ॥ ६१ ॥
प्रणवो द्विविधो ज्ञेयः स्थूलसूक्ष्मावभेदतः ।
स्थूलः पञ्चाक्षरः प्रोक्तः सूक्ष्म ओंकार उच्यते ॥ ६२ ॥
शैवे पुराण इत्युक्तं तत्र प्रणवदेशने ।
स्थूलः शूद्रेषु निर्बाधस्तेन न्यासादिकाः क्रियाः ॥ ६३ ॥
शिवमन्त्रौ समफलौ पञ्चाक्षरषडक्षरौ ।†
तेनैक्यश्च तयोः पञ्चाक्षरः शूद्रादिगोचरः ॥ ६४ ॥

---

*नारायणाय नम इत्ययमेव सत्यं संसारघोरविषसंहरणाय मन्त्रः ।
(प्रदीपकः ७५ पृ०)

†मालवीयमहोदयेनोक्तम्, "यो मन्त्रो लोके पञ्चाक्षरः स्मृतः स षडक्षरो मन्त्रः" तत्र प्रमाणं च तेन शिवपुराणाद्दर्शितम् तथाहि "वेदे शैवागमे चायमुभयत्र षडक्षरः । मन्त्रः स्थितः सदा मुख्यो लोके पञ्चाक्षरः स्मृतः" इति तत्प्रमाणप्रमेये तदुद्धृतेनैव प्रमाणान्तरेण बाध्येते तथाहि सनातनधर्मप्रदीपके ३५ दले "षडक्षरेण वा देवि तथा पञ्चाक्षरेण वा" इति शिवपुराणवचने वाक्द्वयेन षडक्षरपञ्चाक्षरयोः पृथक्त्वमुपपादितम्; न तु यः षडक्षरः स एव पञ्चाक्षर इति । अतो वेदे शैवागम इत्यादिवचनस्यार्थो मालवीयमहोदयेनान्यथाकृत इति मन्तव्यम्, प्रकृतार्थस्तु—वेदे शैवागमे च षडक्षरमन्त्रः स्थितः लोके (स्त्रीशूद्रादिसाधारणे), पञ्चाक्षरः स्मृतः, न तु षडक्षरः, लोकस्य स्त्रीशूद्रघटिततया षडक्षरस्यासम्भवादिति ।

यच्च स्कन्दपुराणवचनं तत्रैव ३३।३४ दले धृतम्—शैवं षडक्षरं दिव्यं मन्त्रमाहुर्महर्षय इत्यादिकं, तत्र,

"मन्त्राणां परमो मन्त्रस्तथा शैवः षडक्षरः ।
एष पञ्चाक्षरो मन्त्रो जप्तॄणां मुक्तिदायकः ॥"

अथ पञ्चाक्षरस्यैव मन्त्रत्वमभिलष्यते ।
तथास्तु स पुनर्हीनः प्रणवेनेति निश्चयः ॥ ६५ ॥

तत्र प्रणवयोगस्तु द्विजानां गुणकाम्यया ।
ततः षडक्षरीभावं प्राप्तः पञ्चाक्षरः स्मृतः ॥ ६६ ॥

अन्यथा प्रणवाद्यस्य किं पञ्चाक्षरता भवेत् ।
पारिभाषिकता त्वस्य घटस्य पटनामवत् ॥ ६७ ॥

विफला सा च मन्त्रौ द्वावित्यस्यापि विरोधिनी ।
मन्मते द्वित्ववादस्तु गुणभेदविवक्षया ॥ ६८ ॥

त्यक्तप्रणवसङ्गोऽपि मन्त्रोऽयं सार्ववर्णिकः ।
नमः पूर्वो नमोऽन्तो वेत्येतन्मात्रं विशिष्यते ॥ ६९ ॥*

परप्रदर्शितं शास्त्रं प्रमाणं तत्र दृश्यते ।

---

षडक्षरो मन्त्रः पञ्चाक्षरो भवन् जप्तॄणां मुक्तिदायकः,

षडक्षरमन्त्रस्य पञ्चाक्षरत्वमेकवर्णहान्या भवति; अन्यथा—मन्त्रद्वयत्वं नोपपद्यते, अतएव तत्रैव षडक्षरस्याद्यमन्त्रत्वमुक्तम्,

"आद्यों नमः शिवायेति मन्त्रमाद्यं शिवः स्वयमिति ।"

द्वितीयं विना आद्यत्वानुपपत्तेः ।

सर्वज्ञाननिधानं च सोऽयं चैव षडक्षरः ।
तस्मात् सर्वप्रदो मन्त्रः सोऽयं पञ्चाक्षरः स्मृतः ।
स्त्रीभिः शूद्रैश्च संकीर्णैर्धार्यते मुक्तिकाङ्क्षिभिः ।"

तस्मात् षडक्षरमन्त्रात् सर्वप्रदो मन्त्रः सोऽयं पूर्वसूचितोऽयंपञ्चाक्षरः, पञ्चाक्षरस्य षडक्षरमन्त्रत आधिक्येन सर्वप्रदत्वं दर्शयतिस्त्रीभिरित्यादिशेषाद्ग्रन्थेन। स्त्रीशूद्रादिमुक्तिरपि सर्वान्तर्गता, षडक्षरमन्त्रे तेषामनधिकारात् तत्प्रदानं तस्य न घटते, पञ्चाक्षरस्यतु तत्प्रदातृत्वमित्यात्ाधिक्यम् ।

*द्विजानां च नमः पूर्वमन्येषां चनमोऽन्तकम् । शिव पु० विद्ये ६।४२।

स्त्रीभिः शूद्रैश्च सङ्कीर्णैर्धार्यः पञ्चाक्षरः स्मृतः ॥ ७० ॥

द्वादशाक्षरमन्त्रेण यत्तिलद्वादशीव्रतम् ।
विष्णुधर्मोत्तरोक्तं तत् स्त्रीशूद्राणां महात्मनाम् ॥ ७१ ॥

न सर्वेषामिति स्पष्टं ततोऽन्योऽर्थोऽपि बुध्यते ।
महात्मनां हि विप्राणां प्रोक्ते तेषां मनू इति ॥७२॥ (युग्मकम्) *

'अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ।'
इत्येतेन समार्थं तत् पूर्वोक्त-मनु-वारकम् ॥ ७३ ॥

महात्मनामितिपदमन्यथा विफलं भवेत् ।
दर्शितेऽर्थद्वये तस्य सार्थक्यमुपपद्यते ॥ ७४ ॥

'ओंकारादिसमायुक्तं नमः कारान्तदीपितम् ।
तन्नाम सर्वसत्त्वानां मन्त्र इत्यभिधीयते' ॥ ७५ ॥

प्रमाणमेतदुद्धृत्य मालवीयः कुशाग्रधीः ।
सर्वसत्वसमुच्चार्यंहन्त मन्त्रमकल्पयत् ॥ ७६ ॥

ओंकारस्य प्रभावेण मृगाः कीटाश्च पादपाः ।
उच्चारयेयुस्तन्मन्त्रं स्त्रीशूद्राणाञ्च का कथा ॥ ७७ ॥

यदस्तु, प्रकृतार्थस्तु यस्य पूजा विधित्सिता ।
प्रणवादिनमोऽन्तं तन्नाम ङेऽन्तं मनुर्भवेत् ॥ ७८ ॥

पूज्यत्वं सर्वसत्वानामर्चितार्पणशास्त्रतः ।
नमोऽन्तग्रहणेनैव नाम्नो ङेऽन्तत्वमीयते ॥ ७९ ॥

प्रणवोच्चारणे यस्याधिकारः स च तं वदेत् ।
नैतेन सिध्यत्योंकार-युङ्मन्त्रे सर्वपाठ्यता ॥ ८० ॥

यच्च वैदिकमन्त्राणां पुराणावस्थितात्मनाम् ।
स्वराभावेन पाठ्यत्वं शूद्रैरिति परोदितम् ॥ ८१ ॥

---

*प्रोक्तौ सत्यां तेषां मनू (मन्त्रौ) भवतः देवतादिप्रकाशकत्वात् । नम- इतितुस्वयमुच्चार्य्यम् इतिभावः ।

तदप्यसङ्गतं यस्मात् स्वरा नो वर्णरूपिणः ।
स्वराभावेऽपि वेदत्वं कथं तेषां विहन्यते ॥ ८२ ॥

अन्यथा ब्रह्मविद्यासु स्वरादिरहितास्वपि ।
अपशूद्राधिकरणे कथं शूद्रो निवारितः ॥ ८३ ॥

वैदिकानां तु वर्णानामानुपूर्वीविभङ्गतः ।
वेदत्वं मास्तु सुस्पष्टे मन्त्रे किं तत् निषिध्यते ॥ ८४ ॥

तन्त्रादिस्थां च वेदैकसारसर्वस्वलक्षणम् ।
सावित्रीमपि शूद्राद्या जपेयुः स्वरवर्जिताम् ॥ ८५ ॥

हन्त भो ब्राह्मणादीनमुपांशुजपतां च ताम् ।
वेदमन्त्रजपो माभूदित्यादिकमुदीक्ष्यताम् ॥ ८६ ॥

शूद्राणान्तु सधर्म्माण इति यन्मनुरब्रवीत् ।
वेदादिप्रतिषेधार्थं तन्न वर्णत्वसाधकम् ॥ ८७ ॥

मालवीयधृतव्यासवचनं संप्रदर्श्यते ।
"शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्म्ममर्हति ॥ ८८ ॥"

वर्णबाह्याश्च चाण्डाला-दयः शूद्रादधः स्थिताः ।
'प्रतिलोमभवा धर्म्महीना' इत्याह गौतमः ॥ ८९ ॥

तस्मात् स्त्रीशूद्रचाण्डालसामान्यं प्रणवार्पणम् ।
साहसं मालवीयानां सर्वशास्त्रविगर्हितम् ॥ ९० ॥

प्रणवयुक्तमन्त्रग्रहणे स्त्रीशूद्रयोरनधिकारे प्रमाणसंग्रहः शीघ्रबोधाय गद्येन प्रदर्श्यते। प्रथमं तावत् श्रौतं प्रमाणं 'शूद्रो यज्ञे ऽनवक्लृप्त' इति जपोऽपि यज्ञ एव यज्ञानां जपयज्ञोऽस्मीति भगवद्वचनात् । प्रणवजपस्य प्रणवघटितमन्त्रजपस्य वा वैदिकयज्ञत्वेन श्रुत्या तन्निषेधः प्राप्तः। न च वेदोच्चारणविधिनोच्चारितस्यैव प्रणवस्य वेदत्वं न तु तदुच्चारणविधिमन्तरेणापि उच्चारितस्य स्मार्त्तस्य प्रणवस्य वेदत्वमितिवाच्यम् । ओङ्कारः सर्ववेदानां श्रेष्ठमिति लिङ्गपुराणपूर्वभागद्वात्रिंशाध्याये कथनात् वर्णात्कार इति शब्दानु-

शासनाच्च ओमित्याकारकशब्दस्यैव वेदत्वप्राप्तेः । नह्यु दात्तादिस्वरमात्र-भेदेन वर्णवैलक्षण्यं भवति । एवञ्च स्मार्तस्यापि प्रणवमन्त्रस्य वेदत्वं न व्याहन्यते । स्वरं विना उच्चारितस्य वेदत्वानङ्गीकारे उपांशुजपे गायत्री-मन्त्रस्यापि वेदत्वं न स्यात् । अथ तन्त्रवार्तिके—"तानेव वैदिकान् वर्णान् भारतादिनिवेशितान् । स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुञ्जते" ॥ इति कारिकया भारतादिग्रन्थस्थस्य वैदिकमन्त्रस्यापि स्वाध्यायनियम-विरहे लौकिकत्वं प्रतिपादितमितिचेन्मैवम् । वैदिकान् वर्णानिति कथनेनैव मन्त्रव्यावृत्तेः । तथाहि चित्रं देवानामिति वैदिकमन्त्रे चित्र-मिति पदं वर्त्तते । चित्रं कर्म यथानेकैरित्यादिस्मार्तवचनेपि चित्रमिति पदं वर्त्तते । स्मार्त्तस्य चित्रमिति पदस्यापि स्त्रीशूद्राभ्यामुच्चारणं माभूत् शब्दनित्यत्ववादिमीमांसकमते द्वयोश्चित्रमितिपदयोः स्वरूपतो विशेषा-भावात् इत्याक्षेपवारणाय तन्त्रवार्त्तिके वैदिकान् वर्णान् इत्याद्युक्तिः । यस्य निरवशेषमन्त्रस्य साक्षाद्वेदत्वं तस्य भारतादिस्मृतिस्थत्वेपि वैदि-कत्वं न व्युदस्यते । न हि गृहस्थितो घटो वहिरानीयमानो घटत्वं जहाति । किञ्च वक्ष्यमाणप्रमाणान्यपि वरीवर्त्तति यथा नृसिंहतापनीयोपनिषदि "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति । स्त्री शूद्रो यदि जानीयात् स मृतोऽधो गच्छति ।" न चात्रापि प्रणवपदं वैदिकप्रणवपरमिति मतं युक्तम् प्रणवस्य वैदिकावैदिकत्वभेदे व्याघातस्य पूर्वं दर्शितत्वात् । लक्ष्मीमि-त्यस्य श्रीबीजपरतया तन्त्रसारादिव्याख्यानेन श्रीबीजस्य च वैदिकत्वा-भावात् ।' सावित्रीं प्रणवमित्यादिशास्त्रस्य वैदिकमन्त्रमात्रनिषेधपरत्व-कल्पनाया अयुक्तत्वात् । वेदइत्यर्थकतया व्याख्यातेन यजुरित्यनेनैव सिद्धे प्रणवमिति पृथगुपादानस्यायुक्तत्वाच्च । अपि च "स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः । शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिमिति" "प्रणवाद्यं न दातव्यं मन्त्रं शूद्राय सर्वथेति" "ओङ्कारोच्चारणाद्धोमात् शा-लग्रामशिलार्चनात् । ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत् ॥" इति च तन्त्रसारादिधृततन्त्रान्तरवचनम् । तन्त्रान्तरं नाम चतुःषष्टितन्त्राणां

सप्तचत्वारिंशं तन्त्रम् । तदुक्तम्—महासिद्धिसारस्वते—सिद्धीश्वरं महातन्त्रं कालीतन्त्रं कुलार्णवमित्युपक्रम्य सनत्कुमारकं तन्त्रं योनितन्त्रं प्रकीर्त्तितम् । तन्त्रान्तरञ्च देवेशि नवरत्नेश्वरं तथेति । किञ्च शारदातिलकटीकायां द्वितीयपटलान्तभागे पद्मपादाचार्यैरुक्तमित्युपक्रम्य प्रणवादिमन्त्रेषु त्रैवर्णिक एवाधिकारी न स्त्रीशूद्राविति । तथा तत्रैव महाकपिलपञ्चरात्रे नारायणाष्टाक्षरमन्त्रमधिकृत्योक्तम्—न वेदः प्रणवं त्यक्त्वा मन्त्रो वेदसमुच्छ्रितः । तस्माद्वेदः परो मन्त्रो वेदाङ्गं चागमः स्मृतः ॥ तस्माद्वेदपरो मन्त्रो न मन्त्रो वेदमुक्तितः । न मन्त्रे चाधिकारोऽस्ति शूद्राणां नियमः परः ॥ अन्यच्च तत्र नारदपञ्चरात्रे नारायणाष्टाक्षरमन्त्रमधिकृत्योक्तम्—ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते । शूद्रादीनां न तच्छ्रोत्रपदवीमधिगच्छति ॥ इति ॥ तन्त्रसारधृते नारायणकल्पे—अष्टाक्षरो महामन्त्रः सम्पूर्णः शूद्रयोषितोः । इति । शारदातिलकटीकायां मन्त्रतन्त्रप्रकाशे द्वादशाक्षरमन्त्रमुपक्रम्य स्त्रीशूद्रयोर्वितारोऽयं सतारोऽयं द्विजन्मनामिति तारः प्रणवः । शारदातिलकटीका प्रामाणिकवर्यराघवभट्टकृता । भगवच्छङ्कराचार्यास्तु पौराणिकमन्त्रपाठेऽपि शूद्रस्यानधिकारमाहुः । तच्च सनातनधर्मप्रदीपके द्वादशत्रयोदशदलयोर्लिखितम् । एवं स्थिते भगवच्छङ्कराचार्यमारभ्य सत्सम्प्रदाये अयमाचारः प्रचरति यत् स्त्रीशूद्राणां प्रणवयुक्तमन्त्रेऽनधिकार इतिस्पष्टमवगम्यते । तत्पूर्वञ्च तादृगेवाचार आसीदित्यनुमीयते विरुद्धाचारेप्रमाणादर्शनात् । तस्मात् स एव साधुर्धर्मः तदुक्तं लैङ्गे पूर्वभागे दशमाध्याये—श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः । शिष्टाचाराविरुद्धश्च स धर्मः साधुरुच्यते ॥तदन्यस्त्वसाधुः इत्यर्थादायातम् । एतेन प्रणवयुक्तमन्त्रं स्त्रीशूद्रेभ्यो ददद्ब्राह्मणो निरयमाप्नोति गृहीततादृशमन्त्राश्च स्त्रीशूद्रा निरयमाप्नुवन्तीति सिद्धम् ।

पद्यगद्यजलैरेतैः प्रदीपकहुताशनः ।<br>
हन्त निर्वापितः "शान्तिर्भूयादद्य गृहे गृहे"

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

### अखिलभारतवर्षीयब्राह्मणमहासम्मेलनस्थायिसमितिः ।

व्यतीतायां मार्गशीर्षकृष्णषष्ठ्यां रविवासरे सायंसन्ध्यानन्तरं महामहोपाध्यायानां पण्डितप्रवर-श्रीवामाचरणभट्टाचार्याणां गृहे अखिलभारतवर्षीयब्राह्मणमहासम्मेलनस्य नवमसंख्यकप्रस्तावानुसारेण स्थायिसमितिसंघटनार्थमेकमधिवेशनं समपद्यत । महामहोपाध्याय-पण्डितप्रवर-श्रीमत्पञ्चाननतर्करत्नमहोदयैः सभापतिपदमलमकारि । म० म० श्रीलक्ष्मणशास्त्रिणः, म० म० श्रीवामाचरणभट्टाचार्याः, म० म० श्रीपद्मनाथविद्याविनोदभट्टाचार्याः, पं० श्रीश्रीशंकरतर्करत्नभट्टाचार्याः, पं० श्रीगणपतिशास्त्रिणः मुकाटे, पं० श्रीगोपालशास्त्रिनेनेमहोदयाः, पं० श्रीराजेश्वरशास्त्रिणः,पं० भारद्वाज श्रीजगन्नाथशास्त्रिणः, श्रीकमलकृष्ण स्मृतितीर्थाः, पं० श्रीकमलाप्रसाद स्मृतिभूषणाः, पं० श्रीश्रीनिवासशास्त्रिणो वैद्याः, पं० श्रीगुलावझा प्रभृतयो वाराणसेय विद्वांसः, श्रीसन्तोजीमहाराजाः, पं० श्रीरामकृष्णतर्कतीर्थाः, पं० श्रीउपेन्द्रचन्द्रस्मृतितीर्थाः, पं० श्रीअन्नदानाथ वेदान्तशास्त्रिणः, पं० श्रीशशिमोहनतर्कतीर्थप्रभृतयश्च देशान्तरादागताः पण्डितास्तत्र समवेता आसन् । सर्वेषामैकमत्येन निर्णीतमेतदासीद् यत्पूर्वं ब्राह्मणमहासम्मेलनस्य प्रबन्धकारिसमितेर्येये सदस्या आसन् ते, तथाद्य समुपस्थिताः सर्वे विद्वांस एतदतिरिक्ताश्च प्रतिप्रदेशान्निर्वाचिता दश दश प्रतिनिधयोऽस्याः समितेः सदस्या भविष्यन्ति । समितिरियं देशान्तरीयशाखासभानां संघटनेऽन्येषां सदस्यानां ग्रहणे महासम्मेलने परिगृहीतानां प्रस्तावानां कार्यरूपेण परिणमने च सर्वथाऽधिकारिणी भविष्यति । समितेरस्या नियमावलीनिर्म्माणार्थमेका उपसमितिः संघटनीया तत्र म० म० श्रीपञ्चाननतर्करत्नः म० म० श्रीलक्ष्मणशास्त्री द्राविडः, म० म० श्रीवामाचरणन्यायाचार्यः, म० म० श्रीपद्मनाथविद्याविनोदः, पं० श्रीरामभवनउपाध्यायः, पं० श्रीगणपतिशास्त्री

* नमो ब्रह्मण्यदेवाय *

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )



"न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् )


प्रथम वर्षे } पौषः शकाब्दाः १८५० { नवम संख्या ।


## भारत गीतिका ।

जय भारत-भूमि-भासि-विश्वभुवन-वन्दिता
मुहुरमराः सन्ति सुमुखि तव वैभवविस्मिताः ।
हिमगिरिवरहीरकमयमुकुटस्तव भासते
सुरसरिदियमुरसि विमलहारस्तव राजते ॥ १ ॥
चुम्बति तव चरणाम्बुजमम्बुधिरपि दण्डवत्
कम्बुबहुलमौक्तिकदलमणिकदम्बमाददत् ।
प्रणमति तव पादपद्ममम्बरतलचुम्बिभिः
शतसहस्रमूर्द्धभिरिव तुङ्गोज्ज्वलवीचिभिः ॥ २ ॥
करधृतनवपल्लवदलचामर इव किङ्करः
मलयशिखरिमरुदभिमुखमर्च्चति हिमशीकरः ।
चन्दनरसविन्दुभिरिव किरणैस्तव चन्द्रमाः
स्नपयति वपुरवनीश्वरि परिचरति च ते रमा ॥ ३ ॥

अमृतकुम्भधन्वन्तरिधन्यधवलवाजिभिः
सहगजेन्द्रमन्दारकनन्दनवनराजिभिः ।
मन्दरगिरिगुल्मन्थनदुग्धसिन्धुमन्दिरा-
दुद्गमदियमलसगतिभिरव्यदिन्दुरिन्दिरा ॥ ४ ॥
भूषयति तवाङ्गयष्टिमिन्दिरा तव किङ्करी
सयवसघनधान्यगुच्छराशिभिरवनीश्वरि ।
स्वर्णपुष्पराशिभिरिव सर्षपकुसुमैस्तनू-
मावृणोति सुरसुन्दरि कमला तव सा ननु ॥ ५ ॥
सर्षपकुसुमेषु तेषु पतन्ति मधुपतङ्गाः
विहरन्त्यपि मधु हरन्ति कर्म्मणि लसदभङ्गाः ।
विहितकोषभवननिहितमधवस्ते साधवः
रक्षन्ति च जानन्ति न हन्त सन्ति दस्यवः ॥ ६ ॥
विगलितकलधौतैरिव धौतान्यखिलानाम्
विकसितनवकम्रसुषमकुङ्कुमकुसुमानाम् ।
क्षेत्राण्यथ कुत्रचिदपि राशिभिरिह यूनाम्
प्रीणयन्ति लोचनशतमपि च कुलवधूनाम् ॥ ७ ॥
नवकलायकुसुमैः किल चनकपुष्पगुच्छैः
शाद्वलदलचञ्चललघुचटुल विहग पुच्छैः ।
नटमयूरमणिमयूखचपलपिच्छपद्धति-
क्षेत्रं तव शवलितमिव नयनं किल हरति ॥ ८ ॥
क्षेत्राणि च प्रीणयन्ति तैश्च तैश्च लोचनम्
गृहमागतशस्यराशिरपि तनोति जीवनम् ।
वितरन्ति च पयांसि तव मातर इव धेनवः
तृप्यन्ति च येन जननि सततं तव सूनवः ॥ ९ ॥
कनकरजतरत्नराजिमञ्चञ्चलिमजस्रम्
कमला तव पद-कमले यच्छति निधिसहस्रम् ।

तटिनीजलपूर्णार्णव इव तव धनकोषः :
शुष्यति नहि हृतधनोऽपि तेन न किमु तोषः ॥ १० ॥
पुञ्जपुञ्जखद्योतकहीरकमणिभानुकम्
धत्से गिरिकुचशाद्वल मरकतमयकञ्चुकम् ।
तड़ित्कनकसूत्रजड़ितजलदजालवसने–
नावृणोषि वरतनुमपि निर्झरझररसने ॥ ११ ॥
जाम्बूनदनदरसना विन्ध्याचलनितम्बा
मधुरजम्बुजम्बीरकरम्भाफलकदम्बा ।
निजपरजनमविचार्य च वितरसि चिरमन्नम्
व्याप्नोति च परभुवमपि भगवति तव पण्यम् ॥ १२ ॥

---

# निखिलभारतीयब्राह्मणमहासम्मेलने प्रस्फुरिता धन्यवादाः

निबन्धकः—पं० गजाननशास्त्री करमलकरः काव्यसांख्यतीर्थः ।

श्रीविघ्नेश्वरविश्वनाथकृपया संप्रेरितैर्भूसुरैः
श्रीमल्लक्ष्मणशास्त्रिनायकवरैर्वाराणसीपण्डितैः ।
श्रीपञ्चाननतर्करत्नमहितैर्वङ्गीयविद्वद्वरैः
श्रीमद्विद्वदनन्तकृष्णविबुधैर्मद्रासदेशोद्भवैः ॥ १ ॥
सर्वाघौघविनाशगाङ्गसलिलैः संपूतवाराणसी–
क्षेत्रे धर्मगुरून् बहूंश्च विबुधानाहूय सम्पूज्य च ।
सर्वब्राह्मणभारतीयविदुषां सम्मेलनं यत्कृतम्
स्वत्युत्कृष्टमिदं सुकर्म विहितं निश्शङ्कमत्यद्भुतम् ॥ २ ॥
राजस्थानसुगुर्जरान्ध्रमिथिलाकर्णाटकद्राविडा–
नङ्गप्राङ्गसुवङ्गमध्यविषयाद् विप्रा महापण्डिताः ।
काशीमेत्य विचारसंसदि मिथो वादं विधायान्वहम्
धर्मप्रश्नविनिर्णयं सुविदधुः सच्छास्त्रसद्युक्तिभिः ॥ ३ ॥

भिन्नत्वं भुवि तावदेव सरितां यावत्पृथक् संस्थितिः
सर्वास्ता उदधिं गता विजहति स्वे नामरूपे यथा ।
तद्वच्छाङ्करमाध्ववाल्लभमहारामानुजीया बुधा
वैमत्यं विजहुः प्रमोदभरिता आगत्य सम्मेलनम् ॥ ४ ॥

संवीक्ष्याक्रमणं विधर्ममनुजैर्भूयः स्वधर्मे कृतम्
संहर्तुं खलु तत्स्वधर्ममवितुं सम्भूय बद्धादराः ।
आचार्या विविधाश्च विस्मृतमतद्वेषास्तु येऽत्रागमन्
ते सर्वे स्तुतिपात्रमत्रविषये कस्यापि नो भिन्नता ॥ ५ ॥

नानादेशनिवासिनो बुधवराः सम्मेलनायागता-
स्तेषां भोजनमानदानवसनस्नानादिसत्कर्मणि ।
प्रेम्णा यैर्धनिकैः स्वकीयकनकैः साहाय्यमाविष्कृतम्
धन्यास्तेऽपि न सन्ति किं सुचतुरा अल्पैर्महद्ग्राहिणः ॥ ६ ॥

एतद्ब्राह्मणमेलनं न भविता भूयाद्यदीदं पुनः
विघ्नोऽत्रैव महान् भवेन्न यदि वा कुर्यास्म नूनं वयम् ।
इत्येवं बहुवल्गनासुचतुरास्ते ते दिवान्धाश्चिरम्
भूत्वा कृष्णमुखाः कुगर्तपतिताः सम्मेलनार्कोदये ॥ ७ ॥

राजानः समुदासते हतबला गोप्तुं स्वधर्मं कथम्
माभून्मूर्ध्नि कलङ्क एष सहसेत्येवं विचार्यैव किम् ।
दर्भङ्गाधिपतिः सुपण्डितयुतः काशीनरेशस्तथा
प्राप्य स्वस्य सुभाषणेन सुषमां सम्मेलने चक्रतुः ॥ ८ ॥

ये छात्राः खलु संस्कृतैकपठना भूत्वा स्वयंसेवकाः
कायक्लेशमपि प्रसह्य विदुषो भक्त्याह्यसेवन्त यत् ।
सैषा तैर्विहिता मुधा न भविता भूदेवपूजा परम्
सत्क्षेत्रे पतितं सुबीजमिव सा भूयाद्बहुश्रेयसे ॥ ९ ॥

नानातीर्थसुरत्नभूषितमहासम्मेलनाम्भोनिधेः
ब्राह्मान् रत्नचयान् विहाय कलुषं क्षारं निपीयाम्बु ये ॥

भूत्वा दुष्टमुखा निरर्गलमलं जल्पन्ति जल्पन्तु ते
हस्तो स्वीयगतिञ्जहाति किमहो मार्गे श्वभुङ्कारतः ॥१०॥

---

# विवाहविचारः ।

निबन्धकः—श्रीयतिराजसम्पत्कुमारस्वाम्याचार्यः, गोष्पदक्षेत्रम् ।

श्रुतिस्थानो जगत्स्थानो हृदि स्थानं ममाप्नुतात् ।
वक्त्रे हयश्रिया जुष्टो जगत्स्रष्टा जगत्पतिः ॥

विदितचरमेवैतत्सर्वेषां विदुषां यद्गार्हस्थ्यमाश्रमेषु प्रशंसामर्हतीति। तत्र च बीजमितरेषा माश्रमाणामुपजीव्यभूतत्वमेवेत्यत्र न किञ्चिदबुद्धं बोधनीयमस्ति सुधियाम् । तच्च गार्हस्थ्यं विवाहनिबन्धनमित्यत्र न केऽपि विवदन्ते । अतोऽवसरप्राप्तो विवाहो विचारणीय इति विवाहपदार्थः प्रथमतो विचार्यते—

## विवाहपदार्थविचारः ।

वह प्रापण इति धातोर्घञा निष्पन्नो वाह शब्दो नयनार्थकः । अतो वाहशब्दस्य सप्तपदीनयनमर्थः । विशिष्टो वाहो विवाहः । कन्यासंग्रहोपायाष्टकान्यतमोपायसाध्यसंग्रहयुक्तत्वमेव वैशिष्ट्यम् । एवं च निरुक्तोपायान्यतमसाध्यसंग्रहविशिष्टसप्तपदीनयनान्तकर्मविशेषो दलद्वययुक्तो विवाहपदार्थः । विशेषणदलदानादेव ब्राह्मादीनां विवाहभेदत्वकथनं साधु संगच्छते । शक्तिग्राहकप्रमाणयोः कोशव्यवहारयोर्विवाहोद्वाहशब्दानां पाणिग्रहणपदसमानार्थकत्वप्रतिपादनं विशेष्यदलाधीनम् एतेन विवाहपदार्थः कन्यासंग्रह एव विवाहसंस्कारोऽपरः । अत एव व्यासस्मृतौ संस्कारेषु—

"गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।
नामक्रियानिष्क्रमणेऽन्नाशनं वपनक्रिया ॥

कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः ।
केशान्तस्स्नानमुद्वाहो विवाहाग्निपरिग्रहः ॥
त्रेताग्निसंग्रहश्चेति संस्काराः षोडश स्मृता इति ॥

विवाहस्य विवाहाग्निपरिग्रहात्पृथग्ग्रहणं संगच्छत इति केषांचिदुक्तिः प्रत्युक्ता । शक्तिग्राहकप्रमाण विरुद्धत्वात्, पूर्वोक्तदिशा विवाहस्य सप्तपदीनयनान्तकर्मविशेषत्वात्तदुपरितनशेषहोमान्तस्य वा समावेशनान्तस्य वा कर्मणो विवाहाग्निपरिग्रहरूपत्वाच्च स्मृतिविरोधाभावाच्च स च विवाहो भिद्यते कन्यासंग्रहोपायभेदात् । विशेषणभेदप्रयुक्तभेदस्य दुरपन्हवत्वात् । ते चाष्टाविति मन्वादिभिरुक्तम् । तथा च मनुः—

चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान् ।
अष्टाविमान्समासेन स्त्रीविवाहान्निबोधत ॥
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमो मतः ॥ इति ॥

एतेषां स्वरूपं तैरेवोक्तमिति तदन्यतोऽवसेयम् ।

## धर्म्याधर्म्यविचारः ।

यद्यप्याद्याःषड् ब्राह्मणस्य धर्म्याः, आसुरादयश्चत्वारस्तु क्षत्रियस्य, वैश्यशूद्रयोस्तु राक्षसभिन्ना आसुरादयः । तथाच मनुः—

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यान्न राक्षसान् ॥

तथापि ब्राह्मणानामासुरगान्धर्वौ न प्रशस्तौ ब्राह्मादिविवाहचतुष्टयपरिगृहीतास्वेव भार्यासु विवाहफलसदपत्यसम्भवादपरासु गर्ह्यापत्यसम्भवाच्च । क्षत्रियस्यापि राक्षस एव प्रशस्तः नत्वासुरगान्धर्वपैशाचाः । तथा वैश्यशूद्रयोरप्यासुर एव प्रशस्तः, अन्यस्तु न । तदाह मनुः—

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान्कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥
दश पूर्वान्परान्वश्यादात्मानं चैकविंशकम् ।

ब्राह्मीपुत्रस्सुकृतकृन्मोचयेदेनसः पितॄन् ॥
दैवोढजस्सुतश्चैव सप्त सप्त परावरान्।
आर्षोढाजस्सुतस्त्रीं स्त्रीन्षड्षट् कायोढजस्सुतः ॥
ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः ॥
रूपसत्वगुणोपेता धनवन्तो यशस्विनः।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥
इतरेषु च शिष्टेषु नृशंसानृतशालिनः।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषस्सुताः ॥ इति।

प्रथमत इतरेषामप्यनुग्रहः प्रत्यवायाभावमात्रबोधनपरः अतोऽपरे काम्या एव। स्मृत्यन्तरे तु—

चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्वराक्षसौ।
राज्ञस्तथासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥ इत्युक्तम्।

अन्त्यः पैशाचस्तु सर्वेषामपि गर्हित इत्यर्थः। अत एवेतिहासपुराणादिषु क्षत्रियाणां प्रशस्ततया वर्णितो गान्धर्व उपपद्यते। विवाहान्तरासम्भवे पैशाचमप्यभ्यनुजज्ञौ संवर्तः—

सर्वोपायै रसाध्या स्यात्सुकन्या पुरुषस्य या।
चौर्येणापि विवाहेन सा विवाह्या रहःस्थिता ॥

स्पष्टं चेदं माधवीये, देवलोऽपि, विप्राणां प्रथमाश्चत्वारः प्रशस्ता इत्याह—

पूर्वे विवाहाश्चत्वारो धर्म्या स्तोयप्रदानिकाः।
अशुल्का ब्राह्मणार्हाश्च तारयन्ति कुलद्वयमिति ॥

बोधायनस्तेषामपि पूर्वपूर्वः प्रशस्ततम इत्याचख्यौ—

तेषां चत्वारः पूर्वे ब्राह्मणस्य, तेष्वपि पूर्वपूर्वः श्रेयान्,
इतरेषामुत्तरोत्तरः पापीयानिति ॥

एतद्विचारस्यफल मुपरिष्टाद्विवाहकालपरीक्षायां स्फुटीभविष्यति।

## अथ विवाहकालपरीक्षा ।

त्रिगुणवयस्क एकगुणवयस्कां कन्यामुपयच्छेत् कैश्चित्किञ्चिन्न्यूनाधिकभावोऽप्याद्रियते । तथा च विष्णुपुराणे—

वर्षैरेकगुणां भार्या मुद्वहेत्त्रिगुणः स्वयम् ।

बृहस्पतिस्मृतौ—"त्रिशद्वर्षो दशाब्दां तु भार्यां विन्देत नग्निकाम् ।

एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥

मनुयमस्मृत्योः—त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।

द्व्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

महाभारते— त्रिंशद्वर्षः षोड़शवर्षां भार्यां विन्देत नग्निकाम् ।

एकविंशतिवर्षो वा स पूर्वषामवाप्नुयात् ॥

स च स्त्रियाःसप्तमवर्षमारभ्याष्टमवर्षमारभ्य वा रजोदर्शनात्प्रागेव—

विवाहं चोपनयनं स्त्रीणामाह पितामहः ।

वैवाहिको विधिः स्त्रीणामौपनायनिक स्मृतः ॥

इति प्रमाणाभ्यां स्त्रीणामुपनयनस्य विवाहस्थानिकत्वादुपनयनस्य ब्राह्मणानां गर्भतोऽष्टमवर्षे विधानात् । तथाचापस्तम्बः-गर्भाष्टमेषु ब्राह्मणनुपनयीतेत्यादि ।

मनुरपि— गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।

गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥

तदुपर्यपि विवाहस्योपनयस्य च विधायकप्रमाणान्युपरि प्रदर्श्यन्ते ।

अथर्तुमतीविवाहवादिनां शङ्काः समाधयश्च ।

नन्वेवमुपनयनस्य षोडशवर्षपर्यन्तत्वात्ततः प्रागेव रजोदर्शनादृतुमतीविवाहस्यापि शास्त्रानुगृहीतत्वात्कथमृतोः प्रागेवेति नियमः ? तथा च गौतमः—

आषोडशाब्द्ब्राह्मणस्यापतिता सावित्री ।

मनुरपि—आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।

आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥

इति चेन्मैवम्—स्मृतयो रजोदर्शनात् प्रागेव प्रदानोद्वाहौ विदधते। निषेधन्ति च परतः। अतस्सर्वैकवाक्यतयर्तुदर्शनात्प्रागेवेत्यस्य निराबाधात्। तथा च गौतमः,

'प्रदानं प्रागृतो रिति,

भविष्यपुराणम्—अतोऽप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत्।
महदेनस्स्पृशेदेनमन्यथैव विधिस्ततः॥

बौधायनः—दद्याद्गुणवते कन्यां नग्निकां धर्मचारिणीम्।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम्॥

देवलः—त्रिंशद्वर्षो दशाब्दां तु भार्यां विन्देत नग्निकाम्।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात्॥

आश्वलायनः—कुलशीलवयोवृद्ध रूपाढ्यां नग्निकां शुभाम्।
विधिना तु वरः कन्यामुद्वहेदात्मनस्समाम्॥
सप्ताब्दा कन्यका नाम्नी शैशवी स्याच्छुभान्विता।
तामष्टादशवर्षीयो विवहेद्विधिवत्पुमान्॥
अष्टवर्षा भवेद्गौरी पुत्रपौत्रप्रवर्धिनी।
तामुद्वहेत मतिमान् सर्वकार्यार्थ सिद्धये॥
ऊर्ध्वं दशाब्दाद्याकन्या प्राग्रजोदर्शनात्तु सा।
गांधारी स्यात्समुद्वाह्या चिरंजीवितु मिच्छता॥

यमः—दद्याद्गुणवते कन्यां नग्निकामेव शक्तितः।

वसिष्ठगौतमावपि—प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयादिह।
ऋतुमत्यां तु तिष्ठन्त्यां दोषः पितरमृच्छति॥

पूर्वोक्तविधिषु नग्निकाशब्दोऽनृतुमतीबोधकः। नामलिङ्गानुशासने "गौरी तु नग्निका नागतार्तवेति" कथनात्। गृह्यसूत्रभाष्यादिषु आसन्नार्तवपरतया व्याख्यानाच्च। यद्यपि नग्निकाशब्दार्थो बहुभिर्बहुधा परिभाषितः। तथापि ऋतुमतीति तु न कस्यापि सम्मतम्।

गृह्यसंग्रहे—व्यञ्जनेष्वथ जातेषु सोमो भुङ्क्ते तु कन्यकाम्।
अंगिराः—पयोधरेषु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलाम्।

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥

कश्यपः—भुञ्जीत व्यञ्जने सोमो गन्धर्वस्तु पयोधरे ।
वलिवर्णागमे वायुः रजस्यग्निः प्रतिष्ठितः ॥
तस्मादव्यञ्जनोपेतामरजस्कामपयोधराम् ।
नोपभुक्तां तु सोमाद्यैर्दद्याद्दुहितरं पिता ॥

संवर्तः—रोमकाले तु संप्राप्ते सोमो भुङ्क्ते तु कन्यकाम् ॥
रजः काले तु गन्धर्वो वह्निस्तु कुचदर्शने ।
तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥

निषेधति नारदः—यावन्तश्चर्तवस्तस्याः समतीयुः पतिं विना ।
तावत्यो भ्रूणहत्याः स्यु स्तस्य यो न ददाति ताम् ॥

वसिष्ठोऽपि—यावन्तु कन्या मृतवःस्पृशन्ति तुल्यैस्सकामामपि याच्यमानाम् ।
भ्रूणानि तावन्ति हतानि तासां मातापितृभ्यामितिधर्मवादः॥
पितुः प्रमादात्तु यदीह कन्या वयः प्रमाणं समतीत्य तिष्ठेत् ।
सा हन्ति दातार मदीयमाना कालातिरिक्ता गुरुदक्षिणेव ॥

यमोऽपि—कन्या नर्तुमुपेक्षेत बान्धवेभ्यो निवेदयेत् ।
नचेत्प्रदद्युस्तां तत्र ते स्युर्भ्रूणहनस्समाः ॥

बौधायनोऽपि—न याचते चेदेवं स्यात् याचते च पृथक् पृथक् ।
एकैकस्मिन्नृतौ दोषं पातकं मनुरब्रवीत् ॥

याज्ञवल्क्यः—अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ॥

यमपराशरापस्तम्बाः—प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिबन्ति ऋतुशोणितम् ॥

पराशरोऽपि—माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयोऽपि नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

पैठीनसिः—यावन्नोद्यतौ स्तनौ तावद्देया । अथर्तुमती दाता प्रतिग्रहीता च नरकं प्राप्नोति । पितामहश्च प्रपितामहश्चेति विष्ठायां जायते । तस्मान्नग्निका देयेति । [ क्रमशः ]

# विष्णुनारद संवादः ।

[ निबन्धकः—श्रीश्यामाचरणकविरत्नः ]



( मम ) मानस चिन्तय चिन्मयभासम्
नूतनजलधर—रुचिरविकासम् ।
व्रजपतिदारक—मचलविधारक—
मशुभनिवारक—मखिलनिवासम् ॥
पीतवसनधर—सुन्दरनटवर-
मधरविकस्वर—सुमधुरहासम् ।
मृगमदचर्चित—मुखकमलाश्रित-
तिलकुसुमोचित—सुतिलकनासम् ॥
वेणुरवागत—धेनुखुरोद्धत-
रेणुकणाञ्चित—कुन्तलपाशम् ।
गोपयुवतिजन—मानसरञ्जन-
खञ्जनगञ्जन—नयनविलासम् ॥
ध्वजादिलाञ्छित—मुनिगणवाञ्छित-
पदतलगञ्जित—शतदलभासम् ।
करुणाविवशं—विदधतमनिशं
श्यामविरसहृदि—रसमयरासम् ॥

इत्थमुपवीणयन् वैकुण्ठमधिष्ठितं भगवन्तं विष्णुमुपगम्य देवर्षि-र्नारदः साष्टाङ्गपातं प्रणनाम—

कालिन्दीकूलकुञ्जान्तर्वल्लवीव्रजवेष्टितम् ।
नमामि नयनानन्दं नटन्तं नन्दनन्दनम् ॥

अथ भगवांस्तमपृच्छत्—वत्स नारद ! चिराद् दृष्टोऽसि । इयन्तं

कालं कुत्र स्थितं भवता ? कुत आगम्यते साम्प्रतम् ? कथं वा वृन्दावन-लीलां स्मारयसि माम् ?

नारदः—सर्वज्ञस्यापि भगवतो यद्येवमज्ञताऽभिनयस्तत् श्रूयताम्। कृष्णावतारं संहृत्य यावदनागतोऽसि, तदवधि मर्त्यलोकं नायासिषम्। तस्याः साम्प्रतिकीमवस्थां दिदृक्षुः समुत्सुकोऽहं भिक्षुवेशं परिगृह्य तत्र गत आसम्।

वि०—कीदृश्यवस्था दृष्टा ?

ना०—प्रथमं तावद् द्विजातिबाहुल्यं दृष्टम्।

वि०—येषां संमाननं मदीयं नित्यव्रतमासीत्, युधिष्ठिरराजसूये येषां पादप्रक्षालनभारः सादरं सगौरवं च मया स्वयमेव गृहीतः, यांश्च खलु मामिकास्तनव इत्युद्घोषयं, तेषां वंशवृद्धिश्रवणेनात्यन्तमानन्द-मनुभवामि।

ना०—प्रथमं तावत् तानवलोक्य ममापि महानानन्दः समजायत। पश्चात् श्रुतं, न ते सर्व एव प्रकृत्या ब्राह्मणाः। वैद्यापरनामधेया ह्यम्बष्ठाः, सूत्रधराः, नमः शूद्राख्याधारिणश्चाण्डालाः, ततोऽप्यपकृष्टतरा अपि युगि-जातीया योगित्वं ख्यापयन्तः, अन्ये च बहवो निकृष्टाः स्वेच्छया ब्राह्मण-त्वमापन्नाः। कायस्थकर्मार-पुण्ड (पोद) प्रभृतीनामनेके क्षत्रियाः, कैवर्त्तानामनेके माहिष्याः, गोप—कापालिक-सुवर्णवणिक्-शौण्डिकादीनां चानेके वैश्या भूत्वा स्कन्धतः सूत्रगुच्छं दधते। नो गणयन्ति ते ब्राह्म-णान्। अवजानन्ति तान् प्रतारणापरायणानां शास्त्रकृतामृषीणां वंशधरा इति कृत्वा। न केवलं तावत्, तेऽप्यधुना प्रायेणाचारभ्रष्टाः शास्त्रज्ञान-विरहिताः परपदलेहिनश्च संवृत्ताः। बहवः पण्डिता अपि धनादानेन व्यवस्थादातारः, विवदमानयोरुभयोः पक्षयोश्चानुकूलव्यवस्थाप्रदाने कल्प-तरूभूताः।

वि०—तदिदानीं भारते सूत्रपण्यं समृद्धं जातम्।

ना०—नहि नहि। बहवो ब्राह्मणा अपि धर्मान्तराण्यवलम्ब्य,

म्लेच्छदेशं गत्वा च यज्ञोपवीतानि परित्यजन्ति । तदनुपातेनोपवीत-संख्या प्रायः समानैव वर्त्तते ।

वि०—( स्वगतम् )—ओं ज्ञातम् । "प्रवृत्ते भैरवीचक्रे सर्वे एव द्विजोत्तमाः" इति-शिववाक्यानुसारेण भगवत्या भैरव्या एवैतत् चक्रं चक्रिणं मां सत्वरं कल्किरूपं ग्राहयितुं प्रवर्त्तते । साम्प्रतं कलेः सन्ध्यायामेव कथं तत् सम्भवति ? प्रतीक्षामहे सर्वेषामेव द्विजोत्तमत्वम् । ( प्रकाशम् ) ततस्ततः ?

ना०—पूर्वं क्वचित् क्वचित् कदाचन विशिष्टाः सभा दृष्टाः । इदानीं तु प्रत्यहमेव दृश्यन्ते ।

वि०—कीदृश्यः ?

ना०—परिडतसभाः, अभ्यर्थनासभाः, शोकसभाः, शुद्धिसभाः, दीक्षासभाः, एवमेवमसंख्याताः सर्वाः समाख्यातुं न शक्यन्ते ।

वि०—पण्डितसभास्ववश्यं शास्त्रार्थविचाराः प्रवर्त्तन्ते ।

ना०—श्राद्धमुद्दिश्यानुष्ठितासु बहुषु परिडतसभासु कौतूहलादुपस्थितं मया । आलोकितं च-श्राद्धभवनाद् बहिर्यथा दीनानाथेभ्यो धनं वितीर्यते, तथैवाध्यापकेभ्यो दक्षिणाः प्रदीयन्ते । तत्र शास्त्रार्थविचारस्य गन्धोऽपि नाघ्रायत । आघ्रायत च केवलं नस्यताम्रकूटधूमस्यैवं सुरुचिरो गन्धो यत् सत्यं ममापि मनः प्रलुब्धमभवत् । प्रविविक्षुणा तु लब्धो मया दौवारिकेभ्यः सचपेटो गलहस्तः ।

वि०—(सहासम् )—कलहप्रवर्त्तनकुशलस्यायमेवानुरूपः पुरस्कारः ।

ना०—द्वित्रदिनानन्तरं संवादपत्रेषु प्रचारितं चतुर्गुणं कृत्वा तद्-दानम् ।

वि०—मातापितृश्राद्धेऽप्येवमेव दानपरिकीर्त्तनम् ! मनुरवदत्-"यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् । आयुर्विप्रापवादेन दानं च परिकीर्त्तनात् ॥" इति । हंहो नारद ! शोकसभा कीदृशी ?



ना०—अतीव विचित्रेयं सभा । कस्मिंश्चिन्महापुरुषे मृते, पत्रपुष्पा-

दिभिरलंकृते सभामण्डपे विशुद्धविचित्रनेपथ्याः सज्जनाः समवेत्य सभापतित्वेनैकतमं वृत्वा नानावचनभङ्गिभिस्तस्य गुणकीर्त्तनं कुर्वन्ति, अन्तराऽन्तरा पेयादिकं च सेवन्ते । सर्व एवोत्फुल्लवदना दृश्यन्ते । कस्यचन नयनकोणे वाष्पकणोऽपि नोद्गच्छति ।

वि०—महाश्चर्य्या शोकसभा श्रुता । शुद्धिसभायाः कोऽर्थः ?

ना०—जन्मतः कर्म्मतो वा ये यवना म्लेच्छा वा, तेषां स्नानमुण्डनमात्रेण हिन्दूकरणं तद्दत्तजलपानं च ।

वि०—दीक्षासभायां किं क्रियते ?

ना०—पुक्कसान्त्यावसायिमलग्राहिप्रभृतीनामुन्निनीषया तेभ्यः प्रणवयुङ्मन्त्रदानम् ।

वि०—उन्निनीषाव्याजेन तेषां स्वेषां चाधोनिनीषैवेयम्, "सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात् स्त्री शूद्रः स मृतो ऽधो गच्छति" इति श्रुतेः । के तेषां दीक्षयितारः ?

ना०—के पुनरन्ये ! ब्राह्मणा एव । पण्डिताश्च तत्रोपदेष्टारः ।

वि०—( सविस्मयम् ) हा धिक् ! पण्डिता अप्येतादृशे शास्त्रनिषिद्धे कर्म्मणि प्रवर्त्तयन्ति ।

ना०—उक्तमेवैतत् प्रागेव । किञ्च युधिष्ठिरं प्रति भीष्मादिभिर्यदुक्तम्—

"अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति विद्धि महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥"

इति, तत्र कौरवैरित्यत्र नायकैरिति पठित्वा ते तदेव सर्वशास्त्रसारतया मन्यन्ते ।

वि०—एवमाचरन्तस्ते कलेरेव दूतपदवीं प्रपन्नाः । सर्वेषामेव ब्राह्मणपण्डितानामेवं मतिविपर्य्ययो जातः ?

ना०—नहि नहि । एवं कौतुककराणि कर्म्माण्यवलोकयता परिभ्रमता मया श्रुतं यद् वाराणस्यां ब्राह्मणमहासम्मेलनं भविष्यतीति । तत्रत्यकार्य्यकलापमालोकयितुं कौतूहलपरवशोऽहं समुपस्थितः । प्रथमं

तावद् भगवन्तं विश्वेश्वरं साक्षात्कृत्य प्रणम्य च तन्मुखादवगतं— तदीयं पुरातनं वृहन्मन्दिरमनादिलिङ्गं च कस्यचिद् यवननरपतेराज्ञया भग्नमासीत् । मन्दिरस्थाने मसजिदिति ख्यातं यवनानामुपासनागारं निर्म्मितम् । साम्प्रतं तेन कुटीनिभे नवनिर्म्मिते मन्दिरे लिङ्गान्तरमाश्रित्य कृच्छ्रेण कालो नीयते । माताऽन्नपूर्णाऽपि तादृश्येव पृथङ्मन्दिरे निवसति । तामुपगम्य प्रणिपत्याब्रवम्—मातर्बुभुक्षुरस्मि । देहि मे किञ्चिदन्नम् । सा तु सगद्गदमगदत्—हन्त वत्स ! गतास्ते दिवसाः । इदानीं नास्तिमेऽन्नदानेऽधिकारः । अन्नविक्रयार्थं नियुक्ताऽस्मि मन्दिराधिकारिभिः । अहमवदम्—मातस्ततः किमित्यधुनाऽपि अन्नदेति नाम धारयसि ? भवतु तावत् । सुरधुनीसलिलेन क्षुत्पिपासे निवारयामि । एवमाभाष्य गतोऽहं ब्राह्मणमहासम्मेलनस्थानम् । नानादिग्देशागतान् असंख्यातान् ब्राह्मणपण्डितांस्तत्र समवेतानपश्यम् । सूर्य्यग्रहणमुपलक्ष्य प्रभूतजनसमागमोऽपि तदानीं जातः । एतादृशेन सुदुर्वहेन भारेण वाराणसीस्तम्भभूतजीर्णत्रिशूलत्रोटनमाशङ्क्य भगवता विश्वनाथेन विसूचिकासाहायकेन लघूकृतो भारः ।

वि०—ब्राह्मणसम्मेलनस्य कार्य्यजातं विवृणु ।

ना०—तत्र विचार्य्यमाणेषु कन्याविवाहवयसि, विधवावेदने, शूद्राणां प्रणवयुङ्मन्त्रदीक्षणे, पूर्वोक्तशुद्धिविधाने, अन्येष्वपि वहुषु समाजविप्लवकरेषु विषयेषु च शास्त्रानुसारेण सनातनधर्म्मानुगतं सिद्धान्तसन्दोहं समुपश्रुत्य यथाऽऽनन्दितोऽभवम्, तथैव महद्दुःखमप्यन्वभूवम् ।

वि०—दुःखस्य किं कारणम् ?

ना०—समनन्तरमेव महासम्मेलनस्य तत्रत्ये दशाश्वमेधे तीर्थे रुद्रयागमनुष्ठाय पामरेभ्यः प्रणवयुक्तो मन्त्रः प्रदत्त आसीत् । ये ब्राह्मणपण्डिता महासम्मेलने सङ्गताः सनातनधर्म्मरक्षणे बद्धपरिकरा आसन्, विचारसभायां च विचारकपदमलमकुर्वन्, तेषां कतिपये तस्यामपि दीक्षासभायामुपस्थाय माल्यचन्दनविभूषिताः सभाशोभामवर्द्धयन्, दक्षिणा-

मपि प्रत्यगृह्णन् । विश्वेश्वरसमक्षं काशीवासिनामपि पण्डितानां यद्येतादृशो व्यवहारः, तदाऽन्येषां का कथा । सर्वंसहा वसुमती सर्वानत्याचारान् सहते, न तच्चित्रम् । भूस्वर्गभूते भगवति वाराणसि ! त्वं कथमेतान् वैड़ालव्रतिकान् वकव्रतिकांश्च विप्रान् वहसि ? एवं विलप्य गतोऽहं भवदध्युषितं श्रीवृन्दावनं धाम । तत्र गत्वा, यत्राक्रूरो भूयोभूयो निमज्ज्य ब्रह्मस्वरूपं रामकृष्णरूपमवालोकयत्, तं ब्रह्महृदमवगाह्य वृन्दावनरजसि लुठितकायो भविष्यामीत्याशा कृता । गत्वा तु हताशोऽभवम् ।

वि०—कथम् ?

ना०—दृष्टं तत्र—कुञ्जे कुञ्जे श्रीमूर्तयः प्रतिष्ठिताः कुञ्जाधिकृता मुक्तकच्छा मुण्डाः पिचिण्डिलास्तिलकादिसुचित्रितकायाः स्थूलतुलसीमाल्यमण्डितकण्ठास्त्यक्तसंसारा महाप्रभावा महाप्रभवः श्रीविग्रहदिदृक्षुभ्यो भेट् इत्याख्यं करं गृह्णन्ति । सौनिकाश्च गवाजादिपशूनां शोणितैस्तत्रत्यानि पवित्राणि रजांसि रञ्जयन्ति । यमुनाऽपि भीतभीतेव दूरमपसृत्य जानुदघ्नपयाः क्षीणतमा सञ्जाता । क्वासौ तस्या लहरी लीला, क्व ते पुण्या ह्रदाः, क्व वा तत् कृष्णाया हस्ततरलाचितकोमलवालुकं" पुलिनमिति । सर्वमेतत् संक्षेपेण निवेदितं समुपश्रुत्य भगवान् प्रमाणम् । इत्युक्त्वा पुनः प्रणिपत्य भगवन्तं देवर्षिर्यथाभिमतदेशं ययौ ।

---

## प्रणवविलापः ।

[ निबन्धकः—पं० श्रीनारायणशास्त्री खिस्ते । ]

योऽहं पूर्वतनैर्महर्षिनिवहैः पूताशयैः सादरं
स्वाध्यायेषु सदा समिद्धरुचिभिर्गीतोऽस्मि वीतस्पृहैः ।
स्त्रीशूद्रश्रवणोदरेषु पतनात् संरक्षितः सन्ततं
सोऽहं सम्प्रति हन्त दुर्मतिमतां जातोऽस्मि लीलास्पदम् ॥१॥

घुसृणमसृणमङ्गं पौरुषं बिभ्रदन्य-
द्दुरितदमनदक्षः पीनकुक्षिर्गणेशः ॥

अपिच—

परधनपरिमोषज्येष्ठविद्योपदेश-
प्रथितविविधशिक्षाकौशलाचार्य्यवर्य्यः ।
हृतशतमदनश्रीशक्तिविभ्रान्तलोको
भवतु भवविभूत्यै षण्मुखः कार्त्तिकेयः ॥

नान्द्यन्ते, सूत्रधारः—

अलमतिप्रसङ्गेन । आदिष्टोऽस्मि तत्र भवद्भिर्ब्राह्मणैः केनापि नवेन प्रयोगेनाराधनीयेयं परिषदिति । तद् यावद् गृहिणीमुपस्थाप्य संमन्त्र्य च कमपि प्रयोगं निर्व्वर्त्तयिष्यामि । ( नेपथ्याभिमुखमालोक्य ) आर्य्ये, इतस्तावत् । ( नेपथ्ये ) प्रतीक्षस्व क्षणं मे प्रसाधनस्य ।

सूत्रधारः—ननु स्वरसंयोगेन ज्ञायते गृहिण्येवेयं वचनन्त्वतिक्रान्तमर्य्यादमन्यादृशमाकर्ण्यते । तत् पुनराहूय निर्णीततत्त्वो भवामि । आर्य्ये इतस्तावत् ।

( पुनर्नेपथ्ये ) किं बधिरोऽसि, यदर्पितमपि प्रतिवचनं नाकर्णयसि ?

सूत्र—( सखेदं ) अहो–

यां मे श्रुतिं नवसुधास्रुतिमुग्धभाव-
स्त्रीभाषया चिरमतर्पयदिन्दुवक्त्रा ।
सैवाद्य पूरुषरुषा-परुषाक्षरोक्ती
रातन्वती मम मनो नितरां दुनोति ॥

( नेपथ्ये पादुकाध्वनिः )

सूत्र—( साश्चर्य्यं नेपथ्याभिमुखमवलोक्य )

अहो, कोऽसौ मदन्तः पुरादपरिचितः पुरुषो निर्गच्छति ? किमत एव हेतोराहूतापि गृहिणी चिरयन्ती वाचा वाचमतिशिश्ये ।

ततः प्रविशति गृहीतपुंवेशा नटी ।

नटी—अहो दौरात्म्यं पुंसाम् !

स्वयं निगृह्य सबला रमणीरनपेक्षिताः ।
अबला इति भाषन्ते शब्दशास्त्रेऽपि दुर्म्मराः ॥

न केवलमेतन्मात्रम्,

नाट्यभाषा प्रायशः कामिनीनां
व्यवहार्य्याः स्युः प्राकृतानुप्रबन्धाः ।
नैवं चेत् स्यान् नाट्यदोषो विशिष्टः
कातः स्त्रीणां मानहानिः परास्ति ॥

सूत्र—( निरूप्य सहर्षम् ) अहो, मदीयैव गृहिणी प्रवर्त्तितनवरङ्ग-कुतूहला विरचितपुंवेशा किमपि मन्त्रयमाणा मामुपासितुमागच्छति । दूरतया वा व्यासङ्गवशेन वा मामनभिजानतीव दृश्यते । तत् सम्भावयाम्येनाम् ( इति परिक्रामति )

नटी—( सक्रोधम् ) अहह ! मातृस्तन्यपीयूषधारावञ्चितस्य कल्पना-पटीयसः स्थविरस्य मनोर्दुर्व्याहारः ।

शय्यासनमलङ्कारं कामं क्रोधमनार्ज्जवम् ।
द्रोहभावं कुचर्य्यां च स्त्रीभ्यो मनुरकल्पयदिति ॥

( दन्तैर्दन्तान्निष्पीड्य ) आः जरद्गव ! सर्व्वज्ञतावादस्ते निगृहीत-कामिनीकैरात्मप्रतिष्ठासर्व्वस्वैः पुम्भिरारोपित एव ।

सूत्र—( उपसृत्य ) आर्य्ये, त्वदागमनप्रतीक्षं मामनुपस्थाय किमिति चिरयसि ? कथं वा एवं वेशवैषम्यं ते ? कथय, सुन्दरि—

मञ्जीरशिञ्जितकृतस्मरचापघोषे
किन्ते पदे कठिनपादुकवज्रनादे ?
किं पाटलाकुसुमकोमलगण्डपाली-
वालावलीवलयिता परुषाद्य जाता ?

अपि च—

नटीजनोचितां भाषां न गृह्णासि मनोरमे ।
आदत्से मुनिपत्नीव कथं वा संस्कृतां गिरम् ॥

नटी—( सरोषं ) रे पुरुषाधम ! युष्माकं वैदग्धी परिज्ञाता तावदद्य महिलापरिषदि । यथा पुरुषैः शिक्षादिकं सर्व्वमात्मसात् कृत्वा स्वयं भोक्तृतया वयञ्च भोग्यतया स्थापिताः । गृहपशव इवान्नपानादिभिः परिपोष्य तथा वशीकृता यथा इतः पूर्व्वं नार्य्यः पुरुषेषु स्वामित्वमारोपयन्त्योऽनन्यगतिका इव तन्मुखमात्रमीक्षमाणाः समवतस्थिरे । किं बहुना, सुसभ्यवणिग्जनशासनसंस्कारप्रवृत्तेः पूर्व्वं मृतमपि स्वामिनं चितायामात्माहुतिदानेनानुजग्मुः । तदसहनीयमिदमस्माकमिदानीम् ! यावत् पुरुषाः पूर्व्वापराधदण्डमवरोधवासं नाङ्गीकरिष्यन्ति तावद् भिन्ना एव तेभ्यः पुरुषायिता विचरिष्यामः । केवलं त्वदीयत्वरया कुन्तलच्छेदनमद्य मे न जातमित्यनुतप्यते ।

सूत्र—(सप्रश्रयं हस्ते धृत्वा) आर्य्ये कथं कुप्यसि ? यद्येवं तथैवास्तु !

यदन्यत् क्रियतां तत्र प्रतिषेधो न मे क्वचित् ।
केवलं त्यज्यतामेतत् कुन्तलच्छेदसाहसम् ॥

इमे कुटिलकुन्तला यदि न संयमं लम्भिता-
स्तथास्तु, यदि संयमं तदतिहृद्यमेवास्ति मे ।
परन्तु रुचिरायता जलदजालनीलत्विषो
न वर्द्धनजलाघवास्तव भवन्तु कायश्रियः ॥

नटी—किं ते प्रतिषेधेनाप्रतिषेधेन वा ? महिलापरिषदि यन्निर्णीतं तदवश्यमेव करणीयम् । भवतु कथम् आर्य्ये इतस्तावदिति चीत्कृतं त्वया ?

सूत्र–( स्वगतम् ) अहो विडम्बनम् ! (प्रकाशम् ) अद्य परिषदियं केनचिन्नवेन प्रयोगेनाराधनीया तत्रास्माभिः सज्जैर्भवितव्यमिति ।

नटी—( कोपं कथञ्चित् संवृत्य ) यदि प्राकृतभाषाव्याहारो न स्यात् तदात्र मे सम्मतिरस्ति ।

सूत्र—तर्हि तादृक् प्रयोगो दुर्लभ एव । आलङ्कारिकसमयासिद्धश्च ।

नटी—( सरोषं ) तत् कथमकाण्डे मामाहूय रङ्गभूमावमतवानसि ? अतः—मानभङ्गापराधाय राजद्वारेऽभियोक्ष्यते ।

अन्यथा मम नामापि न ग्राह्यं केनचित् क्वचित् ॥

सूत्र—( आत्मगतं) अनिवर्त्तनीयदुरध्वचारिणी खल्वस्याश्चित्तवृत्तिः, यया परिहरणीयसङ्गेयमस्माभिः संपादिता । तदनादायास्याः साहायकं नेतृचरिताख्यो भाणः प्रयोक्तव्यः, न चास्य रूपकस्य भाणत्वेन प्रवेदनमस्यै मानिन्यै करणीयं, पश्चाद् यथाप्राप्तमाचरिष्यते ( प्रकाशं भीतिनाटितकेन प्रणिपत्य ) मर्षय सुन्दरि, स्मृतः कश्चित् प्रयोगो नेतृचरितं नाम यस्य रचयिता भट्टपल्लीयो गौतमः श्रीपञ्चाननतर्करत्नभट्टाचार्य्यः ।

नटी—( सक्रोधम् ) अरे दुर्म्मरस्य तस्य जरतः कृतिं मयैव निर्व्वर्त्तयितुमभिलषतस्ते न विदीर्णं सहस्रधा रसनया ? यो हि यावत् सुदेशहितकरव्यापारेषु नितरां विरोधमादधानः सर्व्वैः शिक्षितैर्विद्विष्यते तस्य प्रयोगः ?

( नेपथ्ये ) भो महिलाकुलमूर्द्धन्ये ! श्रुतमनेन नटपशुना सह भवत्या निरवशेषं सङ्कथनमस्माभिः । शैलूषकुलधुरन्धरे साधु !

योऽयं पञ्चाननकृतिं कर्त्तुमुत्सहते नटः ।
तमहं दण्डयिष्यामि कृपाणाघातलीलया ॥

नटी—( सभयमात्मगतम् ) अस्मदनुग्राहकमपि पुरुषधौरेयमिमं कृपाणपाणिं दृष्ट्वा वेपते मे हृदयम् । तदितोऽपसरामि । (इति प्रस्थिता)

सूत्र—( विलोक्य ) यः खलु मिथ्यापटहाख्यो विटः—

आवद्धभ्रुकुटीबिभीषणमुखः सत्योक्तिविद्वेषणो
ब्राह्मण्यं द्विषतां वरो वरवधूसम्मार्ज्जनीयाकृतिः ।
उद्यत् कालकरालल्लोलरसनातुल्योच्छलत्पावक—
ज्वालश्रीकरवालदारुणकरः क्रोधादसौ सर्पति ॥

तन्न युक्तमस्य पुरतः स्थातुम् ।

( इति निष्क्रान्तौ )

इति प्रस्तावना ।

# प्रथमोऽङ्कः ।

ततः प्रविशति करवालपाणिर्मिथ्यापटहः ।

मिथ्या—(योऽयं पञ्चाननकृतिमित्यादि पुनः पठन् इतस्ततोऽवलोक्य)

आः सन्त्रासपलायितः शैलूषापसदः,

आमोदिनी शतमनोहरणे रतोऽह
मानन्दसान्द्रसरणीपणनीयतेजाः ।
प्राचीनपद्धतिविवाहविधिं विमुञ्चन्
स्त्रीणां करग्रहसुखेन चिरं स्थितोऽस्मि ॥

तादृशं मामालोक्यापि धरणीललामभूतं महिलारत्नं कथं प्रनष्टम्? तदत्रागमनमेव मे व्यर्थम् । यतः—

पुंवेशजुष्टसुकुमार शरीरवल्ली
शैवालकावृतवना नलिनीव जाता ।
सा चेन्मया रहसि हास्यविकस्वरास्या
सम्भाष्यते, न हि ततो विफलश्रमः स्याम् ॥

तद् यावत् तामन्विष्यामि । ( इति परिक्रामति )

अहो क्वनु खलु गतस्तद्दर्शनं लभेय, यस्याः किल—

तत् सत्त्वसम्भृतवचो मनुमानहानं
तां च स्थितिं पुरुषशक्तिमधोनयन्तीम् ।
तत् स्त्रीजनेष्वनुचिताचरणानि पुंसां
व्याहन्तु मीहितमदस्यमपि स्मरामि ॥

अपिच—

शिरीषदलकोमलं वपुरनल्परूपे दृशौ
ललाटतटसञ्चरत् कुटिलकेशभूषं मुखम् ।
कठोरतरपादुका वहनजःतखेदे पदे—
गतिर्यदि विसष्ठुला तदपि च स्मरोन्मादभूः ॥

( उपविश्य ) नन्वास्ते कमलिनी तथापि कथ मिमामवस्थामनुभवामि ! ( विचिन्त्य ) न केवलं कमलिनी–

आश्लिष्टा बहवो वराङ्गरमणीकण्ठा विकुण्ठं मया
नारीणां समिताविहं बहुमतः कन्दर्पदर्पध्वजः ।
किन्त्वस्याः सरसीरुहप्रणयिनी नेत्रे क्षणं पश्यतः
सर्वं तद्विफलं ममेति मनुते चेतः समुत्कण्ठया ॥

तत्पुनरन्विष्यामि । ( परिक्रम्य दृष्ट्वा ) महिलापरिषत् सदस्यानां मेलनस्थानानि दृश्यन्ते किन्तु सा न दृश्यते पुरतस्तु दृश्यन्ते कालीघट्टाभिमुखं प्रस्थितास्तीर्थयात्रिणः, एतेषां स्थितिमालोक्य मन्यते प्राचीनपद्धतिपरायणाः खल्वमी भवन्ति-तदेषां मतिः परिवर्त्तनीया–तत् संलपाम्यमीभिः । ( आकाशे ) के भवन्तः ? केषाञ्च धर्ममतं भवन्तो मन्यन्ते नेतॄणां वा ब्राह्मणानां वा ? किं ब्रुवन्ति भवन्तः ? वयं नमशूद्राः ।

विप्राणां विदुषां मतेषु नियतं वर्तामहे वर्त्मसु
क्षीणप्रायसमस्तधर्मचरिते कालेऽत्र ये रक्षकाः ।
नानाभोगसमेधितान् धनिजनान् दृष्ट्वापि धर्माय ये
दारिद्र्यं बहु मन्वते न तु धनं यद्धर्मधीबाधकम् ॥

श्रूयते हि शास्त्रवाक्यम्—

यद् ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः कर्मभिराचरन्ति ।
तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः ॥ इति ?

तद् भद्राः श्रूयतां सत्यवचनम्—

धनार्ज्जनपरिश्रमादपसृतः शठानां गणः
पराज्जितधनं हरन् सुकृतलाभलोभार्पणात् ।
निरर्थकृतपोषणो विनतमौलिलोकैरयं
स्वकल्पित वचः स्मृतौ परमवर्द्धयद् विप्रताम् ॥

( आकाशे ) किं ब्रूथ ?

श्रुतिस्मृत्यभिधं धर्मविषयं दृग्द्वयं नृणाम् ।
विप्रत्वं दर्शयत् पूज्यं पांशुवर्षेण पूर्यते ?

अपि च—विप्रत्वं यदि कल्पितं स्मृतिवचो मिथ्या, समाजस्थिति-
व्युच्छेद्या सुकृतादिकल्पनपरा हेया च नॄणां मतिः ।
एवं स्वैरविहारभोजनरतो लोको यदि स्यात् तदा
कं तावत् समजाद् विशेषमधुना प्रख्यापयेदात्मनः ॥ इति ?

धिङ्मूढाः—
हीनाः सर्वगुणै रसैर्विरहिताः शुष्कान्तरा दुर्गता
विप्राः शाश्वतधर्मवादनिकृतिच्छन्नाः सुदुर्दर्शनाः ।
सम्मान्या यदि नः समाजगतये देशश्रियो घातका
हा हा राजनिपीडिता अपि वयं भूयोऽपि दूयामहे ॥

(आकाशे) किं ब्रूथ—
व्यपदिशसि जनुर्द्विजातिवंशे
न च मनुषे स्मृतिमत्र मानभूताम् ।
इति विहितविरुद्धवादकर्मा
सुमतिरसि त्वमहो वयन्तु मूढाः ॥ इति ?

अरेरे दाम्भिकाः, मामप्यधिक्षिपथ, न जानीथ जाल्माः कोऽहमस्मीति? (अर्द्धोक्ते निरूप्य सभयम्) अहो अमी खलु बलवन्तो मामेवाभियान्ति ?

रुषोज्ज्वलन्नेत्ररुचः परःशतप्रवीरपुंसो नमशूद्रशब्दितान् ।
मदुक्ति विद्धान् प्रतिकर्त्तुमुद्यतान् निवारयिष्यामि कथं वतैककः ?

तदाह्वयामि पुररक्षकान् अथवा प्रथमं भेदगर्भेण साम्ना समावर्जयितुं यतिष्ये । (उच्चैः) भो भद्राः, मित्रभूतो भवतामहमविचारमौग्ध्यमवलोकयन्नभिमानदूनहृदयः प्रत्यधिक्षिप्तवानस्मि, तन्मृष्यन्तु पुण्यकर्माणः शृण्वन्तु मे कथाशेषम् ।

येषां भक्ता भवन्तःसुदृढतरकुसंस्कारमोहान्धकारै
रुद्धान्तर्बोधनेत्रा न हि तदुपकृतीर्द्रष्टुमप्युत्सहन्ते ।
कैरस्याख्याकृता वो न च सलिललवः स्पृश्यते कैः शुनां न
च्छायास्पर्शादशुद्धो द्विजनिरपितु वो हस्त एषां निधानात् ॥

अपिच—ब्राह्मणान् देवता ब्रूथ चिरं भक्ताःस्थ तान् प्रति ।
ते कृतघ्नास्तु चाण्डालवादं युस्मासु कुर्वते ॥

( आकाशे ) किं ब्रूथ युवानः, यद्येवं तानेव गत्वा पृच्छाम इति ? साधु गच्छन्तु भवन्तः शृण्वन्तु च तान् नैकृतिकान्, मा पुनः कल्पनाजालेन तेषां प्रतारिता भूत। ( निरूप्य ) अमी तावदिदानीं मद्वाग्जालनिरुद्धा मदभियानपराङ्मुखाः परस्परं विवदन्ते शृणुमस्तावदेषां वचांसि ( आकर्ण्य ) बहवो युवानः किल मामेव समर्थयमाना वदन्ति, सत्यमुक्तं महाभागेन, वयं प्रणामरताश्चिरमाश्रवा अपि निपीड्यामहे ब्राह्मणैरिति, अत्रापरे प्रत्यवतिष्ठन्ते कथयन्ति च धर्मस्यायं निसर्गो यत्त्यागो नाम, यथा सन्तो ब्राह्मणा धनमपहाय दारिद्र्यं स्वीकुर्वन्ति तथा वयं मानमपहाय सेवामेव स्वीकुर्मः। अत्र पूर्वेषां यूनामुत्तरम्—माभून्मानः सारमेयादधिकमवज्ञान मिति केयं वार्त्ता ? वृद्धाः प्रत्याचक्षते मामैवमिति, जातिर्नाम प्राग्भवीयकर्मफलम्। भोगमन्तरेण न च कर्म क्षीयते, अस्मिन् जन्मनि कृतात्मलाभैर्यैर्यथा वर्त्तितव्यं शास्त्रेष्वेव तद्विधानमस्ति, ब्राह्मणाः खलुः तद्वचनमेवानुवर्तन्ते न तु स्वयं विरच्य किमप्युपन्यस्यन्ति। शृणुत भोः—

अच्छायस्पर्शिनो विप्रा दयन्ते नो यथाऽसा।
अस्मत्पक्काशिनो नव्यास्तथाभावा भवन्ति न ॥
अस्मत्प्रतिग्रहाल्लाभः क्षतिस्तद्वर्जनादपि।
येषां भवति विप्राणां तेऽङ्गीचक्रुः कथं क्षतिम् ॥

अतः—शास्त्रादेशपरा विप्रा यथा पत्नीं रजस्वलाम्।
न स्पृशन्ति तथैवास्मान् नावज्ञानान्न मत्सरात् ॥

तस्मादाशास्यते—श्रद्धास्तु शास्त्रे मतिरस्तु धर्मे,
श्रीविप्रपादेषु च भक्तिरस्तु।
ततः कपूयानुशयाद् विमुक्ताः
क्रमेण गच्छेम पदं परं यत् ॥

इदानीं तूष्णीमासते पूर्वे युवानः, न च कश्चिन्मामभियाति । अयमेव मे परमो लाभः । किन्तु यामगधिन्तु मुत्कण्ठतो महिलापरिषत्सदस्यानां विवरणस्थानमिदमन्विष्यामि सा नालोक्यते अहो रूपममुष्याः ।

पुरुषवेशसमावृतकामिनी तनुरुचापि मनो हरति स्म सा ।
तरुदलान्तरितावयवा यथा सुरुचिरा सुरभिर्नवमालिका ॥

भवतु पुनरन्विष्यामि— ( शिष्टमग्रे )

---

श्रीगोबर्धनधरहैयङ्गवीनप्रियौ जयतः ।

# ( सूचना )

जगद्विश्रुते निर्वाणधाम्नि ब्रह्मद्रवविभूषिते श्रीकाशीक्षेत्रे श्रीविक्रमनृपतिशरद्विंशशतकपञ्चाशीतितमाब्दकार्तिक कृष्णनवमीमारभ्यैकादशी पर्यन्तमखिलभारतवर्षीयब्राह्मणमहासम्मेलनमासीदिति जगति सम्प्रति सुविदितमेव । तत्र च सर्वसम्प्रदायानां भूयांस आचार्याः कतिपयानां प्रतिनिधयो धार्मिकनरपतयश्च श्रीकृष्णगढ श्रीवाराणसी मिथिला हथुवाधिपतयः तथा प्रायश्चतुः सहस्राणि प्रशस्ता विद्वांसः परमां सुषमां सदसो दर्शयामासुः । यत्र विद्वन्मणयस्त्रिंशच्चत्वारिंशद्वा महामहोपाध्यायपदवीधारिणो अभ्राजन्त । येषु सर्वप्रान्तेभ्यरसमुपागता द्वादशशतपरिमिताः प्रतिनिधयो बिभराम्बभूवुरनिर्वर्णनीयामभिख्याम् । तदितरे च बहवः प्रेक्षकाः परितः सभामण्डपमध्यष्ठुः । तत्र धर्मसम्बन्धीन्यनेकानि कार्याणि सनातनधर्मानुसारेण प्रायः सर्वाण्येव निष्पक्षपातं निरणीयन्त एतन्महत्सुसम्पन्नमिति महान्प्रमोदः । किञ्च श्रीकाश्यामागामिसर्वविघ्ननिवृत्तये सर्वेषामभ्युदयाय संस्कृतविश्वविद्यालय एकः स्थापनीय इत्यपि सर्वैरेककण्ठं समम्न्यतेस्म । पूर्वं श्रीभारते वर्षे प्रायः स्त्रीपुंसादयः सर्वेऽपि संस्कृतां गिरमन्तरा न किमपि गदितुमुत्सेहिरे । उक्तं श्रीबिल्हणेन महाकविना विक्रमाङ्कदेवचरिते ८१ सर्गेः—

"ग्रामो नासौ न स जनपदः सास्ति नो राजधानी
तन्नारण्यं न तदुपवनं सा न सारस्वती भूः ।
विद्वान्मूर्खः परिणतवया बालकः स्त्री पुमान् वा
यत्रोन्मीलत्पुलकमखिला नास्य काव्यं पठन्ति ॥
यत्र स्त्रीणामपि किमपरं जन्मभाषावदेव
प्रत्यावासं विलसति वचः संस्कृतं प्राकृतञ्च ।

सम्प्रति तत्रैवेयं दुर्दशा यत्परिमेया एव संस्कृतज्ञा विद्वांसः तथापि त्रिचतुस्सहस्रविद्वत्सम्मेलनतोऽनुमीयते साम्प्रतमपि सन्त्यङ्कुरा भूयांसः संस्कृतविद्यालताया भारतवर्षे । यद्यत्र विषये नाभिनिवेशः स्यात्, कालतो विलुप्येत च संस्कृतभाषा तदा भारतीयमार्यत्वमेव समूलमुन्मूल्येत । यतः सर्वेषामेवार्याणां धर्माधर्मजीवनमरणदानादानदण्डनीतिप्रभृतिसर्वव्यवहारनिर्भरः संस्कृतायत्त एव । नह्यार्याणां कार्यं किमपि तादृशं यत्संस्कृतमनालम्ब्य विधीयेत । युक्तं चैतत् । न हि चक्षुरन्तरा चाक्षुषं कार्यं सम्पद्येत ।

किञ्च जगतो मातृभाषा संस्कृतमेवेति निर्विवादमाधुनिकानामपि । संस्कृतभाषाया अज्ञतयैव सम्प्रति महासरित्समुत्तरणे तुम्बीफलमिव समाश्रीयते प्राकृतभाषाव्याकरणम् । एतेन संस्कृतविद्याया महानाघातः यतः स्वयमविदुषां भाषान्तरकर्तृष्वेव विस्रम्भः । तेन संस्कृत भाषामर्माणि शनैः शनैरेव सीदन्ति । तेन विश्वविद्यालयस्थापनमनुमतं महासभया तदावश्यकं शुभकार्यमितिमन्यामहे । आर्यावर्तस्य वास्तविको समुन्नतिरस्मदीयसद्विद्या सद्धर्माद्यधीना । एतदतिरिक्तविधया क्रियमाणोन्नतिर्नोन्नतिः, किन्तु स्वस्वरूपनाशविशेषे परिणम्येत सा । अतः सनातनधर्माचार्याः श्रीमन्तो मेदपाटेश्वरा इतरे च धर्माग्रहग्रहिला भूपतयः धनिनश्चापरे वैष्णवजनाः सनातनधर्मानुयायिनोऽन्येच सनयं सानुरोधं सप्रेम च सूच्यन्ते, यदिस्मन्सुमहति कार्ये उपक्रमे पञ्चाशल्लक्षाणि रूप्यकाणि विनियुज्येरन् । तत्र पञ्चलक्षाणि मिथिला-

नरेशै र्दातुं प्रतिज्ञातानि अस्माभिर्विश्वविद्यालयनिर्माणोपक्रमे रुद्रसहस्रं मुद्रा दीयेरन् । सिद्धे च विश्वविद्यालये प्रत्यब्दमेकलक्षस्य प्रतिशतं षडानकगणनया पञ्चसहस्रं मुद्राः प्रदीयेरन्निति प्रत्यश्रावि । पूर्वोदितेऽस्मद्दित्सिते वस्तुनि महासभायामेव सर्वान्प्रत्यस्माभिः श्रावय मासे यदेतत् कुसीदतोऽस्मत्सम्प्रदायशुद्धाद्वैतस्य सविशेषस्थानमध्ययनाध्यापनादौ नैरन्तर्येण दीयेतेति । प्रतिपन्नं चैतत्सर्वैः कार्यकर्तृभिः । अवशिष्टचतुश्चतुश्चत्वारिंशल्लक्षाणि मुद्राः संवत्सरपूर्तौ सर्वैः स्वानुरूपं विभागशो दत्ताः पूर्येरन् । येन सद्यः संस्कृतविश्वविद्यालयः (यूनिवर्सिटी) स्थाप्येत, शुभकार्यं चेदं फलेन संयुज्येत । महदिदं श्रीभारतवर्षं यत्र भूयांसो धर्मप्राणा महाराजा धनिकधुरीणाश्च निवसन्ति । तत्रैकस्मिन्वर्षे भागशो दानेन पूर्वोदितसंग्रहकरणे नातिकाठिन्यं लक्ष्यते । यदिदमुत्थापितं महत्कार्यं भारतजीवनप्राणानामाधाररूपं परमक्षेममङ्गलसौभाग्यकारि च निश्चितं सम्पद्येत । अतो यावच्छक्ति स्वयं दाने दापने च कुलीनैरार्यैर्धार्मिकैरवश्यं प्रयतनीयम् । एवमवस्थितिविशेषे पञ्चाशल्लक्षमुद्रासंग्रहोत्तरं श्रीमतो गवर्मेण्टतोऽपि भूयिष्ठसाहाय्यं प्राप्तुं शक्येत । यथा न्यत्रयूनिवर्सिटीषु साहाय्यं दीयते तथास्यापि विश्वविद्यालयस्य विशेषतया दीयेतेति महती नः प्रत्याशा । इति शुभम् ॥

श्रीविक्रमसंवत्सरः १९८५ पौषकृष्णा ६ ।

(मुद्रा०) ह० गो० गोवर्द्धनलालस्य ।

टि० बहुसोमयाजिश्रोत्रियवर्यकुलपावनेभ्यः, चक्रवर्तिश्रीकृष्णदेवनृपतिकृतसर्ववादिविजयसूचककनकाभिषेकोत्तरं प्रत्तया श्रीवेदव्यासविष्णुस्वामिसम्प्रदाय समुद्धारसम्भृत श्रीपुरुषोत्तम वदनावतारा सर्वाम्नायसञ्चार वैष्णवाम्नाय प्राचुर्यप्रकार श्रीबिल्वमङ्गलाचार्यसम्प्रदायिकार्पित साम्राज्यासनाखण्डभूमण्डलाचार्यवर्य जगद्गुरु महाप्रभु श्रीमदाचार्येतिपदव्या विराजमान श्रीवल्लभाचार्येभ्यः पुरुषगणनया चतुर्दशैरतत्प्रधानपीठस्थितैः सुः सिद्धमहिमानंमतकर्माणं श्रीवल्लभाचार्यद्वि-

प्रादुर्भावितं श्रीगोवर्धनधरस्वरूपं सेवमानैराचार्यकुलशेखराद्यनेक विरुदावलिभूषितैः श्रीकाशीक्षेत्रे साम्प्रतिकमहासभामण्डले सर्वाचार्य-समक्षं महोत्कर्षदर्शिस्वानुरूपमहोदारविद्वद्वर्यात्मज विभ्राजमानैः श्रीनाथद्वारस्थगोस्वामितिलक श्री १०८ श्रीगोवर्धनलालजी महाराजैः सर्वानाचार्यान् विद्वज्जनान् नरपतीन् धनिकान् साधारण जनांश्चोद्दिश्य सूचनेयं कृतेति वेदितव्यम्।

ह० नन्दकिशोरस्य

(मुद्रा०) विद्याविभागः

नाथद्वारम्।

---

## वार्त्ताः सम्पादकाभिप्रायाश्च।

परमानन्दतुन्दिलेन चेतसा वयम्प्रकाशयामो यदस्माकं भारतसम्राट् श्रीमान् पञ्चमजार्जमहोदयो जगदीश्वरप्रसादात् शनैः शनैरामयमुक्तो भवतीति। नृपतेरभ्युदयेनैव प्रजानामभ्युदयो भवति, क्लिश्यति च तस्मिन् कथमिव प्रजाः सुखमनुभवितुं शक्नुयुः? भारतवर्षमिदमासृष्टेः सर्वदैव राजानमीश्वरधिया पूजयति। श्रुतिषु स्मृतिषु पुराणेष्वितिहासादिषु च न कुत्राप्येतस्य व्यभिचारो दृश्यते। स च राजप्रजयोः सम्बन्धः कियत्सुखसमृद्धिसम्पादक इति तु न कस्यापि परोक्षम्।

अतो वयमनिशमेव भगवन्तं प्रार्थयामहे यत्तत्र भवान् भारतसम्राट् अचिरादेव निरामयः सन् पूर्ववद्राज्यं परिपालयतु निदधातु च भारतीयासु प्रजासु श्रद्धापूतां करुणादृष्टिमिति।

* * *

व्यतीते खीष्टजन्मोत्सवावसरे जातीयमहासभायाः ( National Congres; ) त्रिचत्वारिंशत्तमवार्षिकमधिवेशनं महताऽऽडम्बरेणैव सम्पन्नमभूत्। महानर्थव्ययः सञ्जातः। कैश्चिदुच्यते—महासभाया जन्मन आरभ्याद्यपर्यन्तमेतादृशं सम्मेलनं नैवाभवदिति।

यथावास्तु—तत्तदनुष्ठितकार्यकलापेन महासभेयं स्वजातीया, विजातीया वा भारतस्येति विज्ञातुं वयं न प्राभवाम । महासभायां सर्वत्रैव विजातीयभावः शरीरीव व्यराजत । अशनवसनभाषणादिषु गतिस्थितिविहृत्यादिषु च नैकत्रापि स्वजातीयभावः पर्यलक्ष्यत ।

सनातनसंस्कार-परिपन्थि यदेवाचरणं तदेवोच्छृङ्खलतापरपर्यायम् । महासभायां न केवलं पुरुषेषु हन्त स्त्रीष्वपि सर्वत्रोच्छृङ्खलतायाः स्वराजापरनामकं परं साम्राज्यमनुभूय मन्यामहे बहूनामेव दर्शकानां नयनानि विस्मयस्तम्भितानि बभूवुरिति । केवलपण्यवर्जनेन वैदेशिकवर्जनं न सम्भाव्यते यावद्वैदेशिकभावोऽत्र पदं निधास्यति तावत्का वार्त्ता वैदेशिकपण्यवर्जनस्य ? ब्रह्मकटाहभेदिन्या वाचा यथा प्रतिपादयन्ति साम्प्रतिका नेतारो न तथा कर्मणाऽपि समादधते । किमेतन्न त्रपाकरं नेतॄणाम् ।

किञ्चैतदेव सर्वोपरि विचारणीयं यत् प्रभूतमर्थक्षयं विधाय सम्पन्नेयं महासभा, सम्पादकाश्च परिमार्जितरुचयो नवीनशिक्षा-विशुद्धबुद्धयस्तादृशा देशहितैषिणः, तत्रापि यदि सर्वेषां मतानैक्यमेव फलत्वेन पर्यवसितं तर्हि तेषां जातिभेदादिकुव्यवस्थासंशोधनाय प्रयत्नो हास्यायैव ।

*　　　*　　　*

## कालिका साङ्गवेदविद्यालयः ।

विगतायां पौषकृष्ण सप्तम्यां बुधवासरे प्रातः कलिकातायां कालीघट्टे कालिकासांगवेदविद्यालयस्य प्रतिष्ठा महता समारोहेणाभवत् । श्रीशारदापीठाधीश्वराणां श्री १०८ शंकराचार्यपादानां करकमलेनैव विद्यालयस्योद्घाटनं सञ्जातम् । तत्रत्यः परमोदारचरितः श्रीमान् गुरुपद हालदारमहोदयो विद्यालयनिर्माणोपयोगिनीमष्टसहस्राधिकमूल्यवतीं स्वकीयां भूमिं वितीर्य न केवलं सनातनधर्मस्य तपस्विन्याः संस्कृतभाषाया अपि महतीं रक्षां व्यदधादिति कृतमुक्तेन ।

प्राचीनसदाचारसंरक्षणाय संस्थापितानामेतादृशानां विद्यालयानां संख्याधिक्यं वयं कामयामहे । महामहोपाध्याययोस्तत्र भवतोः श्रीमतो-र्लक्ष्मणशास्त्रि द्राविड़-वामाचरणभट्टाचार्य महोदययोरयमुद्यमः सर्वथा साधुवादैरभिनन्द्यतेऽस्माभिः ।

* * *

## सनातनधर्मसम्मेलनम् ।

विगतखृष्टजन्मदिनोत्सवावसरे कलिकातायां सनातनधर्मसम्मेल-नस्याधिवेशनद्वयं संघटितम् । एकं श्री शिवकुमारभवने तत्रभवतां पूज्यपादानां शारदापीठाधीश्वराणां शंकराचार्यचरणानामाध्यक्ष्येण अप-रञ्च श्रीमतो विजयचन्द्रसिंहमहोदयस्य भवनाङ्गणे तत्रभवतां स्वामि-वर्याणां श्रीगोवर्धनपीठाधीश्वराणां पूज्यपादानां श्रीशङ्कराचार्याणां भारतीकृष्णतीर्थपादानामध्यक्षयेण सम्पन्नमभूत् । उभयत्रापि बहूनां सुप्रसिद्धविदुषां माननीयसामाजिकानां धनिनां च समुपस्थितिरासीत् । सर्वत्रैव सनातनधर्मपक्षपातिनां सुमहानाग्रहः समलक्ष्यत । बहूनां विद्वद्वराणां व्याख्यानानि बहवः प्रस्तावाश्च धार्मिकजनमनांसि समावर्ज-यन् । सम्मेलनस्य विस्तृतं विवरणं ब्राह्मणमहासम्मेलननामके हिन्दी साप्ताहिकपत्रे प्रकाशितमस्ति ।

* * *

## दीक्षाप्रहसनम् ।

श्रीमन्मालवीयमहोदस्य रुद्रयागो वाराणस्यां सुरधुनीतीरे सम्पन्नः अन्तिमदिने च अन्त्यजान्तसर्ववर्णानां मन्त्रदीक्षा संवृत्तेति यथासमयम-स्मत्पाठकमहोदयेभ्यो न्यवेदयाम । सतु मन्त्रदीक्षाव्यापारः प्रहसनमिव नः प्रतिभाति । तत्र प्रधानो नटो यदि श्रीमन्मालवीयमहोदयो नाभविष्यत् तर्हि अस्माकं किञ्चिदपि वक्तव्यं नाभविष्यत् । आजन्मनः सदाचार संर-क्षणशीलस्यास्य महाभागस्य सनातनधर्मानुयायित्वं केषामविदितम् ? तादृशोऽपि यदि सनातनसदाचाराच्च्यवेत तदा निरवलम्बनोऽयं

सनातनधर्मः कं शरणं व्रजेत् ? कस्य वा सचेतसो धार्मिकजनस्य नैत-न्महते दुःखाय भवेत् ।

यथावास्तु कालोहि बलवत्तरः, न वयं तेन विषीदामः । अन्येद्युः एकेन नेतृचूडामणिना दुःसाध्येनामयेनाक्रान्तस्य गोवत्सस्य बलाद् वधेन स्वस्य धर्मे श्रद्धा परां काष्ठां प्रापिता,अपरेद्युश्चापरेण अन्त्यजेभ्योऽपि सप्रणवमन्त्रोपदेशं वितीर्य स्वस्य सनातनधर्मानुयायित्वं प्रकटीकृतम् । ये पुनर्विधवानां पुनरुद्वाह ऊढानाञ्च विवाहभङ्गः युवतीनामेव विवाहः इत्यादिकं समाजविघातकं धर्मध्वंसकञ्च मतं बलात्प्रवर्त्तयितुमिच्छन्ति ते तु मूर्द्धन्या एव । सर्व एवाहमहमिकया पुरतः स्वमाहात्म्यं प्रकटयितुं व्याकुलाः । दर्शं दर्शं दारुभूता भवामः । यद्येवमेव धर्मकञ्चुकावरण-मुन्मोच्यात्मनः स्वरूपं विशदीकृत्य दर्शयेयुर्नेतारस्तर्हि महानुपकारः साधितःस्यात् । न खलु वयमुभयतोमुखानां सर्पाणां समाजेषु प्रचारम-भिलषामः । अनतिचिरमेव यथा तादृशैर्महापुरुषैर्विरहितः समाजः स्यात्त-थैव वरम् । अथ प्रकृतमनुसरामः—

श्रीमन्मालवीयमहोदयस्य मन्त्रोपदेशसमयो न श्रुतपूर्वो न वा दृष्ट-पूर्वः । शास्त्रेषु सर्वत्रैव दीक्षादानस्य समयो निर्दिष्ट एवास्ति । तत्रापि वारनियमस्तिथ्यादिनियमो मासादिनियमश्चापेक्षित एव । काश्यां मङ्ग-लवासरे, कलिकातायां शनिवासरेऽपराह्णे दीक्षादानं सम्पन्नम् । सर्वमेव शास्त्रनिषिद्धम् ।

> रविवारे भवेद्वित्तं सोमे शान्तिर्भवेत् किल ।
> आयुरङ्गारके हन्ति तत्र दीक्षां विवर्जयेत् ॥
> बुधे सौन्दर्यमाप्नोति ज्ञानं स्यात्तु बृहस्पतौ ।
> शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे ॥ ( तन्त्रसारः )

साम्प्रतं विचारयन्तु विचारशीलाः कियत् शास्त्रानुसरणं कृतं माल-वीयमहोदयेन न केवलं स्वार्थसाधनमेव गुरोरुद्देश्यं शिष्यस्यापि शुभा-शुभविचारः सर्वथा विधेयो गुरुणा ।





* नमो ब्रह्मण्यदेवाय *

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )



"न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् )

प्रथम वर्षे } सौर माघः शकाब्दाः १८५० { दशम संख्या ।

## भारत गीतिका ।

गायन्ति च तव यशांसि कलकोकिलपटला
मधुरं मधु-मत्ता इव मधुपाः किल चंपलाः ।
उषसि राजराजेश्वरि विहगकण्ठगीतिभि-
र्गीतिभिरिव वन्दिनां हि जागर्षि समृद्धिभिः ॥ १ ॥

त्वमसि तमसि मोहसदसि विमलचन्द्रचन्द्रिका
विलसित सित हसित सुरभि यूथिबकुलमल्लिका ।
सुरभिमधुर मधुरपनस लकुचचूत मेदुरा
हससि लससि वितरसि फलमुन्नतगिरिबन्धुरा ॥ २ ॥

गगनं तव चन्द्रातप उज्ज्वलशततारकः
निशि विभाति राजेश्वरि धृतशतशतहीरकः ।
अद्यापि च तव दिवसे स्फुरति नयनमाननं
स्फुटति च तव सरसि सरसि कान्तकमल काननम् ॥३॥

अथ बबन्ध भुवनबन्धु रम्बुधिमपि भीषणं
दशकन्धर मिन्द्रविजयि—लङ्केश्वर रावणम् ।
यो जघान जानासि न दनुजसिन्धुमन्दरं
श्यामल नव दूर्वादल सुन्दर रुचिकन्दरम् ॥ ४ ॥
रामचन्द्रमपि न वेत्सि न जानासि जानकीं
रघुकुलपतिमहिषीं किमु दुहितरमपि तावकीम् ?
लक्ष्मणमपि भरतमपि न रामायणगायनं
स्मरसि तु ननु वाल्मीकिं विश्वभुवन पावनम् ॥ ५ ॥
रामोऽद्य न सीतापि न न लक्ष्मणो भरतः
कवि गुरुरपि न वाल्मीकिरंघ्रिपूतभारतः ।
अधुनापि प्लावयति हि विश्वममृतवर्षिणी
तस्य रामचरितगीति पीयूष तरङ्गिणी ॥ ६ ॥
अदहदहह खाण्डववनमाखण्डलपालितं
खण्डितशर सुरमण्डल भयविस्मयवीक्षितम् ।
स गाण्डीव कोदण्डक गुरु कुण्डल मण्डितः
पाण्डवकुल चण्डरश्मि रणताण्डव पण्डितः ॥ ७ ॥
पशुपतिमुद मुत्पादय दायुधशत वर्षणैः
पाशुपत मवाप पाप—घाति-शरममर्षणैः ।
त्रिपुरनगरमिव धूर्जटि रुज्ज्वलकणवर्षिणा
स हि निवातकवचमदहदेकबाणवह्निना ॥ ८ ॥
एक पाशु-पतशरेण यो जघान वीर्यवान्
गगनचारि दृढ हिरण्यपुरनिवासि दानवान् ।
जित्वा यदुवीरान् निजवररुचिजितरोचनां
यो जहार हरिभगिनीं हरिणलोललोचनाम् ॥ ९ ॥
परिजहार मुकुटादिकराजवेशमार्यया
विचचार च वने वने भ्रांतचित्त भार्यया ।

तदपि तदपि दधदपि सति धूलिधूसरवल्कलं
स समियेष नित्यमरिषु मस्तकरिषु मङ्गलम् ॥ १० ॥
कदलीवन मिव हैहयभुजसहस्र मच्छिनत्
क्षत्रियकुल मस्तक इव यो हि नित्यमकृन्तत् ।
तमजयदपि भीष्म एव यः सुरसरिदपत्यम्
प्राणानपि परिजहार सत्याय च न सत्यम् ॥ ११ ॥
वासुदेवमपि विशिखं योऽधारय दारान्
नो दधार पितुरपि यः प्रीणनाय दारान् ।
शरव्रातमुखशयितोऽपि च विपुलान् पृथगभिधान्
धर्मान् किल धर्मसूनु मुपदिदेश विविधान् ॥ १२ ॥

---

## विवाहविचारः ।

### ( पूर्वतोऽनुवृत्तः )

[ निबन्धकः—श्रीयतिराज सम्पत्कुमारस्वाम्याचार्यः । ]

---

रजस्वलाया उद्वाहे प्रतिग्रहीतुरपि वृषलीपतित्वं स्मृतयः प्रतिपादयन्ति । तथा च—

बृहस्पतिः—यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेय स्सविप्रो वृषलीपतिः ॥

आपस्तम्बः—प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते ।
यस्तां विवाहयेन्मोहात् स ज्ञेयो वृषलीपतिः ॥

अत्रिकश्यपावपि—यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्रद्धेयमपाङ्क्तेयं तं विन्द्यात्वृषलीपतिम् ॥

यात्वनूढैवतु मियात् सात्र वृषली । तथा चाहुः—

अत्रिकश्यपबृहस्पतयः—पितृगृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया हरंस्ताश्च न दुष्यति ॥

वृषलीसंग्रहीतुरशुद्धिः पापं च स्मर्य्यते—

वृषलीसंग्रहीता यो ब्राह्मणो मदमोहितः ।
सततं सुतकं तस्य ब्रह्महत्या दिने दिने ॥

न च पूर्वोक्तानि स्मृति वचनान्यृतोः परं दानप्रतिग्रहावेव प्रतिषेधन्ति नतूद्वाहमपि । अतोऽस्तूद्वाह ऋतोरनन्तरमेव । दानप्रतिग्रहौ तु पूर्वम् । ततो नर्तुमतीविवाहोऽशास्त्रीय इति वाच्यम् । "भार्यां विन्देत नग्निकां, कुलशीलवयोवृद्धः रूपाढ्यां नग्निकां शुभां, निधिना तु वरः कन्यामुद्वहेदात्मन-श्शुभाम्" इत्यादिभिरुद्वाहस्यापि नग्निकाया एव विधानात्परतो विधानाभावाच्च । न च कन्यासंग्रह एवोद्वाहः । संस्कारात्मकस्तु विवाह ऋतोः पश्चादेवेति शंकनीयम् । विवाहपदार्थनिरूपणावसर एवास्याः शंकाया उत्तरितत्वात् ।

किञ्च—"रात्रावहनि वा दानं कन्यायाः स्वीकृतं यदा ।
तदानीमेव होमस्स्यात् विवाहस्य च सिद्धये" इति
लघ्वाश्वलायनस्मृत्या दानप्रतिग्रहहोमानां यौगपद्यबोधनाच्च ।

यत्तु गान्धर्वस्य ब्राह्मणादीनां धर्म्मतया विधानात् तत्र ऋतुमत्यास्संस्कारोऽकामेनाप्यङ्गीकर्तव्य एवेति केचित्प्रत्यवतिष्ठन्ते । तदसत् । ब्राह्मणविषये तस्याप्रशस्ततायाः प्रागेवावेदितत्वात् । न चाप्रशस्तत्वेऽपि प्रत्यवायाजनकत्वात् यदा कामी गान्धर्वेणोपयच्छति तदा रजस्वलाया अपि संस्कारो दुर्वार एवेति वाच्यम् ।

"इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वस्सतु विज्ञेयो मैथुन्यः कामसंभवः" इति हि तल्लक्षणं मनुना स्मृतम् । तत्र संयोगश्च नावश्यं मिथुनीभावलक्षणः पुंसा सह संप्रयोग एव अपि तु परस्परभावबन्धोऽपि । तथा च कदाचिदप्राप्तरजस्काप्यासन्नरजस्का काचनाधीतकाव्यादिकाऽथवा व्यवहारविदितलौकिकव्यवहारा चातुर्यविशेषशालिन्यात्मद्रावकसौंदर्यादिगुणगणं विद्याविशेषशालिनं वा कञ्चन पुरुषविशेषं चक्षुषा साक्षा-

त्कृत्यानुरज्येत्। अप्राप्तरजस्कामप्यत्यासन्नरजस्कत्वात् लावण्यवती-मुदूढकुचभारामुद्दीपयन्तीं कामिनीमवलोक्य तत्कटाक्षावलोकनकव-लीकृतचित्तः कश्चन कामयेत। अथवास्तु पुंसा सह संप्रयोगलक्षण एव संयोगः। स च ऋतुमत्या एवेति न नियमः,ऋतोः प्रागपि तस्य लोकवि-दितस्य दुरपह्नवत्वात्। ऋतुयोग्ये वयसि पुंसा संप्रयोगः स्यादेव अगर्हितत्वात्। ज्योतिषग्रन्थेषु निषेकमुहूर्तनिर्णयेन ज्योतिषग्रन्थ-काराणां प्रत्युताभिमतत्वाच्च। तदुक्तिरूढाविषयिणीति तु ऋतोः प्रागपि संप्रयोगयोग्यतासाधने न किञ्चित्प्रतिबध्नाति। अतो गान्धर्व-स्यानृतुमतीष्वपि संभवात्तत्रैव प्रवृत्तिः। अन्यथाऽसंस्कृतायां रजस्संभवे प्रागुक्तस्मृतिवचनविरोधो दुर्वार आपद्येत। नचैव मप्यृतुमतीष्वपि गान्धर्वोपयमः पुराणादिषु प्रसिद्ध इति वाच्यम्। प्रागुक्तस्मृति वचने ब्राह्मणविप्रपदोपादानेन वृषलीपतित्वस्मरणात् क्षत्रियादीनामति-दूष्यत्वविरहात्। अतो रजस्वलोद्वाहः क्षत्रियस्य नैव दोषाय। ब्राह्मणस्य तु दोषायैवेति सिद्धम्। एतेन गान्धर्वविवाहविधानमृतुमती-विवाहे गमकमिति वदन्तस्समाहिताः।

यत्तु सोमः प्रथम इत्यादि मन्त्रलिङ्गान्यृतुमतीविवाहसाधकानि। तथाहि—मनुष्यस्य चतुर्थपतित्वं प्रतिपादयत्ययं मन्त्रः—

"व्यञ्जनेष्वथ जातेषु सोमो भुङ्क्तेऽथ कन्यकाम्।
पयोधरेषु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलाम्॥" इति।

गृह्यसंग्रहदिशा रजःकाले वह्निर्भुक्त्वा चतुर्थाय मनुष्याय ददातीति पुष्पवतीविवाहः शास्त्रीय एव। "विवाहो ह्यष्टवर्षायाः कन्यायाश्च प्रशस्यते" इति स्मृतिविरोधो नाशङ्क्यः। स्मृतिमूलकत्वेनैव स्मृतीनां प्रामाण्यात् प्रामाण्ये श्रुत्यपेक्षया स्मृतेरेवान्तरङ्गत्वात्। प्रयोगार्थसम-वेतार्थस्मारकाणां मन्त्राणां विध्यन्तरोपस्थितत्वात् विध्यैक-वाक्यतयैव मन्त्राणां प्रामाण्याच्च स्मार्तानामपि विधीनामेव प्राबल्य-मिति तु न हि दृष्टा चोदना। अपच्छेदाधिकरणन्यायेन पूर्वात्परबलीय-

स्त्वस्य जैमिनीयतन्त्रसिद्धत्वात् । सजातीयानामेव बलाबलविचारस्य युक्तत्वात् । सजातीयविध्यैकवाक्यतयैव मन्त्राणां प्रामाण्याच्च । स्मार्तविधेः श्रौतमन्त्रस्य च कथं सजातीयता । अतोऽयं मन्त्रो रजस्वलाविवाहस्य शास्त्रीयतां साधयतीति तदप्यविचारितरमणीयम् । तथाहि सोमो भुङ्क्ते तु कन्यकामित्यादिभिः सोमादीनां भोक्तृत्वलक्षणं पतित्वं प्रतीयते । "विवाहो ह्यष्टवर्षायाः कन्यायाश्च प्रशस्यते" इत्यादिभिरस्वामित्वलक्षणमपि पतित्वमाश्रीयताम् । अथ स्वामित्वलक्षणमेव पतित्वं सोमः प्रथम इति मन्त्रबोधितम् । सोमो ददिति मन्त्रबोधितं तु भोक्तृत्वलक्षणम् । तेषां स्वामित्वलक्षणपतित्वपूर्वकं मनुष्यस्य पतित्वम् । अतोऽनृतुमत्या विवाहे मन्त्रस्य विनियोगोऽप्रत्यूह एव । विवाहोत्तरञ्च भोक्तृत्वलक्षणं पतित्वम् । तच्च मनुष्यस्य देवभोगोत्तरमिति द्वितीयो मन्त्रः प्रतिपादयतीति समाधातुं शक्यत्वात् ।

यदपि त्रिरात्रदीक्षायां विहितं ब्रह्मचर्यमेवर्तुमतीविवाहस्य ज्ञापकमिति । तथाहि—"ब्रह्मचर्यं नाम गुप्तेन्द्रियाविकारः" इति योगसूत्रबोधितलक्षणलक्षितब्रह्मचर्यस्यापुष्पवतीविवाहे विकाराप्रसक्त्या विधानमनुमापयत्यृतुमती विवाहमिति तदप्यापाततः ।

"स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेवच ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । इति ।"

बृहस्पत्युक्तमैथुनाङ्गेषु यथासंभवं केषांचित् एकशय्यायामनृतुमत्यामपि संभवात् । कस्यचिच्चपलचित्तस्य तस्यामपि गुप्तेन्द्रियविकारोदयसंभवाच्च । अत एवापुष्पिणीरमणे निरयपातदोषस्मरणमुपपद्यते । अतोऽनृतुमतीविवाहेऽपि ब्रह्मचर्यविधानं सोपपत्तिकमेवेति ।

अथ चतुर्थरात्रे समावेशनमन्त्रजपविधानं पुष्पवतीविवाहं पोषयति । हरदत्तमतेऽसत्यपि रागेऽवश्यकर्त्तव्यस्य समावेशनस्य वध्वा सह मैथुनार्थशयनात्मकस्यापुष्पवत्यामयोगात् । रागतः प्राप्त-

समावेशनाश्रितमन्त्रजपविधानमिति सुदर्शनमतेऽप्यृतोः प्रागेव विवाहेऽनृतुमत्यां कदापि रागस्याप्रसक्तेश्च ऋतुमतीविवाह एव शास्त्रीय इति चेत् । अत्र केचित् किमिदं समावेशनं दृष्टार्थमदृष्टार्थं वा । आद्ये पक्षेऽप्यष्टाङ्गमैथुने केषाञ्चिदङ्गानामृतोः प्रागपि संभवात् तादृशाङ्गविशिष्टमैथुनार्थशयनस्यानृतुमतीविवाहेऽपि संभवः । अथादृष्टार्थमेवेति द्वितीयः पक्षः तथापि अनुवाकशेषजपादेवादृष्टसिद्धेर्मिथुनीभावलक्षणदृष्टप्रयोजनस्य विरहेऽपि अदोष इति नतुमतीविवाहसिद्धिः ।

परे तु—आपस्तम्बस्यतु सन्निहित एव काल ऋतोः प्राङ् मुख्यः कालोऽभिमतः । तथाच वीरमित्रोदये यमपराशरापस्तम्बाः,—

"प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।
मासिमासि रजस्तस्याः पिबन्ति ऋतुशोणितम् ॥" इति । किञ्च,

"त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥"

इति मनुवचनेन द्वादश एव वर्षः स्मृत्यन्तरसहकारेण रजसः प्रागेव मुख्यः कालः । ततः प्रागष्टमवर्षपर्यन्तः पूर्वः पूर्वः धर्मावसादभिया त्वरावत एवेति प्रतीयते ।

अत्रार्थे "गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥"

इति रजसः प्रागुत्तरोत्तरवयसि दानस्य प्रकृष्टफलकथनमुखेन मुख्यतां सूचयन्दरीचिवचनमप्यनुकूलम् ।

"विवाहो ह्यष्टवर्षायाः कन्यायाश्च प्रशस्यते" इति स्मरणं ह्यापस्तम्बाद्यतिरिक्तानामेषां मते चतुर्थरात्रसमावेशनं नास्ति तन्मतमनुसृत्य । यद्यापस्तम्बादिमतेऽप्यस्यष्टमादिवर्षाणामपि प्रशस्तता । तथाप्यष्टाङ्गमैथुने केषाञ्चिदङ्गानां तदानीमपि संभवान्नकिञ्चिद्बाधकम् । यदि व्यवायात्मकमैथुनार्थमेव शयनमित्युच्यते तर्हि शेषहोमान्तं कर्म परि-

समाप्य यदा तद्योग्यता तावत्प्रतीक्ष्यताम् । यदि समावेशान्तस्य कर्मणो मध्ये विच्छेदः समावेशनानन्तरानुष्ठेयवैश्वदेवादीनामननुष्ठानं च स्यादिति धर्मलोपाद्भीस्तर्हि द्वादशदिवसलपिण्डनवदस्तु चतुर्थ-दिवसरात्र एव । पूर्वोक्तदिशा मैथुनार्थशयनसंभवात् । एवञ्चासन्ना-र्तवायाः पुंसा सह संप्रयोगयोग्यतायाः पूर्वमेव साधितत्वेन चतुर्थरात्र समावेशनं न ऋतुमतीविवाहमवगमयतीत्याहुः ।

यद्यपि ऋतुमतीविवाहवादिनः "ताभ्यामनुज्ञातो जायां विन्देता-नग्निकां समानजातीयामसगोत्रां मातुरसपिण्डां" इति जैमिनिवचनं स्वमतव्यापकम् । तत्रानग्निका ऋतुमती । अतएव गृह्यसंग्रहे "ऋतु-मतीत्वनग्निका" इत्युक्तमित्याचक्षते । तथापि भूयसां स्याद्बलीयस्त्व-मिति न्यायेनानेकस्मृत्यनुरोधेन जैमिनेरप्यनृतुमतीविवाहतात्पर्यकल्प-नमेव वरम् । तथाहि—

"यावन्न लज्जयाङ्गानि कन्या पुरुषसन्निधौ ।
योन्यादीन्युपगूहेत तावद्भवति नग्निका ॥"

इत्यनेन नग्निका शब्दार्थनिर्णयात् तद्भिन्नानृतुमतीत्येव तदर्थः । गृह्यसंग्रहोक्त "ऋतुमतीत्वनग्निकेति" वाक्यशेषस्त्वन्यथा नेयः ।

" नग्निकां तु वदेत्कन्यां यावन्नर्तुमती भवेत् ।
ऋतुमतीत्वनग्निका तां प्रयच्छेत्तु नग्निकाम् ॥"

इति हि तदीयं वचनम् । तस्यायमर्थः । ऋतोः प्रागेव कन्यका नग्निकाशब्दवाच्याऽतः परमनग्निकापदवाच्या । सा च बहुस्मृतिविरो-धान्न देया । अतः पूर्वोक्तलक्षणलक्षिता नग्निका देयेति । अत एव " तां प्रयच्छेत्तु नग्निका " मिति वाक्यशेषात् तथैव पर्यवसानात् । अत एव गोभिलः स्वसमानशाखीय स्वगृह्ये "नग्निका तु श्रेष्ठा" इति सूत्रितवान् । अत ऋतुमतीविवाहे न किञ्चिदसाधारणं गमकम् ।

" काममामरणात्तिष्ठेत् गेहे कन्यर्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥"

इत्यनेन गुणवद्वरालाभे संजातरजसोऽप्यप्रदानं वदता मनुना रजसः प्रागवश्यं देयेति नियमो नेति सूचितमिति चेन्न ।

"दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥"

इति बौधायनवचनविरोधापत्त्या तस्य वचनस्य गुणवद्वरप्रशंसायामेव तात्पर्यात् । संभवत्यविरोधे मुनिवचनानां परस्परविरोधकल्पनं त्वन्याय्यम् ।

ननु—"त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥".
अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥

इत्यादिवचने ऋतुमतीविवाहश्शास्त्रीय एवेति चेदत्रोच्यते ।

ब्राह्मणस्यर्तुमतीविवाहस्य निषिद्धत्वात् क्षत्रियादिविषयाण्येवेमानि वचनानीति केचित् । अन्येत्वापत्कल्पतया रजसः पूर्वं गुणवद्वरालाभादिना दातुरपि रजसः पश्चाद्गुणवद्वराऽलाभे तदभावे वा तृतीयवर्षपर्यन्तं प्रायश्चित्तादिपूर्वकं दानाधिकारसंपादनेन दानाभ्यनुज्ञाद्वारा विवाहप्रतिपादनपराणीति वदन्ति । परे तु नग्निका तु श्रेष्ठेति गोभिलसूत्रपर्यालोचनयाऽस्याप्रशस्तत्वम् । एतादृशविवाहे च तस्यां जातमपत्यं ब्रह्मधर्मद्वेषि भवति । अप्रशस्तविवाहे तथात्वस्य मनुना प्रतिपादितत्वात् । तादृशवचनानि पूर्वमेवोदाहृतानि । अतो ब्राह्मणानां हेय एवायं विवाहः । "ऋतुमतीत्वनग्निका तां प्रयच्छेत्त्वनग्निका"मिति पाठेऽप्येतादृशतात्पर्यस्य वर्णनेन न तदापि ऋतुमतीविवाहस्सिध्यति । एवं ऋतुमतीविवाहसाधकप्रमाणाभावेऽपि प्रतीतिमात्रसिद्ध ऋतुमतीविवाहः शास्त्रीय एवेति ये केचन तुष्यन्ति ते किं वा कर्म कृत्वा न तुष्यन्ति । एवमनन्यथासिद्धस्य कस्यापि प्रमाणस्यर्तुमतीविवाहे संभवेऽपि प्रमाणप्रदर्शनाभिनिवेशः केषाञ्चित् कलिमहिमविजृम्भणाधीन इति न तेषु दोषान्वेषणं विदुषामुचितमिति मन्यामहे ।

---

# नेतृ चरितम् ।

## [ भाणः ]

निबन्धकः—म० म० पं० श्रीपञ्चानन तर्करत्नः ।



## [ पूर्वतोऽनुवृत्तम् ]

मिथ्याषट्टः— ( दृष्ट्वा ) सन्निहितं परिक्रमस्थानमिदं महिलानाम् ।
(निरूप्य) अन्योन्यं प्रतिबद्धचीरवसनप्रान्ताश्च्युतेः शङ्कया,

यष्ट्यालम्बनमन्तरेण चरणन्यासेऽप्यशक्ता इव ।
के न्वेते सुचिरोपवासपिशुनक्षामाङ्गदृष्टिक्रमा
मन्दं मन्दमितोऽभियन्ति विकृतच्छायाङ्गनासङ्गिनः ॥

अहो अपूर्वदर्शनमिदं तरुणपौराणाम् ।

विदीर्णजीर्णमलिनवासः कौशलसम्वृता ।
ह्रिया विलीयमानेव जरती सावगुण्ठना ॥

स्त्रिया वस्त्रपरिधानसंस्थानेन जानामि पूर्ववङ्गीयाः खल्वमी । पुंसां मलिनयज्ञोपवीतेन शिखाबन्धनेन च जानामि ब्राह्मणा इति । दृष्टपूर्व-चच्च प्रतिभान्ति तत्प्रवृत्तिमेषां ज्ञास्यामि । ( आकाशे ) भो वैदेशिकाः किमर्थमत्र समागता यूयं कमुद्दिशं जिगमिषथ ? किं ब्रूथ ?

वयं हि सुतपाठनाव्ययभरेण दैन्यं गताः
सुतः स तु सुशिक्षितो नगरवासहर्षाकुलः ।
न पश्यति च नो मुखं न च ददाति किञ्चित् तत-
स्तदेकशरणार्थिनः पुरमिदं प्रपद्यामहे ।

( निरूप्य स्वगतं ) पिता माता पितृव्यौ च मे समागताः, कथमेतेषु सभ्यजनोचितपरिच्छदविरहितेषु मूर्तिमत्स्वेव कुसंस्कारेषु पितृत्वादिकं स्वीकृत्यात्मानमधः पातयेयम् ? कथं वा प्रत्याचक्षीय ? भवत्वेवं तावत् ।

(प्रकाशं) तदन्विष्यत तनयम्। (पुनराकाशे) किं ब्रूथ चिराद्दृष्टोऽसीति? भो वैदेशिकाः, भ्रान्ताः स्थ कमभिलक्ष्य समागताः कश्चोपतिष्ठते? तदितो गच्छत प्रकृतोद्देशाय, (आकाशे) किं ब्रूथ, न वयं भ्रान्तास्त्वमेवास्मदुद्दिष्टपात्रमिति? धिग् धिक्!

मिथ्यैव वृद्धविप्राणां शरणं परमं चिरात्।
जराजनितदोषेण मूढानां चैव विभ्रमः॥

तद्गच्छत यूयम्। (दृष्ट्वा स्वगतं) रोरुद्यमानाः प्रतिष्ठन्ते, प्रतिष्ठन्तां नाम भुञ्जतां स्वाविवेकविजृम्भितस्य फलम्।

उपस्थितिर्विनाह्वानं ग्राम्याणां नगरेऽर्थिता।
मूर्खाणां शिक्षिताल्लिप्सा सर्वं खल्वविवेकजम्॥

इदन्त्वापाततः, परमार्थस्तु—

मलिनवसना नग्नप्रायाः स्खलद्विकृतोक्तयो,
गलितवयसो दीना दूना नवाचरणेक्षणात्।
सशिखशिरसः स्पृश्यास्पृश्येष्वलङ्घितशासनाः,
कथमिह पितृस्थानेऽस्माकं भवेयुरशिक्षिताः॥

तद्यदाचरितं तदिदं सुशोभनमेव। हा रत्नमन्विष्यता मया भस्मैव लभ्यते। इदानीं तस्याः स्मृतिरेव मे शरणम्।

कोपारुणं नवदिवाकररश्मिगूढ-
फुल्लारविंदसुभगं वदनं तदीयम्।
चित्ते चिराय मिलितं मम नेत्रवर्त्म,
भूयः करिष्यति कदा समलङ्कृतश्रि॥

पुनरन्विष्यामि (परिक्रम्य दृष्ट्वा) अहो तर्कादयः यद्यदस्माभिराकांक्ष्यते तत्र तत्रैव दत्तसम्मतयः खल्वमी ब्राह्मणपण्डितस्वरूपं विशेषतः समुद्धाटयन्ति—तथाहि—

अस्मांस्तोषयितुं सखिप्रणयितां लब्धुं प्रभुं सेवितुं,
कीर्तिं केतुमर्विं चिन्तनुमथवा प्राप्तं प्रभूतं धनम्।

दृष्टं हेतुमपेक्ष्य कंचन चिराचारं त्यजन्तो नृणां,
विश्वासं द्विजपण्डितेषु नितरामेते लघूकुर्वते ॥

तदुपसर्पामि, अथवा ब्राह्मणपण्डितप्रभावं समाजाद् दूरीकर्त्तुमिमे तावदस्माकं सहायभूता इति मन्यामहे, किन्त्वेतेऽपि ब्राह्मणपण्डिताकृतय इति पश्यतामासीदति नः स्वयमेव पराङ्मुखत्वम् उदेति घृणा,स्स्फुरत्यवज्ञा, तद्गच्छन्त्वेते वराकाः । न च दृश्यते सा शैलूषसुन्दरी तदन्यतः पश्यामि । ( अन्यतोऽवलोक्य ) अहो महान् जनसम्मर्दः । किञ्च—

श्रुतिक्लेशा ह्लेषाश्रुतिरुपगतैर्बृंहितशतै
मिलन्ती मूर्च्छन्ती दिशि दिशि जनानाकुलयति ।
पदातीनां व्रातः समचरणपातक्रमरतो
जयोद्घोषै रोषैरिव पटहनादं च वृणुते ॥

अकाण्डे कथमेवमुत्सवयात्रा ! ( स्मृत्वा ) कमलिनीमुखकमल-सुरभिसुरासारसेवनसुभगस्यप्रसुप्तितबहिःस्मृतेर्नैयमुत्सववार्त्ता चेतसि प्रादुरासीदिदानीं पुनःस्मरामि विप्रकन्याया श्चाण्डालदारकेण वरणोत्सवोऽयमिति । अत्र सर्व एव नेतारः सन्निधास्यन्ते । (पुनर्निरूप्य सहर्षं ) हन्त एते सर्व एवोपस्थिताः । ( उपसर्पितुमिच्छन् निवृत्य सखेदं ) परिहितपरिचितप्रतीच्याम्बरोऽस्मि कथमेनानुपसर्पामि, ( विमृश्य ) भवतु परिवर्तितवासाः तद्वरणपुण्ये क्षेत्रे एवोपस्थास्ये । ( घटीयन्त्रमवलोक्य ) वरणवेला होराचतुष्टयान्तरिता वर्त्तते तदितः क्षिप्रमेव गमनं विधेयम् ( इति परिक्रामन् इतस्ततो दृष्टिं दत्त्वा ) अस्यां हि महिलाजनतायां परिबद्धवैजयन्तीशोभितायाम् अपि वर्त्तेत सा तन्वङ्गी ? ( निरूप्य ) नहि नहि, नूनं हि सा—

पुरुषकञ्चुकवञ्चकतुङ्गता-परिसरस्तनशैलनिवारिता ।
पतिपशोरपराधरुषाऽथवा, विकलितां निभृतां कुरुते स्थितिम् ॥

किमेवं भविष्यति ? यद्भवतु बलीयान् स्मरसन्तापः, कस्तावदु-पायः ? ( विचिन्त्य ) अथवा हृदय समाश्वसिहि—

सर्द्दा गौरमहोदयश्च जयतां यद्दःश्थराजाज्ञया
सर्वस्मिन् निलये भविष्यतितरामेवंविधः स्त्रीजनः ।
अस्या अप्यधिकोऽथवा सुपुरुषान् पुष्पोपमान् सर्वदा
जिघ्रंश्चापि जहत् करिष्यति नवक्रीड़ामलं चिन्तया ॥

अस्ति पुनरेका चिन्ता,

कुसंस्काराच्छन्ना भवति नितरामार्यमहिला
सतीनाम्ना ख्यातिं चिरमभिलषन्तीं प्रियतराम् ।
विधौ राज्ञो जातेऽप्यहह न करिष्यत्यनुशयं
गते दीर्घे काले जरसि मम का तृप्तिरथवा ॥

( विचिन्त्य ) तथापि—

असौ श्रीमदनो जीयाद् यत्प्रवर्त्तितकर्मणाम् ।
स्त्रीपुंसानां सतीर्थानां भवत्यव्याहता रतिः ॥

तदनुगमाच्चाचिरादेव—

नागर्यो हि कुमार्यो ध्वस्तभ्रान्ताः समाश्रितालोकाः ।
राजविधिमनुसरन्त्यो वाञ्छां नः पूरयिष्यन्ति ॥

( क्षणं विचिन्त्य सखेदं ) किन्तु—

आश्वासितमपि हृदयं नाश्वसिति विनाद्य नलिनतनयां ताम् ।
तृषितोऽर्थयते सद्यः शिशिरं-जलमेव नो खण्डम् ॥

तद्भूयोऽन्विष्यामि ( परिक्रम्य दृष्ट्वा ) नन्वेते शिखिनः केकारवेणेव दुर्बोधवचसा दिङ्मण्डलं मुखरयन्ति, मन्ये ब्राह्मणीचाण्डालदाम्पत्य-मेवैषामालोच्यं श‍ृणोमि तावदेषामसतः संलापान्, किमुच्यते तावदनेन मध्यमवयसा—( श्रवणमभिनीय ) कथमेवमसतो वादाननुभविष्ये । ( विमृश्य ) अथवा दुर्दैवविडम्बितानामविवेकगरिमप्रदर्शनार्थं तेषु-पहासार्थञ्च शिक्षितानां प्रचारणीयेयं प्रवृत्तिः तत् सर्वमेवानुवदिष्यामि । ( पुनः श्रुतिमभिनीय ) उच्यते खल्वनेन—

शबरमतनाम विषयो जयतितरामीशरचितसङ्केतः ।
यत्र हिंसतां नराणां शबराणामिव मतिर्भवति ॥
हिंसापराङ्मुखात्मा ढक्कानिनदेन घोषितख्यातिः ।
कथमन्यथा स धेनोर्मुमूर्षुवत्सं विषैर्हन्यात् ॥ इति ।

कनीयांस्तु ब्रूते—हिंसापराङ्मुखात्मेति न सम्यक्—यतः

प्राचीनभारतभवोचितबाह्यवेशः
पाश्चात्यभावपरिपूर्णमनोऽन्तरालः ।
प्रच्छाद्य हिंसनमहिंसनकैतवेन
ख्यातो विमूढजनताजनिताभिमानः ॥

अपि चासौ—स्वल्पार्घं दुष्टु वसनेषु महार्थसिद्धिं
प्रख्यापयन् द्विगुणलाभदविक्रयेषु ।
व्यापारयन् स्वसुतमुज्झितवित्तलोभ-
स्त्यागी महात्मपदवीं गमितो नवीनैः ॥ इति ।

बर्बीयानिदानीं ब्रवीति,—

उद्भ्रान्तो बलिदानदर्शनभिया यः कालिकां पालिकां
निन्दादूषितभाषितैः परिहरन्नख्यापयत् स्वां दयाम् ।
गोवत्सस्य स मृत्युमाशु घटयन् पाषण्डवर्त्मस्थितो
दुःखं मोचयति स्म हन्त जड़धीरात्माभिमानोद्धतः ॥

आः कोऽयममुष्य नास्तिकस्य व्यामोहः यदसौ मनुते स एव दुःखस्य दाता मोचयिता च, परमसौ न जानीते विषप्रयोगेण निहतस्य तस्य वत्सस्यामुत्र एतदपेक्षया दुःखातिशयो भविष्यति न वेति । अपि च वर्षशतायुषो मनुजस्य दृष्टौ क्षणो यथाल्पीयान् कालः, नित्यस्थिति-काया देव्या दृष्टौ शतवर्षकालस्ततोऽपि लघिष्ठः, तथा स्वल्पसुखो मानवो गोवत्सस्य रोगदुःखं यादृगसह्यं मन्यते, महत्तमानन्दा देवी पशुजीवनं यदि ततोऽप्यधिकतरं दुःखमिति मन्यते न तद्वितथं भवति, मूढो मानवो यदि स्वकल्पित दुःखमोचनाय निरीहं मुमूर्षुं गोवत्सं हन्यात् को दोषः

सर्वज्ञाया देव्याः शास्त्रप्रवर्त्तनेन पशुदुःखस्य वास्तवमोक्षणाय तद्धनने ? इतीदमिङ्गितेन सूचयाम्बभूव सर्वान्तर्यामिनी देवी यदसौ चिरानतीत एव देवीविनिन्दने स्वयमेव गुरुतरनिन्दया मलिनो जातः। अत एवोच्यते शिष्टैः—अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते। इति।

अहो एतेऽपि कूपमण्डूका महात्मानमधिक्षिपन्ति, तत् किमेषां रसनाच्छेदेन हृदयक्षोभं निवारयिष्यामि—( कृपाणं दण्डकोषादपाकृष्य ) अये कृपाण,—न मे करस्य शोभायै त्वां दधामि कदाचन।

वीरोऽहं मम शस्त्रं त्वं दुष्टान् शाधि द्विजाधमान् ॥

( इति सक्रोधं गन्तुमुद्यतः अन्यतो विलोक्य सभयं )

रक्तोष्णीषाः सङ्घबद्धाः सशस्त्राः
केनामैते पूरुषा सम्मुखीनाः।
( सकम्पं ) रक्षायुक्ताः, कां दिशं यामि शस्त्र
त्वं मे शत्रुः, गच्छ दूरं निगूढम् ॥

अन्तर्दण्डं त्वरया संवृत्य क्षिप्त्वा उपविश्य मुखविकृत्या क्लेशमभिनीय ) आः कष्टं चिरदौर्बल्यनिगृहीतोऽहं कथमपि जीवामि। नाहमेभिर्लक्षितः, गताः सर्वे, हन्त प्रत्यागतप्राणोऽस्मि। तत् किं कृपाणगर्भं दण्डमन्विष्यामि ? अथवा तिष्ठत्वसौ यदि केनचिदभिलक्ष्येय। तदिदानीं तामेवान्विष्यामि शैलूषतरुणीम्। ( दृष्ट्वा ) अत्र त एव द्विजाधमाः संलपन्ति ( श्रुतिमभिनीय ) अन्यं पुरुषधौरेयमधिक्षिपन्त्येते, कश्चित् सोपहासमिव ब्रवीति—

निकृतिनिचितभाण्डे साधितानेकदण्डे
परहितमिषभण्डे पश्यतैतानि चण्डे।
तिलकविशिखमौराड्ये रामनामपि तुण्डे
रहसि यवनकुण्डे स्नानशौचे च पण्डे ॥

अपि च तद्गूढाशयः—

क एष धर्मो ननु धूर्त्तकृत्यं यन्नामयोगाद् विगलन्ति मूढाः।
आश्रित्य तं मादनमोहने च कार्ये जनानामिति युक्तिरग्र्या ॥

तिष्ठन्त्वेते महाजननिन्दकाः पातकिनः, नह्यत्र तस्याः पुण्यस्थानं तदन्यतः पश्यामि ( परिक्रम्य ) अपावृतं नवरङ्गस्थानमिदं, यदि नामात्र सा भवेत् । ( निरूप्य ) एते संस्कृतविद्यालयान्तेवासिनो रूपकं निर्वर्त्तयन्तो दृश्यन्ते अत्रैकस्य नाट्योक्तिः—

गर्भाधानकृते पुरैव तनयां म्लेच्छाय यो दत्तवान्

स्वैराहारविहारसङ्करकरोऽसङ्कीर्णदृग् विप्रजः ।

राजत्वं यदि तस्य भारतभुवः सर्वैरनुज्ञायते

स्वाराज्यं न तु लब्धमेव किमहो दीनात्मभिः स्थीयते ॥

अथ ममाप्यस्ति कश्चित् शुभोदन्तः, तथाहि—

सप्रणवमन्त्रदीक्षा नीचानां या प्रवर्त्तितेदानीम् ।

देशहितो मम कोषो यास्यति पूर्त्तिं तया युक्त्या ॥

तत्रापरस्य प्रतिवचनम्—कथमिव ?

प्रथम आह—नीचा हि भारते नॄणां शतेषु नवतिक्रमाः ।

बहुकोट्योऽल्पदत्त्वेऽपि गुणनाद्धनराशिदाः ॥

द्वितीय आह—नन्वेवं तद्ब्राह्मणानां वृत्तिच्छेदो भविष्यति ।

प्रथम आह—मूढ़ परचिन्तनपटीयसा चेतसा स्वकल्याणं भावयिष्यसि ? विचारय तावत्—

तद्ब्राह्मणा यदि भवन्त्यपि वृत्तिहीना

देशस्य का क्षति रितो यदि वा म्रियेरन् ।

मत्कोषपुष्टिरथ लोकहितार्थमेव

या मां करिष्यति चिराय परार्थयुक्तम् ॥

द्वितीय आह-भगवन्, शाधि मे कृत्यम् ।

प्रथमः सपरितोषं ब्रूते—आदौ त्वया कीर्त्तिरुपार्जनीया

प्रोल्लंघ्य शास्त्रं जनतादरार्थम् ।

ततश्च वित्तान्यनतिप्रयासै-

र्लभ्यानि येभ्यः स्पृहयन्ति सर्वे ॥ इति ।



भवन्तु तावदेते स्वप्रयोगनिर्वृताः अहन्तु मां प्रति प्रयुक्तानां श्रीगुरु-

वचनानामनेन प्रसङ्गेन स्मरामि—तथाहि—

मुख्यानामनुवर्त्तनं प्रथमतः कुर्या निगूढाशयं
वाचः पेशलकौशलाञ्चितपदन्यासाः प्रयुञ्ज्यान्निरम्।
तत् साहायकलब्धवाञ्छितफलः प्राप्तान्तरस्तांस्ततो
नीचैःकृत्य शिरः स्थितः स्वयमहो त्वं स्याः कृती कौशलात्॥

अपि च स्वात्मानमुदाहृत्य समर्थितोऽयमर्थः यथा सर्वाधिकः कश्चिन्मया प्राज्ञेन वञ्चितः स्वप्रतिष्ठापरिभ्रंशादवरूढोऽनुतप्यते इति। अन्यच्चोक्तम्—

सत्यार्जवे हालिकमुख्यशीले
न तत्प्रसङ्गं सुधियः सहन्ते।
मिथ्या च शाठ्यञ्च परौ सहायौ,
प्रच्छादनं किन्तु तयोर्विधेयम्॥

अपिच—मानो धनञ्च द्वयमेव लक्ष्यम्
एकेन हीनं न परं विभाति।
नोपानदेका नरपादशोभां
विना द्वितीयां कुरुते कथञ्चित्॥

ततश्च मयोक्तं भगवन् परहृदयग्रहणमन्तरेण मानलाभो धनलाभो वा न भवति, तद्ग्रहणस्य कस्तावदुपायः? तत्रोक्तं तैः—

मनसि गरलधारा, क्षम्यतामित्यजस्रं
विनयबहुलवाग्भिस्तोषणं मोषणं वा।
जनहितकरकर्मच्छद्मना यस्य चार्थः
परहृदयगृहीतिस्तेन साध्या सुखेन॥

अथापृच्छमहं भगवन्, कुतस्तावदेतावद्धनं संगृहीतं संगृह्यते च, कथं च सन्सु शिष्टेषु कर्मसु अट्टालिकाक्रमवृद्धिः क्रियते? तत्र तैरुक्तम्।

दुग्धा भूपतयो धिशाश्च धनयो मुग्धा गिरा मे गुणै-
र्निःसङ्गं [illegible] पदानिशम्।

इत्यानीतधनोत्करव्ययकृतानेकाट्टसंघट्टनं
मैवं चेदभविष्यदत्र मम रे कोषो व्यवर्त्स्यत् कथम् ॥

तथापि कथं भगवतां कोषवृद्धिरिति मया पृष्टा गुरवः सरोषमिवोक्तवन्तः–मूढ इदमपि वक्तव्यम् ?

अहमहमिकया प्रवृत्तिभाजां
स्वपतिनियोगकृतः पदं ग्रहीतुम् ।
मम मनसि पदं तु तस्य सिद्धं
भवति मदर्थकरो य एव धीमान् ॥

एवमुपदिश्यमानवर्त्मापि प्रयोगनैपुण्यविरहेण न वाञ्छानुरूपं फलमधिगच्छामि । सर्व एव जानन्ति–

सुकेशता सुवेशता सुरूपता सुभाषिता ।
सुगानता च योषितां वशीकृतौ गुणा मताः ॥

एतेषां कतमो गुणो मयि वर्त्तते ? किन्त्वहं विटो नायकश्च विरोचनः, यदि किञ्चिदपि परोक्षं नाभ्युपगम्यते धीमद्भिः किन्तु भाग्यन्त्वभ्युपेतव्यमेव कथमन्यथा द्विजराजप्रतिरुद्धोदयोऽसौ द्युमणिः सहसा सर्वेष्वधिकारेषु प्रोज्ज्वलन् दृश्यते ।

तदुपहितकराग्राः कण्टकोद्भेदहृश्याः
ग्रथितभुजमृणाली वल्लिसंबद्धनृत्याः ।
प्रतिदिनमलिकाश्राश्रान्तलोलालकान्ताः
कति न कमलकान्तास्तस्य पादे लुठन्ति ॥

यदि चाहमपि बहुमतोऽङ्गनानां तथापीदमवश्यमङ्गीकार्यं—

यासामलभ्यः पुरुषोत्तमोऽसौ
अस्मासु ता एव रतिं वहन्ति ।
दिवाकरेऽस्ताचलगर्भलीने
यथा प्रदीपेषु तमो विमूढाः ॥



( दीर्घं निःश्वस्य ) यथा भवतु मुषितमिवात्मानमनुचिन्तयामि-

अश्वक्रीड़ाप्रसङ्गान्मे गलितं द्यूतजं धनम् ।
कमलिन्यास्तथा प्रेम, तस्या चाद्याहमुत्सुकः ॥

( आकाशे ) किं ब्रवीषि कथमुत्सुकः—

उद्यानानि बहूनि तेषु कुसुमालङ्कारलीलालताः
बह्व्यः सन्ति, मनोहरा च विटपिश्रेणी प्रसूनोज्ज्वला ।
भ्रातर्भृङ्ग किमर्थमित्थमधुना निष्पन्दवद्दृश्यसे
रागश्चेन्मधुपानकर्मणि लघु स्वच्छन्दमुड्डीयताम् ॥ इति ?

( घटीयन्त्रं विलोक्य ) भवत्वद्य वरणस्थानमभिगन्तुमुड्डीयत एव किन्तु तस्याः शैलूषकुलललामभूताया ललनायाः—

तत्तेजो मृदुलाङ्गवङ्गमहिलादुष्प्रापविस्फारणं
सा मानोन्नतपौरुषोपशमनद्राघिष्ठतापस्थितिः ।
सा ग्रीवा ललिता च रोषचलिता मुक्ता लतालोकिता
वक्त्रेन्दोः किरणावलीव हृदयाम्भोजं विमृद्नन्ति मे ॥

तथापि करणीयमेत्रावश्यकं कर्मेत्ययं मान्येभ्यो रचितप्रणामाञ्जलिः—

स्मृतौ तामुद्वहन् रामां हृदि तद्रागजव्यथाम् ।
आलोकतमसोः सन्धिगोधूलिरिव लीयते ॥

इति निष्क्रान्तः ।

समाप्तो भाणः ।

---

स्वस्ति श्रीमत्प्रबल-रिपुकुलप्रलय-कालाग्निरुद्राणामनन्तगुणमणिगण-समुदयसहृदय-हृदय-विशदक्षीरोद-मोद-मानगोविन्द-रुद्राणीरमणवरण सम्पन्नानां विविधविरुदावलीविराजमानश्रीकाशिराजकुमारयुवराज श्री १०८ मदादित्यनारायणसिंहशर्ममहोदयानां करकमलयोः ।

पञ्चपञ्चाशद्वर्षप्रवेशाभिनन्दनपत्रम् ।

श्रीमन्काशीश्वरस्याखिलगुणगरिमा भूषितोऽशावतारः
श्रीमानादित्यनारायण इति विदितो लोकनेत्रेन्दुकल्पः ।

वर्षे विश्वेश्वरस्यापरिमितकृपया पञ्चपञ्चाशमाप्तो
दिष्ट्या संवर्धमानो मुदमतिमहतीं मानसे नो विधत्ते ॥ १ ॥
यस्यालोक्याश्नुवानं जगदखिलमतीवोज्ज्वलं कीर्तिसारं
स्वीयश्चाङ्काङ्किताभं वपुरनुदिवसं वीक्ष्य सङ्क्षीयमाणः ॥
पर्वण्यव्यक्तरूपो वहति किमु विधुर्लज्जया भारभूतं
स्वं रूपं व्यर्थजन्मा नृपतिगणमणेर्नामधेयैकशेषम् ॥२॥
दुर्दान्तारातिकुम्भीनसदमनविधावात्तसौपर्णरूपो
लोकस्वान्ताब्जराजीविदलनविधृतोदञ्चदुष्णांशुशोभः ।
मूर्तः कारुण्यराशिर्बुधगुण निकषग्रावतां सन्दधानः
सोऽयं रीत्या कयानु प्रकटितमहिमा वर्ण्यतां मादृशेन ॥ ३ ॥
यस्यौदार्यैकलक्ष्मी मधरित धनदोदात्त कीर्ति प्रशस्ति
संवीक्ष्याश्चर्य सिन्धौ हृदयमतितमां मज्जदेतन्मदीयम् ।
धेनुं तां कामदोग्ध्रीमपि च नवनिधीन् किञ्च चिन्तामणिं तं
सर्वान्पौराणिकोक्तान्नहि बहु मनुते सर्वदास्मत्परोक्षान् ॥ ४ ॥
लक्ष्मीलीलोपधानायितभुजयुगलस्येद्धचारित्रभूमे—
स्तातस्य प्राज्यराज्योद्धुरभरवहने दत्तहस्तावलम्बः ।
दीर्घायुः सर्वपृथ्वीतलसुलभसुखैश्वर्यसीमां गतोऽसौ
भूयादित्येव याञ्चा हरिपदयुगले ठाकुराख्यस्य सूरेः ॥ ५ ॥

भवदेकाश्रितः—ठाकुरप्रसाद शर्मा अध्यापकः,
मे० हा० स्कूल रामनगर ।

---

श्रीमतां जी० सी० एस० आई० जी० सी० आई० ई० इत्यादि विविधविरुदावलीविराजमानमानोन्नततमानां श्रीमन्महाराजाधिराज द्विजराज काशीराजश्री १०८ प्रभुनारायणसिंह शर्मवीर पुङ्गवानां करकमलयोः

पञ्चसप्ततिवर्षप्रवेशाभिनन्दनपत्रम् ।

श्रीकाशिकापुरनिवासि जनौघनेत्र—

द्वन्द्वोल्लसत्कुमदशारदचन्द्रमूर्तिः ।

सत्पञ्चसप्ततितमां शरदं प्रपन्नो
दिष्ट्या विवर्धत इहात्र भवान्नरेन्द्र ॥ १ ॥
वर्षैः समं प्रभुवरस्य विवर्धमानां
क्षीराब्धि सोदररुचं महनीयकीर्तिम् ।
लोकेऽवलोक्य परितो विततप्रसारा—
मानन्दसिन्धुतलभूमिमहो स्पृशामः ॥ २ ॥
देव त्वदीय करुणामसृणान्तरङ्ग
सम्प्रेरणा समुपलब्धनवोदयाढ्याः ।
भव्यं गुणैरभयदं भगवन्तमद्य
भावत्कभाविकभवाय भवं भजामः ॥ ३ ॥
काले कलाविह जनैरवधीरितात्मा
ह्रासं व्रजन् किल सनातनधर्म एषः ।
त्वामाश्रितावननिरन्तरबद्धदीक्ष-
मासाद्य देव ! शरणं पुनरस्ति पीतः ॥ ४ ॥
कक्षायितोद्धतविपक्षगणेद्धघोर—
तापप्रतापदहनोऽपि दयैव सिन्धुः ।
श्रीकाशिराज विबुधैकसमाश्रयस्त्वं
काञ्चिच्छ्रियं निरुपमामनिशं दधासि ॥ ५ ॥
काशीं निरंतरमलङ्कुरु देव स त्वं
प्राज्य प्रजावननिरन्तरसावधानः ।
एषा नमज्जनमनोरथसिद्धिधुर्य—
श्रीविश्वनाथपदयोरधुनाऽर्थना नः ॥
श्रीमदेकाश्रयस्य, ठाकुरप्रसादशर्मणः ।

---

# त्रिशिरःपुरीयब्राह्मणमहासम्मेलनम् ।

[ निबन्धकः—पोलकं श्रीसुन्दरेशशास्त्री । ]



अतीतमाघबहुलद्वितीयायां भानुवासरे २७—१—२६ त्रिशिरःपुरी ( Trichinopoly ) जनपदब्राह्मणमहासम्मेलनं त्रिशिरःपुरविराजमानदेशीयकलाशालायां प्रातः आनवमवादनात् सायं आसार्धपञ्चमवादनं समुल्लसज्जनतोत्साहसमेधितकार्यधुरं, निखिलविप्रकुलसबहुमानांगीकृतवैदिकधर्मप्रतिष्ठं, श्रोत्रनेत्रयोरातिथेयं, द्विजवरपञ्चशतीपरिपूरितं समराजत । न कस्यापि द्विजेतरस्य तत्र प्रवेशः समभूत ।

सभोपक्रमे साकं वादित्रघोषेण सर्वे समुदिताः प्रत्युद्गम्य सम्मेलनाध्यक्षान् महाराजश्रीसमलंकृतान् दिवान् भेष्कारनामकं अनन्तशयनराजकीयस्थानं अलंकृतवतः एन्० सुब्रह्मण्यार्यान् सबहुमानं समानीय सभास्थानं प्रमुदिताः प्राविक्षन् । तदनन्तरमुपनिषच्छान्तिपाठेन मंगलाचरणानुष्ठानावसाने स्वागतसभाध्यक्षाः श्रीमन्तो नंगवरं लक्ष्मीनारायणार्याः स्वागतानुवाचनेन सभां संमोदयन्ति स्म । सूपविष्टेषु यथास्थानं स्वागतसभाध्यक्षादिषु राजश्रीसुब्रह्मण्यार्याः वावदूकपदवीमधिरूढैः श्रीमद्भिः आर् श्रीनिवासार्यैः प्रेरितं, पि० जि० सुन्दरशास्त्रिभिरनुमोदितं च अग्रिमासनं समलंकृत्य ततः समुत्थाय समान् ब्राह्मणान् सभक्तिश्रद्धं प्रणामवाचोयुक्त्या सन्तोष्य आर्हन्तीमनतिक्रम्य द्राविड़भाषया हूणभाषया च वर्तमानब्राह्मणदुरवस्था, विप्राणामध्यात्मविस्मृतिं बहिःस्रोतोनीयमानतां नास्तिक्याभिवृद्धिं जीवनोपायविधुरतां ,आस्तिकानां च विदुषां वेदशास्त्रेषु कृतभूरिपरिश्रमाणामपि लोकानादरभाजनतां चाधिकृत्य सानुशोचनं सविस्तरमुपन्यस्य चातुवर्ण्यसमुदायस्यायमपराधः न ब्राह्मणमात्रस्यैकदेशस्येत्याद्युपवर्ण्य सर्वथा आस्माकीनोऽनुद्यम एव सर्वविधदुरवस्थाहेतुर्न कालदिकं "राजा कालस्य कार-

णम्" इत्युक्तेश्च आस्माकं संघमेव राजस्थानापन्नं विधाय कालवैपरीत्यं शमनीयमित्यादिकं वृद्धसम्मतमर्थं साधुजनहृदयामोदकं स्पष्टं न्यरूपयन्।

ततो निर्णयविषयसमालोचनाय कतिचन प्रवीणान् प्रकटीकृत्य सार्द्धं द्वादशवादनेन प्रातरवसिता सभा। ततोऽन्तराले प्रागेव मुद्रित-निर्णयविषये परिष्कारे कृते पुनर्द्वितीयवादनादारभ्य यथाक्रमं सभा प्रावर्तत। तदात्वे च वेदशास्त्रप्रवीणानि पण्डितप्रकाण्डानि पोलकं सुन्दरेश्वरशास्त्रिणः, पद्मनाभशास्त्रिणः, वालाडिवालकृष्णशास्त्रिणः, श्रीनिवासाचार्याः, महादेवशास्त्रिणः, टि० के० बालसुब्रह्मण्यार्याः इत्यादीनि सहयोगदानेन समाजमलभकार्षुः। तत्र निर्णीतार्थाः—

प्रथमं कृतज्ञताविष्करणपुरःसरं महाराजचक्रवर्तिनः शरीरारोग्यादिकं सर्वेश्वरानुसन्धानेन संप्रार्थ्य क्रमेण विचारः प्रावर्तत।

१ (क) तत्तन्नामांकिताः भिन्नभिन्नाकृताः सर्वेऽपि समाजा, न्यायसभा वा तत्तन्मतसंबन्धिषु आचाराविनाभूतेषु कृत्येषु मताचारविबाधकन्यायोत्पादने सर्वथा अधिकारविधुराःविभिन्नमतिकनानाजाति-सन्दूषितत्वात् तादृशं न्यायोत्पादनं अस्माभिरग्राह्यमेवेतीयं सभा निबध्नाति।

(ख) इतः परं च सर्वविधराजकीयव्यवस्थितावपि एतद्देशीय सकलमताचारबाधकन्यायशरीरोत्पादने केऽपि राजानो राजकीया वा न प्रभवन्ति इत्येष नियम आस्थातव्य इति अयमस्याः सभायाः साग्रहो निर्णयः।

अयं निर्णयार्थः पोलकं ब्रह्मश्रीसुन्दरेशशास्त्रिभिः आरोग्यपारलौकिकादिहेतुत्वेन मताचारावश्यकतां सप्रमाणं सानुभवंच प्रदर्श्य तपोबलादिलब्धदिव्यज्ञानसम्पन्नानामपि महर्षीणां धर्मपरिवर्तने असामर्थ्य-मुपवर्ण्य अहोरात्रयोरिव कृतादियुगेष्वपि धर्मस्य व्यवस्था नियमित-प्रकृतिकत्वेन तादृशव्यवस्था समुद्घाटनमात्रे महर्षीणां प्रवृत्तिं प्रसाध्य कैमुतिकन्यायेन आधुनिकानां तत्र धर्मपरिवर्तने अधिकाराभावं प्रकटी-

कृत्य संप्रेरितो विचारपदवीमानायि । ततः श्रीरंगबालसुब्रह्मण्यार्यानुमोदितः वावदूककृष्णमाचार्यादृतश्च ऐकमत्येन निर्णयकाष्ठामगमत् ।

२ (क) हरिविलासशारदा—डाक्टर—मुत्तुलक्ष्मीभ्यामानीतावर्थौ सकलश्रौतस्मार्तधर्मपरिमोषकरौ जातिसांकर्यादिहेतुभूतौ बाल्यविवाहबोधकसकलस्मृतिशिष्टाचारादिप्रपीडनैकव्यापृताविति सर्वथा एतत्सभासमवेताः तौ निराकर्तुमुद्युञ्जते ।

(ख) विवाहविषये राजकीयन्यायसभास्थानमधिरूढैः संभ्रमो दुरुत्साहश्च भृशं परित्याज्यः । स्वीयविवाहविधयः कृत्रिमेतर वचोमूलकाः, सर्वेश्वराज्ञारूपाः तपोनिधिपरिगृहीताः, शिष्टपरम्परादृताश्चेति दृढभक्तिश्रद्धं अनुष्ठाने प्रवृत्तानां महाजनानां श्लाघनीयस्तत्र प्रामाणिकत्वनिश्चयः नाल्पेन हेतुना परिवर्तनीय इति च राजकुले इतरेषु च विनिवेदनपुरःसरं राजसभाधिरूढाः सर्वेऽपि देशप्रतिनिधयः अभ्यर्थ्यन्ते "सर्वथा तादृशविवाहवयःपरिवर्तनप्रकारः ऐकमत्येन भवद्भिः खण्डनीय" इति ।

अयं तु विचार्यविषयः श्रीमद्भिः पंडित श्रीनिवासाचार्यैः प्रेरितः, पि० जि० सुन्दरशास्त्रिभिरनुमोदितश्चैकमत्येन निर्णीतः समजनि ।

३ (क) ब्राह्मणमाणवकाः प्रत्येकं संस्कृतभाषाभ्यासे अन्ततो नित्यनैमित्तिककर्मोपयुक्तवेदभागमात्राध्ययने सर्वावस्थायामपि स्वाचारधर्मपरिपालने च यथा प्रयतेरन् तथा नाम निर्बन्धातीयं सभा ।

(ख) ब्राह्मणमाणवकाध्यापनकलाशालाधिकारिणः माणवकानां पितरश्च अस्माभिः प्रार्थ्यन्ते अयं नियमः सर्वथा युष्माभिरादरणीयतामर्हतीति ।

निर्णयोऽयं श्रीमद्भिः पण्डित महादेवशास्त्रिभि रुत्कर्ष सुखजीवनस्वाचाररक्षणदीर्घायुष्यादिहेतुत्वेन गैर्वाणी विद्या सर्वथा आदर्तव्या माणवकैरिति निरूप्य प्रेरितः, श्रीमद्भिः प० वि० गोपालाचार्यैः अध्ययनमन्तरेण ब्राह्मण्यरक्षणं न संभवतीति सोपपत्तिकं संस्कृतविद्याभिवृद्धे-

रावश्यकतां प्रदर्श्य आमोदितोऽभूत् । ब्रह्मश्री बालादि बालकृष्णशास्त्रिणस्तावत् तदादरणे प्रवृत्ताः अर्थ संपादनादिव्यगतया ब्राह्मणैरेवास्माभिरेवं प्रणाशितः स्वीयो वैदिको धर्मः, इतः परं इत्थमुपेक्षां विना सर्वैर्विद्वद्भिर्धनिकैर्मठाधिपतिभिश्च वैदिकधर्मरक्षणाय संस्कृतभाषाभिवृद्धौ श्रद्धश्रद्धैर्भवितव्यमिति धीरं धीरमुदघोषयन् । निर्णयः संप्रतिपत्तिं प्रापत् ।

४—राजस्थानेषु उद्योगिनामुपरितनोद्योगदाने नूतनाधिकारप्रदाने च विषये अनपेक्ष्य विद्याभ्यासबुद्धिकौशलादिकं जातिविभागावलंबनं अत्यर्थं राजस्थानानर्थहेतुरिति विभाव्य सर्वा अपि प्रजा ऐकरस्येन परिपाल्या इति निर्णीयते ।

५—त्रिशिरः पुरजनपदप्रतिनिधयः राजसभाधिरूढ़ाः हरिविलासशारदानीतविवाहवयःपरिवर्तननियमं स्वच्छन्दं निराकुर्युः । ते च तन्त्रीद्वारा अधिकृतार्थाः कार्या इति चेदं महासम्मेलनं निर्णयति ।

६—एतन्महासभा इत्थं निर्णीतार्थान् भारतवर्षीयप्रधानराजसभाध्यक्षाय अस्मद्देशहिताहितविचारनियुक्तसप्तकाय च निवेदयितुं कार्यदर्शिनः प्रेरयति ।

७—अन्येषां सामाजिकानां श्रेयः प्राप्तिं कदापीयं सभा लेशतोऽपि न बाधते । इतरसमाजापेक्षया विशिष्टैहिकलाभं च न वाञ्छति । स्वीयमताचाराविरोधेन सर्वजनताव्यवहारे ऐकमत्येन प्रवर्तितुं सज्जीभवति इति च ज्ञपयन्ति एते सभासदः ।

८—ब्राह्मणसमूहधर्मान् सुखजीवनोपायान् एतत्सम्मेलननिर्णीतार्थांश्च परिपालयितुं त्रिशिरःपुरजनपदब्राह्मणमहासभा इत्यभिधानेन काचन परिषत् त्रिशिरःपुरे प्रतिष्ठापनीया । अस्याः शाखासमितयश्च ग्रामादिषु प्रवर्तयितव्या इति च अनया समित्या निर्णीयते ।

९—एतान् संघान् संघटयितुं कार्यजातं निर्वोढुं च कतिपयविद्व-

तृकुलधनिकगणघटिता काचन उपसमितिश्च एतया महासभया निश्चीयते ।

१०—भारतवर्षीयपदार्था एव सर्वैरुपयोक्तव्या इति चेयं सभा अभ्यर्थयते ।

अथावसाने अग्र्यासनाधिपतिभाषितसारस्तु एवं सर्वेऽपि निर्णयाः ऐकमत्येनोद्भाविताः सर्वेषामास्तिकधुरीणानां हृदयामोदं जनयेयुरित्यत्र न कोऽपि विशयः । परंतु नालमेतावता निर्णयमात्रकरणाडंबरेण । एवंविधा बह्व्यः सभाः इत्थं निर्णयजातं निर्णीय प्रचारणं विना किमपि फलं नालभन्त । अतः सर्वैरपि मिलित्वा यथैते निर्णयाः अनुष्ठानपदमवतीर्य अस्मद्देशीयजनताहिताय पर्यवस्येयुस्तथा प्रचारणे प्रयतितव्यम् । विशिष्टोद्योगलाभेन स्वोदरपूरणेन च न सन्तोष्टव्यं विप्रकुलोत्पन्नैः । यस्तु ब्राह्मणः धर्मपरिपालनेन देशक्षेमाय यतते स एव ब्राह्मणः स्यात् । नान्यः अतः सर्वावमानसहनबद्धदीक्षं श्ववृत्तिशब्दितं भृत्यभावं परित्यज्य परमं श्रेयोमार्गमवलंब्य सकलकल्याणभाजनतया भवितव्यमिति युष्मान् सकृदभ्यर्थये इति ।

ततःश्रीरंगं बालसुब्रह्मण्यार्य–कृष्णमाचार्याः क्रमेण अग्र्यासनाधिपति-स्वागतसभाध्यक्षाणां प्रणामधन्यवादान् आविरकार्षुः । ततः करघोषं महासम्मेलनं परिपूर्तिमगात् ।

---

# श्रीमन्मालवीयसाहसम् ।

[ निबन्धकः—म० म० पण्डित श्रीपञ्चानन तर्करत्न भट्टाचार्यः । ]



धर्मो हि वेदबोधितः नचासौ अर्वाग्दृग्भिः प्रत्यक्षतोऽधिगन्तुं शक्यते । वेदोऽपि द्विविधः प्रत्यक्षश्चाप्रत्यक्षश्च । :गुरु परम्परया लभ्यमानो वेदः प्रत्यक्षः तथोपलभ्यमानाभिः स्मृतिभिः शिष्टाचारानुमिताभिर्वा ताभिरनुमीयमानोवेदोऽप्रत्यक्ष इत्युच्यते । इदानीं गुरुपरम्परायां नास्त्यादरः,मुद्रापणप्रसाद एवाद्रियते। तत्र प्रथममुद्रापणस्थानं हूणदेशः । तत्प्रसादलब्धो वेदः प्रायेण राजकीयभाषारसिकानां भारतीयानामवलम्बनम् । हूणदेशीयकृत विकृतानुवादश्च तदर्थग्राहक इति। तथा च संक्षिप्तोक्तिः, हूणदेशीया गुरवः शिष्याश्च प्राच्यज्ञा भारतीयाः । तेषु श्रीमान् मदनमोहन मालवीयः प्रसिद्धः । स हीदानीं स्मृतिग्रन्थानीक्षते ग्रन्थास्तु मुद्रापणप्रसादेन सुलभा एव। परित्यक्तश्च साम्प्रतं गुरुपरम्पराक्रमः नवीनगुरूणां हूणदेशीयानां रीतिस्तु स्वबुद्ध्याश्रयता प्रायेण प्राकृताः स्वबुद्धिं समीचीनां मन्यन्ते स्वकीयां भ्रान्तिमपि प्रमामवगच्छन्ति। ये तु स्वयं तथाभूता अतथाभूता वा चाटुपटुभिः स्वोदरम्भरैः कथमप्युपार्जितपण्डितनामभिः सबहुमानमारोपितशास्त्रज्ञानप्रकर्षाः सुचिराध्ययनाध्यापनलब्धज्ञानानां सुविदुषामपि स्वापेक्षयापकर्षं मन्यन्ते । श्रीमान् मालवीयो हि ईदृशगर्वाभिभूतानां प्रथम इति विज्ञायते । वाचिकेन विनयस्तु तस्य गर्वप्रच्छादनोपायः । गर्वः साहसं प्रसूते । दण्डप्रकरणे यानि साहसान्युक्तानि तदुद्भवेऽस्त्येव गर्वस्योपयोगः । स्तेयं तेष्वन्यतमत् स्तेयमपि द्विविधं प्रच्छन्नम प्रच्छन्नञ्च। यथा द्यूतादिकं प्रच्छन्नस्तेयं, परवञ्चनाय शास्त्रवचनादिपरित्यागस्तदर्थान्यथाकारश्च तथा । द्यूतादिना यथा छलेन परार्थं आत्मसात् क्रियते तथात्रापि । विशेषस्त्वेतावान् यत् द्यूतादिषु परकीयद्रव्यं परार्थः, अत्र तु स्वानभिप्रेतं प्रतिपाद्यं परार्थं इति तस्य चात्मसात्करणं कथमपि यथेष्टविनियोगार्हत्वसम्पादनम् । द्यूतादौ हस्तकौशलेन तथ्यं यथा वितथीक्रियते वितथञ्च तथ्यी क्रियते तथात्रापि ।

उक्तमेव पूर्वमिदानीं गुरुपरम्परादरो नास्ति मुद्रापणप्रसादस्यादर इति । ततश्च लब्धानां स्मृतीनां स्वमतानुकूलताप्रतिपादनार्थं केषाञ्चिदंशानामुपादानं परित्यागश्च केषाञ्चित्,मीमांसारीतिवर्जनं पाठपरीक्षाया-मौदासीन्यञ्चेति द्यूतादिवत् प्रच्छन्नस्तेयं साक्षाद्धरणादिवदप्रच्छन्न-स्तेयं वा सुधियो विचारयन्तु । वयन्तु प्रच्छन्नस्तेयमेवावोचाम । ईदृशं स्तेयमेव श्रीमतः साहसम् । तस्य प्रमाणं—मालवीय-महोदयस्य मन्त्र-महिमाख्यायां प्रथमपुस्तिकायां वृद्धहारीतस्मृतेर्यानि वचनानि अष्टा-क्षरमन्त्रपरतया दर्शितानि तेषां सप्तवचनानि न तत्पराणि । (यत्र शूद्रा-धिकारप्रतिपादनं वर्त्तते इति तन्मतं) किन्तु पञ्चविंशत्यक्षरमन्त्रपराणि ततश्च मूले यस्माद्वचनत्रयादिदं तत्वं निश्चीयते तन्मन्त्रमहिमपुस्ति-कायां त्यक्तम् ।

अस्माभिश्च मन्त्रमहिमरहस्याख्यपुस्तिकायां तत् प्रदर्शितम् । मालवीयमहोदयस्य अनन्तरपुस्तिका सनातनधर्मप्रदीपक इति । तत्रा-न्यानि प्रमाणानि यथोक्तसाहसक्रमेण दर्शितानि । नतु तत्र वृद्धहारीत-स्मृतिगोचरा कापि भणितिः कृता, नहि लोको मम भ्रमं जानीयादिति श्रीमतोऽभिप्रायः । तत्प्रमाणानां साहसक्रमेण दर्शितत्वे प्रमाणं प्रदीपक-निर्वापकं नाम समालोचनं मार्गशीर्षसंख्यायां प्रकाशितम् । तत्रैकस्य वचनस्यार्द्धांशापहरणं श्रीमता मालवीयेन कृतं तन्नालोचितं, तदत्र प्रद-र्श्यते—यथा—

> सर्वज्ञानविधानञ्च सोऽयञ्चैव षडक्षरः ।
> तस्मात्सर्वप्रदो मन्त्रः सोऽयं पञ्चाक्षरः स्मृतः ॥

इत्यनयोर्मध्ये "प्रणवेन विना देवि सोऽयं पञ्चाक्षरः स्मृत" इत्य-र्द्धमधिकमस्ति । आचारेन्दुनामके पूर्वतनसंग्रहे तथा पाठदर्शनात् । एकस्मिन् मुद्रापितस्कन्दपुराणे तत्पाठस्य प्रमादतः स्खलनेन तददर्शनात्परत्रापि मुद्रापितेषु तत्पाठाभावेऽपि शिष्टपरिगृहीतपाठस्योपेक्षणं विदुषां साहसमेव व्यञ्जयति । यो हि स्वस्य सर्वज्ञतां ख्यापयन् सर्वशि-

ष्टाचार विरोधेनाऽपि सर्वेषां शूद्रादीनां प्रणवाधिकारं प्रतिपादयति तस्य ग्रन्थार्थपरीक्षणं विशेषेण कर्तव्यम् । तत्पाठाभावेऽपि यथा प्रणवयुक्त-मन्त्रे शूद्रादीनां नाधिकारस्तथोपपादितं प्रदीपकनिर्वापकप्रसङ्गेन । तत्र मालवीय महोदयस्यार्थकल्पनमपि साहसमेव ।

इदानीं यच्छिवपुराणस्य प्रमाणं तेन प्रदर्श्यते तत्रापि साहसमेव प्रकाशते, तथाहि—

> अथ वक्ष्यामि देवेशि भक्तानामधिकारिणाम् ।
> विदुषां द्विजमुख्यानां वर्णधर्मं समासतः ॥

इत्युपक्रम्य त्रयाणां द्विजानां वर्णाश्रमधर्मान् सामान्यं सर्ववर्णानां ब्राह्मणानां विशेषतः इत्यादिना सामान्यधर्मान्—

शुश्रूषेतरवर्णानां धर्मः शूद्रस्य कथ्यते । इत्यादिना शूद्रधर्मं—स्त्री-णान्तु भर्तृशुश्रूषा धर्मोनान्यः सनातन इत्यादिना सधवाधर्मं—अथ भर्तृविहीना या इत्यादिना विधवाधर्मं चोपदिश्य—

> इति संक्षेपतः प्रोक्तं ममाश्रमनिषेवणम् ।
> ब्रह्मक्षत्रविशां देवि यतीनां ब्रह्मचारिणाम् ॥
> तथैव वाणप्रस्थानां गृहस्थानाञ्च सुन्दरि ।
> शूद्राणामथ नारीणां धर्म एष सनातन इत्युपसंहृतम् ।

एषु च क्रमविन्यस्तवचनेषु सप्रणवशिवमन्त्रजपस्य नामापि नास्ति । शूद्राणामथनारीणामित्यामन्तर्यं निर्दिश्य पूर्वोपदर्शितक्रमेणो-क्तस्य धर्मस्यैवोपसंहरणमत्र क्रियत इति स्पष्टमवगम्यते । उपक्रम-श्लोके द्विजमुख्यानामिति यदुक्तं तस्यार्थस्तु द्विजा मुख्या येषां तेषां चतुर्णां वर्णानामित्यर्थः । अतएव तत्र वर्णधर्मं समासत इति वर्ण-पदमर्थवद् भवति । । द्विजमुख्यानामित्यत्र तत्पुरुषसमाश्रयणे तु सर्वेषां वर्णानां धर्मस्योपदेशे प्रतिज्ञाविरोधः प्रसज्येत । वर्णधर्म इति वर्णपदमप्यनर्थकं स्यात् । यथोक्तार्थे तु विशेषाभिधित्सया वर्णपदं सार्थक्यम् । अनन्तरं

ध्येयस्त्वयाहं देवेशि सदा जाप्यः षडक्षरः ।
वेदोक्तमखिलं धर्ममिति धर्मार्थसंग्रहः ॥

इत्यत्र त्वयेति यदि कर्तृपदं तद् गतमन्यकर्तृकत्वेन । अथ नेदं कर्तृपदं तदा कर्त्राकांक्षायामव्यक्तं प्रधानगामीत्यनेन, द्विजकर्तृकत्वमेवात्र सिध्यति । प्रतिज्ञाश्लोके द्विजमुख्यानामित्युक्तेर्द्विजानां प्राधान्यं वचनत एव ज्ञापनात् । अन्यथा सर्ववर्णानामित्येवोच्येत । इति वायवीयसंहितोत्तरभागैकादशाध्यायः ।

अत्र च प्रतिज्ञाश्लोके अधिकारिणामिति यदुक्तं तद्विवरणं तस्मिन्नेवाध्याये प्रागुपदर्शितम् । यथा—

स्ववर्णाश्रमधर्माभ्यां वर्त्तते यस्तु मानवः ।
तस्यैव भवति श्रद्धा मयि नान्यस्य कस्यचित् ॥

तदनन्तरं— जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव च ।
रुद्राध्यायादिकाभ्यासो न वेदाध्ययनादिकम् ॥

इत्यनेन यस्य वर्णस्य यत्राधिकारस्तदुपदर्शनं कृतम् । प्रणवरुद्राध्यायादेर्वेदत्वात्तत्र न स्त्रीशूद्राधिकारः यथा तत्रैव पुराणे कैलाससंहितायामष्टमाध्याये—

उपदेशक्रमो ह्यादौ वक्तव्यः श्रूयतामयम् ।
चातुर्वर्ण्यं हि लोकेऽस्मिन् प्रसिद्धं मानुषे मुने ॥
त्रैवर्णिकानामेवात्र श्रुत्याचारसमन्वयः ।
शुश्रूषामात्रसारा हि शूद्राः श्रुतिबहिष्कृताः ॥

तथा तत्रैव पुराणे सनत्कुमार संहितायां चतुर्दशाध्याये—

नमस्कारोऽप्यनुज्ञातो मन्त्रः प्रणववर्जितः ।
शूद्राणां देवभक्तानां महादेवेन धीमता ॥

( मन्त्रप्रणववर्जितः इति च पाठः ) सप्रणवमन्त्रजपे ब्राह्मणानां विशेषफलम्—तदुक्तं तत्रैव विद्येश्वरसंहितायां नवमाध्याये—अथ पञ्चाक्षरं नित्यं जपेदयुतमादरात् । सन्ध्ययोश्च सहस्रं वा ज्ञेयं शिवपद-

प्रदम् । प्रणवेनादि संयुक्तं ब्राह्मणानां विशिष्यते ॥ पञ्चाक्षरेऽपि विशेष-स्तत्रैवोक्तः—द्विजानाञ्च नमः पूर्वमन्येषाञ्च नमोऽन्तकम् । स्त्रीणाञ्च क्वचिदिच्छन्ति नमोऽन्तञ्च यथाविधि ॥ नमः शिवायेति प्रतीकस्य रुद्राध्यायमन्त्रघटकतया तत्रापि न स्त्रीशूद्राणामधिकार इत्यभिप्रेत्य नमोऽन्तकमित्युक्तम् । यद्यप्येकदेशस्य न साक्षाद् वेदत्वं विशिष्टानुपूर्वी-विरहात् तथापि तत्सादृश्येन तत्रापि नाधिकार इत्याशयः । तथा—नमस्कारादि संयुक्तं शिवायेत्यक्षरत्रयम् । जिह्वाग्रे वर्त्तते यस्य सफलं तस्य जीवितम् ॥ अन्त्यजो वाऽधमो वापि मूर्खो वा पण्डितोऽपि वा । पञ्चाक्षरे जपेनिष्ठो मुच्यते पापपञ्जरात् ॥ नमस्कारादिसंयुक्तमित्यस्यार्थस्तु नमस्कारस्य आदौ पूर्वं संयुक्तमक्षरत्रयमिति । द्विजपक्षेतु नमस्कारेण आदौ ( नान्ते ) संयुक्तमिति—द्विजानान्तु नमः पूर्वमन्येषान्तु नमोऽन्तकमिति प्रागुक्तै-कवाक्यत्वात् द्विरूपपञ्चाक्षरप्राप्त्यर्थं नमस्कारादिसंयुक्तमित्युक्तम् । अन्यथानमःशिवायेत्येवं द्विरूपपञ्चाक्षरप्राप्त्यर्थं नमस्कारादि संयुक्तमित्यत्र (शै् वायु. १२ अ.) पञ्चाक्षरस्य स्वरूपनिर्द्देशात् षड़क्षरमन्त्रस्य पञ्चा-क्षरत्वाभ्युपगमेऽपि तत्रावरवर्णस्यान्त्यजादीनाञ्च नाधिकार इति स्पष्टं प्रतिपादितम् ।

तदयं निर्गलितोऽर्थः शैववचनानाम्—यत् पञ्चाक्षरजपे सर्वेषाम-धिकारः तस्यैव प्रणवयुक्तत्वे षड़क्षरमन्त्रत्वं, तत्र च द्विजानामधिकारः ब्राह्मणानान्तु विशेषफलायेति । तस्मात् शिवपुराणमाश्रित्य मालवीय-भट्टोदयेन यत् पराक्रम्यते तदपि व्यामोहमात्रम् व्यामोहनमात्रं वा ।

हा कलिकाल, सर्व एव भवता समाक्राम्यते, धनादिबलंच भवत एवानुवर्त्तनमहिम्ना संघटते—अहो भवतः शक्तिर्यतः—

धर्मः संकुचितस्तपो विगलितं सत्यं च दूरंगतम्,
विद्या वारविलासिनीव रमते स्वच्छन्दसंचारिणी ।
विप्राः शास्त्रविवर्जिता अपि मृषामूर्च्छेद्दु धरख्यातयः,
साधुः सीदति दुर्जनः प्रभवति प्रायो भुवं मोहयन् ॥

# वार्त्ताः सम्पादकाभिप्रायाश्च ।

## शोकः ।

न जानीमः केन नाम भाग्य विपर्य्यासेन समाक्रान्तमिदं भारतवर्षम् । एकतः कलिकालहतकस्य सर्वतः प्रसारि विजृम्भणं, येन पांशुपादाद् हालिकादारभ्य महोन्नतानां महामहोपाध्यायानां ब्राह्मणविदुषामप्यचिन्तनीयोच्छृंखलता नियतमुपचीयमाना धार्मिकजनमनांसि व्याकुलयति, अन्यतश्च सनातनधर्मस्य प्राचीनसदाचारस्य चावलम्बनभूता महान्तो विद्वांसोऽपि क्रमशो भारतक्षेत्रादपसार्यन्ते कालहतकेन । न विद्मो वयमचिरात्कां दशामुपजिगमिषति भारतवसुन्धरेति ।

हन्त स्थानं महतः शोकस्य यदतीते मकरसंक्रमणाद् द्वितीयेऽह्नि सोमवासरे प्रातः पुण्यमुहूर्त्ते योगिजनोचितप्राणोत्क्रमणसमये सुविदितनामधेयस्तत्र भवानग्निहोत्री महामहोपाध्यायः प्रभुदत्तमिश्रः सहसा सुरभारत्याः कमनीयमङ्कं रिक्तीकुर्वन्निव अनाथीकुर्वन्निव वेदविद्यां मलिनीकुर्वन्निव दिशां मुखानि निपातयन्निव गाढेऽन्धतमसि भारतवसुन्धरां विलापयन्निव पण्डितमण्डलानि निमज्जयंश्च पुत्रपौत्रकलत्रादीनगाधे शोकजलधौ सर्त्तव्यशेषतामध्यगच्छदिति । महाभागोऽयं चिरशान्तिमयं शाश्वतं धाम समधिष्ठितवानित्यत्र नास्ति लेशोऽपि संशयस्य, तथाप्येते वयमेतस्य महापुरुषस्य सौम्यमधुरामाकारसम्पदं, पाण्डित्यं, प्रतिष्ठां, सर्वविधानां गर्वोत्पादिकानां सामग्रीणां वाहुल्येऽपि तादृशं विनयमाहात्म्यञ्च मुहुर्मुहुः स्मरन्तो हन्त सन्ततमशान्तिमेव सन्तनुमः । तथाविधस्यादर्शभूतस्य पुरुषधौरेयस्य पुनर्दर्शनमस्मद्भाग्यायत्तं नवेति न खलु निर्द्धारयितुं शक्नुमः । कालक्रीडनकानामस्माकं का पुनर्गतिरश्रुमोचनादन्या । धैर्यमवलम्ब्य पितुश्चारित्रसम्पदधिक्रियतां तत्पुत्रगणैरित्यस्माकं नियताशंसनम् ।

* नमो ब्रह्मण्यदेवाय *

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )



"न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् )

प्रथम वर्षे } सौर फाल्गुनः शकाब्दाः १८५० { एकादश संख्या ।

## भारतगीतिका ।

इन्दीवर मरकत नव जलधर रुचि सुन्दरः
कुन्द दशन मन्दस्मित बन्धुर मधुराधरः ।
नील नभसि दिनमणिरिव निकषोपलवक्षसि
कौस्तुभमणिरमुमयि किमु मनसि न ननु रक्षसि ॥ १ ॥

सरल शिशुभिरपि युवतिभिरिह यः खलु मल्लैः
क्रीड़ति स्म वीरवृषभ सवलमुक्त भल्लैः ।
समरकुशल सबल बाहुयोद्धृपुरुषयूथै-
र्विजहार च हस्तिभिरपि धूलिधूसरविकुथैः ॥ २ ॥

अस्त्र शस्त्र शातनपटुररिषु सम्यगचलः
बाहुयुद्ध कुशलोऽपि च गदायुद्ध कुशलः ।
हयगजयो र्नावोऽपि च चालनकृतकर्मा
गृहं चत्वर सदासमपि कल्पित परिकर्मा ॥ ३ ॥

योद्धृषु युधि विचचार च स खलु परमयोधः
ज्ञानसदसि विरराज च योऽप्यगाधबोधः ।
नरपति परिषदि च मन्त्रमददादिव मन्त्रं
राजराजमपि परितोऽचालयदिव यन्त्रम् ॥ ४ ॥

वीणयापि वेणुनापि कण्ठेन च मधुरं
गायन्नपि युवतिवृन्द मकरोत् किल विधुरम् ।
मुखमारुत पूर्ण विवर शङ्ख घोर घोषं
व्यद्रावयदुत्थाप्य च निखिलभुवन कोषम् ॥ ५ ॥

अपहाय च सकलवर्षमवततार विश्रुते
त्वदुरसि किल कृष्णचन्द्र इन्दिरापतिराप्लुते ।
सुकृतान्यवगच्छसि न किमुरगपतिनिवासि—
न्युरसि यस्य चरणचिह्नमद्यापि च दधासि ॥ ६ ॥

इत्यादिकमितिहासं काव्यामृतधारं
तुच्छीकृत दुग्धोदधि रस सागर सारम् ।
तव भारत भूमि मातरुरसि महाभारतं
योऽसृजत्तमपि न वेत्सि करुणार्णव दैवतम् ॥ ७ ॥

षट्त्रिंशत् संख्य विपुल पुराणानि यो जगौ
भातः खलु यस्य साध्वि भवजलधौ द्वौ नगौ :
एकोऽस्ति च बोधोज्ज्वलदनल जाल पुञ्जः
गिरिरपरो हरिहररति सरिदावृतकुञ्जः ॥ ८ ॥

कपिलः किल कलुषराशि नाशी स पतञ्जलिः
यजन निपुण जैमिनिरपि विवृतकर्मकन्दलिः ।
द्वैपायन उदयमाप ऋषिकेशरि गौतमः
इह कणाद आससाद जननं मुनिसत्तमः ॥ ९ ॥

तेन तेन मुनिना ... तव ... वासिता:

षड् दर्शन-सिन्धव इह नन्धव इव मानिताः।
क्षारं किल सागरस्य सलिलं वितरन्ति ते
नियतममृत मभिनवमिव तत्र तत्र मन्त्रिते ॥ १० ॥

---

## प्राप्तकालं किमपि।

[ निबन्धकाः—पुण्यपत्तनीयानन्दाश्रमस्थशास्त्रिणः ]



समुपस्थितोऽयं तथाविधो विस्मयकरः समयः। कस्कोऽपि वा भवतु विद्वानुताविद्वान्, बहुश्रुतो वाऽनाघ्रातपदवाक्यप्रमाणकुसुमगन्धः, आस्तिक आहोस्विद्गलहस्तितसकलशास्त्रमर्यादः, अलोचनगोचरीकृतमनुयाज्ञवल्क्यव्यासपराशरादिस्मृतिग्रन्थनिकुरम्बो वा स्वप्नेऽपि नश्रुतनिर्णयसिन्धुधर्माब्धिसारस्मृतिकौस्तुभाद्यमहानिबन्धो वा समयानुसारं जनतानुरूपं च परिवर्तयितुमेव कामयते भगवन्तं वैदिकं धर्मम्। सकलोऽपि ननु प्राचीनपरम्परां समवगणय्य सकलदेशाचारान्परिभाव्य तिरस्कृत्य च प्राचीनकुलाचाराननादृत्य शास्त्रीयमर्यादामुररीकृत्य च सकलतत्त्वं स्वातन्त्र्येणैव निर्भीकतया च स्वकपोलकल्पितानात्मनो विचारान्परेषां पुरस्तादाविर्भावयितुं प्रयतते। प्रेरयति चेतस्ततो व्याख्यानशो लेखशो वा प्रमाणाभासवन्त्यर्थान्तरप्रयुक्तानि संगृह्य संगृह्य वाक्यानि स्वकीयं मतमुपष्टम्भयितुम्। अपरामृशन्नेव पौर्वापर्यमविचारयन्नेव स्वीयां दुरायतिमननुसंदधान एव श्रुतिस्मृतिपुराणेतिहासस्थवाक्यार्थस्य प्राबल्यदौर्बल्यं स्वीयमतोपोद्बलकं शास्त्रार्थं निर्मन्दाक्षं सावष्टम्भं च निर्णिनीषति। निर्णयन्नपि न येषोऽङ्गीति, इत्यहो! विजृम्भितं व्यामोहस्य दुश्चेष्टितं कलिकालस्य दौर्भाग्यं वाऽस्तु भारतवर्षस्य दुरदृष्टं वा सनातनधर्मस्य।

एवं सत्यप्यस्मिन्कराले कालेये काले चुलुकितशास्त्राब्धयो महामहनीया आस्तिकाः सङ्ख्यावन्तः 'अनुहुंकुरुते घनध्वनिं न च गोमायुरुतानि केसरी' अथवा 'नहि रुतमनुरौति ग्रामसिंहस्य सिंहः' इत्यभियुक्तानामाभाणकं चेतःकुहरे कुर्वाणास्तूष्णींभावमेव यद्यङ्गीकुर्युस्तर्हि बाहुल्येन ज्ञानलवदुर्विदग्धाः परायत्तधिषणाः सुतरां भूयांसो जनाः श्रद्दधाना अपि भगवति वैदिके धर्मेऽनुतिष्ठासवः श्रौतस्मार्तकर्मविधानकदम्बानि महान्तं व्यामोहं समापन्ना इत्थं क्रियाचारविचारविधुराः स्वकर्तव्यतो भ्रश्येयुरात्यन्तिकीमनर्थसोपानालीमाप्नुयुर्निःश्रेयसाच्च प्रतिहन्येरन्। अनिच्छन्तोऽपि विवादाध्यवसायं 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायेन संभाव्यमानं कतिपयैः पण्डितंमन्यैरशास्त्रीयधर्मपरिवर्तनं प्रत्याख्याय परमार्थभूतं वैदिकं पन्थानं प्रथयितुं च श्रीभागीरथीतरङ्गपरम्परासमलङ्कृते श्रीमद्भक्तकामकल्पद्रुमविश्वेश्वराधिष्ठिते श्रीमति सुगृहीतनामधेये काशीक्षेत्रे, अखिलभारतवर्षीयब्राह्मणमहासम्मेलनप्रवर्तका अन्तर्वाणिप्रवरास्तत्रभवन्तः श्रीमन्तो दृढबद्धपरिकरा इत्येतन्महाप्रमोदास्पदम्, जीवनौषधं खलु धर्मस्य पराकाष्ठा च नास्तिकमूर्धन्यानां विषण्णताया अपि च विलासो भगवत्याः सुखोदर्काया भवितव्यतायाः ।

समालोच्यानां शुद्धिविवाहजातिपरिवर्तनादिप्रश्नानां, पङ्क्तेरुत्तराणि यावद्बुद्धिबलोदयं दित्सवोऽपि वयं नतरां पारयेम, केवलां लेखनिकां व्यापारयन्तः । प्रतिपक्षाक्षेपकवचांसि प्रत्यक्षं श्रुतिपथविषयाण्यकृत्वैव सर्वथाऽपि स्वमताविष्करणे प्रयतनं न पर्याप्तं जायेतेति मन्यामहे ।

एवंत्वेऽपि विषमतमेऽस्मिन्समये नहि जोषंभावं भजामहे । न वोदास्महे । अद्ययावत्संप्रचलता वैदिकसंप्रदायपरीवाहेण समर्थितं, परःसहस्रैः श्रुतिवचनैः प्रमाणतया शिरोधार्यैर्निर्विचिकित्सं व्यवस्थापितं भूयोभिर्महाग्रन्थकारप्रकाण्डैराशितकर्थैः स्वकर्मानुष्ठानभावितदोष-

लेशं क्षेमंकरं वैदिकं धर्मं नहि लेशतोऽपि परिवर्तयितुं चेतसाऽपि प्रवर्तामहे ।

जाजल्पतु नाम साधिक्षेपं, 'अकोला'दिपरिषत्सु शुभंयुं भगवन्तं धर्ममवमन्वाना मितंपचमतयो वराका वाचाटाः प्रकटयन्तु साटोपं वृत्तपत्रमासिकादिषु नियतकालिकेषु फल्गूनालापान्, कुपूयविचारसरणिसंपूरितान्तरङ्गाः उल्लालयन्तु वा सतिरस्कारं जनानर्धमुग्धान्स्वीयैश्चटुलवाक्प्रलापैः स्वधर्मावनवनकुठाराः, विपर्यस्यन्तु वा सेर्ष्यं भाविकानां सतीं मतिं, संकोचयन्तु वा सनिराकारं श्रद्धालूनां वैदिकीं भावनां, तदेतत्सकलमप्यतिरभसोक्तत्वादसामञ्जस्यविलसितं सुदूरं हेयमेव प्रेक्षावद्भिः । हन्त भो विविधज्ञानारण्यानीविहरणकण्ठीरवा धीरास्तत्तेषां जाजल्प्यमानानां मिथ्याभिमानवतामकाण्डताण्डवविपिनं समूलमुन्मूलयितुमन्वहमधोऽधो गच्छन्तीं परमपुरुषार्थसंपादयित्रीं धर्मप्रवृत्तिं पुनरुज्जीवयन्तस्तदर्थं च संनद्धसंनाहाः श्रीमन्त इति यत्सत्यं सुखाकरोत्यन्तरङ्गमस्माकम् ।

मन्यामहे जगदवनायैवाऽऽनन्दकन्दलितं श्रीमत्कैलासं संजिहानेन श्रीगौरीरमणेन विश्वनाथेन प्रियजनविरहभीरुतयैव सह श्रीमत्या भागीरथ्या कृतवाराणसीनिवासेन श्रीविश्वेश्वरेणैतस्मिन्धर्मसंरक्षणकार्ये संप्रेरिता इति । अयि विद्वांसः, अनुमोदामहे श्रीमद्रीकृतं विधित्सितं वारसहस्रं ब्राह्मणमहासम्मेलनकार्यम्, निष्प्रत्यूहं स्वीयानुकूल्येनैव समापयतु करुणाङ्कुरितकटाक्षो भवानीकान्तो विश्वेश्वर इत्यलं पल्लवितेन इति शम् ।

# प्रश्नोत्तरविमर्शः ।

( निबन्धकः—करम्बल्ली पद्मनाभाचार्यः वेदान्तप्रधानपण्डितः, द्वैतशिरोमणिशाला, उडुपि । )

भैष्मीविद्युत्समाश्लिष्टो मध्वहृद्वियदाश्रयः ।
अभीष्टवर्षणः कृष्णजीमूतः स्यान्मुदेऽनिशम् ॥
वादिमत्तेभदुस्तर्ककुम्भसम्भेदनोद्यताः ।
मध्वकेसरिसद्युक्तिनखराः पान्तु नः सदा ॥

भोः सर्वतन्त्रस्वतन्त्राः ! लोकमात्रोद्दिधीर्षवः सामाजिकप्रवराः ! श्रीमतां भवतामयं दुराचारदुर्नीतिदुरुक्त्यपेयपानाभक्ष्यभक्षणाकार्यकरणागम्यागमनप्रमुखानन्तदोषदूरीकृतदेवगुर्वाद्यादरातिशयानां समुद्दिधीर्षया यो धर्मशास्त्रतद्व्याख्यानादपरिवर्तनश्रद्धातिशयः सोऽस्मत्स्वान्तमत्यन्तं विस्मापयति यद्यपि, तथापि दिनं २५–७–१६२८ दिवसीये पत्रे 'परे चे' त्यादिना प्रदर्शितानां पक्षाणां मध्ये यश्चतुर्थः पक्षः केषांचित्सम्मततया प्रतीयते प्रायः स एव कतिपयविशेषसहितोऽस्मन्मानसमण्डलं मण्डयति न तु 'केचने' त्यादिनोक्तास्त्रयोपि कल्पाः ।*

तत्र शास्त्रतद्व्याख्यानादिपरिवर्तनपक्षौ द्वावप्यतीव गर्हितौ न विद्वच्छ्रुतिपथमप्युपवेष्टुमुचितौ । अर्थविशेषपरतया प्राचीनप्राज्ञशिखामणिगणप्रणीतव्याख्यानपद्धतिमनुसृत्य निखिलसुजनसमाचरितस्वप्रतिपादितधर्माणां धर्मशास्त्राणां आधुनिकोक्तदुराचारदुर्नयापाराकूपारकल्लोलनिगूढनिखिलाङ्गानां परिस्थितिमनुसृत्य यत्परिवर्तनमङ्गीकृतं कैश्चित्तत् सर्वथा ऽप्रामाण्योररीकरणानतिरिक्तमेवेति निश्चेतुं न किञ्चिद्वाधकम् ।

किञ्च किमिदं धर्मशास्त्रतद्व्याख्यानयोः परिवर्तनं नाम ? अनेक-



* विगतब्राह्मणमहासम्मेलनस्यानुष्ठानपत्रं द्रष्टव्यम् ।

प्रमाणोपष्टम्भेन प्राचीनव्याख्यातृविनिर्णीतार्थानपहाय स्वेच्छामात्रपरिकल्पितार्थपरत्वमुत शास्त्रं यथा आधुनिककुजनकुत्सिताचारानपि सहते तथा विधानम् ? अथान्यदेव यत्किञ्चित् अनिर्वचनीयं वा ? नाद्यः, ततोऽपि बलवत्प्रमाणविरोधसापेक्षत्वात् अधुनातनपरिस्थितिव्यतिरेकेण विरोधिप्रमाणस्यादर्शनाच्च। न द्वितीयः, शास्त्रं स्वोक्तविरुद्धमाचरतः बाधत एवेति निर्धारणात्, अन्यथा कश्चित्सुरां पीत्वापि तन्निषेधिकायाः 'न सुरां पिबेदि' त्यादिकायाः श्रुतेः स्वेच्छानुसारिणमर्थं कल्पयन्नपि न प्रत्यवेयात्। एवमेव शतमकार्याणि कृत्वापि न प्रत्यवेयादिति। न तृतीयः, तादृशपरिवर्तनस्यादर्शनात्। अपि च यदि अनास्वादितानाघ्रातशास्त्ररसगन्धानामनुपासितधर्मज्ञचरणानां स्नानसन्ध्याद्यखिलश्रौतस्मार्तकर्मविधुराणां केवलं पैशाचीं प्रवृत्तिमवलम्ब्य सौवकुणपमात्रपरिरक्षणतत्पराणां जन्मान्तरमप्राप्यैव संप्राप्तपशुस्वभावानां आधुनिककुजनानां परिस्थितिः शास्त्रपरिवर्तनं प्रयोजयेत्तर्हि मत्तोन्मत्तादिप्रवृत्तिरपि तथा किं न स्यात् ? अविशेषात्। किञ्च वर्तमानां परिस्थितिं पालयितुं यदि शास्त्रतद्व्याख्याने परिवर्त्येते तर्हि श्वस्तनी प्रवृत्तिरन्यैव परश्वस्तनी त्वपरैव तदुत्तरत्राप्येवमेवेति तदातदातनीं तां तां परिस्थितिमनुरुध्य शास्त्रादिपरिवर्तने शास्त्रस्य कीदृशी मर्यादा दत्ता स्यात्पण्डितप्रकाण्डैः।

एवं च शास्त्रं परस्परविरुद्धार्थकतयोन्मत्तवचनवदुपेक्षणीयमेव स्यात्। तत्तत्कालीनपरिस्थितिमनुरुध्य शास्त्रपरिवर्तनेऽनवस्थितिरेव स्यात्। ततश्च तत्क्वापि कस्मिन्नप्यर्थे परिनिष्ठां न लभेतैव। शास्त्रमप्यस्मदभिमताऽनाचारानेवानुसरति यदि तदाऽस्माभिः शास्त्रं कुतोऽनुसर्तव्यं, ततः स्वच्छन्दमेव वर्तामह इति शास्त्रेऽनादरातिशय एव समुत्पद्येत सज्जनानामपि। किञ्च मनुयाज्ञवल्क्यपराशरगौतमप्रभृतिभिर्यत्शास्त्रप्रणेतृभिः सुचिरकालीनस्वेष्टदेवताराधनतपस्यादिसत्साधनाराधिततत्प्रसादसाध्यसाक्षात्कृतसकलवेदाभिमान्यनुग्रहेण तद-

र्थान्याथातथ्येन विज्ञाय रचितानि धर्मशास्त्राण्यपि यदा परिवर्तन-मर्हन्ति किं वाच्यं तदा इतिहासपुराणब्रह्मकर्ममीमांसादिकमखिलपरा-परतत्वावबोधकमपि शास्त्रजातं वा परमाप्ततमोक्तवचनजातं वा परि-वर्तनमर्हतीति । तत्परिवर्तनस्यापि केषांचिदिष्टत्वात् । ततश्च शब्दमात्र-प्रामाण्यमेव लुप्येतेत्यतिगर्हितावादिमौ द्वावपि पक्षाविति वक्तुं न किञ्चित्प्रतिरोधकम् । 'यद्वै किंच मनुरवदत्तद्भेषज' मित्यादि श्रुतिपरिग्रहातिशयनिश्चितप्रामाण्यकमन्वादिधर्मशास्त्राणां परिवर्तने वा तत्कार्योद्युक्तानां पण्डितशिखामणीनां वा सामान्यवैदिकलौकि-कानां वा महाराजाधिराजादीनां वा सर्वेषामपि धर्माभिमानिदेवता-व्याकोपेनाधरं तम एवान्तिमं फलं भवेदिति विनिर्णयः न राज्ञामाज्ञयापि निवार्यते । तत इदानींतनकुजनपरिस्थितिर्यदि निवा-रयितव्या यदि तदुद्दिधीर्षा तदा तान्प्रति तदुपदेशराजनिर्बन्धादिनो-पायान्तरेणैव निर्वर्तनीया । न तु प्राचीनबहुप्रमाणसंवादितया, पूर्वो-त्तराऽविरुद्धार्थकतया च निश्चितप्रामाण्यकव्याख्यानविरुद्धार्थान्तर-परिकल्पनयेति सर्वं सुस्थम् ।

अत्रान्तिमतयोक्तयोरेकत्र—'तत्तत्प्रमाणविशेषेण परिस्थित्यनुगुण-मर्थशास्त्रोपष्टम्भेने' ति अपरत्र च—'धर्मशास्त्राविरोधेनार्थशास्त्रोपयो-गाङ्गीकारेणे' ति च पृथग्वाक्यद्वयप्रतीत्या तत्र लोकशास्त्रव्यवहारबलेन शब्दशास्त्रार्थशास्त्रभेदेन शास्त्रद्वैविध्यं अर्थशास्त्राणां तु कर्मब्रह्ममीमांसा-श्रुतिस्मृतिपुराणेतिहासादिभेदेन आयुर्वेदधनुर्वेदगान्धर्वस्थापत्यादीना-मतिबहुत्वं च प्रसिद्धम् । धर्मशास्त्रार्थशास्त्रभेदेन द्वैविध्योक्तिस्तु अस्म-न्मनः सन्देहसिन्धौ न्यमज्जयत् । धर्मशास्त्रेणार्थशास्त्रबहिष्कृतेन शब्द-शास्त्रे स्वस्य प्रवेशोपायोऽन्वेष्टव्य उत यत्र कुत्रापि वेति संशयः । पुनरयं विमर्शः समजनि-आद्ये प्रवेशे श्रुतिस्मृत्याद्यात्मकस्य तस्य विधिनिषे-धादिरूपस्यापि शब्दशास्त्रत्वमापद्येत । द्वितीये प्रवेशोऽनुपपन्न एवेति । एवमादिरीत्या बहुधा विमृश्य अर्थ वदता अर्थशास्त्रपदेन प्रायः आरोग्य-

शास्त्रं धान्यद्वा किञ्चिद्विवक्षितं भवेदन्यस्यानवकाशादिति सम्भाव्य विचारः पुनरारभ्यते ।

स्वर्गापवर्गादि फलक धर्मादिविधायकस्य धर्मशास्त्रस्याप्राधान्यं श्वकाकगृध्राद्युपभोग्यकुणपमात्ररक्षणोपायप्रतिपादनपरस्यार्थशास्त्रस्य प्राधान्योपष्टम्भनं च किञ्चिच्चार्वाक पक्षपातं न जहाति । तेनापि कलेवररक्षणोपायप्रतिपादनपरस्य स्वशास्त्रस्य प्राधान्याङ्गीकारात् 'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते' इत्यादि भस्मीभूतस्य देहस्य पुनरागमनं कुतः ? तस्मात्सर्वप्रयत्नेन ऋणं कृत्वा घृतं पिब' इत्यादि च प्रधानतयोक्तम् । अस्माभिस्तस्यापि प्रामाण्याङ्गीकारः स्यात् ।

चतुर्थपक्षः शास्त्रसंमत एव । धर्मशास्त्रप्रामाण्यतद्व्याख्यानप्राचीनपद्धत्यादे रविरोधाङ्गीकारात् ।

इत्थं द्वितीयपत्रोपलब्धप्रश्नावल्युत्तरमनेकधर्मशास्त्रसङ्गसाध्यमप्याधुनिककुजनानां वर्तमानपरिस्थितिर्धर्मशास्त्रपरिवर्तनेऽपि एकप्रकारेण श्वोभूतेनावतिष्ठत एवेति अवधारणं परमास्तिकैर्हृदि धर्तव्यमेवत्यत्र निरवधिकाप्तादिमूलकतया निश्चितप्रामाण्यकेतिहासपुराणादिवाक्यान्युदाहरिष्यामः । आस्तिकानां तत्प्रामाण्यादिविप्रतिपत्तौ न्यायसाम्येन धर्मशास्त्रप्रामाण्यादावपि सा स्यात् अविशेषात् । तानि च वाक्यानि श्रीमन्महाभारते शान्तिपर्वणि राजधर्मे नवोत्तरषष्टितमे ( ६९ )ऽध्याये युधिष्ठिरं प्रति भीष्मवाक्यानि यथा—

कलावधर्मो भूयिष्ठो धर्मो भवति न क्वचित् । सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः ॥ १ ॥ शूद्रा भैक्ष्येण जीवन्ति ब्राह्मणाः परिचर्यया । योगक्षेमश्च नाशश्च वर्तते वर्णसङ्करः ॥ २ ॥ वैदिकानि च कर्माणि भवन्ति विगुणान्युत । ऋतवो न सुखाः सर्वे भवन्त्यामयिनस्तथा ॥ ३ ॥ ह्रसन्ति च मनुष्याणां स्वरवर्णमनांस्युत । व्याधयश्च भवन्त्यत्र म्रियन्ते चाशतायुषः ॥४॥ विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा । क्वचिद्वर्षति पर्जन्यः

क्वचिच्छस्यं प्ररोहति ॥ ५ ॥ रसाःसर्वे क्षयं यान्ति यदा नेच्छति भूमिपः । प्रजाः संरक्षितुं सम्यग्दण्डनीतिसमाहितः ॥ ६ ॥

तथा हरिवंशे भविष्यत्पर्वणि तृतीयाऽध्याये ५ श्लोकमारभ्य कलिधर्मो निरूपितः—

व्यास उवाच—अरक्षितारो हर्तारो बलिभागस्य पार्थिवाः । युगान्ते प्रभविष्यन्ति स्वरक्षणपरायणाः ॥ १ ॥ अक्षत्रियाश्च राजानो विप्राः शूद्रोपजीविनः । शूद्राश्च ब्राह्मणाचारा भविष्यन्ति युगक्षये ॥२॥ काण्डपृष्ठाः श्रोत्रियाश्च निष्क्रियाणि हवींष्यथ । एकपङ्क्तावशिष्यन्ति युगान्ते जनमेजय ॥३॥ शिल्पवन्तोऽनृतपरा नरा मद्यामिषप्रियाः । मित्रभार्या भविष्यन्ति युगान्ते जनमेजय ॥ ४ ॥ राजवृत्तिस्थिताश्चोरा राजानश्चौर्यशीलिनः । भृत्याश्चानिर्दिष्टभुजो भविष्यन्ति युगक्षये ॥५॥ धनानि श्लाघनीयानि सतां वृत्तमपूजितम् । न कुत्सना च पतिते भविष्यति युगक्षये ॥ ६ ॥ अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः । प्रमदाःकेशशूलिन्यो भविष्यन्ति युगक्षये ॥ सर्वे ब्रह्म वदिष्यन्ति सर्वे वाजसनेयिनः । शूद्रा भोवादिनश्चैव भविष्यन्ति युगक्षये ॥ ८ ॥ तपोयज्ञफलानां च विक्रेतारो द्विजा यतः । ऋतवश्च भविष्यन्ति विपरीता युगक्षये ॥ ९ ॥ शुक्लदन्ताजिनाक्षाश्च कुण्डाः काषायवाससः । शूद्रा धर्मं चरिष्यन्ति शाक्यबुद्धोपजीविनः ॥१०॥ सर्वे वाणिज्यकाश्चैव भविष्यन्ति कलौ युगे । पितृदत्तानि देयानि विभजन्ते सुतास्तदा ॥ कुशीलानार्यभूयिष्ठं वृथारूपसमन्वितम् । पुरुषाल्पं बहुस्त्रीकं तद्युगान्तस्य लक्षणम् ॥ १२ ॥ शास्त्रोक्तस्याप्रवक्तारो भविष्यन्ति कलौ युगे । सर्वे सर्वं विजानन्ति वृद्धाननुपसेव्य वै ॥ १३ ॥ न कश्चिदकविर्नाम युगान्ते समुपस्थिते । कुण्डा वृषा नैकृतिकाः सुरापा ब्रह्मवादिनः ॥ अयाज्यान्याजयिष्यन्ति तथाभक्ष्यस्य भक्षिणः । ब्राह्मणा धनतृष्णार्ता युगान्ते समुपस्थिते । पितॄन्पुत्रा नियोक्ष्यन्ति श्वश्वः श्वश्रूश्च कर्मसु ॥ वियोनिषु चरिष्यन्ति प्रमदासु नरास्तथा । वाक्शरैस्तर्जयिष्यन्ति गुरूञ्शिष्यास्तथैव च ॥ पतीन्सुतान्वञ्चयित्वा

गमिष्यन्ति स्त्रियोऽन्यतः। पुरुषाश्च प्रसुप्तासु भार्यासु च परस्त्रियम्॥ तत्रैव चतुर्थेऽध्याये अप्रमाणं करिष्यन्ति वेदोक्तमपरे जनाः। तदा सुखभगाश्चैव भविष्यन्ति स्त्रियोऽपराः॥ महायुद्धं महानादं महावर्षं महाभयम्। भविष्यन्ति युगे क्षीणे तत्कषायस्य लक्षणम्॥ विप्ररूपाणि रक्षांसि राजानः कर्णवेदिनः। पृथिवीमुपभोक्ष्यन्ति युगान्ते समुपस्थिते॥ निःस्वाध्यायवषट्कारा अनेयाश्चाभिमानिनः। विप्राः क्रव्यादरूपेण सर्वं-भक्षा वृथा वृताः॥ हर्तारः पररत्नानां परदारापहारकाः। कामात्मानो दुरात्मानः स्वोपधाः प्रियसाहसाः॥ निःसारे क्षुभिते लोके निष्क्रिये व्यन्तरे स्थिते। नराः श्रयिष्यन्ति वनं करभारप्रपीडिताः॥ इत्यादि

तथा वायु पुराणे २३ अध्याये ( पृष्ठे ४५ ) ततः कलियुगं घोरं सर्व-लोकभयङ्करम्। कल्पस्य तु मुखं ह्येतच्चतुर्थं नाम भीषणम्। नसुखं नापि निर्वाणं तस्मिन्भवति वै युगे। काल ग्रस्ता प्रजा चापि युगे तस्मिन्भ-विष्यति॥ नराः पातकिनो ये वै वर्तन्ते ते कलौ स्मृताः॥ इत्यादि।

श्रीमन्महाभागवते १२ स्कन्धे ३ अध्याये—कलौ तु धर्मसेतूनां पर्यासोऽधर्महेतुभिः। एधमानैः क्षीयमाणो ह्यन्ते सोपि विनंक्ष्यति॥२४॥ तस्मिंल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः। दुर्भगा भूरिदर्पाश्च शूद्रदासोत्तराः प्रजाः॥ २५॥ यस्मात्क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः। कामिनो वृत्तिहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः॥ २६॥ दस्यूत्कृष्टा जनपदा वेदाः पाषण्डदूषिताः। राजानश्च प्रजाभक्षाः शिश्नो-दरपरा द्विजाः॥ २७॥ अवृता बटवोऽशौचा भिक्षवश्च कुटुम्बिनः। तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः॥ २८॥ ह्रस्वकाया महा-काया भूर्यपत्या गतह्रियः। शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसा-हसाः॥२९॥ पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम्। भृत्यं विपन्नं पतयः कौलङ्गाश्चापयस्विनीः॥ ३६॥ पितृभ्रातृस्वसृज्ञातीन् हित्वा सौरतसौहृदाः। श्वशुरश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः॥ ३७॥ शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः। धर्मं वक्ष्यन्त्यधर्मज्ञा

अधिरुह्योत्तमासनम् ॥ न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि । पुत्रीं भार्यां च कुलजां क्षुद्राः शिश्नोदरंभराः । वित्तमेव कलौ नृणां जन्माचारगुणादयः । धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ इत्यादि ।

श्रीपद्मपुराणे क्रियायोगसारकाण्डे २६ अध्याये जैमिनिं प्रति व्यासवचनं यथा—

कलौ युगे च विप्रेन्द्र सर्वपापैकमन्दिरे । एकपादो भवेद्धर्मः सर्वे पापरता जनाः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः पापपरायणाः ॥ १६ ॥ अत्यन्तकामिनः क्रूरा भविष्यन्ति कलौ युगे । वेदनिन्दाकराश्चैव द्यूतचौर्यकरास्तथा ॥ १७ ॥ विधवासङ्गभग्नाश्च भविष्यन्ति कलौ युगे । वृत्त्यर्थं ब्राह्मणाः केचिन्महाकपटधर्मिणः ॥ १८ ॥ सर्वे स्त्रैणा भविष्यन्ति मादकद्रव्यसेविनः । सदास्त्रीयोनिनिरताः परद्रव्यं हरन्ति च ॥ १९ ॥ परान्नलोलुपा नित्यं तपोवृत्तपराङ्मुखाः । पाषण्डसङ्ग-बद्धाश्च भविष्यन्ति कलौ युगे ॥ २० ॥ रक्ताम्बरा भविष्यन्ति ब्राह्मणाः शूद्रधर्मिणः । कलौ यास्यन्ति निर्वृत्ता उत्तमा अतिनीचताम् ॥ २१ ॥ नीचाश्च धनसम्पन्ना यास्यन्त्युच्चपदं प्रति । प्रदास्यन्त्युपकारिभ्यो दानानि सकला जनाः ॥ २२ ॥ अधर्मबुद्धिलपना धर्मबुद्धिविलापिनः । परोक्षनिन्दकाः क्रूराः सम्मुखे प्रियवादिनः ॥ २३ ॥ साध्वीवादं वदिष्यन्ति भर्त्तारं पुंश्चलीस्त्रियः । परस्त्रीहिंसकाश्चैव गोत्रविक्रयिणो द्विजाः ॥ २४ ॥ कन्याविक्रयिणश्चैव भविष्यन्ति कलौ युगे । स्त्रीजिताः पुरुषाः सर्वे स्त्रियोऽप्यत्यन्तचञ्चलाः ॥ २५ ॥ कलौ युगे भविष्यन्ति सर्वे मर्त्या दुराशयाः । आत्मस्तुतिपरा लोकाः परनिन्दापरायणाः ॥२६॥ भविष्यन्ति च खर्वाङ्गा बाला बह्वन्नभोजिनः । सर्वे वचः स्नेहिनः स्युर्यावत्कार्यं न सिध्यति ॥ २७ ॥ नरान्धर्मपरान्दृष्ट्वा सर्वे चोपहसन्ति वै । वर्धन्त्यधर्मतो लोका स्तस्मात्पापरता जनाः ॥ २८ ॥ नेतुकामाश्च सर्वेऽपि दातुकामा न केऽपि च । कलौ म्लेच्छा भविष्यन्ति राजानः पापतत्पराः ॥२९॥ एकवर्णा भविष्यन्ति विषयार्थं कलौ जनाः ।

कलेः प्रथमसन्ध्यायां हरिं निन्दति मानवाः ॥३०॥ कलेर्मध्ये न पश्यन्ति हरेर्नामानि केवले । ब्राह्मणाः क्षत्रिया वैश्या वृषलाश्च कलौ युगे ॥ ३१ ॥ एकवर्णा भविष्यन्ति वर्णाश्चत्वार एव चेत्यादि ।

इदमत्र किञ्चिद्विचारपदवीमधिरोहति । एतेषामुदाहृतानामितिहासहरिवंशश्रीवायुप्रोक्तभागवतपाद्मपुराणादिवचसामास्तिकप्रवरैः सामाजिकै स्तन्नियामकैर्भट्टाचार्यप्रमुखैश्च निष्कंटकप्रामाण्यमुररीक्रियते न वा ? नेति पक्षे न्यायसाम्येनाष्टादशस्मृत्यादीनामपि तथात्वप्रसङ्गेन तत्परिवर्तनपक्षस्यापि तदप्रामाण्यपक्षत्वापत्तिः । प्रथमे तु तद्वाक्यैरेव वर्त्तमानपरिस्थितेः युगानुसारिण्याः सर्वथाऽनिवर्त्यत्वस्य दुराधारत्वस्य च प्रतिपादनात् तदानुगुण्याय धर्मशास्त्रपरिवर्तनप्राचीनपद्धत्यनुसारितद्व्याख्यानपरिवर्तनयोरसम्भव एव स्यात् । एवं च कालमहिम्ना कल्पान्तसमयातिवेलसमुद्र इवानुसवनमभिवृद्धिमापत्स्यत्सज्जनोद्दिधीर्षा यद्यस्ति पण्डितप्रवराणां तर्हि तद्दुराचारापगमो यावतोपदेशेन सम्पत्स्येत तावानुपदेशः उपन्यासरूपेण वा विधातव्य एव भवेत् । कुजनास्त्वहरहर्धर्मशास्त्राणां पृथक्पृथग्विधया परिवर्त्तनेऽपि ततोऽपि विचित्रानेवाधर्मानाचरेयुरित्यत्र न कोपि विवादः । धर्मशास्त्रपरिवर्तनपक्षे तु अस्मदाचारानेवानुसरन्ति धर्मशास्त्राणि न तानि वयम् अतो धर्मशास्त्रस्वभाव एव एतादृश इति तेषामतिदृढतरा बुद्धिर्जायेतैव । अतः प्राक्प्रदर्शितैव गतिर्यदि वर्तमानपरिस्थितिपरिजिहीर्षा महतां सामाजिकानां राज्ञां चेति निश्चये न काप्यनुपपत्तिः ।

किञ्चोदाहृतप्रमाणोक्तिभिरेव प्रश्नावलीप्रविष्टानां केषांचित्प्रश्नानां क्रममपहायोत्तराणि लक्ष्यन्ते । यतोऽत्र विधवाविवाहादिकं आधुनिकस्त्रीपुरुषाचारादिकं यद्यत्प्राचीनवृद्धैः सम्परित्यक्तं प्रवृत्तरजस्कस्त्रीपरिणयादिकं सामान्येन विनिन्द्यते । अतः प्राचीनप्राज्ञवर्यैर्यद्यद्धर्मतयाभ्युपगतं तत्सर्वं धर्म एव । यच्चाधर्मत्वेन सम्मतं तदधर्म एवेति निश्चेतुं शक्यत्वात् । तदिदानीं कलिकालानुसारिणी कुजनकुनीति-

संहतिः साक्षाज्जगदीश्वरेणापि न निवार्यत एवेत्यतः सामाजिकप्रवर-प्रयत्नोऽप्यत्र सन्दिग्धप्रयोजनक एवेति न त्वशास्त्रीयोऽपरः पञ्चमः सिद्धान्त एवास्मद्बुद्धौ प्रचकास्त्यतितराम् । किञ्च 'अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्विभागे स्यात्' इत्यादिजैमिन्युक्तदिशा उदाहृतवाक्या-नामैकार्थ्येनैकवाक्यतयात्र अभ्याससामर्थ्यात् अनिवर्त्याधर्मत्वावगमात् । तथाचोक्त एव परमः सिद्धान्त इति ।

---

# विधवाविवाहखण्डनम् ।

[ निबन्धकः—राजपण्डितश्रीमुलकराज शर्मा, पटियाला । ]



कुरुक्षेत्रे समरशिरसि स्थितस्य पार्थस्य गाण्डीवं हस्तात् स्रंसते, वेपथुश्चास्य जायते । किमयं महारथी दुर्धर्षं वैरिबलं विलोक्य वेपते । मरणाद्वायं भीतः कापुरुष इव । नायं मरणाद्भीतो न वा भीतो बन्धु-निधनात् पार्थस्तु किमप्यन्यदेव विचार्य वेपते । किं तत् ? तदिदम-सह्यं वैधव्यं वराकीणां स्त्रीणाम् । तन्निमित्तं चामङ्गलं लोकस्य । बाण-निपातेन स्त्रीणां वैधव्यमुत्पादयितुं नोत्सहतेऽर्जुनः । महती सेयं करुणा-वृत्तिरस्य मर्मभेदिन्युद्गारेऽनुभूयते ।

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥
अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥
संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन।
नरके नियतं वासो भवतीत्यनुशुश्रुम॥

ननु कुतोऽस्य दारुणस्य वैधव्यस्य सूत्रपातः? यतो मरणजन्मनी यतो वा दम्पतीभावोन्मेषः इति स्वाभाविको निर्देशः। शतायुर्वै पुरुष इति शास्त्रस्थितेरपवादभूतमिदं वैधव्यं नाम। पुराणेषु, वेदेषु, देवानामपि दम्पतीभावे व्यत्ययोऽवलोक्यते। त्रिलोकनाथस्य भगवतः शंकरास्याकस्मिको वियोगो दक्षसुताया विनाशे। तथैव च सावित्र्या बालवैधव्यप्रसङ्गापत्तिः। तदेवं देवानामप्यनतिक्रमणीये विषये कथमस्माकं मर्त्यानां व्यवहारः स्यादिति विवेचनीयं भवति।

यस्तर्केणानुसंधत्ते स धर्मं वेद नेतर इति वचनमुररीकृत्यान्येतु तत्र तर्केणैव व्यवस्थातुमीहन्ते। यदि पुरुषो भवति बह्वीनां नारीणां पतिः पर्यायेण युगपद्वा कुतस्तेन स्त्रियोऽपि युगपत् पर्यायेण वा न विन्देयुः पतीन् बहूनितिग्रामीणानामपि साधीयसी तर्कपदवी। यदात्मनो नेच्छति तत्परेषां न समाचरेत्, कामश्चाष्टगुणस्तासामिति वचसी निभाल्य न कस्याऽपि सचेतसो वैधव्यसमर्थने चेतः प्रवर्तते।

परमेवं तु तर्ककार्कश्यं दुर्निवारं स्यात्। यज्ञे हतानां पशूनां स्वर्गोपपत्तिश्चेत् कुतस्तत्र न पितरौ हन्येते। अयमपि तर्कस्यैव पन्थः। बाहुल्येन हेत्वाभासोपहतस्य न तस्मात्तर्कस्य प्रतिष्ठानमार्षम्। ततस्तर्कमनादृत्य मुनीनामेव तत्त्वदर्शिनां मतमनुशीलनीयम्। परं तत्राऽपि विवादः। नैको मुनिर्यस्य मतं प्रमाणम्। परं मतबाहुल्येन यन्निश्चितं तत्तु माननीयं भवति।

ऋषयस्तु शुभाशुभस्य निर्देष्टारो निष्पक्षभावेन वैधव्यस्यानन्ततामेव प्रतिपादयन्ति। सत्यपि तत्र भूयसां वचनानां विस्तरे, दिङ्मात्रमेवानुशासनमुदाह्रियते—

न दत्त्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः ।
दत्त्वा पुनः प्रयच्छन्हि प्राप्नोति पुरुषोऽनृतम् ॥
नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥
सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ॥
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ।
स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ॥
वर्णानां संकरं चक्रे कामोपहतचेतनः ।
तदेवं धर्मं साक्षात्कुर्वतामृषीणां दुन्दुभिनिर्घोषः श्रूयते ॥

सुकरं वक्तुं दुष्करमध्यवसितुमिति हि प्रायोवादः । चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् । तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् इत्युदीर्यते गाण्डीवधारिणाऽर्जुनेन, उर्वशीमपि कामेनात्मानमुपहरन्तीं निशीथे यः प्रत्याख्यातवान् । ऋषयोऽपि मनसोदुर्ग्रहत्वमनुभूयोदीरितवन्तः—बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति । इत्थमिन्द्रियग्रामस्य स्वाभाविकीं प्रवृत्तिमालोच्यैव ते वैधव्यप्रकरणेऽपवादानामपि निवेशं चक्रुः ।

दुरूहत्वमेषामपवादानां तत्र तत्र प्रकरणेषु कणेहत्यशास्त्रकारैर्विवेचितम् । न तत्राहं पिष्टपेषणं कर्तुमुत्सहे । पितृभावप्रेरितैः परमकारुणिकैस्तैर्बालवैधव्यं निराकृतम्—

नोदकेन न वा वाचा कन्यायाः पतिरिष्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥
सा चेदक्षतयोनिः स्याद्गतप्रत्यागताऽपि वा ।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥

यत्र च भुक्तभोगाऽपि दैवदुर्विपाकेन वैधव्यमपुत्रत्वं चोपैति, तत्र कुलमूलोच्छेदप्रसङ्गे प्राप्ते धर्मस्य सूक्ष्मगतितामनुभवद्भिरापात-

दुर्गमोऽपि नियोगस्तैरुपदिष्टः । एतदधिकृत्य दृश्यते तत्र भूयान् कोलाहलः । दुन्दुभिनिर्घोषमुद्घुष्टमिदमाश्रित्य न पल्लवयितुमिच्छामि । वेदेष्वप्यस्याघ्रातुं शक्यते गन्धः ।

कुहस्विद्दोषा कुहवस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः । कोवां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥ इति ॥

तदेवं सुनिश्चितेऽपि मार्गे, विरोधिवचनमेकं समूलमुन्मूलयति पूर्वव्यवस्थापितं पक्षम् । तथा च—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पंचस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

सैषा नारदस्य घोषणा महतीमसमंजसतामुत्पादयति । प्रकारान्तरेणास्य निराकरणमुपदिश्यते तैस्तैः शास्त्रकारैरर्थकारैश्च । इति सोयं पुनरुद्वाहो युगान्तरविषयः । तथा चादित्यपुराणम्—ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा । कलौ पंच न कुर्वीत भ्रातृजायां कमण्डलुम् । इति कालविशेषनिर्देशात् पूर्ववचनस्य नियंत्रणं क्रियते ।

यदि हि नाम गोवधादयो युगान्तरेष्वनुष्ठीयन्तेस्म कुतो न कलावपि युगे । नैतेन गोवधादीनामुत्कर्षः साध्यते । साध्यते चेत्तर्हि कुतो न कलावपि स एवोत्कर्षः स्यात् । अथचेद्गर्हितत्वाद्गोवधादीनां निषेधः कुतो नाम युगान्तरेष्वस्य प्राधान्यमुररीकृतम् ? एतेन च वचनेन स्पष्टं सिध्यति यदतः पूर्वं—ऊढायाः पुनरुद्वाहो गोवधो भ्रातृजायाग्रहणं च शास्त्रानुमोदितमेवासीत् । तर्हि सर्वमुत्प्लुत्य गच्छति कलावेव कुतोऽयमपवादः । अत्र न मनः स्थैर्यमालम्बते । इत्थमादित्यपुराणवचनमपि न तृप्तिमुत्पादयति । तदहं मन्ये नारदवचनमिदं वाग्दत्तापरकमेव । तथाचोक्तमपि—

नोदकेन न वा वाचा कन्यायाः पतिरिष्यते ।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥

सा चेदक्षतयोनिः स्यात् गतप्रत्यागताऽपि वा।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति॥

इत्थं निमित्तमात्रं शास्त्रानुमोदितं प्रतिपादितम्।

लोकमतमपि संक्षेपेण विवेचनीयं भवति। विधवानामन्तःपतनमन्येषां तदनुबन्धिनी व्यभिचारव्यथाऽपि न प्रच्छन्ना लोके। विधवानां परमतावलम्बनं तदङ्गत्वेनास्माकं देशस्य ह्रासः इत्यपि महद्दुःखकरम्। परं यदि विधवाविवाहस्योच्छृङ्खलः प्रचारः स्यात्तेनाऽपि महान् कोलाहलः संभाव्यते।

कन्या वरयते रूपमिति वचनेन लक्ष्यते रूपमात्रपरायणः स्त्रीजनः। अत्रमत्रं चरन्तीनामितिवदासामपि निसर्गचपलानां नवनवमधिकर्तुं लक्ष्यते महानभियोगः। तदेवं विप्लुते मनसि सर्वं विप्लुतं भवति। अस्ति पाश्चात्यदेशेष्वस्य विप्लवस्य दारुणं निदर्शनम्। तत्र हि स्त्रिय एकाहनि पुष्पाणीव बहूनधिगच्छन्ति पतीन्। विषदाहादिप्रयोगेणान्या वैधव्यमिच्छन्ति। तद्देशनियमानुमोदितास्ताः स्वैरं स्वैरिणीभावमङ्गीकुर्वन्ति। तदेतत् सर्वमस्माकमपि संभाव्यते। तस्मान्नरकपतनभीत्यैकपतिनिष्ठैव शास्त्रकारैः साधीयसी प्रतिपादितासीत्।

तदेव वैषम्यमुद्दिश्य सूक्ष्मदर्शिभिरस्माकं पूर्वजैः स्थिरीकृतं—न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते। कर्मविपाकापतितं वैधव्यमात्मनः पवित्रीकरणमेव कल्पितम्। तत्रतत्र चोपनिबद्धा अपवादा अपि। असंभवा विधवानां मनःस्थितिश्चेदुच्यते। न तथा। बहुशो दृष्टपूर्वत्वात्। भगवतो बुद्धस्य भार्या शुद्धं निदर्शनम्। न केवलं तदेव, सन्ति तत्र शतशो बालब्रह्मचारिणीनां पावनानि निदर्शनानि। मन एव मनुष्याणां कारणं बंधमोक्षयोः मनसश्च नियंत्रणं धर्मभीरुभावनपरलोककल्याणाशंसनेनैव संभाव्यते।



आम्नातं पूर्वैः कांश्चिदारानाचष्टे इतिवद्वयमपि वैधव्यनिराकरणाय विप-

रीतमेव मार्गमवलम्बयितुमुत्सहामहे। छिन्ने मूले नैव शाखा न पत्रमितिज्ञात्वा वैधव्यस्य मूलमेवोच्छेत्तव्यम् । मूलं चास्य विदितं सर्वेषाम् । बालविवाहो वृद्धविवाहश्च । एतदुद्दिश्यैव पारदर्शिना भगवता मनुना प्रतिपादितं—अधार्यं दुर्बलेन्द्रियैः । दुर्बलेन्द्रियाणामेव गार्हस्थ्यधर्मेऽप्रवेशादस्य वैधव्यस्यापतनमस्माकं देशे । विवाहबन्धनविधावेव दृढं नियन्त्रणमस्माकमभिप्रेतम् । नियन्त्रिते हि तस्मिन् वैधव्यदुःखमपि विरलतामापद्येत ।

इति संक्षेपेण शास्त्रीयं लौकिकं च बलाबलं निर्दिश्य, धर्मस्य सूक्ष्मगतितां च विचार्यास्मिन् गहने विषये धर्मभीरुणा मया, सहृदयस्य कालिदासस्य व्यवस्थामुद्दिश्य विरम्यते । उच्यते च सरस्वतीवरपुत्रेण तेन—

सतां हि संदेहपदेषु वस्तुषु
प्रमाणमन्तः करणप्रवृत्तयः ॥ इति ॥

---

## प्रश्नोत्तरम् ।

[ निबन्धकः—वेदान्तोपनामक श्रीशेषय्यशास्त्री, विजयनगरम् ]



अस्पृश्यानामस्पृश्यत्वं जातितः कर्मतो वेति विप्रतिपत्तौ प्रसङ्गात्प्रथममस्पृश्या निरूप्यन्ते । तत्र प्रातिलोम्येनोढासु ब्राह्मणराजन्यवैश्यस्त्रीषु शूद्राज्जाता ये चण्डालवैदेहिकायोगवाः, ये चानुलोम्येनोढासु क्षत्रियादिस्त्रीषूत्पन्नानां मूर्धावसिक्तत्वादिभेदेन षड्विधानामनुलोमजानां प्रतिलोमजानां च परस्परं साङ्कर्यमाश्रित्य श्वपचाद्यनन्ता जातयश्चोत्पन्नाः । ये वा चतुर्विधानां वर्णानां तत्सङ्कीर्णेभ्यः साङ्कर्यमाश्रित्य चोत्पन्नाः, ये तु कामधर्मावेयधर्मेभ्यः सञ्जाताः म्लेच्छजातिविशेषाः, ये

च पतितास्त इमे सर्वेऽप्यस्पृश्या एव भवन्ति । अत्र च सूतादिभेदेन षड्विधानां प्रतिलोमजानां मध्ये शूद्रादुत्पन्नास्त्रयः स्पर्शनादिरहिताः, तत्रापि च ब्राह्मण्यामुत्पन्नस्त्वत्यन्तं दर्शनादिभिः परिहर्तव्य इति गौतमश्चतुर्थे खण्डे सू० "असमानायां च शूद्रात्पतितवृत्तिः । अन्त्यः पापिष्ठ" इति सूत्रयाञ्चकार ।

सङ्कीर्णसङ्कीर्णजानां श्वपचादीनां स्पर्शने प्रायश्चित्तस्य "श्वपाकं पतितमि"ति माधवीये देवलमुखेनोक्तत्वात्तेषामस्पृश्यत्वम् । संकीर्णसंकीर्णेषु रथकारादिषु केषुचिदेवोपनयनसंस्कारः प्रतीयते । अत एव द्विजत्वाद्रथकारादीनुपनीय वास्तुशास्त्रादिकमध्यापयेद्वचनप्राबल्यादिति विज्ञानेश्वरः । संकीर्णसंकीर्णाश्च बहुधा नामान्तरैर्व्यवहृता उपलभ्यन्ते । साङ्कर्यं च तेषामित्थमितीदानीं निर्णेतुमशक्यम् । माधवादयोऽपि साङ्कर्यं त्रेधा विभज्य तत्र वर्णसङ्करं वर्णसंकीर्णसंकरं चाश्रित्योत्पन्ना जातयः षष्ठिरित्युक्त्वा, सङ्कीर्ण संकरमाश्रित्योत्पन्नानामानन्त्यं निरूपणाशक्यत्वं चाहुः । वर्णसङ्कीर्णसङ्करमाश्रित्योत्पन्नानां केषांचिदस्पृश्यत्वमङ्गीकरणीयम् । अस्पृश्यसंकीर्णेभ्यो वर्णस्त्रीषु जातानामस्पृश्यताया दुर्निवार्यत्वात् । "एताश्च जातयोऽधुनापि निर्णेतुमशक्या" इति विज्ञानेश्वरः ।

अत्र चानुलोमा मातृतः किञ्चिदुत्कृष्टां पितृतोऽपकृष्टां जातिं लभन्ते । तत्रापि मातृजात्युत्कर्षातिशयः तज्जातिनिकर्षातिशयं संपादयति । अयं च न्यायः यत्रास्पृश्येष्वस्पृश्यताबोधकं प्रातिस्विकं वचनं नोपलभ्यते तत्र स्पृश्यत्वास्पृश्यत्वसन्देहे निश्चायकतयानुसन्धेयः । कामधेनोरवयवेभ्यो ये म्लेच्छजातिविशेषा उत्पन्नास्तेषामस्पृश्यत्वं जातितोऽङ्गीकरणीयम् ।

"चाण्डालश्च तुरुष्कश्च द्वावेतौ तुल्यपापिनावि"ति वैद्यनाथीये देवलेन म्लेच्छानां चण्डालसाम्यकथनात् ।

सूतसंहितायां "ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः ।
अस्यासनेन चौर्येण म्लेच्छो विप्राः प्रजायते" ॥

इत्यन्येऽपि म्लेच्छाः प्रदर्शिताः । अत्र चानुलोमजानां प्रतिलोमजानां वा चौर्याचौर्यनिमित्तभेदात्संज्ञाभेदः । अत एव "विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशस्त्रियामिति" श्लोकव्याख्यानावसरे विज्ञानेश्वरेण क्षत्रियायामित्यत्र विन्नायामित्यध्याहृतम् । एवञ्चाधस्ताद्वर्णिता येऽन्त्यजादि म्लेच्छान्ता अस्पृश्या जातिविशेषास्तेषां पुनरस्पृश्यता जातित एवेत्याकलनीयम् । यदपि पतितोदक्यासूतिकादीनां "उन्मत्तं पतितमि"त्यादिवचनैः प्रतिपादितमस्पृश्यत्वं कालतः कर्मतो वा निवर्त्यमिति तत्तत्काले तत्तद्द्रव्यक्रियामात्रवृत्तित्वात् प्रकृतेऽप्रसक्तमिति तन्नोपन्यस्तम् । पूर्वोक्तानामस्पृश्यानां यदि पातित्यादिकमपि स्यात्तदा तत्तेष्वस्पृश्यतातिशयं जनयतीत्यस्पृश्यानामप्यस्पृश्यास्ते भवन्ति । एवञ्चास्पृश्यानामस्पृश्यत्वं जातित एव भवतीति निर्गलितोऽर्थः ।

म्लेच्छानामन्त्यजानां च स्पर्शविषये सभाप्रवेशविषये कूपोदकग्रहणविषये देवालयप्रवेशविषये चान्येभ्यस्तारतम्यरक्षणं योग्यं न वा यदि योग्यं तदा कीदृशं तारतम्यं रक्षणीयमित्यत्र प्रथमतः चण्डालानां दर्शनादियोग्यत्वं विचार्यते ।

चाण्डालानां दर्शनादियोग्यत्वमेव नास्ति । यतः स्मर्यते पाराशर्यां "श्वपाकं वापि चाण्डालं विप्रस्सम्भाषते यदि । द्विजैः सम्भाषणं कुर्यात्सावित्रीं तु सकृज्जपेत् ॥ चाण्डालदर्शने सद्य आदित्यमवलोकयेत् ॥" इति ।

आपस्तम्बोऽपि "चण्डालोपस्पर्शने संभाषायां दर्शने च दोषः । तत्र प्रायश्चित्तमवगाहनमपामुपस्पर्शनम् । संभाषायां ब्राह्मणसम्भाषा । दर्शने ज्योतिषां दर्शनमिति" । अतएव तेषां ग्रामाभ्यन्तरप्रवेशने योग्य-

ताऽपि नास्ति । दृश्यते हि तत्रैव केषुचिदग्रहारेष्वन्त्यजानामप्रवेशनम् । अतएव चानादितस्तेषां ग्रामाद्बहिरेवावासः कल्पितः एवं विधानामन्त्यजानां द्विजाधिष्ठितसभाप्रवेशनाधिकारः कथं सेत्स्यति । कथं वा द्विजैः सह कूपोदकग्रहणाधिकारः । यतः स्मर्यते पाराशर्यां "चण्डालभाण्डसंसृष्टं पीत्वा कूपगतं जलम् । गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयादि" ति । अत्र "चाण्डालभाण्डेन जलं यस्मात्कूपादानयति तत्कूपस्थोदकं पीत्वे"ति माधवः व्याचख्यौ । न हि दृश्यते तटाकेष्वेवंविधो निषेधः । अतएव चानादितस्तटाकेष्वेकत स्तेषामन्यत्रश्च द्विजातीनां जलाहरणमाचारतया परिदृश्यते । एवमेव चण्डालस्वामिकवापीकूपादिषु द्विजातीनां जलग्रहणे प्रायश्चित्तमधिकतया दृश्यते ।

सम्भवति नवाऽलयेष्वन्त्यजानां प्रवेशनयोग्यतेत्यत्र प्रथममालयाः कीदृशा इति पृच्छ्यन्ते । यद्यागमविधिना द्विजातिप्रतिष्ठितमूर्तयस्तर्हि तत्र नास्त्येव तादृशो योग्यता । कार्यैव हि सति प्रवेशने पुनस्तादृशी प्रतिष्ठा । स्मर्यते हि तत्रैव सिद्धान्तशेखरे "चौरचण्डालपतितोदक्याः स्पर्शने सति । शिवाद्युपहतौ चैव प्रतिष्ठां पुनराचरेदि"ति ॥

पञ्चरात्रेऽपि "चण्डालमद्यसंस्पर्शदूषिता वह्निनाथवा । अपुण्यजनसंस्पृष्टा विप्रक्षतजदूषिता संस्कार्या" इति । यदि चान्त्यजैरेव प्रतिष्ठितानां भैरवमातृदेवतादीनां भवन्त्यालयास्तर्ह्यस्त्येव तत्र तेषां प्रवेशने योग्यता ।

अतएव निर्णयसिन्धौ "भैरवोऽपि चतुर्वर्णैरन्त्यजानां तथा मतः । मातरः सर्वलोकैस्तु स्थाप्याः पूज्याः सुरोत्तमाः" इत्यन्त्यजानामपि तथाविधभैरवादिप्रतिष्ठाधिकारः प्रदर्शितः । अत्र चाहुः— पूर्वोक्तचण्डालमद्यसंसृष्टेति पाञ्चरात्रोक्त्या, चौरचण्डालेति सिद्धान्तशेखरोक्त्या चागमप्रतिष्ठितमूर्तिस्पर्शनानधिकारः प्रतीयते । न तु प्रतिष्ठितालयप्रवेशननिषेधोऽपीति कथमन्त्यजानामागमप्रतिष्ठितालयप्रवेशनानधिकारस्ततः सेत्स्यति ।

यदि च तत्तदागममप्रतिष्ठितप्रत्यधिदेवताप्रदेशाप्रवेशनेऽप्युक्तवाक्य-द्वयस्यार्थः कल्प्यते तदापि प्रत्यधिदेवतानामपि स्पर्शनानधिकृतिस्ततः सिध्येत् तत्कथं तत्प्रदेशप्रवेशननिषेधोऽपीति केचित् । तत्र आगम-प्रतिष्ठिताधिदेवताप्रत्यधिदेवताप्रदेशप्रवेशननिषेध परोक्तवाक्यद्वयस्य तात्पर्यकल्पनयाऽन्त्यजानां पविन्निर्तालयावरणप्रवेशनानधिकारस्य सिद्धेः । युक्तञ्चैतत्—"अन्त्यजः पतितो वापि निगूढो यत्र तिष्ठति । विज्ञाते तु ततः पश्चात्त्रिभिः कृच्छ्रै विशोधनमि"ति हारीतोक्त्याऽन्त्यजादिस्पृष्टस्यापि च देशस्य प्रायश्चित्तीयतायाः स्पष्टमवगतत्वात् । तर्हि चाण्डालादीनां तरणो-पाय इति चेदुक्तभैरवाद्याराधनेन क्रमश उत्तमजातीः प्राप्यैवेति मन्तव्यम् ।

किञ्चान्त्यजानां द्विजातिप्रतिष्ठितदेवालयदर्शनपूर्वकनमस्कारस्यैव "अन्येषामपि सर्वेषां प्रणामं मुनिपुङ्गव । पूजा देवालयं दृष्ट्वा प्रणाम-स्तस्य कीर्तित" इति सूतसंहितावचनेन पूजात्वोक्त्या पृथक्पूजानपेक्ष-णात् । अत्र अन्येषां सङ्करजातीयानामिति माधवः । अतएव च तत्रैवा-ख्यायिकायां पुल्कसस्य दूरे स्थितवा दर्शनपूर्वकनमस्कारेणाभीष्टफल-सिद्धिर्वर्णिता सङ्गच्छते । एवं द्विजातीनामन्यप्रतिष्ठितदेवतास्पर्शने तथाविधालयप्रवेशने वाधिकारो न सम्भवति । अतएव—"पाषण्डपूजितं लिङ्गं नत्वा पाषण्डतां व्रजेत् । आभीरपूजितं लिङ्गं नत्वा नरकमश्नुते ॥ यः शूद्रेणार्चितं लिङ्गं विष्णुं वा प्रणमेन्नरः । न तस्य निष्कृतिर्दृष्टा प्रायश्चित्ता-युतैरपो"त्यादिवचनैः शूद्राद्यर्चितालयादिप्रवेशननिषेधस्य स्पष्टमवगतेः ।

अस्पृश्येषु तारतम्यञ्च सङ्कीर्णजेषु पूर्वोक्तन्यायेनोत्कर्षापकर्षौ निश्चित्य तदनुकूलं रक्षणीयम् । कदाचिदस्पृश्यानां स्पर्शोऽपि न दोषायेति प्रद-र्शितं सूतसंहितायाम्—"कल्याणे तीर्थयात्रायां राष्ट्रक्षोभे च सम्भ्रमे । देवोत्सवे च दारिद्र्ये स्पृष्टदोषो न विद्यत" इत्यनेन । इदन्तुवचनमुपलक्षणी-कृत्य वर्तमाने काले परिस्थितिवशात्कथचिदङ्गीकार्य इति प्रतिभाति । एतेन राजकीयसभाप्रवेशादि व्याख्यातमिति शिवम् ।

## काञ्चन विज्ञापना ।

[ निबन्धकः—एम्० वाञ्चिनाथः मुडिकोण्डम्, ताञ्जोर । ]



केचित्, गृहस्थैः साधारणक्षौरकर्मणि लोमवपनं न कर्तव्यम्, अत-एव मनुस्मृतौ—

> क्लृप्तकेशनखश्मश्रुर्दान्तश्शुक्लाम्बरश्शुचिः ।
> स्वाध्याये चैव युक्तस्स्यान्नित्यमात्महितेषु च ॥

शाण्डिल्यस्मृतावपि,—

> क्लृप्तकेशनखश्मश्रुस्त्रिपक्षेषु गृही भवेत् ॥

इत्युक्तम् । न च क्लृप्तकेशनखश्मश्रुरिति पदं लोम्नामप्युपलक्षणमिति वाच्यं, मानाभावात् । न च—

> उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः ।
> केशश्मश्रु लोमनखान्युदक्संस्थानि वापयेत् ॥

इति श्लोकविरोधापत्त्या क्लृप्तकेशेत्यादिपदस्य लोमोपलक्षकत्वमेवेति वाच्यम्—

> विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना ।
> यो वापयति लोमानि स पुत्रः पितृघातकः ॥

इति श्लोकेन लोमनखादिसर्ववपनस्य क्षौरविशेषपरत्वावगमात् तावतापि क्षौरसामान्ये सर्वाङ्गवपनासिद्धेः ।

> आहिताग्नेर्द्वयम्पर्व द्वादशी च प्रशस्यते ।
> भ्रूप्रकोष्ठौ विना सर्वं केशलोमानि वापयेत् ॥

इत्यादिश्लोकेन आहिताग्निविषये क्षौरसामान्ये सर्वांगवपनस्य बोधितत्वेन उदङ्मुखः प्राङ्मुखो वेत्यादिसामान्यवचनस्य आहिताग्निक्षौरपरत्वोपगमसम्भवाच्च ।

आशौचान्ते तु सर्वांगवपनं श्रुतिचोदितम् ।

इत्यादिश्लोकेन गृहस्थसामान्यं प्रति कालविशेष एव सर्वांगवपनस्योक्तत्वात् इत्याहुः ।

द्राविड़देशत्रासिशिष्टगृहस्थास्तु क्षौरसामान्येऽपि सर्वांगवपनं कुर्वते तथाच साधारणक्षौरकर्मणि सर्वांगवपनमावश्यकं न वा । अकरणे प्रत्यवायोऽस्ति न वा इति विषयः पण्डितवर्यैः समालोच्य निर्णेय इत्यभ्यर्थ्यते ।

अस्मिन् विषये आचारातिरिक्तं सुविस्पष्टं प्रमाणमपेक्ष्यते ।

---

## प्रश्नोत्तरम् ।

[ निबन्धकः—पं० श्रीसुब्बारायशास्त्री । ]

—ooꣽoꣽoo—

वन्दामहे यतीन्द्रानुद्दण्डनृसिंहभारतीचन्द्रान् ।
श्रीमत्पुष्पगिरीन्द्रानान्ध्रमहीधर्मरक्षणोपेन्द्रान् ॥१॥

श्रीकाश्यां प्रवर्तितायामखिलभारतवर्षीयब्राह्मणमहासम्मेलनविषयविचारसभायां प्रथमादिचतुर्थान्तप्रश्नानां विचारे सम्भूय प्रचलिते तत्र रजोदर्शनानन्तरविवाहविषये यद्यनूढा कन्या रजस्वला भवति सा कन्या वृषलीति, तत्पतिर्वृषलीपतिरिति, तत्पुत्रो वार्षलेय इति, तत्पिता दोषीति च सर्वैरप्यङ्गीकृतम् । तेषां प्रायश्चित्तानि शास्त्रेषूक्तानीत्यपि सर्वसम्मतम् । किन्तु राजेश्वरशास्त्रिभिस्तदनुयायिभिश्च कैश्चिद्दोषज्ञैःशास्त्रोक्तप्रायश्चित्तेषु कृतेष्वपि तेषाम्पापापनुत्तिरेव भवति नतु संव्यवहार्यतेति उच्यते । वङ्गीयाद्याः केचित्पण्डितप्रवराः प्रायश्चित्तेषु कृतेषु ते सर्वेपि संव्यवहारयोग्या भवन्तीति प्रतिवदन्ति । केचिन्मध्यस्था भवन्ति । एवंस्थिते श्रीपुष्पगिरिसंस्थानास्थानपण्डिता आन्ध्रब्राह्मणसंघप्रतिनिधयो वयं सभायां प्रायश्चित्तपूर्वकरजस्वलाविवाहबोधकानि सर्वाण्यपि वचनानि क्षत्रादिविषयाण्येवेति, निषेधवचना-

नि तु ब्राह्मणविषयाणीत्यतो विवाहात्प्राग्रजस्वला कन्या ब्राह्मणस्य धर्मतः पत्नी कथमपि न भवितुमर्हतीत्युद्घोषणं कृतवन्तः ।

तदुपष्टम्भकानि प्रमाणवचनान्यत्र लिख्यन्ते ।

( १ ) तैत्तिरीयाणां खिलेषु श्रूयते—

पक्षैस्तु कुक्कुटो हन्ति निघर्षेण च सूकरः ।
आगतंगतया श्वानश्चक्षुषा वृषलीपतिः ॥
पितृगृहेषु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥
वृषलीपतिभुक्तानि श्राद्धानि च हवींषि च ।
पितरो न प्रतिगृह्णन्ति दाता स्वर्गं न गच्छति ॥

( २ ) इतिहासेऽपि—

पितुर्गृहेतु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्यास्सानारी वृषली स्मृता ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असम्भाष्यो ह्यपाङ्क्तेयस्सविप्रो वृषलीपतिः ॥
सततं सूतकं तस्य ब्रह्महत्या दिनेदिने ॥

( ३ ) अङ्गिराः—

पितृवेश्मनि या कन्या रजस्तु समुपस्पृशेत् ।
भ्रूणहत्या पितुस्तस्यास्सा नारी वृषली भवेत् ॥
उद्वहेद्यस्तु तां कन्यां ब्राह्मणो मदमोहितः ।
असम्भाष्योह्यपाङ्क्तेयस्स विप्रो वृषलीपतिः ॥

( ४ ) आपस्तम्बः—

प्राप्ते च द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते ।
यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः ॥

असम्भाष्योह्यपाङ्क्तेयस्स विप्रो वृषलीपतिः ।

(५) लघ्वाश्वलायनस्मृतौ—

रजस्वला तु या कन्या यदि स्यादविवाहिता ।
वृषली वार्षलेयः स्याज्जातस्तस्यां सुतस्स्मृतः ॥
वार्षलेयश्च वै कुण्डो गोलकश्शूद्रयोनिजः ।
तज्जाश्चापि हि निश्वासस्युर्माहिषेयश्च विप्रजः ॥

(६) कश्यपः—

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्यास्सा कन्यावृषली स्मृता ॥
यस्तामुद्वाहयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषली पतिम् ॥

(७) मार्कण्डेयः—

या कन्या पितृवेश्मस्था यदि पुष्पवती भवेत् ।
असंस्कृता परित्याज्या न पश्येत्तां कदाचन ॥
विवाहे च न योग्या स्याल्लोकद्वयविगर्हिता ।
एतां परिणयन्विप्रो न योग्यो हव्यकव्ययोः ॥
न तस्यां जनयेत्पुत्रं कानीन इति कथ्यते ।
माता पिता च पुत्रश्च त्रयस्ते वृषलास्स्मृताः ॥

(८) पराशरः—

माताचैव पिताचैव ज्येष्ठभ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
यस्तां समुद्वहेत्कन्यां ब्राह्मणो ज्ञानमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयस्स विप्रो वृषलीपतिः ॥
यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
स भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥

(९) देवलः—

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।

भ्रूणहत्या पितुस्तस्यास्सा कन्या वृषली स्मृता ॥

यस्तामुद्वाहयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥

(१०) यमः—

पितुर्गृहे तु या कन्या पश्यत्यसंस्कृता रजः ।
भ्रूणहत्या पितुस्तस्याः कन्या सा वृषलीस्मृता ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥

(११)—

संस्काररत्नमालायां मरीचिः—
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्योह्यपांक्तेयस्स उक्तो वृषलीपतिः ॥

इत्यादि निन्दावचनेषु "वृषलीपति भुक्तानि श्राद्धानि च हवींषि च" "ब्राह्मणो मदमोहितः" "सविप्रो वृषलीपतिः" इत्येवं ब्राह्मणबोधकपदानामसकृत्स्मर्यमाणत्वाद्रुत्वनन्तरमापत्कल्पतया प्रायश्चित्तपूर्वकं मनुवसिष्ठविष्णुगौतमबोधायनैः प्रतिपादितः स्वयंवरविवाहः क्षत्रियादीनामेव न ब्राह्मणानामिति व्याख्येयः । अन्यथा ब्राह्मणवाचकपदस्य वैयर्थ्यापत्तेः । एवमेव स्फुटीकृतं वीरमित्रोदयेऽपि यथा अत्रिकश्यपौ—

यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥ इति ॥

अत्र ब्राह्मणपदोपादानात्ब्राह्मणस्यैवायं रजस्वलापरिणयननिषेधो न क्षत्रियादीनाम् कुन्त्यादिषु तथा दर्शनात् । इत्यादिना । किञ्च स्वयंवरविवाहाधिकारः क्षत्रियाणामेव न ब्राह्मणानाम् । तथोक्तं महाभारते—

नच विप्रेष्वधीकारो विद्यते वरणंप्रति ।
स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः ॥ इति ॥

हेमाद्रिप्रायश्चित्तकाण्डगताऽविवाहितकन्यारजोदर्शनप्रायश्चित्तप्रकरणस्थवचनेषु—

या कन्यापितृवेश्मस्था यदि पुष्पवती भवेत् ।
असंस्कृता परित्याज्या न पश्येत्तां कदाचन ॥
विवाहे च न योग्या स्याल्लोकद्वयविगर्हिता ।
एतां परिणयन्विप्रो न योग्यो हव्यकव्ययोः ॥

इत्यत्र विप्र इतिपदस्य स्पष्टं श्रूयमाणत्वादृत्वनन्तरविवाहो ब्राह्मणानां सर्वथाप्यशास्त्रीय इत्युक्तप्रायमेव । पुनस्तत्रैव ग्रन्थे विवाहमध्ये वध्वाः प्रथमार्तवसम्भवे प्रायश्चित्तपूर्वकं तत्स्त्रीकार्यतां प्रतिपादयद्भ्यः हविष्मतीरिमा आद्भिः इत्यादिभिः प्रायश्चित्तमुक्त्वा तदनन्तरम्—

तदानीं न परित्याज्या पूर्वं पुष्पवती न चेत् ।
न योग्या हव्यकव्येषु सा नारी वृषली भवेत् ॥
प्रायश्चित्तं तदा कृत्वा कर्म कुर्वन्न दोषभाक् ॥

इत्यादि गर्गवचनेभ्यो विवाहमध्ये पुष्पवत्याः प्रायश्चित्तपूर्वकं ग्रहणे न कापि विप्रतिपत्तिः पूर्वं पुष्पवती न चेदित्यनेन विवाहात्पूर्वमेव रजोदर्शने तु प्रायश्चित्तं कृत्वापि न स्वीकार्येत्युक्तं भवति एतादृशानि वचनानि सर्वाण्यपि ब्राह्मणपराण्येव ऋत्वनन्तरं प्रायश्चित्त पूर्वकं तत्परिणयं प्रतिपादयन्ति यानि निर्णयसिंधूद्धृतानि कन्यामृतुमतीं शुद्धामित्याद्याश्वलायनवचनानि, संस्काररत्नमालोद्धृतशौनकवचनानि तानि तथा विधान्यन्यानि वचनानि क्षत्रियादिविषयाण्येव तेषु यत्र कुत्रापि ब्राह्मणवाचकपदस्यानुपलम्भात् एतावता प्रायश्चित्तपूर्वकस्वीकारपराणां वचनानां क्षत्रियादिविषयत्वं, परित्यागबोधकवचनानां ब्राह्मणविषयत्वञ्च सिद्धं भवति ।

यदा रहः पुष्पवती द्विजस्तामुद्वहेद्यदि ।
कालान्तरे यदा ज्ञाता तदा तां संपरित्यजेत् ॥
यदीच्छेदात्मनश्शुद्धिं तदा चान्द्रायणं चरेत् ।
कामातुरस्तया वर्तेत्स चण्डालसमो भवेत् ॥
पुत्रोत्पत्तिर्यदि भवेत्सदा पतित एव सः ॥

इत्यादि हेमाद्रिधृतगौतमवचनैः ऋतुमतीत्यज्ञात्वा परिणीय कालान्तरे विवाहात्प्रागेवर्तुमतीति परिज्ञायेत तदा तत्क्षणमेव तामपरित्यज्य आत्मनश्शुद्ध्यर्थं चान्द्रायणं व्रतं चरेत् यदि न चरेत्तदा चण्डालसमो भवति तस्यां पुत्रोत्पादने तु पतितएव भवति एतदपि ब्राह्मणपरमेवेति स्पष्टं विज्ञायत एव ।

एवंच शास्त्रादाचाराच्च सर्वथा ब्राह्मणवैश्यजातीयानां तदनुयायिनामन्येषाञ्च ऋत्वनन्तरविवाहो निन्द्यः प्रायश्चित्तपूर्वकमप्यग्राह्य इति सिद्धं भवति क्षत्रियशूद्रादीनामापत्कल्पतयाप्रायश्चित्तपूर्वकमृत्वनन्तरविवाहस्य शास्त्रेणाभ्यनुज्ञानाच्छिष्टाचारप्राप्तत्वाच्च न दोषावहः । तेषामपि ऋत्वनन्तरं चतुर्थवर्षोत्तरकालेपि विवाहं विनावस्थानमशास्त्रीयमेव । परमदयालवो महर्षयः सामान्यतो ब्रह्महत्यादीनां सर्वेषां पापानामपि प्रायश्चित्तान्युक्तवन्तः । तावता प्रायश्चित्तशास्त्रमस्तीति हेतोः पापानि कर्तव्यान्येवेति वक्तुमास्तिकः को वा यतेत । तस्मात्प्रायश्चित्तशास्त्रमवलंब्य ऋत्वनन्तरविवाहं साधयितुं प्रयत्नो न शिष्टसम्मतः ।

अस्मदभिप्राय संग्रह श्लोकाः—

विवाहः प्रागृतोः कार्यस्सर्ववर्णेष्वयं विधिः ।
विवाहात्प्रागृतुमती कन्यका वृषली भवेत् ॥ १ ॥
तत्प्रदा भ्रूणहातास्यात्तत्पतिर्वृषलीपतिः ।
तत्सुतो वार्षलेयस्ते सर्वकर्मबहिष्कृताः ॥ २ ॥
ब्राह्मणैश्च तथा वैश्यैर्न संग्राह्याः कथंचन ।
ग्राह्यास्ते क्षत्रियाद्यैस्तु प्रायश्चित्तपुरस्सरम् ॥ ३ ॥
सर्वं विनष्टं धनमस्मदीयमेकंत्विदानीमवशिष्टमार्याः ।
तदप्यहो नाशयितुं यतन्ते दाक्षत्यहार्दाख्यमनन्यसिद्धम् ॥

# वार्त्ताः सम्पादकाभिप्रायाश्च ।

## हर्षस्थानम् ।

अनतिचिरमनुष्ठितस्याखिलभारतवर्षीयब्राह्मणमहासम्मेलनस्य परमरमणीयं सनातनधर्म्मावलम्बिनां, भाविशुभावेदकं च महासम्मेलनानुष्ठातॄणां, किमपि फलं परिणमदनुभूयते यदवलोकयतामस्माकं चेतःसु कोऽप्यनिर्वचनीयः सुखातिशयः समजनि । भारतवर्षमभितः प्रतिनगरं प्रतिग्रामं ब्राह्मणसंघेषु काप्यपूर्वा जागृतिरवलोक्यते । प्रतिदिनमेवास्माभिः प्रतिदिशं समनुष्ठीयमानानां ब्राह्मणसम्मेलनानामनुष्ठानोदन्तः समुपलभ्यते । एतावदेव महासम्मेलनफलमतः परमपि यदाशास्यते तत्तु भगवतो विश्वनाथस्य करुणाधीनम् । कर्मण्येवाधिकारस्ते मा फलेषु कदाचनेति महापुरुषवचनं प्रमाणयन्तो वयं न विषीदामः । येषां धर्मे विश्वासः शास्त्रेषु श्रद्धा भगवति च निष्कपटा भक्तिस्तैः कथं जलबुद्बुदोपमां कलिहतकलीलां दर्शंदर्शं हताशैर्भूयते ? विस्मर्यते किम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।<br>
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥<br>
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।<br>
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ इति ॥

## वंगीयब्राह्मणसभा ।

सुप्रसिद्धेयं वङ्गीयब्राह्मणसभा बहोः कालादेव देशं धर्म्मं समाजञ्च समुपचरन्ती प्रवर्त्तमाना नानाविधानि समाजहितकराणि कार्याणि विधत्त इति तु केषामगोचरम् ? अस्या एव समुत्साहेन साहाय्येनाध्यवस्येन च वाराणस्यां ब्राह्मणमहासम्मेलनस्यानुष्ठानं संजातम् । साम्प्रतमेव कलिकातानगर्याः प्रसिद्धतमेंऽशे प्रासादकल्पमेकं विशालं गृहं निर्माय तत्र चास्याः सभायाः प्रतिष्ठा व्यधायि तत्सञ्चालकमहोदयैरिति परमस्माकम्प्रमोदस्थानम् । चिराभिलषितं कृत्यमिदं भगवत्क-

रुणाकटाक्षनिःक्षेपेण सुसम्पन्नमतोऽस्माभिरशरणशरणं ब्रह्मण्यदेवं भूयो-भूयः प्रणम्य सभायाश्चिकीर्षितसिद्धिरनुदिनं प्रार्थ्यते अभिनन्द्यते चान्तरिकैः साधुवादैरेतत्सञ्चालकानां सुमहदध्यवसायः।

* * * * *

अतीते सौरफाल्गुनस्य पञ्चविंशदिवसे रविवासरेऽपराह्णे सार्द्ध पञ्चमहोरासमये तस्मिन्नेव नवनिर्म्मिते सभामन्दिरे सुबहूनां ब्राह्मण-विदुषां सामाजिकमहोदयानाञ्च सम्मेलनमभूत् । तत्र भवन्तः पूज्य-चरणा महामहोपाध्यायश्रीमत्पञ्चाननतर्करत्नभट्टाचार्यमहोदयाः सभा-पतिपदमलमकार्षुः । प्रारब्धे च सभाकार्ये क्रमेणाधोनिर्द्दिष्टाः प्रस्तावाः सर्वसम्मत्या परिगृहीताः ।—

## प्रथमः प्रस्तावः —

आरोग्यशालासु (Hospital) मृतानामस्वामिकानां देहदाहः कलिकातानगरे गङ्गातीरे एव भवति तदर्थञ्च कश्चन समयोऽपि निर्द्दिष्टोऽस्ति । एषैव चिरन्तनी व्यवस्था । साम्प्रतं नगररक्षापरिषत्-सदस्यैः कैश्चिन्नवीनसंस्कारपक्षपातिभिः सनातनशास्त्रेषु श्रद्धारहितै-स्तस्या व्यवस्थायाः परिवर्त्तनं कर्त्तुमिष्यते । गंगातीरेऽस्वामिकशव-दाहव्यवस्थां निराकृत्य गंगातीरादतिदूरे कस्मिंश्चित् स्थाने यन्त्रसाहा-य्येन तद्व्यवस्था चिकीर्षिता । हन्त किं कथयामस्तेषां वराकाणां दौर्भाग्यं यदपवित्रस्थाने मृता अपि प्राक्तनपुण्यवशात् गंगातीरे अवैधे-नापि देहदाहेन गंगायामस्थिपातादिना कथमपि सद्गतिं लभन्तेस्म संस्कारकाणां कृपया ततोऽपि वञ्चिताः । अतः सनातनधर्मपक्षपाति-भिः सर्वैरेव सर्वथा तत्प्रस्तावस्य विरोधः कर्त्तव्य इति ।

## द्वितीयः प्रस्तावः —

शारदामहोदयेन व्यवस्थापरिषदि समुपन्यस्तस्य विवाहवयोनियन्त्र-णरूपस्य विधानस्यापि अद्यतनीयं सभा विरोधं करोतीति ।

तृतीयः प्रस्तावः—

ब्राह्मणमहासम्मेलने परिगृहीतस्य संस्कृतविश्वविद्यालयप्रतिष्ठा-प्रस्तावस्य सुसिद्ध्यर्थं समितिसंघटनपूर्वकं धनसंग्रहः कर्त्तव्य इति ।

प्रस्तावेऽस्मिन् परिगृहीत एव समवेतानां सदस्यानामनेके संस्कृत-विश्वविद्यालयस्य साहायकं कर्त्तुं स्वीकृतवन्तः । षष्टिरूप्यकाणि तत्रैव संगृहीतानि । रात्रौ सार्द्धाष्टघटिका समये सभाभङ्गो जातः ।

❀ ❀ ❀ ❀

## दानम् ।

श्रीमता गोस्वामिवर्येण श्री १०८ गोकुलनाथजीमहाराजेन ब्राह्मण-महासम्मेलनस्य कार्यनिर्वाहार्थं रूप्यकाणां पञ्चशती वितीर्णा । साहायकमेतद्बहुमन्यमाना वयमशेषैर्धन्यवादैस्तत्र भवन्तं गोस्वामि-वर्यमभिनन्दयामः ।

❀ ❀ ❀ ❀

## सूर्योदयेऽनुचिता आक्षेपाः ।

विगते खीष्टजन्मदिनावकाशसमये कलिकातानगरे गोवर्धनमठा-धिपतित्वमात्मनः ख्यापयतां श्रीमतां भारतीकृष्णतीर्थस्वामिनामाधि-पत्येन सम्पन्नायां सनातनधर्मसभायां ब्राह्मणमहासम्मेलननेतारः पूज्यपादा महामहोपाध्याय श्रीमल्लक्ष्मणशास्त्रिमहोदयप्रभृतयः समवेता अभूवन्। अनेनैवापराधेन सूर्योदयसम्पादकमहोदयेनैतेषां शास्त्रिचरणाना-मुपरि आक्षेपाः कृताः । यस्य खलु भारतीकृष्णतीर्थस्य ब्राह्मणमहासम्मे-लने शंकराचार्यरूपेण प्रवेशाधिकारो न जातः कथमद्य तस्यैवाधि-पत्येन सम्पन्नायां सभायां शास्त्रिमहाशयानाम्प्रवेशो जात इत्येतदेव मन्ये लेखामाक्षेपाणां मूलम् । यद्यपस्तु—एतदेव विचार्यं केन

हेतुना महासम्मेलने स्वामिवर्यैः सहयोगोऽस्माकं न जात इति ? मतवैषम्यमन्तरेण न किमपि कारणान्तरमासीत् । अस्माभिः श्रुतपूर्वमासीद् यत्तत्रभवन्तः स्वामिमहोदयाः साम्प्रतिकशुद्ध्यादिमतं परिपुष्णन्ति । अतस्तैः सहास्माकं सहयोगः कथं कर्त्तुं शक्यः, अतएव च महासम्मेलने तेषामागमनं न सञ्जातम् । अनन्तरं च मालवीयमहोदयसम्पादिते सनातनधर्ममहासम्मेलने सभापतिपदमधिष्ठाय श्रीमद्भिः स्वामिपादैर्यद्रूयत् समाहितं तत्तु सर्वैर्ज्ञायत एव । अस्मन्मतविरुद्ध-मेकमपि वचनं तेषां मुखान्न निरगमदिति सूर्योदयसम्पादक-महोदयोऽपि जानात्येव । अधुना विचार्यताम् असहयोगस्य कारणं यन्मतवैषम्यं तत्तु सर्वथाऽपसारितमतस्तस्य सभापतित्वेनानुष्ठितायां सभायां शास्त्रिवर्याणां प्रवेशः कियद्दोषावह इति तु सुधिय एव विचारयन्तु । सम्पादकमहोदयेन विस्मर्यते किं यदेत एव महासम्मेलननेतारः पण्डितमहोदयाः पुरा भारतधर्ममहामण्डलमपि स्वमतविरोधीति कृत्वा पर्यत्यजन्निति । महासम्मेलनावसरे महामण्डलेन साकं सहयोगस्तैः कथं समाचरितः ? एतदपि किं वक्तव्यं यत् महामण्डलेन सह पण्डितमहोदयानां मतविरोधोऽद्यापि वर्त्तते एवेति ? न वयं कस्मिन्नपि वैयक्तिकविद्वेषं बिभृमः । परोक्षे कस्कः किं किं समाचरति सतु नास्माकं विचार्यविषयः । यदि नामाद्य तत्र भवान् मालवीयमहोदयः अस्मद्विरुद्धं स्वमतवादं विहाय पुनरपि सनातनमतमुपादत्ते तदा मुक्तकण्ठं समुद्घोषयामः—तं खलु मालवीयमहोदयं वयं शिरसा ग्रहीष्याम इति ।



# ब्राह्मणमहासम्मेलनस्य

## पौष माघयोः

### अङ्कन प्रमादविशेष परिहारः ।

२१७ पृ० २३ पंक्तौ "नागाश्व" स्थाने "नागास्य" इति पाठः ।

२१६ ,, ५ ,, "नास्त्ये भाषा" इति पाठः ।

३०२ ,, ६ ,, "यतः" स्थाने "या हि" इति पाठः ।

३०४ ,, ५ ,, "धिङ्मूढ" इत्यनन्तरं "ब्राह्मणवंश्योऽहं, तथापि सत्यं ब्रवीमि श्रूयताम् ।" इति त्रुटितम् ।

३२२ ,, १६ ,, "प्रपद्यामहे" इत्यनन्तरं "इति ?" इत्यंशस्त्रुटितः ।

३२३ ,, १६ ,, "सुशोभनमेव ।" इत्यनन्तरं " ( विचिन्त्य सखेदम् ) " इति त्रुटितम् ।

३२३ ,, २६ ,, "प्राप्तं" स्थाने 'प्राप्तुं' इति पाठः ।

३२४ ,, ६ ,, "वराकाः । " इत्यनन्तरं (विमृश्य) इति त्रुटितम् ।

३२५ ,, ८ ,, "नुशयं" स्थाने "नुगमं" पाठः ।

३२५ ,, २२ ,, "भविष्ये" स्थाने "भाविष्ये" पाठः ।

३२६ ,, १ ,, "मान" स्थाने "मति" पाठः ।

३२६ ,, १८ ,, "नास्तिकस्य" इति पाठः ।

३२७ ,, १५ ,, "जीवामि" इत्यनन्तरं ( सोद्वेगं निरूप्य सहर्षम्) इति त्रुटितम् ।

३२७ ,, २३ ,, "तिलक विशिख मौराड्ये" इति पाठः ।

३२७ पृ० २७ पंक्तौ "मादन" इत्यत्र "नादन" इति पाठः ।

३२८ ,, ६ ,, "अथ ममा" स्थाने "अथान्योऽ" इति पाठः ।

३२९ ,, ६ ,, "यथा" इत्यादिकं पद्यं गद्यवन्निवेशितमिति दोषः ।

३३० ,, १३ ,, "वर्त्तते" स्थाने "न वर्त्तते" पाठः ।

३३१ ,, १४ ,, "ञ्जलिः" इत्यनन्तरं "साम्प्रतमयं हि" इति त्रुटितम् ।

३४३ ,, १३ ,, अन्यथा "नमः शिवायेत्येवं हि क्रमादक्षरपञ्चक-मित्येवोच्येत" इति पाठः शुद्धः ।

३४३ ,, १४ ,, आरम्भः "अत्र च वचने" इतिरूपः । "स्वरूप" स्थाने "प्रणव रहित स्वरूप" इति पाठः ।

३४३ ,, २१ ,, "समाक्रम्यते" इति पाठः ।



✻ नमो ब्रह्मण्यदेवाय ✻

# ब्राह्मणमहासम्मेलनम् ।

## ( मासिकं संस्कृतपत्रम् )



"न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः ।" ( महाभारतम् )


प्रथम वर्षं } सौर चैत्रः शकाब्दाः १८५० { द्वादश संख्या ।


## भारत गीतिका ।

स्मर नरपति विद्रोहिण मिव कोकिल कैतवे
युवति गण्ड पाटल रुचि पाटलपटलोत्सवे ।
यो बबन्ध विन्ध्याटवि दृढ़ वल्लरि श्रृङ्खलै-
र्दुष्यन्तमसंख्य लोल शाकुन्तल कुन्तलैः ॥ १ ॥

गौरीपति मौलिदीप्त चारुचन्द्र रेखया
विद्योतित इव विलसति मुखरित इव केकया ।
घनतुषार धवल शैल कैलास शिरः स्थिते
पणि कमल दत्तताल कङ्कण घन झंकृते ॥ २ ॥

शाद्वलकृत मरकत रुचि राङ्कवमय संस्तरे
नर्त्तन पर नीलकण्ठ भवनोदर चत्वरे ।
अलकायां धूपरलसदलकां किल सुदतीम्
[illegible] विधुर [illegible] विधुवदनां युवतीम् ॥ ३ ॥

कनक कलश कुच युगेन कियदिव किल नम्राम्
धातृ सकल सृष्टेरपि यः ससर्ज कम्राम् ।
यो ददर्श कालिदास उमया सह शङ्करम्
तं विक्रम नृपति सखं स्मरसि न कविभास्करम् ॥ ४ ॥

यस्य नाम हृदयपटादद्यापि न लुप्तम्
राजराज राजेश्वर मपि समुद्रगुप्तम् ।
अवगच्छसि तं न सम्यगासमुद्र धरणिम्
यः शशास यश्चकार निगमं भवतरणिम् ॥ ५ ॥

अश्वमेध चिह्नानि च यदुपल मय वाहा-
स्तपन तप्त सलिल तुहिन शीकरा वगाहाः ।
दिशि दिशि सति सन्ति सतत मद्यापि च धरणि
ज्वल दनलं जनयसि स्म तं किल त्वमरणिः ॥ ६ ॥

वृत्तं किमु जानासि न हर्ष वर्द्धनस्य
यो रराज राजराजि शिरसि पदं न्यस्य ।
कनक चर्म रत्नोज्ज्वल वेग दृप्त तुरङ्गान्
सपरिच्छद शाणिताक्त सैनिककृत तरङ्गान् ॥ ७ ॥

गर्वोद्धत पर्वत निभ गजान् शुभ्रपताकाः
दधतो गुरु निविड़ कृष्ण मेघानिव बलाकाः ।
स्वर्ण कलस हेमदण्ड चीनांशुक पताकान्
शतशतरथ यूथानपि धर्षित सघननाकान् ॥ ८ ॥

सारनाथ मठसदनः सुगतार्पित मानसः
प्रतिहायन मेव देवि बहिरगमय देव सः ।
श्रमणानपि विप्रैःसह कर्त्तुमिव स सवर्णान्
विकिरति स्म सारनाथ भिक्षु सदसि सुवर्णान् ॥ ९ ॥

अक्षयवट [illegible] [illegible] [illegible] त्रिवेण्याः

तव कपाल मिव सविधे चपल कुन्तल वेण्याः।
विप्रेभ्यो विनिवेद्य स सर्वस्वं भूपतिः
धन्यः किल निः स्वोऽभवदमलीकृत पद्धतिः॥ १०॥

मल्लार गभीर राग—संवृत शशि मिहिरो
यस्य सदसि नभसि बाण भट्टः कवि मुदिरः।
अद्यापि च वर्षन्निव सुमधुरां रुचि रुचिराम्
मोहयति स विश्वं किल कादम्बरी मदिराम्॥ ११॥

स्मारयामि सारस्वत मौक्तिक वरहारान्
नालन्दिक विश्व विश्वविद्यालय विहारान्।
तत्र यत्र पठन्ति स्म विविधविषयविशेषान्
छात्रा इयुरोपिणोऽपि ससंयमनमशेषान्॥ १२॥

झटिति भीम झंझानिल इह निपत्य वेगात्
गुप्तान्वय मुच्छिद्य स नाशं समरेऽगात्।
मात्स्यान्वय इह बभूव गोपालं प्रौढ़ाः
गुप्तमिव त मभिषिच्य च तृप्ताः खलु गौड़ाः॥ १३॥

करयुगधृत तीक्ष्णबाण शाणितकरवालाः
कति दिनानि भुञ्जते स्म वसुधां किल पालाः।
क्षेमीश्वर कविरभव न्महीपाल सदसः
चण्डकौशिक मसृजत्स निःसृतमिव मनसः॥ १४॥

काश्यामपि महीपाल कीर्त्तयः किल वहवः
न ययुः खलु तासु गर्ग यवनोद्धत बाहवः।
परिमलस्य पण्यवोथि मासाद्य च ते बला-
दाकर्ण्य तु महीपाल-नाम भीतिविह्वलाः॥ १५॥

क्षणमपि नहि तस्थुरत्र देशं प्रति प्रस्थिताः
जीवति सति तस्मिन्पुन र्ययुर्न विस्मिताः।

दक्षिणदिशि कृष्णोऽभू दमितबाहु विक्रमः
परनरपति हृदये स च जनितभीतिविभ्रमः ॥ १६ ॥
मञ्जोःपर मभवद्भुवि नरपति रिह भोजः
विशिखेषु च शास्त्रेषु च यस्य तुल्य मोजः।
पातञ्जल सूत्राणा मकरोत् स च वृत्तिम्
स च चकार चरकस्य तु कामपि पारवृत्तिम् ॥ १७ ॥
शास्त्रपुस्त-कानामपि स च चकार सूची-
रि नरपति हृदयं स प्राविशदिव सूचिः।
राज्ये खलु तस्य किमपि कस्यापि च दैन्यम्
नासीत्सति तदपिदूरी—कृतमभूत्ससैन्यम् ॥ १८ ॥

---

## प्रश्नोत्तरम्।

निबन्धकः—पं० श्रीसदाशिवशास्त्री धर्मशास्त्रोपाध्यायः। ( लश्कर )



**प्रश्नः—स्त्रीणां पुंसां वा विवाहकालः कियदवधिः कुत आरभ्य शास्त्रसम्मतः ?**

धर्मानुयायिभिरार्यैर्दारसंग्रहो न केवलं रतये किंतु वंशस्याविच्छेदाय धर्मानुष्ठानाय, पुत्रपौत्रादिद्वारा तत्तल्लोकप्राप्तये चानुष्ठीयते। तदेतत्सर्व-मापस्तम्बो दर्शयति "धर्मप्रजासंपन्नेषु दारेषु नान्यां कुर्वीत इतिवदन्। रतिफलं तु लौकिकमेव। पुत्रपौत्रप्रपौत्रकैर्लोकानन्त्यम्, अग्निहोत्रा-दिभिश्च स्वर्गप्राप्तिरिति द्वयं दारसंग्रहप्रयोजनं योगीश्वरेणाप्युक्तम् लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः। यस्मात्तस्मात् स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः" इति। स च दारसंग्रहः केन विधिना करणीय इति वक्तुं विधीनामष्टविधत्वमाह मनुः—

"ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।
गांधर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥"

तत्र ब्राह्मणेन ब्राह्मेण प्राजापत्येन वा विधिना दारसंग्रहो विधेयः। उक्तविधिना विवाहितायां पत्न्यां ब्रह्मवर्चस्विनः, शिष्टसम्मताः रूपवन्तः सत्यवन्तो गुणिनो धनिनो यशस्विनो धर्मनिष्ठाश्चिरजीविनः प्राप्तभोगाश्च पुत्रा उत्पद्यन्त 'इति तृतीयेऽध्याये—

"ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः॥ ३९॥
रूपसत्वगुणोपेता धनवन्तो यशस्विनः।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः॥ इति।

स्पष्टमभिहितवान्मनुः। ननु ब्राह्मादिष्विति विधिचतुष्टयं प्रदर्शितम् तत्कथमिह ब्राह्मप्राजापत्यौ विधी उच्येते भवता? सत्यं, विधिचतुष्टयस्यापि प्राशस्त्यमुक्तं परं दैवस्य विधेरशक्यतया आर्षविधेश्च विलुप्तप्रचारतया तद्विधिद्वयं नोक्तमिति गृहाण। किंच कन्यापित्रादिना धनं न ग्राह्यमिति स्थितिः।

आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्।
अल्पोऽप्येवं महान्वापि विक्रयस्तावदेव सः"। इति

विवाहविशेषे विहितमपि शुल्कमग्राह्यं मनुर्मन्यते। तादृशधनादानस्य कन्याविक्रयरूपत्वादिति स विधिर्नोक्तः यद्यपि—

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरो वरान्।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यान्नराक्षसान्।

म० अ० ३ श्लोक २३ वचने ब्राह्मणस्यासुरगांधर्वावपि धर्म्यत्वेनोक्तौ, तथापि ब्राह्मादिचतुष्टयस्यैव प्राशस्त्यम्। इतरविवाहेषु क्रूराः, अश्लीलानृतवादिनो ब्राह्मणद्वेषिणो धर्मद्वेषिणश्च पुत्रा जायन्त इति तेनैव अ० ३ श्लोक ४१ प्रदर्शितम्।

आसुरश्च कन्यायाः ज्ञातिभ्यः पित्रादिभ्यः कन्यायै च यथाशक्ति धनं दत्वा स्वेच्छया कन्यास्वीकारः । कन्यायाः नरस्य चान्योन्यानुरागेण चुंबनालिङ्गनादिपरस्परसंयोगपूर्वको गांधर्वः, अत्र च विवाहात्प्राक् सत्यपि मैथुने न विरोध इति विशेषः । आसुरगांधर्वौ द्वावपि ब्राह्मणानां कृते दुर्विवाहाविति शास्त्रकारा आमनन्ति परं पाश्चात्यसंस्कारग्रहगृहीतान्तःकरणैर्लोभमोहवशंगतैर्ब्राह्मणैस्तावेवानुष्ठियेते । तत्फलं च दरीदृश्यत एव । यद्वेदशास्त्रविहिताचारपराङ्मुखाः शूद्राचारा निस्तेजस्काः पितृभ्रातृद्वेषिणश्च सुता उत्पद्यन्ते न तिरोहितं शास्त्रदृशाम् । उक्तेष्वपि ब्राह्मादिविधिषु ब्राह्मस्यैव विशेषतः प्राशस्त्यम्, तेनैव च ब्राह्मणैर्विवाहो विधेय इति ।

अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते ।

इतरेषां तु वर्णानामितरेतरकाम्यया" इति दर्शितवान्मनुः ।

क्षत्रियस्यासुरगांधर्वराक्षसपैशाचाश्चेति चत्वारो विधयः सामान्यतो धर्म्याः प्रोक्ताः "क्षत्रस्य चतुरो वरानिति" तत्रापि राक्षसस्य विशेषतः प्राशस्त्यम् "राक्षसं क्षत्रियस्यैकम्" इति मनुवचनात् । महाभारते दुष्यंतेन गान्धर्वस्यापि प्राशस्त्यमुक्तम् ।

पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ।
पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन" ।

अयमर्थः—अष्टानां विधीनां मध्ये केचनेहलोके, केचन परत्र केचनोभयत्र धिवक्षितवर्णस्य कल्याणकराः तत्र क्षत्रियस्य प्राजापत्यादिविधीनां मध्ये आसुरपैशाचौ अस्मिँल्लोके न हितप्रदावतः कदाचन न कर्तव्यौ । प्राजापत्यः क्षत्रियस्याप्राप्तोपि विधीयतेऽनेन वचनेन "आसुरं वैश्यशूद्रयो." प्रशस्तं विदुरित्युक्तत्वान्नेदं वैश्यशूद्रपरं वचनम् । न चास्य वचनस्य ब्राह्मणपरकत्वम् । "चतुरो ब्राह्मणस्याद्यान्प्रशस्तान्कवयो विदुरित्युक्तत्वात् । परिशेषात् क्षत्रियविषयत्वमेवास्य वचनस्य । अस्मादेव वचनात् क्षत्रियस्य प्राजापत्यविधिना विवाहेधिकारः प्राप्त इत्यवधेयम्

वैश्यशूद्रयोरासुरगांधर्वपैशाचा उक्तास्तत्रासुरः प्रशस्तः पैशाचश्च न प्रशस्तः कस्यापि वर्णस्य।

एवं कस्य को विधिः शास्त्रसम्मत इति संक्षेपतो निरूप्य "लक्षण्यां स्त्रियमुद्वहेदिति" दारसंग्रहविधिः कीदृशोयमिति विवाहकाल निर्णयाय विचार्यते। तत्र तावत्कर्मणां त्रैविध्यं लौकिकालौकिकतदुभयात्मकभेदात्। निदाघोष्मणा क्लांते शीतलमन्दसुरभितपनसंचारविशिष्टं स्थानं सेवनीयम्। गभीरजलाशयसमाश्रयणं वा पिपासाकुलेन शीतोदकपानं लौकिकं कर्म। गुरोरनुगमनं पितृतर्पणादिचालौकिकं कर्म। लौकिकालौकिकं तु,अन्नप्राशनचूडाकरणादि। तत्र विवाहोऽपि लौकिकालौकिकः। विवाहे रत्यादिसाधनत्वांशे लौकिकत्वं धर्म्यानुष्ठानधर्म्यप्रजोत्पत्तिसाधनत्वांशे, अलौकिकत्वं किं च रत्यंशेपि, रतिरेव स्वतःप्राप्ता परं तत्र सर्वोपि विशेषः शास्त्रसमधिगम्यः। यथा क्षुन्निवृत्युपायभूतस्य भोजनस्य प्राप्तत्वेऽपि "सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितमिति शास्त्रेण द्विरेव भोजनं न तु त्रिश्चतुरिति तदपि सायंप्रातरेव न तु निशीथादौ परिसंख्यायते। एवं शास्त्रेणासगोत्रत्वासपिण्डत्वास्पृष्टमैथुनत्ववराल्पवयस्कत्वभ्रातृमत्वकांतिमत्वानन्यपूर्वकत्वाविरुद्धसंबंधत्वादयो गुणाः कन्यायाः सजातीयत्वाविप्लुतब्रह्मचर्यत्वपुंस्त्वकुलीनत्वादयो वरस्य गुणाः संख्यायन्ते। परमिदमत्रावधेयम्। वधूवरयोर्गुणेषु केचन विवाहस्वरूपनिष्पादकाः केचन अतिशयमात्राधायकाः। यथा असगोत्रत्वादयो विवाहस्वरूपनिर्वाहकाः, तान्विना वैधविवाहानिष्पत्तेः। अज्ञानतः सगोत्रसप्रवरविवाहे कन्यात्यागपूर्वकप्रायश्चितस्मरणात्। त्यागश्च न तस्याः, किंतूपभोगत्यागः। मातृवच्च सा जीवं परिपालनीया "सपिण्डां सगोत्रांचेदमत्योपयच्छेन्मातृवेदनं बिभृयात्" इति तिथितत्वे बौधायनोक्तेः। एवमजातविवाहसंस्कारत्वमस्पृष्टमैथुनत्वादिकमपि विवाहस्वरूपनिर्वाहकमेव न तु प्राशस्त्यसंपादकम्। तत्र प्रमाणं स्मृतिग्रंथेषु तत्र तत्र द्रष्ट-

ष्यम् । कुलीनत्वब्रह्मचारित्वादयो वरगुणाः अकपिलत्वादयः कन्यागुणाश्च प्राशस्त्यमात्राधायकास्तैर्विनापि विवाहस्वरूपनिष्पत्तेः । अपुंस्त्वमसजातित्वं च विवाहस्वरूपनिष्पादकं न प्राशस्त्याधायकम् । असजातीयेन पुंसावा विवाहे जाते विवाहस्वरूपस्यानिष्पत्तावपि कन्यायाः पुनरुद्वाह्यत्वमेव विवाहस्वरूपोपयोगिकन्यात्वभ्रंशात् सुप्रसिद्धमेवैतद्धर्मशास्त्रे "नष्टेमृते प्रव्रजित" इत्यादिवचनानां तु वाग्दत्ता परत्वं निबंधकृद्भिर्व्यवस्थापितमेव । इत्थं च दारसंग्रहस्य रागतः प्राप्तत्वेऽपि उक्तगुणविशिष्टेन पुंसा उक्तगुणविशिष्टा दाराःसंग्राह्या नानैवंविधा इति विधीयते । प्रमाणान्तराप्राप्तस्यैवार्थस्य शास्त्रबोध्यतया विशेषणे विधेयत्वं विशेष्ये विधेयत्वं त्वौपचारिकम् ( विशेषणोपरागकृतमिति ) "अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्" नायमपूर्वो विधिः । तथाहि 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । उभयोर्नित्यतः प्राप्ते परिसंख्येति गीयते" तत्रापूर्वविधिर्यथा व्रीहीन् प्रोक्षति अहरहः सन्ध्यामुप-सीत प्रोक्षणसन्ध्यावन्दनादीनामेतद्वाक्याभावे लोकतोनुमानादिना प्राप्त्यभावादयमपूर्वो विधिः । पक्षप्राप्तावप्राप्तांश पूरणफलको नियम विधिर्यथा—

व्रीहीनवहन्ति स्वाध्यायोध्येतव्यः इति अत्र पुरोडाशादिविधिभिस्तण्डुल निष्पत्तावाक्षिप्तायां लोके तण्डुलनिष्पत्तिसाधनत्वेन यानि घरट्टविदलनावघातादीनि दृष्टानि तानि विकल्पेन प्राप्तानीति नावघातप्राप्त्यर्थोऽपूर्व विधिरयं किन्तुविदलनादेः साधनान्तरस्य पक्षे प्राप्तावघातस्य पाक्षिकत्वप्राप्तौ पाक्षिकप्राप्तांशपूरणार्थो नियमविधिः अवहन्यादेव इति नियमेन सर्वथावघाते प्रापितेऽप्राप्तांशाभावात् अप्राप्तांशपूरणरूप नियमफलसिद्धिः । एवं क्रतुविधिभिः स्वानुष्ठानार्थमितिकर्तव्यताज्ञाने आक्षिप्ते ज्ञानसाधनत्वेन वेदाध्ययनपौरुषप्रयोगादिग्रन्थाध्ययनं च पक्षे प्राप्तं तत्र वेदाध्ययनेनैव, क्रत्वनुष्ठानज्ञानं संपाद्यमिति नियम्यते । नचात्रोभयोः समुच्चयेन प्राप्तिरस्तु ततश्च पक्षप्राप्तिरिति शंक्यम्, एकेन फलसिद्धौ साधनांतरस्यासंभवात् ।

उभयोर्नित्यप्राप्तावन्यनिवृत्तिफलकः परिसंख्याविधिः यथा पञ्च पञ्चनखा भक्ष्याः ( पञ्चपञ्चनखा भक्ष्या धर्मतः परिकीर्तिताः। गोधाकूर्मः शशः खड्गी शल्यकश्चेति ते स्मृताः ) न चेदं वाक्यं पञ्चनखभक्षणपरम् तस्य रागतः प्राप्तत्वान्मांसभक्षणे हि मनुष्याणां नैसर्गिकी प्रवृत्तिः तत्प्रतिबंधायेदं वाक्यं धर्मशास्त्रे पठितम्। नायमपूर्वो विधिः स हि केनापि प्रमाणान्तरेणाप्राप्तमर्थं विधत्ते नच पञ्चनखभक्षणं तथा, तद्धि स्वभावतः प्राप्तम्। नापि नियमपरमिदं वाक्यम्, रागतोऽपञ्चनखभक्षणे प्राप्ते पञ्चनखभक्षणं यदि प्राप्तं न स्यात् तदा नियमविधिः प्रसज्येत, अत्र तु यथा पञ्चनखभक्षणं रागतः प्राप्तं तथा अपञ्चनखभक्षणमपि रागतः प्राप्तम् उभयोर्युगपत्प्राप्तत्वान्नायंनियमविधिः। अत इदमपञ्चनख-भक्षणनिवृत्तिपरमिति,भवति परिसंख्याविधिः। परिशब्दोऽत्र वर्जनार्थकः "परेर्वर्जने" इति पाणिनिस्मृतेः, संख्या बुद्धिः, "यत्सांख्यैःप्राप्यते स्थानं तद्योगैरपि गम्यते" इति श्रीमद्भगवतो गीतावचनात् तेन वर्जनबुद्धिः परिसंख्येत्यन्वर्थेयं संज्ञा। प्रकृते रागतः सगोत्रासगोत्रयोः सपिण्डासपिण्डयोः विरुद्धसंबंधाविरुद्धसंबंधयोः कन्ययोर्युगपत्प्राप्तत्वात्, सगोत्रादिविशेषणविशिष्टाया "असगोत्रामसपिण्डां यवीयसीं विरुद्धसंबंधरहितां लक्षण्यां स्त्रियमुद्वहेत्" इति विधिना निवृत्तिः। निवृत्तिफलकादयं परिसंख्याविध्योः पक्षप्राप्तिनित्यप्राप्तिभ्यां भेदेऽपि फलतो भेदो न दृश्यते अवघातनियमेन नखविदलनादिनिवृत्तेः। पञ्चनखभक्षणविधिना अपञ्चनखनिवृत्तेश्च दृष्टत्वेन ( प्रकृतेऽसगोत्रादिविशिष्टोद्वाह विधिना, सगोत्रसपिण्डत्वादिविशिष्टायाः कन्यकाया निवृत्तेर्दृष्टत्वेन ) अन्य-निवृत्तेः फलस्य समानत्वादिति चेन्नैवम् नियमविधावप्राप्तांशपूरणमेव प्राथमिकं फलम्, अप्राप्तांशपूरणं विनान्यनिवृत्यसंभवात्, तदनन्तरम-र्थाज्जायमानान्यनिवृत्तिस्तु न फलम्, एकफललाभेऽन्यफलाऽऽकांक्षा-भावात्। परिसंख्याविधौ तु अप्राप्तांशाभावादप्राप्तांशपूरणरूप फला-संभवादन्यनिवृत्तिरेव फलम्।

त्रिवाहे सर्वथेच्छैव नियामिका, तस्याश्च स्वतःसिद्धतया स्वतः प्राप्तत्वेन शास्त्रेणेच्छाया नियंतुमशक्यत्वेन च, न तदंशे शास्त्रस्य विधायकत्वव्यापारः । किं त्वप्राप्ते,वध्वा अनृतुकालोपलक्षितत्ववरवयोऽल्पत्वादंश एव । तथाच मुनिवचनानि ज्योतिर्निबंधे–षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः । सोमोभुंक्ते ततस्तद्वद् गंधर्वश्च तथानल इति । अस्य वाक्यस्य सहायिनी श्रुतिरपि "सोमः प्रथमो विविदे गंधर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरोयस्ते मनुष्यजाः । सोमोददद् गंधर्वाय गंधर्वो ददद्‌ग्नये । रयिञ्च पुत्रांश्चादादग्निर्मह्यमथोइमाम् । (ऋ सं०मं० १०अ० ३ ४१) नन्वस्य विरोधो दृश्यते, ब्रह्मपुराणे गौतमीमाहात्म्ये । भानुरुवाच "चतुर्थाद्वत्सरादूर्ध्वं यावन्न दशमात्ययः । तावद्विवाहः कन्यायाः पित्रा कार्यः प्रयत्नतः" इति ।

पराशर माधवीये, जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभं कुमारीवरणं दानमिति । सत्यम् शूद्रादिविषयमेतत् । न श्रौतस्मार्त ब्राह्मणादिविषयमित्यविरोधः । अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी । दशवर्षा भवेत्कन्या द्वादशे वृषली स्मृतेति संवर्तः । अस्य फलश्रुतिमाह मात्स्यः । गौरीं ददन्नाकलोकं वैकुण्ठं रोहिणीं ददत् । कन्यादानाद्‌ब्रह्मलोकं रौरवं तु रजस्वलाम् । माताचैव पिताचैव जेष्ठोभ्राता तथैवच । त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् । तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् । विवाहोऽष्टमवर्षायाः कन्यायास्तु प्रशस्यते इति संवर्तः ।

प्रदानं प्रागृतोः स्मृतमिति मनुः । प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति । मासि मासि रजस्तस्याः पिता पिबति शोणितमिति यमः । कलौ धर्मनिरूपणाय प्रवृत्तायां पाराशर्यामपि अष्टवर्षाभवेद्गौरीत्युपक्रम्य प्राप्ते तु द्वादशेवर्षे यः कन्यां न प्रयच्छतीति स्फुटमेवैकादशवर्षादूर्ध्वं दातुः प्रत्यवायश्रवणात् रजस्वलात्वदोषदुष्टतयां कन्यायाश्चाविवाह्यत्वसूचनादिति । विविधस्मृतिवचनपर्यालोचनेन यथोपनयनस्य

गर्भाष्टमोऽष्टमो वाब्दो मुख्यः कालः। पंचमाब्दाद्द्वादशाब्दांतश्च काम्यः। ब्रह्मवर्चसकामस्य कुर्याद्विप्रस्य पंचमे इति मनुना, अथ काम्यानि सप्तमे ब्रह्मवर्चसकाममष्टमआयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इंद्रियकामं द्वादशे पशुकाममुपनयेदित्यापस्तंबेन च दर्शितः। तथेह पाणिग्रहणे ऋतुपूर्वकालो मुख्यः सप्तमाष्टमवर्षादिः काम्यः कालः। अतएव पराशरमाधवीये द्वितीयेऽध्याये वयोविशेषेण दातुः फलविशेषमाह मरीचिः "गौरीं ददन्नागलोकमित्यादि वदन्तो माधवाचार्या गौर्यादि दानस्य काम्यत्वमुररीचक्रिरे। रजस्वलादानं सर्वथा निरयहेतुः। षडब्दन्यूनस्तु कालो निषिद्धः। इत्थं च स्त्रीणां विवाहकालः सप्तमवर्षादारभ्य ऋतुदर्शनात् प्राक् शास्त्रसम्मतः। मुख्यः स्त्रीणामुद्वाहकाल ऋतुप्राकाल एव। स च शीतोष्णानुष्णाशीतप्रधानदेशखाद्यकुलव्यक्तिभेदनिबंधनत्वेनात्यन्तविभिन्नोऽपि देशादिपरिस्थितिनिरीक्षणनिपुणैर्ज्ञातुं शक्यः।

पुंसां चेच्छतामपि यथासंभवमध्ययनसमाप्तेः पाणिग्रहणप्रयोजकगुणवैशिष्ट्यस्य च परीक्षणीयतया न यदा कदाचिदपीच्छामात्रेण विवाहसम्भवः। अधीत्य स्नायादिति विधिर्विवाहसंस्कारात्पूर्वं क्रियमाणं स्नानमभिधत्ते। उपनयनादारभ्य "ग्रहणांतिकमेव वा" इति मन्वादिप्रोक्तसिद्धान्तमनुसृत्य व्रतं चरित्वा गृहस्थाश्रमः स्वीकार्यः—अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेदिति मनूक्तेः अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्। अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीं मिति याज्ञवल्क्योक्तेः यवीयसीं वयसा प्रमाणतश्च न्यूनाम्।

भारते अ० प० अ० ४४ श्लो० १४ त्रिंशद्वर्षो दशवर्षां भार्यां विंदेत नग्निकाम्। एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात्॥ नग्निकां तु वदेत्कन्यां यावन्नर्तुमती भवेदिति गृह्यसंग्रहोक्तेः। निर्णयसिंधौ त्रिंशद्वर्षः षोडशाब्दां भार्यां विंदेत नग्निकाम्। द्वयष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः।

उत्कृष्टायाभिरूपाय वराय सदृशाय च । अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथा विधि ॥ (मनु अ० ९ ८८) अप्राप्ता, कामवासना यस्या नोत्पन्ना इति मेधातिथिः कुल्लूकभट्टस्तु देशाचारादिभिरुत्कृष्टाय सुरूपाय समान जातीयाय वरायाप्राप्तामपि "विवाहयेदष्टवर्षामेवं धर्मो न हीयते" इति दक्ष-स्मरणादिति वदन् सत्यां गुणवद्वरालाभलक्षणायामापदि, अष्टवर्षाया अन-र्हतामष्टवर्षाविवाहस्य धर्महा नि हेतुतां च "एवं धर्मो न हीयते" इति व्यतिरेक मुखेन व्याजहार । एतेन त्र्यष्टवर्षोऽष्टवर्षां वा इति मनुवचन-व्याख्यानावसरे त्रिभागवयस्का इति कुल्लूकोक्ते चतुर्विंशतिवर्षवयस्कवर-मपेक्ष्य "त्रिभागमित मर्थतोऽष्टवर्षमितं वयो यस्या" इति रीत्या, अष्टवर्षाया एव विवाह इत्यर्थवर्णनमपि कृतधियां निरस्तम् । तथासति अष्टवर्षायाः कन्यकाया अप्राप्तकालत्वोत्कीर्तनासंगत्यापत्तेः । "एवं धर्मो न हीयत" इति वदन्दक्षोप्यष्टवर्षायाः कालान्तरेऽपि योग्यवरलाभ-संभावनायामविवाह्यत्वमेवामंस्त । इति न तिरोहितं विदुषाम् । यश्चा-ष्टमवर्षाया गौर्याः, नववर्षाया रोहिण्या दशवर्षायाः कन्यायाः परिभाषि-तायाः विवाहविधिः स काम्य एवेति । हिरण्यकेशिसूत्रे सजातां नग्निकां भार्यामुपयच्छेत् । त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् (मनु० अ० ९ श्लो० ९४) अतो रजोदर्शनं विवाहात्पूर्वं यथा न भवति तथा कुर्यादित्युक्तं भवति इति संस्कारमयूखे । "प्रयच्छेन्नग्निकां कन्यां मृत्युकालभयात्पिता । ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति" इति वसिष्ठोक्तेः । तस्मादुद्वहे-त्कन्यां यानतुमती भवेदिति यमोक्तेः । प्रयोग पारिजाते ऊर्ध्वं दशा-ब्दात् या कन्या प्राग्रजोदर्शनात्तु सा । गांधारी सा समुद्वाह्या चिरंजीवितु-मिच्छता । एवमुक्तवचन पर्यालोचनात् तीर्णव्रतेन स्नातकेन यौवनमा-विशतो कन्याया द्विगुणो वर इति वृद्धोक्तिमनुसृत्य प्रमाणतोऽवस्थातश्च न्यूनोद्वाह्या । ननु पुंसामिव स्त्रीणामपि ब्रह्मचर्यं शास्त्रानुमतमेव, ततश्च विद्याध्ययनाय महाविद्यालयेषु प्रविष्टाभिर्विवाहाकरणे न कश्चिद्दोष इति चेन्न, कलौ पुंसामेव दीर्घकालब्रह्मचर्यस्य दीर्घकाले ब्रह्मचर्यं

कमण्डलुविधारणमितिकलिवर्ज्यप्रकरणोक्तत्वेन प्रतिषिद्धत्वात् । स्त्रीणां ब्रह्मचर्य प्रस्तावो युगांतर विषयः पुराकल्पेतु नारीणां मौञ्जीबंधनमिष्यते। अध्यापनं च वेदानां सावित्रीवाचनं तथा । पिता पितृव्यो भ्राता वा नैना-मध्यापयेत्परः इति यमोक्तेः । सर्वमिदमस्थाने । इन्द्रतः प्राप्तकामवराभिः स्त्रीभिर्दीर्घकालं ब्रह्मचर्यमनुष्ठेयमिति केनोच्येत । तत्रापि कलौ, यत्र योगिनामपि दुःसंभवं ब्रह्मचर्यम, तत्र स्त्रीणां ब्रह्मचर्यं कूर्मरोमायितमेव स्त्रीणां च विवाहविधिर्न नित्यः किन्तु वैकल्पिकः यश्चाष्टमवर्षाया उद्वाहः स्मृ-तयुक्तः स काम्यइति प्रागदर्शितमेव यथा पुंसां स्त्रीपरिग्रहणं रागतः प्राप्त-मेवं स्त्रीणामपि पत्यवलंबनं रागतःप्राप्तमिति न तद्विधित्सितं किंतु स्वसजातीय स्वाधिक वयस्कत्वादि विशेष एवापूर्वत्वाद्विधित्सितः । विवाहस्वरूपांशे तु सर्वपुरुषपरिग्रहस्य प्राप्तत्वात् परिसंख्यैव विशेष-स्त्वयं विवाहस्य कर्ता पुरुषो न स्त्री "पतिः स्त्रियमुद्वहते" इति शिष्टा वदन्ति स्वीकार्यत्वेन ज्ञानलक्षणो विवाहः । स्वीकार्यत्वेन ज्ञानाश्रयत्वात्पुरुषः कर्ता, धात्वर्थतावच्छेदकीभूत स्वीकार्यत्वरूप फलाश्रयत्वात् स्त्री कर्म, ततश्च स्त्रीणामपि पुरुषाणामिव विवाहोऽनिच्छया न कार्यः । सा चेच्छा नातिबालायाः किंतु ज्ञातविवाहसारायाः नग्निकाया ( अरजस्वलायाः ) विवाहः कार्यः इति वदामः यच्च मितकालिकं ब्रह्मचर्यं तद्विवाहे दम्पत्यो-र्विशेषाधायकम् । अतएव व्यवहृतेषु विवाहानंतरमपि किंचित्कालं गौणब्रह्मचर्यानुष्ठान मुच्यते । आश्व. गृ. सू. अतऊर्ध्वमक्षारलवणाशिनौ ब्रह्मचारिणावलं कुर्वाणा वधः शायिनौ स्यातां त्रिरात्रं द्वादशरात्रं संवत्सरं चैकऋषिर्जायते । एवमेव कात्यायनापस्तम्ब पराशर सांख्यायन सूत्रे-षूक्तम् । स्त्रीणां विवाहविधिरेवोपनयनाख्यः संस्कारो मन्वादिभिः स्मृतः पतिसेवैव गुरुकुलवासः । गृहकृत्यमेव सायंप्रातः समिद्धोम-रूपाग्नि परिचर्येति । वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः । इति विवाहादे रुपनयनस्थाने विधानादुपनयनादेर्निवृत्तिः । अतएव विवाहात्पूर्वं कन्यकानां स्पृष्टं जलपाकादि शिष्टा न स्वीकुर्वन्ति । आस्तां

तावत् प्रकृतमनुसरामः। अधीत्य स्नायात् स्नातकश्च गृहस्थाश्रम माविशेत्, इति तीर्णव्रतो विवाहेऽधिक्रियते। व्रतश्च "ग्रहणांतिक मेववा" द्वादशाब्दानि पंच वा ग्रहणांतिकमित्येके,इति मनुयाज्ञवल्क्योक्त-दिशा भवति। एवंच ग्रहणांतिककालो विवाहकालः। स च नैक-विधः। यद्धि सुतीव्रमतिनानायासेन स्वल्पकालेन गृह्यते तदेव मंद-बुद्धिना दीर्घकालेनायासबाहुल्येनापि न ग्रहीतुं पार्यते प्रसिद्धमेवैतत्। बुद्धिमांद्यं बुद्धिवैशद्यंच पूर्वजन्मार्जितसुकृतदुष्कृतादिजन्य विविध संस्कारवशाज्जायते इति नाविदितं विदुषाम्। अतएव क्षत्रिय-कुलोत्पन्नस्य दाशरथे रामस्य विवाहकालो न षोडशाब्दात्परः "ऊन षोड़शवर्षो मे" इति विश्वामित्रं प्रति दशरथोक्त्या विश्वामित्रसहगमन-समये रामस्य षोड़शवर्षः प्रविष्टः। तस्मिन्नेव वर्षे रामसीताविवाहस्य प्रसिद्धत्वेन षोड़शवार्षिकस्य रामस्य विवाहः। सीतायाश्च जन्मतः सप्तमे वर्षे "अष्टादश हि वर्षाणि मम जन्मनि गण्यते" इति वन-प्रवेशे, "समा द्वादश तत्राहं राघवस्य निवेशने" इति रावणं प्रति च सीतोक्तेः। आसोच्च भगवतः श्रीकृष्णस्य विवाहो बाल्ये, अभिमन्योश्च षोड़शाब्दात् प्रागेव विवाहो जात इति प्रसिद्धमेव।

ग्रहणांतिकमेवेति सिद्धांतानुसारेणेदमुक्तम् "पंचमाब्दानि वा इति याज्ञवल्क्योक्तपक्षग्रहणे कुशाग्रमतीनां ब्राह्मणबालकानां तीर्णविद्या-व्रतानां चतुर्दश वर्षादारभ्य दारसंग्रहकालः फलति। क्षत्रिय कुमा-राणां तीव्रबुद्धिशालिनां सप्तदशवर्षादारभ्य दारसंग्रहकाल इति यथा-यथमूह्यम् एकचत्वारिंशद्वर्षपर्यन्तश्च तदवधिः, ततोधिकवया नोद्वो दुमर्हति। संततिजननयोग्यकाल मधिकृत्योक्तमष्टांगसंग्रहे "नवर्ते षोड़शाद्वर्षात्सप्ततेः परतो न च। आयुष्कामो नरः स्त्रीभिः संयोगं कर्तु-मर्हति। बालो वृद्धोन्यवेगार्तस्त्यजेद्रोगी च मैथुनम्" इति। धर्मशास्त्रे त्रिशंद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्" इति प्रथमविवाहप्रकरण-स्य वचनम्। "[illegible] [illegible] [illegible] स्त्री [illegible]। एकादशे स्त्री

जननी सद्यस्त्वप्रियवादिनी" इति पुमपत्याजननस्वरूपापत्काल निमित्तोपनिपातेनाधिवेदनानुमतिवचनं चाभिलक्ष्योपरिष्टाद्दर्शित भिश्वरवचनं च विचार्य एकचत्वारिंशद् वर्षान्तः पुंसां विवाहस्य परमावधिः शास्त्रसम्मत इति प्रतिभाति । स्त्रीणां रजःकाले पुंसंपर्कस्यावश्यकत्वात्, पालित ब्रह्मचर्याणां ततोऽपि सुदृढांगानामपि पुरुषाणां सप्ततिवर्षपर्यन्तमेव ऋतुदानसामर्थ्यस्य संभावितत्वात् : कथंचिदपि एकचत्वारिंशदधिकवया बालिकां नोद्वहेत् विवाहस्यैच्छिकत्वेऽपि पण्डवृद्धादीनां विवाहो न शक्यः रतिधर्म्यप्रजोत्पादनार्थत्वात्तस्य । दारा रक्षतमा मताः इति मनुना रक्षतमत्वाभिधानात् । प्रजोत्पादनरक्षणयोश्च वृद्धस्य दुःसाध्यत्वात् । आसीत् पूर्वयुगे पण्डादीनामधिकारः यद्यर्थिता तु दारैः स्यात्पण्डादीनां कथंचन इति तेषामपि दारसंग्रहस्य धर्मशास्त्रेणाम्नातत्वात् । कलौ तु नियोगस्य निषिद्धत्वान्न तेषां धर्म्यो विवाहः । येयं तरुणस्य मृतपत्नीकस्य द्वितीयविवाहावश्यकता न सा विवाहविधेर्नित्यत्वात् किंतु "अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः इति स्मृत्या, अनाश्रमित्वावस्थानस्य अनिष्टसाधनत्वस्मरणात्केवलमाश्रमावलंबनायैव । तदेवं निर्गलितोर्थः—स्त्रीणां सप्तमवर्षादारभ्य प्रागृतोर्विवाहकालः पुंसां च विद्याव्रतसमाप्तिकालादारभ्य एकचत्वारिंशद्वर्षान्तः शास्त्रसम्मतः ।

## द्वितीयः प्रश्नः ।

तत्र वर्तमानपरिस्थित्यनुसारेण शास्त्रानुसारेण च नियमनं कियदवधि योग्यम् ?

## उत्तरम् ।

अधुना देशोत्थानप्रबलपवनांदोलिते भारतीयनेतृवर्गपादपेवल्वत्पाश्चात्यसंस्कृतिध्वनिना बधिरिते साक्षरवर्गे, आचाण्डाल मांग्लभाषाध्ययनपिपासयाक्रान्ते स्त्रीपुरुषसमुदाये, श्रुतिस्मृतिपथा चिरं प्रस्थितानां पूर्वजानां कृतौ संदिग्धचेतसि प्रजावर्गे, सर्वाश्रमोपजीव्यस्य गृहस्थाश्रमस्य प्रवेशद्वारभूतविवाहस्य समयनियमनं कियदवधि

योग्यमित्यनुयोगे "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ इति भगवद्वाक्यमवष्टभ्य, उभयलोकहितकरः शास्त्रानुसारी पंथाः प्रदर्शनीय इति बुद्ध्या विचार्यते । कन्याया द्वादशैकादशवर्षे विवाहे न प्रत्यवायो रजोदर्शनं न चेत् । रजोदर्शनानंतरमेव कन्यायास्तत्पित्रादीनांच प्रायश्चित्तस्मरणात् "त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीमिति मनुना द्वादशाब्दाया उद्वाह्यत्वकीर्तनात् । रजोदर्शनस्य नैकसमयः सच देशखाद्यव्यक्तिभेदात् भिद्यत इति न च्छन्नं लोकवृत्तविदाम् । अधुनापि भारते शीतप्रधानस्थानेषु षोडशवर्षादप्यूर्ध्वं रजः प्रवृत्तिदर्शनात् । एतावता षोडशवर्षाया विवाहः शास्त्रसम्मत इति नोच्यते किंतु रजोदर्शनात् प्राक्कालः परमावधित्वेन तत्तद्देशस्थितिविज्ञैः स्थापनीय इति निवेद्यते एकादशवर्षवयस्कायाः द्वादशवर्षवयस्काया वा विवाहो मुख्यत्वात् सर्वत्र भाव्यः । तदधिकवयस्काया विवाहो दात्रसन्निधाने, दात्रभावे वा, गुणवद्वरालाभे वा ब्राह्मणादिषु ( आपत्काले ) भाव्यः अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् । नैनः किंचिदवाप्नोति न च यं साधिगच्छति इति मनुनाऽनपराधित्वकीर्तनात् । येषांच गांधर्वः प्रशस्तोऽभिहितः येषांच धर्म्यत्वेनोक्तः तेषां क्षत्रियादीनां कुले स श्रेयस्करः ब्राह्मणकुलेतु एकादशवर्ष वयस्काया द्वादशवर्ष वयस्काया एव श्रेयस्करः । एवं स्थिते विवाहविधौ अग्निगुरुजनब्राह्मणादिसमक्षमनुष्ठीयमानः पारस्परिको वधूवरयोः प्रतिज्ञावाक्यविस्तरोऽपि तयोः श्रेयसे कल्पेत सबोधत्वात्तयोः बालविवाहोऽधुनाऽहितकर इति नाविदितं विदुषां शास्त्रतत्वानभिज्ञ जनवञ्चितामातापितर अल्पवयस्का एव परिणाययन्ति तरुणैस्ते च ताभिः संलपन्ति हसन्ति हासयन्ति दुःश्लेष्यन्ति इति त्वरितयौवनास्ताःक्रियन्ते इति लोकवृत्तविदो न कस्यापि परोक्षं, अतएव कृत्रिमयुवत्यस्ताः प्रसूयन्ते । अल्पबुद्धीनि, हतभाग्यभाञ्जि, हततेजस्कानि, लोकद्वयाऽमङ्गलानि अपत्यानि । तदपत्यानि च पुनर्मातृपितृदोषवशात् स्वभावेनैव सहसैवा-

त्पे वयसि यौवनसुलभधर्मवन्ति जायन्ते । सोयमनर्थमपि लयं गच्छे-दिति कृतं प्रपञ्चेन ।

निष्कृष्टार्थस्त्वयम्:—

वर्तमान परिस्थितिमनुलक्ष्य शास्त्रानुसरणं विधाय रजोदर्शनात्प्राकाल: परमावधित्वेन ज्ञेयः । अप्रवृत्तरजस्काया द्वादशवर्ष वयस्काया स्ततोप्यधिक वयस्काया वा विवाहे न प्रत्यवायः क्षत्रियादीनां कृते गांधर्वोंपि प्रशस्तः तेषु तत्प्रचारो वर्तत एव ।

---

# विधवोद्वाहगत भ्रान्ति निरासः ।

[ निबन्धकः—श्रीसीताराम मिश्रः फतेहपुरवास्तव्यः । ]



अयि विविधविद्याविद्योतितचेतसः पण्डितमण्डलीमण्डमायमानाः सनातनधर्मरक्षणैकताना महीयमानमानसाः श्रीब्राह्मण-महासम्मेलन-पाठकाः ? विदन्त्येव भवन्तोऽत्रभवन्तः सन्तो यत्संप्रति धर्मग्रसन-व्याले करालेऽस्मिन् कलौ काले सामाजिकेषु धार्मिकेषु च कर्मसु विविधप्रकारेण विप्लवो नितरां समेधमानः समवलोक्यते ।

केचन युवानस्तु परदुःखदग्धहृदयाः सहृदया भवितुं कामयमानाः पाश्चात्यशिक्षया कूणिताक्षाः स्वधर्मं पामरकल्पितं मन्वाना विधवाया अपि धवं कर्तुं चेष्टन्ते । तदेव च सर्वकामदं भारतीयहितविधातृ च संमन्यन्ते । हेतुञ्चामुं निर्दिशन्ति यत्—"साम्प्रतं हि भारते निराश्रया विधवाः स्त्रियो भोज्यवस्त्रादीनां कष्टमपसारयितुं विधर्मिणां गेहे प्रगम्य विदधति व्यभिचारं भ्रूणहत्यादिकम् । समाचरन्ति च स्वीयं पवित्र-मपि जीवनमपवित्रं कलुषितञ्च । कृते तासां पुनर्विवाहे न सम्पाद-यिष्यन्ति एतादृशं कृत्यमतो विधेलिमो विधवापरिणय इति," श्रुत्वेमं

स्वमूढतापरिचायकं सव्यभिचरितं हेतुं, सहसैव समायाति मे मनसि विचारोयं यदिदं दोषदूषितं निदानं प्रदर्शयतां भवतां बुद्धिर्भ्रमणाय तु न गतवती । अन्यथा कथमेतत्संभाव्येत । बहवः सधवा अपि महिलाः समालोक्यन्ते विधर्मिणां भवने यात्वा व्यभिचारं समनुतिष्ठन्त्यः । तदा कथं कीकूयन्ते यद्विधवाविवाहं व्यभिचारनिरसनार्थं कुर्मः । विधवा अपि काश्चन पर्यवेक्ष्यन्त एवेदृश्यो यास्तावन्नामापि न गृह्णन्ति दुराचारस्य व्यभिचारापरपर्यायस्य । शिक्ष्यन्तां विगतभर्तृका याः काश्चिद्दुश्चरितं समाचरन्ति । येन ताः पुनर्न कुर्वीरन् कदाचरणमाचरणमेतत् । तासां पुनर्विवाहस्तु कामानलस्य प्रज्वालकमाज्यम् । "न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते" ॥ इति शास्त्रप्रामाण्यात् ।

व्यभिचारापरपर्यायमपि विधवाविवाहं कर्तुं कारयितुं च कामयमाना भवन्तः सुतरां वर्णसंकरताप्रसारं भा-रतेप्यस्मिन् भारते सर्वतः समनुष्ठातुं भृशं समीहन्ते । नान्यद् भवतां किमपि मनोभिलषितम् । तुष्यतु दुर्जन इतिन्यायेन मन्येमहि यदि कामपाकर्तुं कुर्वते समीहां भवन्तस्तदपि स्वैकमपि क्लेशं निराकर्तुं सर्वथाऽशक्ताः श्रीमन्तः स्वीयपूर्वजन्म दुरितजन्यं तासां वैधव्यरूपं दुःखं केऽपनेतुं प्रभवः । सर्वप्रकारेणानधिकारचर्चितमेतद् भवतां कृत्यम् । यदि तासां पूर्वजन्मजन्यदुरितज्वालाजालो नाभविष्यत्तदा कथमधक्ष्यत् सधवतासुखसस्यम् । तस्य दुःखस्य निवृत्तिस्तु कर्तुमकर्तुमन्यथाकर्तुं शक्तस्य भगवतो दुरितदलनिशानाशनचन्द्रस्य श्रीकृष्णचन्द्रस्य सेवनेन, समर्चनेन—भक्त्या चाष्टविधया ब्रह्मचर्यपालनेन च भवितुं प्रभवित्री । नान्येन केनाप्युपायेनेत्यवधेयं पाठकैः ।

यदि तासामीदृक्षमेव भाग्यं स्यात्तर्हि द्वितीयस्यापि पत्युर्मरणं नासंभवि । अन्यदपि, शास्त्रविरुद्धाचरणमाचरतां भवतां गतिरपि न समीचीना संपत्स्यते । एवमेव ...... श्रीकृष्ण...... चित्रायां

स्वगीतायां गीतायाम्—"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ।" इति । विधवाविवाहश्च न क्वापि शास्त्रे विधितया समाख्यातः । प्रत्युत तस्य विरोधवचनानि समुपलभ्यन्ते । कानिचनात्र निषेधवचनानि नियोगस्य निदर्शयामः । मनुस्मृतौ—"नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः । ९ अ० ।

न दत्त्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः । दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषोऽनृतम् । ९ । ७१ ।

सकृदंशो निपतति सकृत्कन्या प्रदीयते । सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥ इत्येभिर्मनुवचनैः सुतरामवधारयितुं पार्यते विधवाविवाहस्य शास्त्रविरुद्धताम् । ये केचन परमोदारविचारवन्तो वयमिति मनसि प्रफुल्लन्तो धर्मशास्त्राणां वचननिचयस्यानर्थं विधाय "नष्टे मृते प्रव्रजिते क्लीवे च पतितेऽपतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ।" इत्यनेन महर्षिपराशरवचनेन विधवाविवाहस्य शास्त्राभिमततां साधयन्ति, ते रहस्यानभिज्ञा एव सन्तिष्ठन्ते । यतो महामुनिना पराशरेण पद्येऽस्मिन् पतितेऽपताविति पदं निहितम् । पताविति रूपं सप्तम्यां न भवति पतिशब्दस्य किन्तु तस्य पत्याविति रूपं संजायते ( पतिः समास एव ) इत्यनेन पाणिनीयानुशासनेन समास एव घिसंज्ञाविधानात् । विना च घिसंज्ञां सम्भवितुं नेष्टे पताविति रूपम् । अतोऽत्र नञ्समासः करणीयः । न-ईषत् पतिः=अपतिरितीषदर्थकसमास विधानेन वचनमिदं वाग्दत्तार्थकं पर्यवस्यति । अन्यथा पताविति रूपं कथंचन सम्भवितुं शक्नुयात् ? पदस्यास्यार्षत्वेन सिद्धिस्वीकारेतु पतिशब्दो रक्षणाद्यर्थक—"पा" धातुकर्त्रर्थकडति प्रत्ययनिष्पाद्यः सप्तसिजपङ्कजादिवद् योगरूढः । स च षष्ठ्यन्तसाकांक्षभिन्नश्चेद् भर्तारमेव बोधयति । "धवः प्रियः पतिर्भर्ता" इति कोषेण तथैव प्रतिपादितत्वात् । अन्यावर्तकार्थपरषष्ठ्यन्तसाकाङ्क्ष पतिशब्दस्तु योगलभ्यार्थमात्रस्य बोधको भवेत् नतु भर्तुः । एवं च

प्रकृतवचनस्य –"नारीणां पति" रित्यनेन भर्तृबोधः कथमपि न सम्भवति । नारीणामित्यंशस्य व्यर्थतापत्तेः, भर्तृबोधे तादृशवाक्यस्य निराकांक्षतापत्तेश्च । तथा च सकलश्रुतिस्मृतिविरोधानुत्थानाय रक्षणार्थकोयं पतिशब्दः । तेन च कोपि रक्षकः पतिभिन्नः करणीय इति पराशरवचसो भावः । एवमेव ते वेदस्यापि समाचर्यार्थस्यानर्थं संसाध्य स्वकपोलकल्पनया वेदे पाणिग्रहणं विधवायाः, "वेदे वर्तते नियोग विधानम्" इति सडिण्डिममुद्घोषयन्ति । प्रवञ्चयन्ति च वेदशास्त्रानभिज्ञान् लोकान् । आपाततः कथंचिद् विधवोद्वाहपरत्वेन संभाव्यमानेषु मन्त्रेषु स्फुटवास्तविकार्थबोधनेन तद्विधायकतया व्याख्यातेषु याः काश्चन् श्रुतयः केवलं मन्दमतीन् प्रतारयितुमुपन्यस्यन्ते तत्पक्षपातिभिस्ता अपि संक्षेपतो याथार्थ्येन व्यवस्थाप्यन्ते । तत्रेयं विवाहकालिकी वरकर्तृकेन्द्रप्रार्थना—

"इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि" । ऋ० १० । ८५–४५।

अन्वयार्थः—मीढ्वः–सेवनकर्तः ? इन्द्र ? देव ? त्वमिमां स्त्रियः सुपुत्रां सुभगां च कृणु–कुरु । अस्यां दश पुत्रानाधेहि–उत्पादय, एकादशं च पतिं कृधि–कुरु, रक्षेति यावत् । देवा एव मनुष्याणां रक्षितारस्तत्तच्छक्तिप्रदातारश्चेति वैदिकदर्शनम् । "देवानामिहवो महत्तदावृणीमहे वयम" ( ऋ ८ । ४४ । १ ) । "देवानां सख्यमुपसेदिमा वयं देवान आयुः प्रातरन्तु जीवसे ।" ऋ० १–८५ । २ ।

इत्यादिभिर्भूयोभिर्वेदमन्त्रै र्बहुशो देवकर्तृकस्य रक्षणस्य प्रार्थ्यमानत्वात् । देवानामेव चाध्यात्ममपि तत्तच्छक्तिप्रयोजकत्वात् । अतएव,

"विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापति र्धाता गर्भं दधातु ते ।"

इति गर्भाधान संस्कारे संगच्छते । तथैवात्रापि त्रिलोकाधीशादिन्द्रात्पत्यौ दशपुत्रोत्पादनयोग्या प्रजननशक्तिः, स्त्रियां धर्मधारणशक्तिः,

पत्युश्चिरजीविता च संप्रार्थ्यते इति नात्र किमप्यधिकं वक्तव्यं पश्यामः। न ह्यस्मिन् मन्त्रे पुनर्विवाहस्य नियोगस्य वा गन्धमात्रमपि प्रतीमः। यत्तु—पत्यौ श्रूयमाणेयमेकादशसंख्या सजातीयैः पतिभिरेव पूरणीया, नतु विजातीयैः पुत्रैरिति पत्युरेकादशत्वसिद्धये पुनरुद्वाहो नियोगो वावश्य-मुररीकार्य इति। तत्तु नितरां हास्यास्पदं प्रेक्षावताम्। 'त्रयो वयं गेहे निवसामः एकोऽहम्, द्वितीया माता, तृतीयश्च पिता,' इत्याद्यापामरं प्रसिद्धे व्यवहारे पितुस्तृतीयत्वोक्त्या नहि कश्चिदपि विपश्चित्त्रीन् पितॄन् प्रतिपद्यते। न वा 'गृहे मे द्वे महिष्यौ तृतीया च गौः, इत्युक्ते तिस्रो गाव एव जगति तलेऽवगम्यन्ते केनचनापि। शास्त्रेपि ऋग्वेदं भगवोऽध्ये-मीत्याद्युपक्रम्य 'इतिहासपुराणं पञ्चमं वेदानां वेदम्'। (छान्दोग्योपनि-षत् ७ प्रपा० १ ख) 'वेदानध्यापयामास महाभारतपञ्चमान्,' इत्यादौ विजातीयैरेव संख्या पूर्यते ज्ञायते च सम्यक् तथैव सकलैरपि। ततश्च सजातीयैरेव संख्यापूरणमिति कुतस्त्योयं नियमः। तस्माद् "दशास्यां पुत्रानाधेहि" इत्युपस्थितां पुत्रसंख्यां प्रोज्झ्याश्रूयमाणाना-मनुपस्थितानां दशानां पतीनां प्रकल्पनं सर्वथैवाप्रामाणिकम्। नचात्रै-कादश पतयः श्रूयन्ते किन्त्वेकादशः पतिः। पूरणप्रत्ययान्तशब्दोपा-दानात्। ततश्चैकादशस्य पत्युरेव केवलमनेन विधानेन द्वितीयादीनां दशमान्तानां पतीनां किं विधायकमस्तु? कश्चेदं विवाहे प्रार्थयते, वरः, आचार्यो, ब्रह्मा वधूः, अन्यो वा तत्सम्बन्धी? न तावद्वधूः, तस्या 'अस्यां पुत्रानाधेहि' इति प्रथम पुरुषत्वेन श्रूयमाणत्वात्। नापि वरस्य युज्यते, इयं वध्वा एकादशपतिप्राप्तिप्रार्थनामुखेन स्वस्याविलम्बितं यमसदनगमन प्रार्थना आचार्यब्रह्मादयोऽन्ये वा वरसम्बन्धिनः कथमेत-त्प्रार्थयन्ताम्। भूयो विवाहे दक्षिणाधिक्यलोभेन प्रार्थयन्ते चेद्-ब्रह्मादयः क एवां हताशानामेवंविधां प्रार्थनामनुमन्येत्। अहो! यत्र विवाहे "आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम' 'मया पत्या जरदष्टि-र्यथासः पुत्रान् विन्दावहै बहून्' 'अपैतु मृत्युरमृतं न आगात्' "मया

पत्या प्रजावति त्वं जीव शरदः शतम्" जीवेम शरदः शतम्' 'अघोरचक्षुरपतिघ्न्येधि' 'जीवपत्नी पतिलोके विराज' इत्यादिभिः प्रतिपदमनुप्रार्थ्यते मङ्गलं वरवध्वोश्चिरजीविता च। 'अश्मेव त्वं स्थिराभव' 'प्रजापत्या तन्वं संसृजस्व' 'ध्रुवास्मी पतिकुले इयम्' 'सा मामनुव्रताभव' 'यदिदं हृदयं तव' इत्यादिभिश्च शतशोऽनन्यगामिता प्रार्थ्यते वध्वाः, तत्रैवेमामेकादशपतिप्रार्थनामुपन्यस्यता सम्यगुपदर्शितं बुद्धेर्वैभवं स्वीयायाः। साधु सूचिता स्विका शास्त्रगन्धज्ञतेत्यलमेवंविधकुट्टितकुट्टनेन। यत्तु व्याचक्षते केचन–ईश्वर आज्ञापयति-हे इन्द्र-विवाहितपते ? मीढ्वः—हे वीर्यदानकर्तः? त्वमिमां विवाहितस्त्रियं (वीर्यसेकेन गर्भयुक्तां कुरु। तां) सुपुत्रां श्रेष्ठपुत्रवतीं सुभगां अनुत्तम सुखयुक्तां कृणु-कुरु।* अस्यां विवाहितस्त्रियां दश पुत्रानाधेहि उत्पादय। (नातोऽधिकमिति। ईश्वरेण दशसन्तानोत्पादनस्यैवाज्ञा पुरुषाय दत्तेति विज्ञेयम्। तथा) पतिमेकादशंकृधि (हे स्त्रि त्वं विवाहितपतिं गृहीत्वैकादशपर्यन्तं नियोगं) कुरु। (अर्थात् कस्यांचिदापत्कालावस्थायां प्राप्तायामेकैकस्याभावे सन्तानोत्पत्त्यर्थं नियोगं कुर्यात्। तथा पुरुषोऽपि विवाहितस्त्रियां मृतायां सत्यां सन्तानाभावे एकैकस्या अभावे दशस्या विधवया सह नियोगं करोत्विति। इच्छा नास्ति चेन्मा कुरुताम्") इति। तदिदं व्याख्यानं मन्त्रानुक्तस्वकपोलकल्पितार्थं संदृब्धं "मुखमस्तीति वक्तव्यमिति न्यायमालम्ब्य प्रवृत्तं बालानामपि हास्यनिकेतनम्, इति कृत्वा नात्र कांचिदपि समीक्षां कर्तुं कामयामहे। कीदृगिदं व्याख्यानं तेषां महानुभावानामिति विवेचयिष्यन्त्येव विबुधवृन्दवृन्दारकाः। नातोऽत्र किमपि समालोचनं विधीयते मया स्वलेखन्याः कालुष्यधिया। ये केचन दुराग्रहग्रहिला देवद्विजनिन्दका अपि देवानां प्रियाः पाश्चात्यदेशवसनशिक्षादीक्षादिना मूर्छितमतयोऽयतनाः सुधारकनामधारिणो विधवो-

---

* योऽर्थो न मन्त्रपदैर्लभ्यते आरोपितश्च मन्त्रार्थत्वेन, स इह प्रकोष्ठे दत्तः। इत्यवधानीयम्।

द्वहनमेव स्वराज्यलब्धौ कारणमसाधारणं समामनन्ति, तदर्थं च शास्त्र मर्यादां कुलमर्यादां समाजमर्यादाञ्च समूलमुन्मूलयितुं प्रबलं प्रयासं विदधते, सर्वतन्त्र स्वतन्त्रास्ते महात्मानस्तान्प्रति न किमपि ब्रूमः। येतु पुनः पण्डित सम्राजो जोषं जोषं समालोक्यापि शास्त्राणि समासाद्यापि च तोषं, सरोषमुज्जृम्भिताभिर्जठरज्वालाभिरेव विधवाविवाहस्य शास्त्रसिद्धतां साधयन्ति, ते ग्रावाणोऽपि लोहमपि दाधीचास्थीन्यपि विलक्षण कुक्षयस्ते शास्त्राणामुपरि, आभ्यन्तरं निर्दयं कुठाराघातं समाचरन्तो विद्वत्समाजेन सनातनधर्मणा प्रोद्दण्डेन दण्डेन दण्डनीया एव। यदि हि विस्पष्टमाचष्टे भगवती श्रुतिः सोदाहरणं पुनर्विवाह निषेधं "यदेकस्मिन्यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्देत, यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्देतेति। इत्यनेन वचनेन। यदि च स्मृतयश्च नितरां सुतरां निषेधन्ति विधवोद्वहनम्। तथाच कानिचन विस्पष्टानि स्मृतीनां वचनानि विधवोद्वाह निषेधे—लघ्वाश्वलायनस्मृतौ "अज्ञातस्तु द्विजो यस्तु विधवामुद्वहेद्यदि। परित्यज्यैव वै ताञ्च प्रायश्चित्तं समाचरेत्।" तथाच "न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते। "अपत्यलोभात्तु या स्त्री भर्तारमतिवर्तते। सेह निन्दामवाप्नोति, पतिलोकाच्च हीयते"। तथा च बृहन्नारदीये "देवराच्च सुतोत्पत्ति र्दत्ता कन्या न दीयते"। मनुसंहितायां—"कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। नतु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु। तथाचादि पुराणे "ऊढायाः पुनरुद्वाहं ज्येष्ठांशगोवधे तथा। कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्। एतैः प्रभूततमैः स्मृतीनां वचनैः प्रतीयते यदनणीयसी निन्दा व्यधायि धर्मशास्त्रेण विधवोद्वाहस्य। तथापि "शास्त्राविरुद्धो विधवाविवाह इति कुलपनेन प्रलपितं लपतां सत्यपि सूर्ये रात्रिं मन्यमानानां तेषां स्वान्तं नितान्तं भ्रान्तमेव। मयास्मिन् लेखे विधवोद्वाहगतालौकिकी वैदिकी च भ्रान्तिः कान्तिरूपेण निरासिता! निरासेनानेन सत्पथं समागमिष्यन्ति उत्पथगामिनो मनुतनुजा इति भूयशा मन्ये।

# विप्रेभ्यो मे निवेदनम् ।

[ निबन्धकः—श्रीसुरेन्द्रमोहन 'वेदान्तशास्त्री, पञ्चतीर्थः । ]



महाभागाः ब्राह्मणाः गृह्णन्तु भवन्तः सर्वे मम सविनयमभिवादनम् । शङ्का तावत् तिरोहिता । अब्राह्मणैः रुद्धेज्यमानानां ब्राह्मणानां ब्रह्म-वर्चसं म्लानं सञ्जातमिति यासीदस्माकं शङ्का साऽद्य दूरं गता विशालायां दि तस्यां ब्राह्मणमहासभायां काशीधाम्न्यनुष्ठितायां समुपस्थितानामृषिकल्पानां भूमिदेवानां तेजसा निविड़तिमिरावृतमपि जगत् प्रदीप्तालोकसमुद्भासितं भवितुमर्हतीति मत्वा महान् हर्षः सञ्जायतेऽस्माकम् । जलदजालसमावृतो हि तपनः पुनर्जलदामगमे स्वकीयेन तेजसा प्रभासते साधारणी पद्धतिः ।

साम्प्रतमस्माकं समीपे महती समस्या समुपस्थिता । वर्णाश्रमावलम्बिनां मध्ये केचित् सागरमुल्लङ्घ्य गच्छन्तो वर्णाश्रमाद्विच्युताः सागरपारात् प्रत्यागच्छन्तोऽभक्ष्यभक्षका लक्ष्यन्ते आचारभ्रष्टाः शास्त्रमार्गविच्युताश्च । अपरे केचित् विधवाविवाहपक्षपातिनो विधवानां पुनर्विवाहं सम्पाद्य समाजपरिस्थितिं कलुषयन्ति, भारतवर्षीयं चिरन्तनं वैधव्यब्रह्मचर्य्यमधो नयन्ति च । केचन तावत् शास्त्रतो निम्नवर्णा वर्णपरिवृत्तिमिच्छन्तः स्ववर्णोचितं व्यवहारं परित्यजन्तो वर्तन्ते, लङ्घयन्ति च शास्त्रमर्य्यादाम् ।

अपरा काचिद् बहिर्मनोहराऽन्तर्मलिना वैदेशिकी आसुरीसभ्यताऽस्माकं पुरतो नरीनृत्यते । एतादृशी खलु भारतवर्षीया समाजपरिणतिः । अथ च तत्र सभायां समागताः भूरितेजसो ब्राह्मणाः विद्यालोकविद्योतितमतयो महाराष्ट्रीयाः दाक्षिणात्या द्राविड़ाः, सारस्वताः, कान्यकुब्जीयाः, गौडगुर्जरमागधाः मैथिलोत्कलकामरूपवाराणसेयाः,

आन्ध्राः, काञ्चीपुरनिवासिनस्तथाऽपरे बहुदेशवासिनः पण्डिताः विप्रवर्य्याः। सम्भूय समवेतानां तेषां तेजोवह्निः शक्तिरूपिनीं महादेवीं जनयितुं समर्थ इति मे प्रतिभाति स्म।

शण्डिल्य, काश्यप, भरद्वाज, वात्स्य, सावर्ण, वशिष्ठ गर्ग, गौतम, शौनक, कात्यायन, पराशर प्रभृतीनामृषीणां वंशधरा वयमस्मिन् दुर्दिने तानेव पूर्वपुरुषान् सानन्दमभिवन्दयामः मन्वत्रिविष्णुहारीतयाज्ञवल्क्यादि संहिताकाराणां शोणितप्रवाहः किमद्याप्यस्माकं देहे न प्रसरति? किमद्यापि न ज्वलति प्रततं ब्रह्मतेजो वह्निरिवास्मद्देहे? ज्वलत्येव ज्वलत्येव। क्वचित् प्रकाशं ज्वलति क्वचित् प्रच्छन्नम्। प्रज्वालयन्तु भवन्तस्तत् प्रच्छन्नं वह्नितेजः प्रकाशमानयन्तु सत्वरं तं विप्रवह्निम्। न हि सर्वएव देशा वीर्य्यविहीना आर्य्याचारभ्रष्टाः सञ्जाताः। केचित् खलु मन्त्रौषधिरुद्धवीर्य्या भुजङ्गमा इव दीना मलिनाश्च लक्ष्यन्ते। ते गृह्णन्तु नाम भगवत् प्रसादं, गृह्णन्तु पुनर्महतीं शक्तिं भगवदाराधनमवलम्ब्य—तपः श्रुतिश्च योनिश्च त्रयं ब्राह्मणकारणम् इति कृत्वा—

सर्वे ब्राह्मणोचितं तपः समाचरन्तु, श्रुतिश्च साङ्गां पठन्तु। सर्वस्मिन्नेव देशे विशेषतो वङ्गेषु वेदविद्यानुशीलनाय तदध्यनाध्यापनस्य च ब्राह्मणसभयाऽनया यत्नः कार्य्यः। बहुमुल्यान् ग्रन्थान् यथा, मूल्यं—विनैव दरिद्रा वङ्देशीया ब्राह्मणविद्यार्थिनो लभेरंस्तथा कश्चिदुपायः विधातव्यः। वेदशास्त्रस्याद्य परीक्षायां मध्यपरीक्षायां वा यः कश्चिच्छात्रः समुत्तीर्णो भवेत् तस्मै छात्राय पुरस्काररूपेण यथा वेदग्रन्थप्रदानं भवेत् तथा सुधीभिः कर्त्तव्यम् विशेषतो वङ्गवासिभिः। सर्वत्रैव भारतवर्षे यथा बहवो ब्राह्मणाः साग्निकाः अग्निहोत्रिणः त्रिवेदिनश्चतुर्वेदिनश्च स्युस्तथाऽस्माभिः करणीयं एभिर्विशिष्टैर्गुणैर्विना ब्राह्मणानामिदानीं समाजमर्य्यादा दुष्प्राप्यैव।

संस्कृत भाषायां प्राथमिकी शिक्षा सर्वेषामेव ब्राह्मणबटूनां

यथाऽवश्यकर्त्तव्यतया विहिता भवेत्तथा यत्न आधेयः। पठन्तु ते नाम बटवः अपराणि शास्त्राणि अपरा वा भाषास्तथापि ब्राह्मणवंशधराणां सर्वेषामेव प्राथमिकी संस्कृतशिक्षा कियतापि विधातव्या ।

दुःखमिदमतीवावहति यदस्मद्देशीयरत्ना हि अस्मदीयाः केचन न गणयन्ति, परन्तु वैदेशिकाश्चतुराः अस्मद्देशीयरत्नानि संगृह्य महाधनाः महाजनाश्च । म्याक्समूलर, उइल्सन्, उल्फ् प्रभृतयः पाश्चात्य मनीषिणः भारतीयशास्त्रसागरात् अमूल्यानि रत्नानि परिगृह्य गृहीतनामानो धनवन्तश्च ।

श्रृण्वन्तु, भवन्त ग्रीकदेशीयो हि नरपतिः शेकेन्दरशाहः यदा दिग्विजवर्षे भारतवर्षं आजग्मिवान् अवर्त्तत तदा तस्य गुरुर्महामतिः "परिष्टोठोल्" अवदत् "वत्स शेकेन्दर! भारतवर्षात् त्वया महारत्नमेकमानेतव्यम् मदर्थम् ।" किं नाम भवेत् तद्रत्नं गुरुदेव! अहन्तु पुष्कलान्येव धनरत्नान्यानयिष्यामि ।" नहि नहि वत्स, न तत् पार्थिवं रत्नं मया प्रार्थ्यते त्वया कश्चिद् ब्राह्मणपण्डितः आनेतव्यः परमपूजनीयः अशेषशास्त्रार्थतत्वज्ञः । यस्य हि पादद्वयं समाश्रयन्नहं दर्शनादिशास्त्रमपरमपि शास्त्रार्थं कियज् ज्ञास्यामि। वृत्तान्तमिमं स्मरन्तो वयं महतानन्देन तादृशान् सर्वगुणसम्पन्नान् ब्राह्मणान् सप्रश्रयं नमामः । जानन्ति भवन्तः-यावन्मेरौ स्थिता देवा यावद्गङ्गा महीतले ।

चन्द्रार्कौ गगने यावत् तावद् विप्रकुले वयम् ॥

दृश्यतेऽधुना संस्कृतभाषा जनन्या दीनता मलिनता च। सा हि संस्कृत भाषा प्राक् प्रतिगृहं ब्राह्मणैः पठ्यमाना साम्प्रतं न पठ्यते केनचित् अपि साग्रहं वङ्गदेशे। तस्या उत्कर्षविधौ यथा पल्लीषु जनपदेषु ग्रामेषु च संस्कृताध्ययनार्थिनोऽध्यापकाश्च पुष्फलं वृत्तिं लभेरंस्तथा किञ्चिद् विधातव्यम् ।

संस्कृतभाषानुशीलनेन सह शास्त्रसदाचाररक्षणपरायणानां ब्राह्मणानां गृहरक्षायां यत्न आधेयः। गृहरक्षेत्यनेन गृहिणीरक्षेत्यस्माक-

मभिप्रायः । दृश्यते हि साम्प्रतं कासाञ्चन भारतीयगृहिणीनां विलास-परायणत्वं पाश्चात्य रमणीवत् । न केवलं गृहिण्यः गृहस्थाश्चबहवो विदेशीयभावमापन्ना वैदेशिकमाचारं वहु मन्यन्ते निन्दति चास्म-द्देशीयान् ।

अस्मिन हि दुःसमये यदि दृष्टरजस्कानां युवतीनां तरुणीनां च विवाहविधिर्ब्राह्मणसमाजेषु तथा सदाचारपरायणहिन्दुसमाजेषु प्रसारं लभेत तदास्माकं गृहं नष्टम् गृहिणी नष्टा नष्टञ्च सामाजिकस्वास्थ्यं उक्तञ्च भगवता श्रीकृष्णेन —

स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ।
सङ्करो नरकायैव कुलघ्नानां कुलस्यचेत्यादि ॥

ब्राह्मणानां मध्ये सुपण्डितपुरोहितसृष्टेरपरं ब्राह्मणसभायाः कार्य्यंपाण्डित्यविवर्जितानां मन्त्रार्थज्ञानविहीनानां पुरोधसां समादरः समाजेऽधुना न सम्भवति । शिक्षितम्मन्याः सामाजिकाः अल्पशिक्षितानां वा ब्राह्मणानां पौरोहित्यकर्म्माणि न श्रद्धामादधति । तादृशानां स्वल्पज्ञानां पुरोहितानां शास्त्रज्ञत्वं मन्त्रज्ञत्वं कैर्न काम्यते ।

उक्तञ्च —दैवाधीनं जगत् सर्व्वं मन्त्राधीनाश्च देवताः ।
ते मन्त्रा ब्राह्मणैर्ज्ञेया तस्माद्ब्राह्मणदेवताः ॥

वंगदेशेऽधुना,

न केवलं वंगदेशे, सम्भावयामि तावदखिले भारते वर्षे ।

तिथिनक्षत्रादीनां मानवैषम्यमनुभूयते । तेन च व्रतपार्व्वण-पूजा-श्राद्धतर्पणयागादीनां प्रकृतः समयो निरूप्यते नवेति संशयो जायतेऽस्माकम् । तत्संशयनिराकरणार्थं पञ्जिकासंस्कारः अपरं प्रयोजनम् । दृश्यते हि क्वचित् पञ्जिकायां सप्तमीतिथिमानं दण्ड-द्वयम् अपरत्र च चत्वारिंशद्दण्डाः । वैषम्यमिदं ब्राह्मणानामिष्टमनिष्टं वा जनयति इति न जानीमः ।

पञ्जिकासंस्कारप्रस्तावावसरे मया मानमन्दिरसंस्कारविधावपि ब्राह्मणसभाया आनुकूल्यं याच्यते। सुप्राचीने तत्र वाराणसीनगरे यदासीदिति प्रसिद्धं मानमन्दिरं तत्तु बहुकालं यावद्भग्नमपि भारतवर्षीयसभ्यतायाः सुशिक्षायाश्च साक्ष्यं वहति। तच्चेदं भग्नं मन्दिरं पुनर्ब्राह्मणसभानुकुल्येन संस्कारं प्राप्नुयाच्चेत्तदा भवेद् ब्राह्मणमहासम्मेलनस्य साफल्यमिति सप्रश्रयमावेदयामः—

इदानीं मया प्रबन्धस्योपसंहरणकाले जगदम्बिकायाश्चण्डिकायाश्चरणे प्रणिपत्य तस्याः करुणाकटाक्षाधिगतिर्याच्यते। साहि चण्डमुण्डविनाशिनी जगज्जननी ब्रवीति—

इत्थं यदा यदा बाधा दानवोत्था भविष्यति।
तदा तदाऽवतीर्य्याहं करिष्याम्यरिसंशयम्॥

भगवानपि सकल जगत् कारणः नारायणः प्रार्थ्यते ब्राह्मणसमाजस्य रिपुनाशाय, याज्ञिकानां दुर्दशानाशाय, सनातनधर्मावलम्बिनां मंगलविधानाय। तथाहि भगवदुक्तं—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्म्म संस्थापनार्थाय सम्भवामि युगे युगे॥

अस्माभिस्तु नेदं विस्मर्त्तव्यम्-

उत्पत्तिरेव विप्रस्य मूर्तिर्धर्म्मस्य शाश्वती।
सहि धर्म्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥
सह नाववतु सह नौ भुनक्तु सहवीर्य्यं करवावहै।
तेजस्विनावधीतमस्तु मा विद्विषावहै॥ इतिशम्।

# वार्त्ताः सम्पादकाभिप्रायाश्च ।

## वर्षान्ते निवेदनम् ।

भगवतो विश्वनाथस्यापारया करुणया भूदेवानां ब्राह्मणानामाशिषा श्रीमतां ग्राहकाणामनुग्रहेण च ब्राह्मणमहासम्मेलनमिदं प्रथमवर्षमतिक्रम्य न चिरादेव द्वितीयवर्षे पदं निधित्सति। सर्वतः सङ्कटमयेऽस्मिन् धर्मजगति धर्ममात्रशरणस्यास्य पत्रस्य गृहाङ्गणरिङ्गणं विहाय शनैः शनैः बहिर्जगति सञ्चरणं कियत् सौभाग्यं सूचयतीति सनातनधर्मपक्षपातिनो विद्वांस एव जानन्ति। एकतः संस्कृतभाषामयमेतत्पत्रमपरतश्च धर्मविषयकमतः स्वल्प एव महाभागा अस्य जीवनं कामयन्ते। नैतल्लघुलज्जास्थानं यदेतावतापि पत्रस्यैतस्य ग्राहकाणां त्रिशती संख्या नैवपूर्णाऽभवत्। ये तु धर्मस्य नाम्नापि नासिकां संकोचयन्ति ते खलु पत्रस्यास्य नामापि न गृह्णन्तु नाम परमेतदेव परं विषादस्थानं यद् ये किल सनातनधर्मरक्षणव्रता इति कृत्वा जगति विख्याताः गीर्वाणभाषैव च येषां योगक्षेमं वहति तेऽपि यत् स्वल्पमात्रधनविनिमयेन पत्रमेतन्न जिघृक्षन्तीति। एतेऽपि यदि घोरेऽस्मिन् समये सनातनधर्मप्रचारे उदासीनास्तिष्ठेयु स्तर्हि वराकीयं पत्रिका कं वा शरणं गच्छेदिति सुचिरं विचार्यापि न निर्णेतु शक्नुमः। यथावास्तु वयं पुनर्धर्म एव हतो हन्ति धर्मो रक्षति रक्षित इति महाजनवाक्यमनुसरन्तो न विषीदामो यावच्छक्यं प्रयत्यामहे च सनातनधर्मप्रचाराय। फलं तु भगवदधीनमेवेति सुदृढोऽस्माकं विश्वासः। पत्रप्रकाशनकर्मणि वह्वपराद्धमस्माभिरिति दूयमानहृदया वयमस्मद् ग्राहकमहोदयानां सविधे सबहुमानं प्रार्थयामो यत्तोऽनुग्रहबुद्ध्या क्षाम्यन्तु तांस्तानपराधान्। आगामिनि वर्षे यथा तादृशं स्खलनं नैव सम्भवेत्तथा प्रयतितुं प्रतिजानीमहे।

आगामिनि वर्षे ब्राह्मणमहासम्मेलनस्य वार्षिकं मूल्यं पूर्ववदेव

स्थास्यति परन्तु आकारस्य प्रकारस्य च समधिकोन्नतिर्भविष्यति । एतदपि मनीषितं वर्त्तते—येषां प्रबन्धाः सर्वोत्तमा विवेचिता भविष्यन्ति ये चास्यां पत्रिकाया मन्तरान्तरा प्रकाशयिष्यमाणानां प्रश्नानां शास्त्रानुसारेण युक्तिपूर्णानि सन्तोषप्रदान्युत्तराणि प्रदास्यन्ति तेभ्यः समुचितं पारितोषिकं प्रदास्यत इति ।

❀ ❀ ❀ ❀ ❀

## विशिष्टाङ्कः ।

ब्राह्मणमहासम्मेलनस्य विशिष्टाङ्कः—यत्राखिलभारतवर्षीयब्राह्मणमहासम्मेलनस्य समग्रं विवरणं, शास्त्रार्थविचारः, सभापतीनामभिभाषणानि विंशत्यधिकानि च चित्राणि वर्त्तन्ते यस्य च मूल्यमन्यूनं रूप्यकद्वयं भविष्यति स तु अस्मद्ग्राहकेभ्यो विना मूल्यमेव प्रदास्यते । अत आशास्महे ये खलु महोदया नाद्यापि ग्राहकत्वमुररीकृतवन्तः सत्वरं तेऽस्य ग्राहकतां स्वीकृत्य सनातनधर्मस्य गीर्वाणभाषायाश्च रक्षणसाहायकं विधास्यन्तीति ।

❀ ❀ ❀ ❀ ❀

## अस्मत्प्रार्थना ।

सविनयं सनिर्बन्धञ्चास्माभिः प्रार्थ्यते—ये खलु महोदया द्वितीये वर्षे पत्रिकां न जिघृक्षन्ति तैः कृपया एतत्संख्याप्राप्त्यनन्तरमेव वयं विज्ञापनीयाः । अन्यथा निरर्थकमस्माकमर्थहानिर्भविष्यति । सा तु नैकस्यापि सचेतसो वांछनीया भवितुमर्हतीति ।

❀ ❀ ❀ ❀ ❀

## सनातनधर्मसम्मेलनानि ।

अद्य यावद् भारतवर्षस्य विभिन्नप्रदेशेषु यानि सनातनधर्मसम्मेलनानि संघटितानि सन्ति तेषां संक्षिप्तं विवरणं सहर्षमस्माभिः प्रकाश्यते ।

( १ ) चैत्रशुक्लपञ्चम्यां रविवासरे श्रीश्रीविन्ध्याचलक्षेत्रे तत्रत्यायाः संस्कारसमितेर्वार्षिकोत्सवो महता समारोहेण सम्पन्नः । महामहोपाध्यायाः श्रीमन्तो लक्ष्मणशास्त्रिद्राविड़महोदयाः साभपतेरासनं समलमकार्षुः । अनेके महामहोपदेशकाः, बहवो विद्वांसोऽसंख्येयाश्च सनातनवर्णाश्रमधर्मपक्षपातिनो जनास्तत्र सम्मिलिता आसन् । मनोरमाणि व्याख्यानानि उपदेशा अभिभाषणानि च श्रोतॄणां परमानन्दविधायकानि संजातानि ।

( २ ) पाटलिपुत्रान्तर्गत दानापुरे श्रीसत्यदेवमन्दिरे पण्डितवर श्री सत्यनारायणमिश्रमहोदयस्य परमेणोत्साहेन ब्राह्मणसम्मेलनमेकं स्थापितमस्ति । तत्र च प्रतिमासं शुक्लैकादश्यामधिवेशनं भवति । तत्रत्याः सर्वं एव ब्राह्मणा अन्ये च धार्मिकमहोदयास्तत्र सम्भूय ब्राह्मणादिवर्णानां कर्त्तव्यानि अन्यांश्च धर्मविषयान् सम्यगालोचयन्ति । वयमस्य सम्मेलनस्य चिरस्थितिं पूर्णां सिद्धिञ्च समभिलषामः ।

( ३ ) चैत्र शुक्लरामनवम्यां गुरुवासरे काश्यां श्रीचण्डीप्रसादभवने महामहोपदेशक श्रीधूमावतीप्रसाद पाण्डेयस्य तथा पं० श्रीमुरलीधर चौधरी महोदयस्योद्योगेन सनातनधर्मप्रचारार्थं "उपदेशकविद्यालयः" संस्थापितोऽभवत् । भारतवर्षे सर्वत्र धर्मप्रचारायोपदेशकाः सर्वथाऽपेक्ष्यन्ते । वर्त्तत एव परमावश्यकता । तदर्थमुद्योक्तृभ्यः परःशता धन्यवादा दीयन्ते ।

( ४ ) सनातनधर्मसभा, कोंडा, जहानाबाद । अस्याः सभाया वार्षिकोत्सवः ( २२ २३ २४ अप्रैल ) महताडम्बरेण सम्पन्नोऽभवत् । ब्राह्मणमहासम्मेलनतो महामहोपदेशक पं० श्रीनन्दकिशोरवाणीभूषणः, पं० श्रीगोपालदत्तशर्मा; पं० श्रीगंगाप्रसादशर्मा चैते त्रयः उपदेशकास्तत्र गतवन्तः । व्याख्यानानि प्रभाववन्ति जातानि ।

( ५ ) सनातनधर्मसभा, कोपागंज । अस्या अपि सभाया वार्षिक उत्सवः अप्रैल मासस्य ( २३ २४ ) दिवसद्वये महता समारोहेण सम्पन्नो-

ऽभवत् । काशीतः प्रतिवादिभयङ्करभयङ्करः पण्डित श्रीरुद्रभट्टमहोदय उपदेशकरूपेण तत्र सम्मिलितोऽभवत् । उत्सवकृत्यं साधु सम्पन्नम् ।

( ६ ) प्रान्तीय ब्राह्मणमहासम्मेलनमहासभा, गौरीपुर चटकल, जिला २४ परगना ।

( ७ ) ब्रह्मपुर सनातनधर्मसभा ।

( ८ ) ससराम ब्राह्मणसभा ।

( ९ ) यशोहर कालिया ब्राह्मणसम्मेलनम् ।

एतेषां सम्मेलनानां विस्तृतं विवरणं परस्तात्प्रकाशयिष्यते ।

---

## धार्मिक सज्जनेषु निवेदनम् ।

विदितमेव सर्वेषां पाठकमहाशयानां यत् काश्यां गत कार्तिकमासि सम्पन्ने अखिलभारतवर्षीयब्राह्मणमहासम्मेलने अखिलभारतवर्षीय-विशुद्धसंस्कृतविश्वविद्यालयसंस्थापनविषयकः प्रस्तावः तत्र सभाया-मुपस्थितानां सर्वेषां सभासदानां सहर्षानुमत्या स्वीकृत इति । अस्य च विश्वविद्यालयस्य उद्देश्यानीमानि ।

१—भारतवर्षस्य यस्मिन् कस्मिन् प्रदेशे वसतां सदाचारसम्पन्नानां भृतकं विनैव वेदशास्त्राण्यध्ययपराणां ब्राह्मणपण्डितानां साहाय्य-दानेन रक्षणम् ।

२—यत्र २ वेदशास्त्रविद्यालयाः साहाय्याभावेन समीचीनतया न प्रवर्तन्ते तेभ्यो यथाशक्ति साहाय्यप्रदानम् ।

३—श्रीकाश्यामादर्शभूतविद्यालयस्थापनम् । यस्मिन् संस्कृत-भाषायामुपलभ्यमानानां सर्वासां विद्यानां कलानां चान्वेषणपुरस्सरं यथाधर्मशास्त्रं तत्तद्विद्याधिकारिणां तत्तज्जातीयानामध्यापनम् ।

४—विद्यार्थिनामाचरणविषये पूर्णदृष्टिपातः विशेषावधानदानञ्च ।

५—चतुः षष्टिकलानां, वार्ता, राजनीतिशास्त्रादीनामप्यध्यापनम् ।

६—एकस्य बृहत्पुस्तकालयस्य स्थापनं यदङ्गभूतमेकं विद्वन्मण्डलं भविष्यति यत् प्राचीनविद्याः सम्यक् सर्वदा परिशीलयन् तत्तद्विद्यागूढरहस्यानि उद्घाटयेत्। इति।

एतस्य विश्वविद्यालयस्य साहाय्यार्थं महाराजाधिराजद्वारभंगाधिपतिः पंचलक्षरूप्यकाणि, तथा श्री १०८ गोस्वामिकुलतिलक टिकैत महाराजश्रीनाथद्वाराधीशाश्च एकादशसहस्राधिकैकलक्षरूप्यकाणि किं च कांकरोलीपीठाधीश्वराः प्रतिवर्षं द्विसहस्ररूप्यकाणि च दातुं प्रतिज्ञातवन्तः। इतः परमपि श्री १०८ श्रीशंकराचार्य रामानुजाचार्य वल्लभाचार्य मध्वाचार्यप्रभृतय आचार्यास्तथा विशिष्टा विद्वांसश्च साहाय्यं दातुं सोत्सुका वर्तन्ते, एको दानवीरः पचलक्षरूप्यकाणि गुप्तं दास्यामीति प्रतिश्रुतवान्। एतत्कृते पञ्चाशल्लक्षरूप्यकाण्यावश्यकानि, तानि च भारतीयसनातनधर्मावलम्बिभिः प्रतिव्यक्ति प्रतिव्यक्ति एकैकरूप्यकदानेपि कृतेऽनायासेन सुसम्पन्नो भविष्यत्ययं विश्वविद्यालय इत्यत्र नास्ति संशयलेशः।

एतस्य विश्वविद्यालयस्य व्यवस्थापिकायाः सभायाः सभापतिः श्रीमान् महाराजाधिराजो द्वारभंगाधिपतिः एवं निम्नलिखिता महाशयाश्च सभासदाः सन्ति—

कलकत्ता हाईकोर्ट भूतपूर्व चीफ जस्टिस सर नलिनीरञ्जन चटर्जी, जस्टिस श्रीयुक्त मन्मथनाथ मुकर्जी, म० म० पं० हरप्रसाद शास्त्री सी० आई० ई० श्रीयुत बाबू आदित्यनाथ मुखोपाध्याय एम्० ए० पी० एच्० डी० ( प्रिन्सिपल, गवर्नमेण्ट संस्कृत कालेज, कलकत्ता ) श्रीयुत पं० गोपीनाथ कविराज एम्० ए० ( प्रिन्सिपल, गवर्नमेण्ट संस्कृत कालेज बनारस ) श्रीयुत बाबू ब्रजेन्द्रकिशोर रायचौधरी, जमींदार, गौरीपुर, श्रीमान् राजा बहादुर, नसीपुर, म० म० पं० वामाचरण भट्टाचार्य, म० म० पं० पञ्चानन तर्करत्न, म० म० पं० गिरिधरशर्मा चतुर्वेदी, म० म० पं० श्रीअनन्तकृष्णशास्त्री, श्रीमान् राजा शशिशेखरेश्वर रायबहादुर,

श्रीयुत साधुराम तुलाराम गोएनका, कलकत्ता पञ्चायत सभा, श्रीयुत रायबहादुर सर् ओंकारमल जटिया ( के० टी० सी० आई० ई० ) श्रीयुत रायबहादुर सर् हरिराम गोएनका ( के० टी० सी० आई० ई० ) श्रीयुत रायबहादुर बाबू रामेश्वरदास नाथानी दुदवेवाला, श्रीयुत बाबू केदारमलजी लढिया, बम्बई, श्रीमान् राजा मोतीचन्दजी ( सी० आई० ई० ) श्रीमान् पं० गोपीनाथजी, बी० ए० ( मुसाहिब महाराजा दरभङ्गा ) पं० मदनमोहन शास्त्रीजी , पं० रमापतिमिश्र, पं० रामभवनउपाध्याय, पं० गुलाब झा, पं० पूर्णचन्द्राचार्य, म० म० पं० पद्मनाथ विद्याविनोद, म० म० पं० दुर्गाचरण सांख्यवेदान्ततीर्थ, म० म० पं० आशुतोषशास्त्री दर्शनालङ्कार, पं० देवकीनन्दनशास्त्री, नाथद्वार विद्याविभागाध्यक्षः श्रीमान् पं० नन्दकिशोरभट्टः, पं० ताराचरणभट्टाचार्यः, पं० श्रीराजेश्वरशास्त्री द्राविडः, पं० श्रीहाराणचन्द्रशास्त्री, पं० श्रीश्रीजीवन्यायतीर्थ एम्० ए० इत्येवमादयः ।

अतएव श्रीमत्सु अस्मदीयेयं प्रार्थना यद्यथाशक्ति अस्मिन् पुण्यकार्ये सहायतां विधाय अनन्तपुण्यभागिनो भवन्तु श्रीमन्त इति ।

साहाय्यार्थं यत्किंचित् प्रेषणीयं तत् ( बनारस स्टेट बंक ) कोषालये विशुद्धसंस्कृतविश्वविद्यालयफण्ड व्यपदेशेन अथवा अस्मन्निकटे, वा अस्य कोषाध्यक्षस्य श्रीमतो गौरीशंकर गोएनकामहोदयस्य निकटे प्रेषणीयम् । अस्य विश्वविद्यालयस्य प्रबन्धकारिण्यां समितौ संरक्षकत्वेन श्रीमान्काशीनरेश महोदयः, श्रीद्वारभंगाधिपतिः, उदयपुराधिपतिश्च सम्मिलिता वर्तन्ते । अस्मिन् कार्ये सर्वेषामपि धर्माचार्याणां पूर्णसहानुभूतिर्वर्तते तथा तत्र भवतां भवतामपि कृपादृष्टिः कार्यं शीघ्रमेव साधयितुं प्रभवेतेति प्रार्थना ।

श्रीलक्ष्मणशास्त्रिणो द्राविड़स्य ।

श्रीः

श्रीकाश्यां अखिलभारतवर्षीय-सनातनधर्म्म-महासभा-
विशेषाधिवेशने स्वागतसमितेः सभापतीनाम्
विविधविरुदावलीविराजमानानां मानोन्नतानाम्
द्विजराज-काशीराज-श्रील-श्रीयुत महाराज

## श्री प्रभुनारायण सिंह शर्म्म-

वीरपुङ्गव धर्म्मपाल

जी. सी. आई. ई., जी. सी. एस. आई.

प्रभृत्युपाधिगणभूषितानाम्

# अभिभाषणम्

कार्त्तिक कृष्ण द्वादशी

संवत् १९८५

# श्री श्रीविश्वनाथो विजयताम्

भूमिष्ठापि न यात्र भूस्त्रिदिवतोऽप्युच्चैरधःस्थापिया
या बद्धा भुवि मुक्तिदा स्युरमृता यस्यां मृता जन्तवः।
या नित्यं त्रिजगत् पवित्रतटिनी तीरे सुरैः सेव्यते
सा काशी त्रिपुरारिराजनगरी पायादपायाज्जगत् ॥

पूजनीया, मान्या धर्म्माचार्य्याः प्रियाः सभासदश्च !

श्रीकाश्यामस्यां निखिलभारतवर्षीयसनातनधर्म्म-महासभाया अस्मिन् महाधिवेशने कृपया समागतान् सनातनधर्म्मैकशरणान् सनातनधर्म्मस्य संरक्षणाय परिपोषणाय समभ्युदयाय च कृतनिश्चयान् श्रीमतः प्रतिनिधीन् सदस्यांश्च स्वागतेनाभिनन्द्य, मया सविनयं यत् किञ्चिदिह समुचितं समालोचनीयं पुरतः समुपह्रियते, तत्र श्रीमद्भिर्भवद्भिः कृपया दीयमानमवधानं समभ्यर्थ्यते ।

श्रुतिमूलस्य धर्म्मशास्त्रपुराणेतिहासशिष्टाचारपरम्परा परिबृंहितस्य भारतीयानामस्माकं सकलैहिकपारत्रिककुशलैकनिदानस्य महतः सनातनधर्म्मस्याऽभ्युदयमबा-

धर्माभिलषतां सनातनधर्म्मावलम्बिनाम् केषुचिद्विषयेषु कालवशतः समुत्पन्नं प्रतिपत्तिवैषम्यं शास्त्रानुगतविचारालम्बनेन परिहाय सर्व्वथा ऐकमत्येन वर्त्तितव्यमित्यस्मिन् विषये नास्ति कस्यापि प्रेक्षावतो जनस्य वैमत्यम्।

साम्प्रतं कीदृशानामुपायानामवलम्बनेन तद्वर्त्तनं सुकरमभीप्सितफलानुकूलं च सम्भवेदित्यस्मिन् विषये, पुरुषमतिवैचित्र्यात् समुत्पद्यमानानां बहुविधानां विप्रतिपत्तीनां प्रतिदिवसमुपचीयमानः प्रसरो महतापि प्रयत्नभरेण यद्यपि नाधुना निवारयितुं शक्यः, तथापि सन्त्यधुनापि तानि बहूनि कर्त्तव्यानि, येषु सर्व्वेषामेव सनातनधर्म्मावलम्बिनामस्माकं प्रायेण ऐकमत्यमनायासेन भवितुमर्हति, आपाततस्तान्येव कर्त्तव्यानि सामाजिकैः सर्वैरेव ऐकमत्येन दृढतराध्यवसायेन च यद्यनुष्ठितानि भवेयुः, तर्हि महान् खलु उपकारः सनातनधर्म्मावलम्बिनामस्माकं सर्व्वास्वपि श्रेणीषु अचिरेणैव कालेन समुदियादित्यत्र नास्ति मे अणीयानपि सन्देहलेशावसरः।

कानि खलु तथाविधानि कर्त्तव्यानि इत्यपेक्षायां प्रदर्शनार्थं आपातत एतान्येव श्रीमतां पुरतः संस्थाप्यन्ते,—यथा अस्मदीये समाजे आबाल्यात् धर्म्मशिक्षायामौदासी-

न्येन समुपचीयमानस्य नास्तिक्यस्य परिहाराय विद्यालयेषु सर्व्वेष्वेव नियमेन सनातनधर्म्मशिक्षाप्रवर्त्तनम्।
"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम्॥"
इति भगवता मनुना प्रतिपादितस्य दशलक्षणकस्य धर्म्मस्य जातिवर्णनिर्विशेषेणानुष्ठानाय सर्व्वेषामेव सनातनधर्म्मावलम्बिनां योग्यतासम्पादनम्, आबाल्यात् सर्व्वेषां कुमाराणां कुमारीणां च सर्व्वजातीयानां सत्यंप्रति ऐकान्तिकस्यानुरागस्य मिथ्याव्यवहारं प्रति विद्वेषस्य च समुत्पादनं मनसि दृढतया संस्थापनं च, दारिद्र्यादिभिः यथाकालं विद्यां लब्धुमसमर्थेषु प्राकृतेषु जनेषु सुयोग्योपदेशकनियोगेन रामायणमहाभारतपुराणप्रभृतीनां धर्म्मग्रन्थानां सम्यक् तात्पर्य्यबोधानुकूलव्याख्यानमुखेनोपदेशदानविधिसौकर्य्यं प्रतिनगरं प्रतिग्रामं सायं प्रातश्च जनसम्मेलनस्थलेषु निखिलमङ्गलहेतुसर्व्वापद्विनिवारणक्षमश्रीमद्भगवन्नामसङ्कीर्त्तनादिप्रवर्त्तनं, सदा सदाचारपरेषु सत्यैकव्रतेषु शास्त्रानुशीलनरतेषु भगवद्भक्तेषु ब्राह्मणेषु सार्व्वजनीनश्रद्धासमुत्पादनम्, गवां सम्यक् प्रतिपालनं सर्व्वतः संरक्षणं च, 'संघे शक्तिः

कलौ युगे' इति शास्त्रवचनानुसारेण स्वधर्म्मसमाजजाति-
देशाभ्युदयार्थं सर्व्वेषां सनातनधर्म्मावलम्बिनां मनुजानां
ऐकमत्येन एकप्राणतया च विहितकार्य्यसम्पादनयोग्यता-
नयनं च, एतानि तावत् कार्य्याणि प्रायेण सर्व्वैरपि
सनातनधर्म्मावलम्बिभिः अवश्यानुष्ठेयतया अङ्गीक्रियन्ते।
अखिलभारतीयसनातनधर्म्ममहासभाया अपि एतानि
कार्य्याणि प्रत्यधिवेशनं कर्त्तव्यतया समुद्घोषितानि।
एतेषामन्येषां च समाजहितकराणां कार्य्याणां सम्पादनाय
अवश्यमपेक्षितं बलं साहसं धैर्य्यं त्यागशीलत्वं च सम्य-
गधिगत्य इयं महासभा सर्व्वेषां सनातनधर्म्मावलम्बिनां
भारतीयानां महते सुचिरस्थायिने च उपकाराय सदा प्रभ-
वतु, तेनास्मासु महोदयपुरःसरा शान्तिः सुप्रतिष्ठिता
भवतु इतीयमस्माकं करुणामयश्रीविश्वनाथचरणकम-
लयोः सभक्तिविनिवेदनमित्यलमभिज्ञेषु श्रीमत्सु इदानीम-
धिकेन विनिवेदनेनेतिशम् ।



